समाधिं समापद्यते स्म जगद्विरोचनव्यूहम्। समनन्तरसमापन्नस्य च भगवतो महाव्यूहः कूटागारोऽनन्तमध्यविपुलः संस्थितोऽभूत्। अपराजितवज्रधरणीतलव्यूहः सर्वमणिरत्नराजजालसंस्थितभूमितलमनेकरत्नपुष्पाभिकीर्णो महामणिरत्नसुविकीर्णो वैडूर्यस्तम्भोपशोभितो जगद्विरोचनमणिराजसुविभक्तालंकारः सर्वरत्नयमकसंघातो जाम्बूनदमणिरत्नकूटोपशोभितः सर्वरत्ननिर्यूहतोरणहर्म्यगवाक्षासंख्येयवेदिकाविशुद्धव्यूहः सर्वलोकेन्द्रसदृशमणिरत्नव्यूहो 5 जगत्सागरमणिरत्नव्यूहः सर्वमणिरत्नसंछादितः समुच्छ्रितच्छत्रध्वजपताकः सर्वद्वारतोरणव्यूहमुखैर्धर्मधातुरश्मिजालप्रमुक्तस्फरणव्यूहो बहिरनभिलाप्यपर्यन्तमण्डलभूमितलवेदिकाव्यूहः समन्तदिक्सोपानमणिरत्नकूटः परमसुविभक्तोपशोभितः। सर्वं च जेतवनं विपुलायामविस्तारं संस्थितमभूत्। तान्यपि च बुद्धानुभावेन अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानि बुद्धक्षेत्राणि विपुलायामविस्ताराणि संस्थितान्यभूवन्। सर्वरत्नविचित्रव्यूहानि अनभिलाप्य- 10 रत्नचित्रसंस्थितभूमितलानि असंख्येयमणिरत्नप्राकारपरिक्षिप्तानि विविधरत्नतालपङ्क्तिव्यूहानि संस्थितान्यभूवन्। तेषु च अपरिमाणगन्धोदकनद्योऽनन्तावर्तगन्धोदकपरिपूर्णाः सर्वरत्नपुष्पौघकलुषाः प्रदक्षिणवाहिन्यः सर्वबुद्धनिर्घोषनिगर्जितव्यूहाः समवतिष्ठन्ते स्म। अचिन्त्याश्च रत्नपुण्डरीकपङ्क्तयः सर्वरत्नोद्गतप्रफुल्लपद्मव्यूहोपशोभिततलाश्च रत्नवृक्षाः, अचिन्त्याश्च विचित्ररत्नकूटागारपङ्क्तयः सर्वमणिरत्नजालसंछन्ना असंख्येयमणिरत्नरश्मिजालावभासव्यूहा 15 असंख्येयमणिरत्नविमानसर्वमणिरत्नव्यूहाः सर्वगन्धकोशप्रमुक्ताः सर्वधूपपटलव्यूहाः संस्थिता अभूवन्। अपरिमाणाश्च रत्नध्वजाः, एवं वस्त्रध्वजाः पताकाध्वजा रत्नपट्टध्वजाः पुष्पध्वजा आभरणध्वजा माल्यध्वजाः सर्वरत्नकिङ्किणीजालध्वजा मणिराजच्छत्रध्वजाः समन्तावभासस्फरणमणिरत्नध्वजाः सर्वतथागतनामचक्रनिर्घोषमणिरत्नराजध्वजाः सिंहकान्तमणिरत्नराजध्वजाः सर्वतथागतपूर्वयोगनिगर्जनमणिरत्नराजध्वजाः सर्वधर्मधातुप्रतिभासध्वजा मणिरत्नराज- 20 ध्वजव्यूहाः सर्वध्वजालंकारसमन्तदिक्सुविभक्तव्यूहाः संतिष्ठन्ते स्म। सर्वावच जेतवनमचिन्त्यदिव्यविमानमेघगगनतलालंकारं संस्थितमभूत्। असंख्येयसर्वगन्धवृक्षमेघसंछन्नालंकारम्, अनभिलाप्यसर्वव्यूहसुमेरुसंछन्नालंकारम्, अनभिलाप्यवाद्यतूर्यमेघसर्वतथागतस्तुतिसंगीतिमधुरनिर्घोषालंकारम्, अनभिलाप्यरत्नपद्ममेघसंछन्नालंकारम्, अनभिलाप्यरत्नसिंहासनदिव्यमणिरत्नवस्त्रप्रज्ञप्तबोधिसत्त्वनिषण्णतथागतस्तुतिमेघमधुरनिर्घोषालंकारम्, अनभिलाप्यदेवेन्द्रबिम्ब- 25 सदृशाभिमुखमणिविग्रहमेघालंकारम्, अनभिलाप्यश्वेतमुक्तिजालमेघालंकारम्, अनभिलाप्यलोहितमुक्ताकूटागारमेघसंछन्नालंकारम्, अनभिलाप्यवज्रसारमुक्तामेघप्रवर्षणालंकारं संस्थितमभूत्। तत्कस्य हेतोः? तथा हि तदचिन्त्यं तथागतकुशलमूलम्, अचिन्त्यस्तथागतशुक्लधर्मोपचयः, अचिन्त्यं तथागतबुद्धवृषभिताधिष्ठानम्, [1]अचिन्त्यं तथागतसर्वलोकधात्वेककायस्फरणविकुर्वितम्, अचिन्त्यं सर्वतथागतैकैककायप्रवेशसर्वबुद्धक्षेत्रव्यूहसमवसरणाधिष्ठानसंदर्शनम्, 30 अचिन्त्यं तथागतानामेकपरमाणुरजसि सर्वधर्मधातुप्रतिभासविज्ञप्तिसंदर्शनम्, अचिन्त्यं तथा-

---

१ B om. अचिन्त्यं···विकुर्वितम्.

गतानामेकरोमकूपे पूर्वान्तकोटीगतसर्वतथागतपरंपरासंदर्शनम्, अचिन्त्यं तथागतामेकरश्मि-
मुखसर्वलोकधातुपरमाणुरजःप्रसरावभासनम्, अचिन्त्यं तथागतानामेकरोममुखसर्वलोकधातु-
परमाणुरजःसमं निर्मितमेघसर्वबुद्धक्षेत्रस्फरणम्, अचिन्त्यं तथागतानामेकरोममुखसर्वलोक-
धातुसंवर्तविवर्तकल्पसंदर्शनं च। यथा च जेतवनमेवंरूपया बुद्धक्षेत्रपरिशुद्ध्या परिशुद्धं
5 संस्थितम्, एवं दशसु दिक्षु धर्मधातुपरमाकाशधातुपर्यवसानाः सर्वलोकधातवः परिशुद्धाः
संस्थिता अलंकृताः प्रतिमण्डिताः तथागतकायपरिस्फुटा जेतवनसमवसरणा बोधिसत्त्व-
परिपूर्णाः तथागतपर्षन्मण्डलसमुद्रसुव्यवस्थिताः सर्वव्यूहमेघाभिप्रवर्षणाः, सर्वरत्नप्रभाव-
भासिताः सर्वमणिरत्नमेघप्रवर्षिताालंकाराः, सर्वक्षेत्रव्यूहमेघसंछन्नालंकाराः, सर्वदिव्यात्मभाव-
मेघप्रवर्षितालंकाराः सर्वपुष्पमेघप्रवर्षितालंकाराः, सुपुष्पितकोशस्फरणालंकाराः, सर्ववस्त्र-
10 मेघनानारङ्गरुचिरचीवरवर्षप्रमुक्तकोशाः, सर्वमाल्यदामहारव्यूहमेघाच्छिन्नधाराभिप्रवर्षणा-
लंकाराः सर्वदिक्समुत्थितनानागन्धधूपमेघपटलसर्वजगच्छरीरसदृशसंस्थानप्रवर्षणालंकाराः
सर्वरत्नकुसुमजालमेघाच्छन्नरत्नजालसूक्ष्मचूर्णप्रवर्षणालंकाराः सर्वरत्नध्वजपताकामेघदिव्य-
कन्यापाणिपरिगृहीतगगनतलावर्तनपरिवर्तनालंकाराः सर्वरत्नपद्मविचित्ररत्नपत्रमण्डलोर्ध्व-
दण्डाधःकेसरनिबद्धतूर्यसंघट्टितमधुरनिर्घोषालंकाराः सर्वरत्नबिम्बजालसिंहपञ्जरनानारत्नचित्र-
15 हारमाल्यालंकाराः संस्थिताः संदृश्यन्ते स्म॥

समनन्तरसमापन्नस्य भगवत एवं सिंहविजृम्भितं तथागतसमाधिम्, अथ तावदेव पूर्वस्यां दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानां लोकधातुसमुद्राणां परेण कनकमेघ-
प्रदीपध्वजाया लोकधातोर्वैरोचनश्रीतेजोराजस्य तथागतस्य बुद्धक्षेत्राद्वैरोचनप्रणिधाननाभि-
रश्मिप्रभो नाम बोधिसत्त्वो महासत्त्वः सार्धमनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन
20 भगवता अनुज्ञातः ततः पर्षन्मण्डलसमुद्रादुच्चलित्वा येन सहालोकधातुस्तेनोपसंक्रान्तो नाना-
व्यूहमेघैर्गगनतलमलंकुर्वन्। यदुत दिव्यपुष्पमेघवर्षमभिप्रवर्षन्, दिव्यगन्धमेघवर्षं प्रमुञ्चन्,
दिव्यरत्नपद्ममेघवर्षमभिप्रकिरन्, दिव्यमाल्यमेघवर्षमवसृजन्, दिव्यरत्नमेघवर्षमभिप्रवर्षन्,
दिव्याभरणमेघवर्षमभिप्रवर्षन्, दिव्यरत्नच्छत्रमेघानभिनिर्हरन्, विचित्रनानारङ्गसूक्ष्मदिव्यवस्त्र-
मेघवर्षमभिप्रवर्षन्, दिव्यरत्नध्वजपताकामेघान् गगनतलेऽधितिष्ठन्, रुचिरैः सर्वरत्नमेघव्यूहैः
25 गगनतलं स्फरन्, येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य पूर्वां दिश-
मुपनिश्रित्य समन्तव्यूहमणिरत्नजालसंछन्नानि कूटागाराणि दिक्प्रभासमणिराजपद्मगर्भाणि
च सिंहासनान्यभिनिर्माय न्यषीदत्पर्यङ्कमाभुज्य चिन्तारजमणिरत्नजालालंकारसंछन्नानि
बोधिसत्त्वशरीराण्यधिष्ठाय॥

दक्षिणायां दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानां लोकधातुसमुद्राणां परेण
30 वज्रसागरगर्भाया लोकधातोः समन्तावभासश्रीगर्भराजस्य तथागतस्य बुद्धक्षेत्राद् दुर्योधन-
वीर्यवेगराजो नाम बोधिसत्त्वो महासत्त्वः सार्धमनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्बोधिसत्त्वैः
तेन च भगवता अनुज्ञातः ततः पर्षन्मण्डलसमुद्रादुच्चलित्वा येन सहालोकधातुस्तेनोप-

१ S °च्छन्न.° २ S °पूर्व.°

संक्रान्तः सर्वगन्धदामजालावनद्धान् सर्वलोकसमुद्रानधितिष्ठन्, सर्वरत्नहारदामजालावनद्धान् सर्वबुद्धक्षेत्रप्रसरानधितिष्ठन्, सर्वपुष्पदामहारजालावनद्धान् सर्वबुद्धक्षेत्रवंशानधितिष्ठन्, सर्वमाल्यदामहारजालावनद्धान् सर्वबुद्धक्षेत्रपरिवर्तानधितिष्ठन्, सर्ववज्रहाराधस्तलप्रतिष्ठानसंगृहीतानि सर्वबुद्धक्षेत्रपर्षन्मण्डलान्यधितिष्ठन्, सर्वमणिरत्नजालावनद्धान् सर्वबुद्धक्षेत्रनयानधितिष्ठन्, सर्ववस्त्रदामसमन्तपरिग्रहपरिगृहीतान् सर्वलोकधातूनधितिष्ठन् सर्वरत्नबिम्बहारदामकलापजालावनद्धानि सर्वबुद्धक्षेत्राण्यभिनिर्हरन्, श्रीरश्मिमणिरत्नहारदामजालावनद्धानि सर्वक्षेत्राण्यधितिष्ठन्, सर्वव्यूहरश्म्यवभासवैरोचनमणिराजदामजालावनद्धानि सर्वबुद्धक्षेत्राण्यधितिष्ठन्, सिंहकान्तमणिरत्नहारदामजालप्रतिष्ठानसंगृहीतान् सर्वलोकधातूनधितिष्ठन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य दक्षिणां दिशमुपनिश्रित्य जगद्विरोचनमणिकूटागाराणि समन्तदिग्विरोचनमणिरत्नपद्मगर्भाणि च सिंहासनान्यभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य सर्वरत्नकुसुमजालालंकारसंछन्नानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

पश्चिमायां दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानां लोकधातुसमुद्राणां परेण मणिसुमेरुविरोचनध्वजप्रदीपाया लोकधातोर्धर्मधातुज्ञानप्रदीपस्य तथागतस्य बुद्धक्षेत्रात्समन्तश्रीसमुद्गतराजो नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्षन्मण्डलादुच्चलित्वा येन सहालोकधातुस्तेनोपसंक्रान्तोऽनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्नानावर्णगन्धध्वजसुमेरुमेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्[1]विविधगन्धकुसुममेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैरनेकवर्णगन्धसुमेरुधूपमेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्विचित्रवर्णगन्धमेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैः सर्वपरिष्कारसदृशवर्णैः रोमतेजःसंभवमणिराजसुमेरुमेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्नानाप्रभामण्डलव्यूहज्योतिर्ध्वजमणिरत्नसुमेरुमेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्नानावर्णवज्रगर्भमणिराजनानाव्यूहविषयसुमेरुमेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैः सर्वलोकधातुप्रतिभासविषयैर्जाम्बूनदमणिरत्नसुमेरुमेघैः सर्वधर्मधातुं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैः सर्वपर्वतधर्मधातुप्रतिभासमणिराजसुमेरुमेघैः संछन्नं गगनतलमधितिष्ठन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैः सर्वतथागतलक्षणप्रतिभासमणिराजसुमेरुमेघैः सर्वधर्मधातुविषयं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैः सर्वतथागतपूर्वयोगप्रतिभाससंदर्शनबोधिसत्त्वचर्यानिर्घोषस्वरमणिराजसुमेरुमेघैः सर्वधर्मधातुगगनं स्फरन्, अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैः सर्वतथागतबोधिमण्डप्रतिभासमणिराजसुमेरुमेघैर्दश दिशः स्फरन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य पश्चिमां दिशमुपनिश्रित्य

1 B om. from विविध° upto अनेक°.

सर्वगन्धराजशरीरमुक्ताजालसंछादितान् कूटागारान्, देवेन्द्रप्रतिभासध्वजमणिरत्नपद्मगर्भाणि च सिंहासनान्यभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य सुवर्णमणिराजसंछादितानि चिन्ताराजमुकुटावनद्धानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

उत्तराया दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरज समाना लोकधातुसमुद्राणा परेण 5 रत्नप्रभावभासध्वजाया लोकधातौ धर्मधातुगगनश्रीवैरोचनस्य तथागतस्य बुद्धक्षेत्रादसङ्गश्रीराजो नाम बोधिसत्त्वो महासत्त्व सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरज समैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञात तत पर्षन्मण्डलसमुद्रादुच्चलित्वा येन सहालोकधातुस्तेनोपसंक्रान्त । सर्वरत्नपद्ममेघालंकारं गगनतलमधितिष्ठन्, पीतवर्णपीतनिर्भासरत्नवस्त्रमेघालंकारं गगनतलमधितिष्ठन्, नानागन्धपरिवासितमणिरत्नमेघप्रवर्षितालंकारं गगनतलमधितिष्ठन्, 10 आदित्यध्वजमणिराजवस्त्रमेघालंकारं गगनतलमधितिष्ठन्, कनकश्रीज्वलनमणिरत्नवस्त्रमेघालंकारं गगनतलमधितिष्ठन्, रत्नज्वलनमणिराजवस्त्रमेघालंकारं गगनतलमधितिष्ठन्, सर्वज्योतिःप्रतिबिम्बविचित्रमणिवस्त्रमेघालंकारं गगनतलमधितिष्ठन्, पाण्डुकम्बलशिलावभासमणिरत्नवस्त्रमेघदशदिक्परिस्फुटं गगनतलमधितिष्ठन्, वैरोचनश्रीज्वलनावभासमणिराजवस्त्रमेघदशदिक्परिस्फुटं गगनतलमधितिष्ठन्, अवभासोत्तप्तदिक्कुलवैरोचनमणिराजवस्त्रमेघ-15 दशदिक्परिस्फुटं गगनतलमधितिष्ठन्, सागरव्यूहमणिराजवस्त्रमेघसंछन्नं गगनतलमधितिष्ठन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य उत्तरां दिशमुपनिश्रित्य सागरसमन्तमणिराजकूटागारवैडूर्यपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य सिंहक्रान्तमणिराजजालसंछादितानि ज्योतिर्ध्वजमणिचूडावनद्धानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

20 उत्तरपूर्वस्या दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरज समाना लोकधातुसमुद्राणा परेण सर्वमहापृथिवीराजमणिरश्मिजालप्रमुक्ताया लोकधातोरनिलम्भचक्षुषस्तथागतस्य बुद्धक्षेत्राद्धर्मधातुप्रनिर्गतप्रणिधिचन्द्रो नाम बोधिसत्त्व सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरज समैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञात तत पर्षन्मण्डलसमुद्रादुच्चलित्वा येन सहालोकधातुस्तेनोपसंक्रान्त । रत्नकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, 25 गन्धकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, धूपकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, चन्दनकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, कुसुमकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, मणिकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, वज्रकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, कनककूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन्, वस्त्रकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरा-30 नधितिष्ठन्, पद्मकूटागारमेघसंछन्नान् सर्वलोकधातुप्रसरानधितिष्ठन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य उत्तरपूर्वां दिशमुपनिश्रित्य सर्वरत्नधर्मधात्वभिमुखद्वार-

१ B अवभासोत्तप्तदिक्कु° २ B om. °आड°.

शिखरमहामणिरत्नकूटागारान् अतुल्यगन्धराजमणिपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य कुसुमराजजालसंछादितानि विचित्रकोशजालमणिमकुटावबद्धानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

पूर्वदक्षिणाया दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाना लोकधातुसमुद्राणां परेण गन्धमेघव्यूहध्वजाया लोकधातोर्नागेश्वरराजस्य तथागतस्य बुद्धक्षेत्राद्धर्मार्चिष्मत्तेजोराजो नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्षन्मण्डलनयसमुद्राद्दुच्चलितो येन सहालोकधातुस्तेनोपसंक्रान्तः । कनकवर्णप्रभामण्डलमेघैः सर्वगगनतलं संछादयन्, अनन्तवर्णरत्नप्रभामण्डलमेघैः सर्वगगनतलं संछादयन्, तथागतोर्णवर्णप्रभामण्डलमेघैः सर्वगगनतलं संछादयन्, विचित्ररत्नवर्णप्रभामण्डलमेघैः सर्वगगनतलं संछादयन्, पद्मगर्भप्रभामण्डलमेघैः सर्वगगनतलं संछादयन्, रत्नद्रुमशाखामण्डलमणिराजवर्णप्रभामण्डलमेघैः सर्वगगनतलं संछादयन्, तथागतोष्णीषवर्णप्रभामण्डलमेघैः सर्वं गगनतलं संछादयन्, जाम्बूनदकनकवर्णप्रभामण्डलमेघैः सर्वगगनतलं संछादयन्, आदित्यवर्णप्रभामण्डलमेघैः सर्वं गगनतलं संछादयन्, चन्द्रज्योतिश्चक्रमण्डलवर्णमेघैः सर्वगगनतलं संछादयन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य पूर्वदक्षिणां दिशमुपनिश्रित्य विरजोवैरोचनमणिश्रीकुसुमकूटागारान् सिंहवज्रमणिपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य रत्नार्चिज्वलनमणिराजसंछादितानि[1] बोधिसत्त्वशरीराण्यधिष्ठाय ॥

दक्षिणपश्चिमाया दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानां लोकधातुसमुद्राणां परेण मणिसूर्यप्रतिभासगर्भाया लोकधातोर्धर्मचन्द्रसमन्तज्ञानावभासराजस्य तथागतस्य बुद्धक्षेत्रात् सर्वमारमण्डलविकिरणज्ञानध्वजो नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्षन्मण्डलसमुद्राद्दुच्चलितो येन सहालोकधातुस्तेनोपसंक्रान्तः । सर्वरोमविवरेभ्य आकाशधातुविपुलान् कुसुमार्चिमेघान् प्रमुञ्चन्, सर्वरोमविवरेभ्य आकाशधातुविपुलान् सर्वनावार्चिमेघान् प्रमुञ्चन्, सर्वरोमविवरेभ्य आकाशधातुविपुलान् मणिरत्नार्चिमेघान् प्रमुञ्चन्, सर्वरोमकूपेभ्य आकाशधातुविपुलान् नानागन्धधूपधूपितरत्नरत्नार्चिमेघान् प्रमुञ्चन्, सर्वरोमविवरेभ्य आकाशधातुविपुलान् नागनिकुर्वितविद्युदर्चिमेघान् प्रमुचन्, सर्वरोमविवरेभ्य आकाशधातुविपुलान् वैरोचनमणिरत्नार्चिमेघान् प्रमुञ्चन्, सर्वरोमविवरेभ्य आकाशधातुविपुलान् सुवर्णज्वलनरत्नार्चिमेघान् प्रमुञ्चन्, सर्वरोमविवरेभ्य आकाशधातुविपुलान् श्रीगर्भमणिराजज्वलनार्चिमेघान् प्रमुञ्चन्, सर्वरोमविवरेभ्य आकाशधातुविपुलांस्तथागतस्मृतिसमुद्रसदृशत्र्यध्वतलावभासनयनरत्नार्चिमेघान् प्रमुञ्चन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य दक्षिणपश्चिमां दिशमुपनिश्रित्य समन्तदिगभिमुखरश्मिजालबिन्दुसद्धर्मधातुप्रभासमहामणिरत्नकूटागारान्

1 B विचित्राणि कोश° 2 B adds समन्तप्रभमणिचूडावबद्धानि

गन्धप्रदीपार्चिमणिपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य विमलगर्भमणिराजजालसंछादितानि सर्वसत्त्वप्रस्थाननिर्घोषमणिराजमकुटावबद्धानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

पश्चिमोत्तरायां दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानां लोकधातुसमुद्राणां परेण वैरोचनश्रीप्रणिधिगर्भाया लोकधातोः समन्तवैरोचनश्रीमेरुराजस्य तथागतस्य बुद्धक्षेत्राद्वैरोचनप्रणिधिज्ञानकेतुर्नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्षन्मण्डलादुच्चलित्वा येन सहालोकधातुस्तेनोपसंक्रान्तः । सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्तास्तथागतकायप्रतिबिम्बमेघान् निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्तबोधिसत्त्वकायप्रतिबिम्बमेघान् निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्ततथागतपर्षन्मण्डलकायप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्तबुद्धनिर्माणचक्रप्रतिबिम्बकायमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्ततथागतपूर्वयोगप्रतिबिम्बकायमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्तश्रावकप्रत्येकबुद्धकायप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्ततथागतकायबोधिमण्डवृक्षरूपप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्तबुद्धविकुर्वितप्रतिबिम्बकायमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्तलोकेन्द्रकायप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वत्र्यध्वप्राप्तपरिशुद्धबुद्धक्षेत्रमेघान्निश्चारयन्, क्षणे क्षणे सर्वमाकाशधातुं स्फरन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य पश्चिमोत्तरां दिशमुपनिश्रित्य समन्तदिग्वैरोचनमणिराजगर्भकूटागारान् जगद्विरोचनमणिपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य अजितप्रभमुक्ताजालसंछन्नानि समन्तावभासप्रभामणिमकुटावबद्धानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

अधोदिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानां लोकधातुसमुद्राणां परेण सर्वतथागतप्रभामण्डलवैरोचनाया लोकधातोरसङ्गज्ञानकेतुध्वजराजस्य तथागतस्य बुद्धक्षेत्रात् सर्वावरणविष्कम्भिज्ञानविक्रामी नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्षन्मण्डलसमुद्रादभ्युद्गम्य येन सहालोकधातुस्तेनोपसंक्रान्तः । सर्वरोमविवरेभ्यः[1] सर्वजगन्मन्त्रसागरस्वरनिरुक्तिनिर्हारनिर्घोषान्निश्चारयन्, सर्वत्र्यध्वबोधिसत्त्वप्रसूतिनयसागरमेघनिर्घोषान्निगर्जन्, सर्वबोधिसत्त्वप्रणिधानाभिनिर्हारनयसागरनिर्घोषान् प्रमुञ्चन्, सर्वबोधिसत्त्वपारमितापरिशुद्धिपरिपूरिनयसागरमेघनिर्घोषान्

---

[1] B om सर्वरोममुखेभ्य

प्रमुञ्चन्, सर्वबोधिसत्त्वचर्यामण्डलसर्वक्षेत्रस्फरणनयसागरनिर्घोषान् प्रमुञ्चन्, सर्वबोधिसत्त्वसमुदागमनिकुर्वितनयसागरनिर्घोषान् प्रमुञ्चन्, सर्वतथागतबोधिमण्डोपसंक्रमणमारकलिविकिरणबोधिविबुध्यनयनिकूर्णननिर्घोषमागरान् प्रमुञ्चन्, सर्वतथागतधर्मचक्रप्रवर्तनसूत्रान्तनयनामसागरनिर्घोषमेघाभिगर्जन्, सर्वजगद्विनयकालचक्रविनयधर्मनयोपायनिर्घोषान् प्रमुञ्चन्, सर्वज्ञानाधिगमयथाप्रणिधिकुशलमूलावशेषकालोपायधर्मनयसागरनिर्घोषान् प्रमुञ्चन् 5 येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य अधोदिशमुपनिश्रित्य सर्वतथागतविमानप्रतिभासगर्भसर्वरत्नविचित्रकोशकूटागारान् सर्वरत्नविद्रुमपद्मसंधारितगर्भसिंहासनानि च अभिनिर्माय न्यषीदत् पर्यङ्कमाभुज्य सर्वबोधिमण्डप्रतिभासघ्नजमणिमकुटचूडावबद्धानि सर्वक्षेत्रावभासमणिराजजालसंछादितानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

ऊर्ध्वाया दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाना लोकधातुसमुद्राणां परेण 10 अक्षयबुद्धदर्शननिर्देशाया[1] लोकधातौ समन्तज्ञानमण्डलप्रतिभासनिर्घोषस्य तथागतस्य बुद्धक्षेत्राद्धर्मधातुप्रणिधितलनिर्भेदो नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्यन्तमण्डलसमुद्राद्दुच्चलित्वा येन सहालोकधातुस्तेनोपसंक्रान्तः। सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वकायात् सर्वाङ्गप्रत्यङ्गेभ्यः सर्ववचनपथेभ्यः सर्वचीवरपरिवारेभ्यः सर्वबोधिसत्त्वपरिवारस्य आत्मनो भगवतश्च वैरोचनस्य 15 पूर्वान्तकोटीगतानां च अतीतानागतानां[2] सर्वतथागतानामपरान्तकोटीगतानां च अनागतानां व्याकृताव्याकृतानां[3] सर्वतथागतानां प्रत्युत्पन्नानां च दशसु दिक्षु सर्वक्षेत्रप्रसरप्रतिष्ठितानां सर्वदानपारमिताप्रतिसंयुक्तान् पूर्वयोगसमुद्रान् सर्वप्रतिग्राहकदेयवस्तुप्रतिबिम्बानि च लक्षणानुव्यञ्जनरोममुखसर्वशरीराङ्गप्रत्यङ्गवचनपथसर्वशरीरपरिवारेषु प्रतिभासप्राप्तानि निश्चारयन्, सर्वशीलपारमिताप्रतिसंयुक्तानपि पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् संदर्शयन्, 20 सर्वक्षान्तिपारमितासंप्रयुक्तानां च अङ्गप्रत्यङ्गच्छेदेन निदर्शनसंप्रयुक्तानपि पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् संदर्शयन्, सर्वबोधिसत्त्ववीर्यवेगविक्रमसंप्रयुक्तानपि पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् संदर्शयन्, सर्वतथागतध्यानसागरपर्येष्टिनिष्पत्तिसंप्रयुक्तानपि पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् संदर्शयन्, सर्वतथागतधर्मचक्रगतिपरिनिष्पत्तिधर्मपर्येष्टिसंप्रयुक्तानपि सर्वास्तिपरित्यागमहाव्यवसायशरीरमुखबिम्बविज्ञापनान् पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् 25 संदर्शयन्, सर्वतथागतदर्शनप्रीतिसर्वबोधिसत्त्वमार्गसर्वजगदभिरोचनसंप्रयुक्तानपि पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् संदर्शयन्, सर्वबोधिसत्त्वप्रणिधानसागराभिनिर्हारमुखपरिशुद्धिव्यूहसंप्रयुक्तानपि पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् संदर्शयन्, सर्वबोधिसत्त्वबलपारमितानिष्पत्तिविक्रमविशुद्धिसंप्रयुक्तानपि पूर्वयोगसमुद्रान् प्रतिभासप्राप्तान् संदर्शयन्, विपुलविपुलधर्मधातुं सर्वविकुर्वितमेघैः स्फरित्वा सर्वबोधिसत्त्वज्ञानमण्डलसंप्रयुक्तानपि पूर्वयोगसमुद्रान् 30

---

[1] B अरूप° for अक्षय°. [2] B adds व्याकृतानां [3] B om. अपरान्त.. तथागतानां
[4] B पूर्व° for सर्व°.

गन्धप्रदीपार्चिर्मणिपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदन् पर्यङ्कमाभुज्य विमलगर्भमणिराजजालसंछादितानि सर्वसत्त्वप्रस्थाननिर्घोषमणिराजमुकुटानुबद्धानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

पश्चिमोत्तराया दिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाना लोकधातुसमुद्राणा
5 परेण वैरोचनश्रीप्रणिधिगर्भाया लोकधातोः समन्तवैरोचनश्रीमेरुराजस्य तथागतस्य बुद्धक्षेत्राद्वैरोचनप्रणिधिज्ञानकेतुर्नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्षन्मण्डलादुच्चलित्वा येन सहालोकधातुस्तेनोपसंक्रान्तः । सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वाध्वप्राप्ततथागतकायप्रतिबिम्बमेघान् निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः
10 सर्वशरीरात् सर्वाध्वप्राप्तबोधिसत्त्वकायप्रतिबिम्बमेघान् निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वाध्वप्राप्ततथागतपर्षन्मण्डलकायप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वाध्वप्राप्तबुद्धनिर्माणचक्रप्रतिबिम्बकायमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वाध्वप्राप्ततथागतपूर्वयोगप्रतिबिम्बकायमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्व-
15 शरीरात् सर्वाध्वप्राप्तश्रावकप्रत्येकबुद्धकायप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वाध्वप्राप्ततथागतकायबोधिमण्डवृक्षरूपप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वाध्वप्राप्तबुद्धविकुर्वितप्रतिबिम्बकायमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्वशरीरात् सर्वाध्वप्राप्तलोकेन्द्रकायप्रतिबिम्बमेघान्निश्चारयन्, सर्वलक्षणानुव्यञ्जनेभ्यः सर्वरोममुखेभ्यः सर्व-
20 शरीरात् सर्वाध्वप्राप्तपरिशुद्धबुद्धक्षेत्रमेघान्निश्चारयन्, क्षणे क्षणे सर्वमाकाशधातुं स्फरन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य पश्चिमोत्तरां दिशमुपनिश्रित्य समन्तदिग्वैरोचनमणिराजगर्भकूटागारान् जगद्विरोचनमणिपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदन् पर्यङ्कमाभुज्य अजितप्रभमुक्ताजालसंछन्नानि समन्तावभासप्रभामणिमुकुटानुबद्धानि बोधिसत्त्वशरीराण्यधिष्ठाय ॥

२० अधोदिशि अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाना लोकधातुसमुद्राणा परेण सर्वतथागतप्रभामण्डलवैरोचनाया लोकधातोरसङ्गज्ञानकेतुध्वजराजस्य तथागतस्य बुद्धक्षेत्रात् सर्वावरणविकिरणज्ञानविक्रामी नाम बोधिसत्त्वः सार्धमनभिलाप्यलोकधातुसमुद्रपरमाणुरजःसमैर्बोधिसत्त्वैस्तेन भगवता अनुज्ञातः ततः पर्षन्मण्डलसमुद्रादभ्युद्गम्य येन सहालोकधातुस्तेनोपसंक्रान्तः । सर्वरोमविवरेभ्यः सर्वजगन्मन्त्रसागरस्वरनिरुक्तिनिर्हारनिर्घोषान्निश्चारयन्,
30 सर्वाध्वबोधिसत्त्वप्रसृतिनयसागरमेघनिर्घोषान्निर्गर्जन्, सर्वबोधिसत्त्वप्रणिधानाभिनिर्हारनयसागरनिर्घोषान् प्रमुञ्चन्, सर्वबोधिसत्त्वपारमितापरिशुद्धिपरिपूरिनयसागरमेघनिर्घोषान्

---

1 B om सर्वरोममुखेभ्यः.

बोधिसत्त्वप्रातिहार्यं बोधिसत्त्वपर्षन्मण्डलं बोधिसत्त्वदिगवस्थानं बोधिसत्त्वसिंहासनव्यूहं बोधिसत्त्वभवनं बोधिसत्त्वविहारं बोधिसत्त्वसमाधिविक्रीडितं बोधिसत्त्वव्यवलोकितं बोधिसत्त्वविजृम्भितं बोधिसत्त्वविक्रमं बोधिसत्त्वतथागतपूजां बोधिसत्त्वव्याकरणं बोधिसत्त्वविपाकं बोधिसत्त्वपराक्रमं बोधिसत्त्वधर्मकायपरिशुद्धिं बोधिसत्त्वज्ञानकायपरिपूरिं बोधिसत्त्वप्रणिधिकायविज्ञप्तिं बोधिसत्त्वरूपकायपरिनिष्पत्तिं बोधिसत्त्वलक्षणसंपत्परिशुद्धिं बोधिसत्त्वानन्तबल- 5 प्रभामण्डलव्यूहं बोधिसत्त्वरश्मिजालप्रमुञ्चनं बोधिसत्त्वनिर्मितमेघावसृजनं बोधिसत्त्वदिग्जालस्फरणं बोधिसत्त्वचर्यामण्डलविकुर्वितमद्राक्षुः। तत्कस्य हेतोः? कुशलमूलासभागतया। न हि तैः सर्वबुद्धविकुर्वितदर्शनसंवर्तनीयानि कुशलमूलान्युपचितानि। न च तैषां पूर्वं दशदिग्लोकधातुपर्यापन्नाः सर्वबुद्धक्षेत्रगुणव्यूहपरिशुद्धयः संवर्णिताः। न च तैषां बुद्धैर्भगवद्भिर्नानाबुद्धविकुर्वितानि संवर्णितानि। न च तैः पूर्वं संसारे संसरद्भिरनुत्तरायां सम्यक्संबोधौ 10 सत्त्वाः पारमितासु समादापिताः। न च तैर्बोधिचित्तोत्पादः परसंतानेषु प्रतिष्ठापितः। न च ते तथागतवंशस्यानुपच्छेदाय प्रतिपन्नाः। न च सर्वसत्त्वसंग्रहाय प्रयुक्ताः। न च तैर्बोधिसत्त्वाः पारमितासु समादापिताः। न च तैः पूर्वं संसारे संसरद्भिः सर्वजगद्विशेषवतीज्ञानभूमिरध्यालम्बिता। न च तैः सर्वज्ञतासंवर्तनीयं कुशलमूलमुपचितम्। न च तैस्तथागतलोकोत्तरकुशलमूलपरिनिष्पन्ना सर्वबुद्धक्षेत्रपरिशुद्धिविकुर्विताभिज्ञा ज्ञाता। न च बोधि- 15 सत्त्वचक्षुष्पथविज्ञप्तिरसाधारणलोकोत्तरबोध्यालम्बनकुशलमूलमहाबोधिसत्त्वप्रणिधानसंभवा ज्ञाता। न च तथागताधिष्ठाननिर्यातमायागतधर्मता निर्वृत्ता। स्वप्नोपमबोधिसत्त्वनानासंज्ञामहाधिष्ठाना महाबोधिसत्त्वप्रीतिवेगविवर्धना समन्तभद्रबोधिसत्त्वज्ञानचक्षुष्पथविज्ञप्तयोऽसाधारणाः सर्वश्रावकप्रत्येकबुद्धैर्ज्ञाताः। तेन ते महाश्रावकाः अग्रयुगभद्रयुगप्रमुखास्तं तथागतविकुर्वितं न पश्यन्ति, न शृण्वन्ति, न जानन्ति, न बुध्यन्ति, 20 नावतरन्ति, नाधिमुच्यन्ते नाधिगच्छन्ति, न समन्वाहरन्ति, न विलोकयन्ति, न निरीक्षन्ते, न निध्यायन्ति, नोपनिध्यायन्ति। तत्कस्य हेतोः? बुद्धज्ञानगोचरोऽसौ, न श्रावकगोचरः। तेन ते महाश्रावकास्तत्रैव जेतवने स्थितास्तानि बुद्धविकुर्वितानि न पश्यन्ति। न हि तेषां तद्भागीयं कुशलमूलमस्ति, न च तेषां तज्ज्ञानचक्षुर्विशुद्धम्, येन तानि बुद्धविकुर्वितानि पश्येयुः। न च समाधिः संविद्यते, येन परीत्तालम्बने विपुलविकुर्विताधिष्ठानान्यवतरेयुः। 25 नापि विमोक्षाः संविद्यते, न सा ऋद्धिः, न सा वृषभिता, न तद्बलम्, न तदाधिपतेयम्, न तत्स्थानम्, न संज्ञा, न चक्षुर्विक्रमः संविद्यते, येन तत्संजानीयुर्वा पश्येयुर्वा अवतरेयुर्वा अधिगच्छेयुर्वा स्फरेयुर्वा प्रसरेयुर्वा व्यवलोकयेयुर्वा अनुभवेयुर्वा आक्रमेयुर्वा परेषां प्रभावयेयुर्वा देशयेयुर्वा सूचयेयुर्वा संवर्णयेयुर्वा संदर्शयेयुर्वा उपनामयेयुर्वा उपसंहरेयुर्वा, तत्र वा सत्त्वानि समादापयेयुः, नियोजयेयुः प्रतिष्ठापयेयुः, तस्या बुद्धविकुर्वित- 30

---

१ B °मूलसभाग° २ B om पारमितासु ३ B तद्भोगाय° ४ S नासौ ५ B om अवतरेयुर्वा

प्रतिभासप्राप्तान् संदर्शयन् येन भगवांस्तेनोपसंक्रम्य सार्धं परिवारेण भगवन्तं नमस्कृत्य
ऊर्ध्वां दिशमुपनिश्रित्य सर्वरत्नेन्द्रविचित्रव्यूहकूटागारान्, वज्रेन्द्रधारासमन्तभद्रबोधिसत्त्व-
नीलपद्मगर्भसिंहासनानि च अभिनिर्माय न्यषीदन्, पर्यङ्कमाभुज्य सर्वरत्नज्वलनमणिराज-
जालसंछन्नानि च्यवनतथागतनामनिर्घोषमणिराजहारप्रलम्बचूडामणिरत्नमकुटावबद्धानि बोधि-
5 सत्त्वशरीराण्यधिष्ठाय ॥

सर्वे च ते बोधिसत्त्वा सपरिवारा समन्तभद्रबोधिसत्त्वचर्याप्रणिधाननिर्याता
सर्वतथागतपादमूलमुखोद्दर्शनाय परिशुद्धज्ञानचक्षुष सर्वतथागतधर्मचक्रसूत्रान्तनयनिर्घोष-
समुद्रसुश्रोत्रसमवसरणा सर्वबोधिसत्त्ववशिताप्रतिलम्भपरमपारमिप्राप्ता सर्वतथागतोपसंक्र-
मणक्षणक्षणसंदर्शनविकुर्वितनिर्याता सर्वलोकधात्वेककायस्फरणविषया सर्वतथागतपर्ष-
10 न्मण्डलाभ्युद्गतविरोचनकाया एकपरमाणुरजसि सर्वलोकधात्वेकलोकधातुप्रतिभाससमव-
सरणसंदर्शनविषया सर्वजगत्परिपाचनविनयकालागमनप्रवेणा सर्वतथागतधर्मचक्रघोषसर्व-
रोमसुखनिर्गर्जनविषया मायोपमसर्वसत्त्वधातुपरिज्ञाप्रतिलब्धा प्रतिभासोपमसर्वतथागता-
वतीर्णा स्वप्नोपमसर्वभवगत्युपपत्तिज्ञाननिर्याता प्रतिबिम्बोपमसर्वकर्मविपाकज्ञानविशुद्धा
मरीच्युपमसर्वाभिनिर्वृत्तिज्ञानाभिज्ञा निर्मितोपमसर्वलोकधातुप्रसरावतीर्णा दशतथागतब-
15 ज्ञानावभासप्रतिलब्धा वैशारद्यर्षभसिंहनादपराक्रमा अक्षयप्रतिसंवित्समुद्रावतीर्णा सर्व-
जगन्मन्त्रसागरधर्मनिरुक्तिज्ञानप्रतिलब्धा असङ्गधर्मधातुगगनज्ञानगोचरा सर्वधर्मानावरण-
ज्ञानप्रतिलब्धा सर्वबोधिसत्त्वाभिज्ञाज्ञानमण्डलविशुद्धा सर्वमारमण्डलविक्षोभणवीर्या सर्व-
व्यूहज्ञानबलप्रतिष्ठाना अनावरणसर्वज्ञज्ञानप्रतिलब्धा अनालयगगनगोचरा अनाव्यूहसर्वज्ञता-
भूमिगमनवीर्या सर्वभवानिलम्भज्ञानगोचरा सर्वधर्मधातुनयसागरज्ञानप्रसरिता सर्वलोक-
20 धातुसंभेदज्ञानमुखप्रविष्टा सर्वलोकधात्वन्योन्यसमवसरणविकुर्वितनिर्याता सर्वलोकधातु-
ष्वात्मभावोपपत्त्युपपन्नकायसंदर्शना सर्वलोकधातुसूक्ष्मोदारविपुलसंक्षिप्तनानासंस्थानप्रतिविद्धा
सूक्ष्मारम्बणनिपुणक्षेत्रसमवसरणज्ञानाधिगता विपुलालम्बनसूक्ष्मज्ञानानुगता सर्वबुद्धैक-
चित्तक्षणविज्ञप्तिप्रतिलब्धा सर्वतथागतज्ञानशरीरा सर्वदिक्सागरासंमोहज्ञानप्रतिलब्धा
सर्वदिक्समुद्रैकचित्तक्षणविकुर्वितस्फरणा । एवंरूपाप्रमाणसमन्वागतैर्बोधिसत्त्वै सर्वं जेतवनं
25 परिपूर्णमभूत् यदुत तथागतानामधिष्ठानेन ॥

न च ते महाश्रावका शारिपुत्रमौद्गल्यायनमहाकाश्यपरेवतसुभूत्यनिरुद्धनन्दिकै-
म्फिलमहाकात्यायनपूर्णमैत्रायणीपुत्रप्रमुखा जेतवने तथागतविकुर्वितमद्राक्षु । न च तान्
बुद्धव्यूहान् बुद्धवृषभिता बुद्धविक्रीडितं बुद्धप्रातिहार्यं बुद्धाधिपतेयता बुद्धचरितविकुर्वितं
बुद्धप्रभावं बुद्धाधिष्ठानं बुद्धक्षेत्रपरिशुद्धिमद्राक्षु । नापि तमचिन्त्यं बोधिसत्त्वविषयं बोधिसत्त्व-
30 समागमं बोधिसत्त्वसमवसरणं बोधिसत्त्वसंनिपातं बोधिसत्त्वोपसंक्रमणं बोधिसत्त्वविकुर्वितं

---

१ S °मुखा° २ B °प्रवण ३ B °प्रतिबिम्बा ४ S om. सर्वं ५ B adds °कंफिल°

बोधिसत्त्वप्रातिहार्यं बोधिसत्त्वपर्षन्मण्डल बोधिसत्त्वदिग्वस्थान बोधिसत्त्वसिंहासनव्यूह
बोधिसत्त्वभवन बोधिसत्त्वविहार बोधिसत्त्वसमाधिविक्रीडित बोधिसत्त्वव्यवलोकित बोधि-
सत्त्वविजृम्भित बोधिसत्त्वविक्रम बोधिसत्त्वतथागतपूजा बोधिसत्त्वव्याकरण बोधिसत्त्वविपाक
बोधिसत्त्वपराक्रम बोधिसत्त्वधर्मकायपरिशुद्धिं बोधिसत्त्वज्ञानकायपरिपूरिं बोधिसत्त्वप्रणिधि-
कायविज्ञप्तिं बोधिसत्त्वरूपकायपरिनिष्पत्तिं बोधिसत्त्वलक्षणसंपत्परिशुद्धिं बोधिसत्त्वानन्तवर्ण- 5
प्रभामण्डलव्यूह बोधिसत्त्वरश्मिजालप्रमुञ्चन बोधिसत्त्वनिर्मितमेघावसृजन बोधिसत्त्वदि-
ग्जालस्फरण बोधिसत्त्वचर्यामण्डलविकुर्वितमद्राक्षुः। तत्कस्य हेतोः? [1] कुशलमूलासभागतया।
न हि तैः सर्वबुद्धविकुर्वितदर्शनसंवर्तनीयानि कुशलमूलान्युपचितानि। न च तैः पूर्वं दश-
दिग्लोकधातुपर्यापन्नाः सर्वबुद्धक्षेत्रगुणव्यूहपरिशुद्धयः संवर्णिताः। न च तैः बुद्धैर्भगवद्भि-
र्नानाबुद्धविकुर्वितानि संवर्णितानि। न च तैः पूर्वं संसारे संसरद्भिरनुत्तरायां सम्यक्संबोधौ 10
सत्त्वाः पारमितासु समादापिताः। न च तैर्बोधिचित्तोत्पादः परसंतानेषु प्रतिष्ठापितः। न
च ते तथागतवंशस्यानुपच्छेदाय प्रतिपन्नाः। न च सर्वसत्त्वसंग्रहाय प्रयुक्ताः। न च
तैर्बोधिसत्त्वाः पारमितासु समादापिताः। न च ते पूर्वं संसारे संसरद्भिः सर्वजगद्विशेषवती-
ज्ञानभूमिरभ्यालम्बिता। न च तैः सर्वज्ञतासंवर्तनीयं कुशलमूलमुपचितम्। न च तैस्तथागत-
लोकोत्तरकुशलमूलपरिनिष्पन्ना सर्वबुद्धक्षेत्रपरिशुद्धिविकुर्विताभिज्ञा ज्ञाता। न च बोधि- 15
सत्त्वचक्षुष्पथविज्ञप्तिरसाधारणलोकोत्तरगोचराभ्यन्तरकुशलमूलमहाबोधिसत्त्वप्रणिधानसंभवा
ज्ञाता। न च तथागताधिष्ठाननिर्यातमायागतधर्मता निर्वृत्ता। स्वप्नोपम-
बोधिसत्त्वनानासंज्ञाप्रज्ञाधिष्ठाना महाबोधिसत्त्वप्रीतिवेगनिर्वर्धना समन्तभद्रबोधिसत्त्वज्ञान-
चक्षुष्पथविज्ञप्तयोऽसाधारणाः सर्वश्रावकप्रत्येकबुद्धैर्ज्ञाताः। तेन ते महाश्रावका अग्रयुग-
भद्रयुगप्रमुखास्तं तथागतविकुर्वितं न पश्यन्ति, न शृण्वन्ति, न जानन्ति, न बुध्यन्ति, 20
नावतरन्ति, नाधिमुच्यन्ते नाधिगच्छन्ति, न समन्वाहरन्ति, न विलोकयन्ति, न निरीक्षन्ते,
न निध्यायन्ति, नोपनिध्यायन्ति। तत्कस्य हेतोः? [2] बुद्धज्ञानगोचरोऽसौ, न श्रावकगोचरः।
तेन ते महाश्रावकास्तत्रैव जेतवने स्थितास्तानि बुद्धविकुर्वितानि न पश्यन्ति। न हि तेषां
तद्भागीयं कुशलमूलमस्ति, न च तेषां तज्ज्ञानचक्षुर्विशुद्धम्, येन तानि बुद्धविकुर्वितानि
पश्येयुः। न च समाधिः संविद्यते, येन परीत्तालम्बने विपुलविकुर्विताधिष्ठानान्यवतरेयुः। 25
नोऽपि विमोक्षाः संविद्यते, न सा ऋद्धिः, न सा वृषभिता, न तद्बलम्, न तदाधिपतेयम्,
न तत्स्थानम्, न संज्ञा, न चक्षुर्विमलं संविद्यते, येन तत्संजानीयुर्वा पश्येयुर्वा
अवतरेयुर्वा अधितिष्ठेयुर्वा स्फरेयुर्वा प्रसरेयुर्वा व्यवलोकयेयुर्वा अनुसरेयुर्वा आक्रमेयुर्वा
परेषां प्रभावयेयुर्वा देशयेयुर्वा सूचयेयुर्वा संवर्णयेयुर्वा संदर्शयेयुर्वा उपनामयेयुर्वा उपसं-
हरेयुर्वा, तत्र वा सत्त्वानि समादापयेयुः, निर्योजयेयुः प्रतिष्ठापयेयुः, तत्रां बुद्धविकुर्वित- 30

---

१ S °मूलसभाग° २ B om. पारमिताम् ३ B तद्भोगाय° ४ S मार्गो ५ B om. आवरेयुर्वा

धर्मतायां सत्त्वान्नियोजयेयुः । तत्तेषां ज्ञानं न संविद्यते । तत्कस्य हेतोः? तथा हि ते श्रावकयानेन निर्याताः, श्रावकमार्गेण समुदागताः, श्रावकचर्यामण्डलपरिपूर्णाः श्रावकफलप्रतिष्ठिताः, सत्यावभासज्ञाननिश्रिताः भूतकोटीप्रतिष्ठिताः । अत्यन्तशान्तनिष्ठां गताः महाकरुणाविरहितचेतसः सर्वलोकनिरपेक्षाः आत्मकार्यपरिप्राप्ताः । ते तत्रैव जेतवने संनिपतिताः संनिषण्णाः । भगवतः पुरतो वामदक्षिणपृष्ठतो भगवतोऽभिमुखं संनिषण्णाः । न च तानि जेतवने बुद्धविकुर्वितान्यद्राक्षुः । तत्कस्य हेतोः? न हि शक्यमसमार्जितसर्वज्ञताज्ञानैरसमुदानीतसर्वज्ञताज्ञानैः असंप्रस्थितसर्वज्ञताज्ञानैः अप्रणिहितसर्वज्ञताज्ञानैः अनभिनिर्हृतसर्वज्ञताज्ञानैः अपरिभावितसर्वज्ञताज्ञानैः अपरिशोधितसर्वज्ञताज्ञानैः तत्तथागतसमाधिविकुर्वितमवलोकयितुं वा प्रतिपत्तुं वा द्रष्टुमधिगन्तुं वा । तत्कस्य हेतोः? अभिजातबोधिसत्त्वचक्षुष्पथविज्ञेयं हि तत्, न श्रावकचक्षुष्पथविज्ञेयम् । तेन ते महाश्रावकास्तत्रैव जेतवने स्थितास्तानि तथागतविकुर्वितानि बुद्धाधिष्ठानानि बुद्धक्षेत्रपरिशुद्धिं बोधिसत्त्वसंनिपातं न पश्यन्ति ॥

तद्यथापि नाम गङ्गाया महानद्या उभयतस्तीरे बहूनि प्रेतशतसहस्राणि समागतानि क्षुत्पिपासाप्रपीडितानि नग्नानि निर्वसनानि विदग्धगात्रच्छविवर्णानि वातातपपरिशुष्काणि काकसंघोपद्रुतानि वृकशृगालैर्विभ्रास्यमानानि[1] तां गङ्गां महानदीं न पश्यन्ति । केचित्पुनः शुष्कां पश्यन्ति निरुदकां भस्मपरिपूर्णाम्, आवरणीयकर्मावृतत्वात् । एवमेव ते स्थविरा महाश्रावकास्तत्रैव जेतवने स्थिताः तानि तथागतविकुर्वितानि न पश्यन्ति, नावतरन्ति, सर्वज्ञताविपक्षिकाविद्यापटलनेत्रपर्यवनद्धत्वात्, सर्वज्ञताभूमिकुशलमूलापरिगृहीतत्वात् ॥

तद्यथापि नाम पुरुषो महत्यहि[2] वर्तमाने महतो जनकायस्य मध्ये स्त्यानमिद्धमवक्रामेत् । स सुप्तः स्वप्नान्तरगतस्तत्रैव प्रदेशे देवनगरं पश्येत् । सुदर्शनचक्रनिलयं सर्वं च सुमेरुतलं सवृक्षं सोद्यानमण्डलमप्सरःकोटीनियुतशतसहस्राकीर्णं देवपुत्रकोटीनियुतशतसहस्राध्युषितं विचित्रदिव्यपुष्पाभिकीर्णम् । विविधदिव्यवस्त्रमुक्ताहाररत्नाभरणस्रैक्प्रमुक्तकोशांश्च कल्पवृक्षान् पश्येत् । नानाविधदिव्यवाद्यसमीरितमनोज्ञमधुरनिर्घोषांश्च वाद्यवृक्षान् पश्येत् । अनेकविधांश्च रतिक्रीडाव्यूहान् पश्येत् । मधुरांश्च दिव्याप्सरोगणसंगीतिवाद्यशब्दान् शृणुयात् । तत्रस्थं चात्मानं संजानीयात् । सर्वावन्तं च तत्प्रदेशं दिव्यव्यूहविभूषितं पश्येत् । स च सर्वो जनकायो न पश्येत्, न जानीयात्, न विलोकयेत्, तत्रैव प्रदेशे स्थितः सन् । तत्कस्य हेतोः? तस्यैव हि पुरुषस्य स्वप्नान्तरगतस्य तद्दर्शनम्, तत्रैव च प्रदेशे स्थितस्य तस्य महाजनकायस्यादर्शनम् । एवमेव ते बोधिसत्त्वास्ते च लोकेन्द्रा बोध्यभिमुखा विपुलेन बुद्धाधिष्ठानेन स्वकुशलमूलसुसमार्जिततया च सर्वज्ञताप्रणिधानस्वभिनिर्हृततया च सर्वतथागतगुणसुप्रतिपन्नतया च महाव्यूहबोधिसत्त्वमार्गसुप्रतिष्ठिततया च सर्वज्ञताज्ञानसर्वाकारधर्माहृतसुपरिनिष्पन्नतया च समन्तभद्रबोधि-

१ S विभ्राम्यमानानि. २ B महति महे. ३ B °पुष्प' for स्रक्.

सत्त्वचर्याविशेषप्रणिधानपरिपूरिविशुद्ध्या च सर्वबोधिसत्त्वभूमिज्ञानमण्डलाक्रमणतया च सर्वबोधिसत्त्वसमाधिविहारविक्रीडनतया च सर्वबोधिसत्त्वज्ञानगोचरासङ्गविचारणतया च तामचिन्त्यां बुद्धवृषभितां बुद्धविक्रीडितं पश्यन्ति, अवतरन्ति, अनुभवन्ति। ते च महाश्रावका अग्रयुगभद्रयुगप्रमुखा न पश्यन्ति न जानन्ति बोधिसत्त्वचक्षुर्विरहितत्वात् ॥

तद्यथापि नाम हिमवति पर्वतराजे औषध्याकराकीर्णे मन्त्रविद्यौषधिज्ञानग्रहणसिद्धविद्य पुरुष सर्वौषधिविधीन् प्रजानन् ओषधिग्रहणकर्म कुर्यात्। तत्रैव च शैलेन्द्राभिरूढा पशुगवेडकऋक्षमृगलुब्धकास्तदन्ये वा पुनरौषध्यविधिज्ञा पुरुषास्तमौषधिरसवीर्यविपाकप्रमाणोपाययोगं न प्रजानन्ति। एवमेव ते बोधिसत्त्वास्तथागतज्ञानविषयमवतीर्णा बोधिसत्त्वविकुर्वितविषयनिर्याताः तथागतसमाधिविकुर्वितविषयं प्रजानन्ति, ते च महाश्रावका अग्रयुगभद्रयुगप्रमुखास्तत्रैव जेतवने विहरन्तः स्वकार्यसंतुष्टा परकार्यनिरुत्सुका उपेक्षका दृष्टधर्मसुखविहारेण सुखस्पर्शं विहरन्ति, न च तथागतसमाधिविषयविकुर्वितविषयं न प्रजानन्ति ॥

तद्यथापि नाम इयं महापृथिवी सर्वरत्नाकरसमृद्धा निधिशतसहस्रनिचिता नानाविधानन्तरत्नपरिपूर्णा। तत्र रत्नगोत्रनिधिज्ञानकृतविद्य पुरुषो रत्नपरीक्षस्तत्र पर्यवदातमतिर्निधानतत्त्वज्ञानशिल्पसुशिक्षितो विपुलपुण्यबलोपस्तब्ध ततो यथेष्टं रत्नान्यादाय आत्मानं सम्यक् प्रीणयेद्, मातापितरं सम्यक्परिचरेत्, पुत्रदारं च पोषयेत्। तदन्येषामपि सत्त्वानां वृद्धानामातुराणां दरिद्राणां विनिपतितानामशनवसनविप्रहीणानां संविभागं कुर्यात्। त्रिविधां च अर्थरतिमनुभवेत्। ये तु पुनस्ते रत्नाकरनिधानाविधिज्ञाः सत्त्वाः, अकृतपुण्या अपरिशुद्धरत्नज्ञानचक्षुषस्तेषां रत्नाकरान् रत्ननिधीन् प्रजानन्ति, तत्रैव च विचरन्ति। न च रत्नानि गृह्णन्ति। न रत्नकार्याणि कुर्वन्ति। एवं ते बोधिसत्त्वा जेतवने तत्र अचिन्त्ये तथागतविषये सुपरिशुद्धज्ञानचक्षुषोऽचिन्त्यतथागतज्ञानविषयावतीर्णास्तानि बुद्धविकुर्वितानि पश्यन्ति। धर्मनयसागरांश्चावतरन्ति। समाधिसमुद्रांश्च निष्पादयन्ति। तथागतपूजोपस्थाने च प्रयुज्यन्ते। सर्वधर्मपरिग्रहाय चोद्युज्यन्ते। सर्वसत्त्वांश्च संगृह्णन्ति चतुर्भिः संग्रहवस्तुभिः। ते च महाश्रावकास्तानि तथागतविकुर्वितानि तं च महान्तं बोधिसत्त्वगणसंनिपातं न पश्यन्ति न जानन्ति ॥

तद्यथापि नाम पुरुषो दूष्यवस्त्रावबद्धाभ्यां नेत्राभ्यां रत्नद्वीपमनुप्राप्तः स्यात्। स तत्र रत्नद्वीपे चङ्क्रमेत्, तिष्ठेत्, निषीदेत्, शय्यां वा कल्पयेत्, न च तं रत्नाकरं पश्येत्। न रत्नरूपाणि[1], न वस्त्ररत्नानि, न गन्धरत्नानि, न सर्वरत्नानि पश्येत्। नापि तानि रत्नानि परिजानीयाद्विषयतो वा मूल्यतो वा परिभोगतो वा। स तानि रत्नानि न परिगृह्णीयात्, न च रत्नकार्यमनुभवेत्। अनावृतचक्षुष एतत्सर्वं पश्येयुर्विजानीयुः। एवमेव ते बोधिसत्त्वा धर्मरत्नद्वीपमनुप्राप्ता अनुत्तरं तथागतस्य सर्वज्ञतालंकारं मनुष्यीभूत जेतवने जिनमचिन्त्यानि



---

1 H om. रत्नरू.

बुद्धविकुर्वितानि सदर्शयमान पश्यन्ति । ते च महाश्रावकास्तत्रैव भगवत पादमूले तिष्ठन्ति यापयन्ति, न च त तथागतसमाधिविषयविकुर्वितप्रातिहार्यं पश्यन्ति, न च त महान्त बोधिसत्त्वसनिपात महारत्नाकरम् । तत्कस्य हेतो॰ [2] तथा हि तेषा सर्वज्ञताविपक्षाविद्यादृष्ट्यवनद्धज्ञानचक्षुषा तदसङ्गबोधिसत्त्वज्ञानचक्षुर्न परिशुद्धम्, न च तैर्धर्मधातुपरपरा
5 प्रवेशोऽनुबुद्ध , येन तदचिन्त्यतथागतसमाधिवृषभिताविकुर्वितप्रातिहार्यं पश्येयु ॥

तद्यथापि नाम अस्ति विरज प्रभासवती नाम चक्षु परिशुद्धि, या सर्वतमोन्धकारेण सार्धं न सवसति । ता कश्चित्पुरुष प्रतिलभेत । स विरज प्रभासवत्या चक्षु-परिशुद्ध्या समन्वागतस्तमोन्धकारपर्यवनद्धाया रात्र्यामनेकेषा प्राणकोटीनियुतशतसहस्राणा सनिपतितानां विविधाकल्पेर्यापथाना तिमिरान्धकारपर्याकुलनेत्राणा मनुष्याणा मध्येऽनु
10 विचरेत्, अनुचक्रमेत्, तिष्ठेत्, निषीदेत्, नानेर्यापथान् वा कल्पयेत् । न च ते मनुष्यास्त पुरुष पश्येयु , न सजानीयु विविधानीर्यापथान् कल्पयमानम् । स च पुरुषस्त महान्त जनकाय पश्येत् नानेर्यापथाकल्पविहारिण नानादिगभिमुख नानासस्थान नानावर्णं नानाप्रावरणम् । एवमेव तथागत सबोधिसत्त्वगणपरिवारो विशुद्धासङ्गज्ञानचक्षु सर्वलोक जानाति पश्यति । महाबुद्धसमाधिविकुर्वितप्रातिहार्यं सदर्शयति । न च ते महाश्रावकास्त
15 तथागतमहाज्ञानसमाधिविकुर्वितप्रातिहार्यं पश्यन्ति, न च त महाबोधिसत्त्वसनिपातपरिवारम् ॥

तद्यथापि नाम भिक्षुर्महतो जनकायस्य मध्ये पृथिवीकृत्स्न समाधिं समापद्येत, अप्कृत्स्न वा, तेज कृत्स्न वा, वायुकृत्स्न वा, नीलकृत्स्न वा, पीतकृत्स्न वा, लोहितकृत्स्न वा, अवदातकृत्स्न वा, देवकृत्स्न वा, विविधसत्त्वकायकृत्स्न वा, सर्वरुतरवितकृत्स्न वा, सर्वालम्बनकृत्स्न वा समाधिं समापद्येत । न च स महाजनकायस्तमप्स्कन्ध पश्येत्, न च त
20 ज्वलनालोक न च तद्विविधकायकृत्स्न यावत् त सर्वालम्बनकृत्स्न न पश्येत्, अन्यत्र तत्समाधिसमापत्तिविहारप्राप्तेभ्य । एवमेव तथागतस्य तदचिन्त्यबुद्धसमाधिविषयविकुर्वित सदर्शयत ते महाश्रावका न पश्यन्ति, ते च बोधिसत्त्वास्तथागतमार्गप्रतिपन्नास्त तथागतविषयमवतरन्ति ॥

तद्यथापि नाम अञ्जनसिद्ध पुरुषो नेत्रयोरञ्जितमात्रयो सर्वजनकायेनादृश्यशरीरो
25 भवति । स गच्छन् वा स्थितो वा निषण्णो वा सर्वजनकाय पश्यति । एवमेव तथागतो लोकोत्तरसर्वजगद्विषयसमतिक्रान्त सर्वज्ञज्ञानविषयावक्रान्तो बोधिसत्त्वज्ञानचक्षुर्विज्ञेय । स सर्वजगत् पश्यति । ते च महाश्रावकास्तानि तथागतविकुर्वितानि न पश्यन्ति ॥

तद्यथापि नाम पुरुषस्य सहजाता देवता नित्यानुबद्धा । सा त पुरुष पश्यति, स च पुरुषस्ता देवता न पश्यति । एवमेव तथागत सर्वज्ञज्ञानविषयावस्थितो महान्ति बुद्ध-
30 विकुर्वितानि सदर्शयति महतो बोधिसत्त्वगणसनिपातस्य मध्ये । ते च महाश्रावकास्त तथागतविकुर्वितप्रातिहार्यं तच बोधिसत्त्वपर्षन्मण्डलविकुर्वित न पश्यन्ति न जानन्ति ॥

---

1 B om पीतकृत्स्न

तद्यथापि नाम भिक्षुः सर्वचेतोवशिपरमपारमिताप्राप्तः संज्ञावेदयितनिरोधं समापन्नो न संजानाति न वेदयति, न च षडिन्द्रियेण किंचित्कार्यमनुभवति, न च परिनिर्वृतः सः। सर्वलोकव्यवहाराश्च तस्मिन् प्रदेशे प्रवर्तन्ते। न च तान् संजानाति, न वेदयति यदुत तस्या एव समापत्तेरधिष्ठानाधिपत्येन। एवमेव ते महाश्रावकास्तत्रैव जेतवने विहरन्ति, षडिन्द्रियं चैषामस्ति, न च तं तथागतसमाधिविकुर्वितवृषभिताप्रातिहार्यं पश्यन्ति, नावतरन्ति, न संजानन्ति, न विजानन्ति, न च तं महाबोधिसत्त्वसंनिपातं बोधिसत्त्वप्रातिहार्यं बोधिसत्त्वविकुर्वितमवतरन्ति, न पश्यन्ति न जानन्ति। तत्कस्य हेतोः? गम्भीरो हि बुद्धविषयो विपुलोऽप्रमेयो दुर्दृशो दुष्प्रतिबोधो दुरवगाहः सर्वलोकसमतिक्रान्तः। अचिन्त्यो बुद्धविषयोऽसंहार्यः सर्वश्रावकप्रत्येकबुद्धैः। तेन ते महाश्रावकास्तत्रैव जेतवने भगवतः पादमूलगतास्तानि बुद्धविकुर्वितानि न पश्यन्ति। तं च महाबोधिसत्त्वसंनिपातं तच्च जेतवनमचिन्त्यासंख्येयविशुद्धलोकधातुगुणव्यूहसमवसरणं न पश्यन्ति न जानन्ति यथापि तदभाजनीभूतत्वात्॥

अथ खलु वैरोचनप्रणिधानाभिरश्मिप्रभो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा[1] गाथा अभाषत—

पश्यध्वं सत्त्वसारस्य बुद्धबोधिरचिन्तिया।
जेतध्वजे निदर्शेति जिनो बुद्धविकुर्वितम्॥ १॥

स्वयंभुवामधिष्ठानमसंख्येयं प्रवर्तते।
यत्र स मुह्यते लोको बुद्धधर्माणजानकः॥ २॥

गम्भीरं धर्मराजानामप्रमेयमचिन्तियम्।
प्रवर्तते प्रातिहार्यं यत्र लोको न गांहते॥ ३॥

अनन्तवर्णाः संबुद्धा लक्षणैः सुविभूषिताः।
अलक्षणा हि ते धर्मा ये[2] संबुद्धैः प्रभाविताः॥ ४॥

विकुर्वितानि दर्शेति जिनो जेताह्वये वने।
अनन्तमध्यगम्भीरान् वाक्पथैश्च सुदुष्करान्॥ ५॥

महात्मनां संनिपातं बोधिसत्त्वा न पश्यति।
अचिन्त्यक्षेत्रकोटिभ्यो जिनं द्रष्टुमुपागताः॥ ६॥

प्रणिधानेन संपन्ना असङ्गाचारगोचराः।
न शक्यं सर्वलोकेन तेषां विज्ञातुमाशयम्॥ ७॥

सर्वप्रत्येकसंबुद्धाः श्रावका ये च सर्वशः।
न प्रजानन्ति ते चर्यां न चैषां चित्तगोचरम्॥ ८॥

१ B everywhere इमां गाथामभाषत. २ B यैः संबुद्धः प्रभावितः.

बोधिसत्त्वा महाप्रज्ञा दुर्धर्षा अपराजिताः ।
शूरध्वजा असंकीर्णा ज्ञानभूमिपरायणाः ॥ ९ ॥
अप्रमेया समापन्नास्ते समाधिं महायशाः ।
स्फरित्वा धर्मधातुं हि दर्शयन्ति विकुर्वितम् ॥ १० ॥

अथ खलु दुर्योधनवीर्यवेगराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

पुण्यगर्भान् महाप्रज्ञान् बोधिचर्यागतिंगतान् ।
क्षेमंकरान् सर्वलोके पश्यध्वं सुगतात्मजान् ॥ ११ ॥
मेधाविनोऽनन्तमतीन् सुसमाहितचेतसः ।
अनन्तमध्यगम्भीरविपुलज्ञानगोचरान् ॥ १२ ॥
जेताह्वये महारण्ये महाव्यूहोपशोभिते ।
बोधिसत्त्वसमाकीर्णे सम्यक्संबुद्धआश्रमे ॥ १३ ॥
अनिकेताप्रतिष्ठानान् पश्यध्वं सागरान् बहून् ।
दशभ्यो दिग्भ्य आगत्य निषण्णान् पद्मआसने ॥ १४ ॥
अप्रतिष्ठाननाभूहान्निष्प्रपञ्चाननालयान् ।
असङ्गचित्तान् विरजान् धर्मधातुपरायणान् ॥ १५ ॥
ज्ञानध्वजान् महावीरान् वज्रचित्तानकम्पियान् ।
अनिर्वृतेषु धर्मेषु निर्वाणं दर्शयन्ति ते ॥ १६ ॥
दशदिक्क्षेत्रकोटीभ्योऽसंख्येभ्यः समुपागतान् ।
संबुद्धमुपसंक्रान्तान् द्वयसंज्ञाविवर्जितान् ॥ १७ ॥
वृषभो शाक्यसिंहस्य पश्यन्तीदं विकुर्वितम् ।
अधिष्ठानेन यस्येमे बोधिसत्त्वाः समागताः ॥ १८ ॥
बुद्धधर्मेष्वसंभेदा धर्मधातुतलेषु च ।
व्यवहारमात्रसंभेदपारप्राप्ता जिनात्मजाः ॥ १९ ॥
धर्मधातोरसंभेदकोट्यन्ते मुनयः स्थिताः ।
अक्षयैश्च प्रकुर्वन्ति पदैर्धर्मप्रभेदनम् ॥ २० ॥

अथ खलु समन्तश्रीसमुद्गततेजोराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

पश्यध्वं सत्त्वसारस्य विपुलं ज्ञानमण्डलम् ।
कालाकालमभिज्ञाय धर्मं देशेति प्राणिनाम् ॥ २१ ॥
नानातीर्थ्यसमाकीर्णपरवादिप्रमर्दनं ।
यथाशयानां सत्त्वानां संदर्शेति विकुर्वितम् ॥ २२ ॥

न च प्रदेश संबुद्धो न च बुद्धो दिशानुगः ।
अप्रमाणप्रमाणानि नातिक्रान्तो महामुनिः ॥ २३ ॥
दिनसंख्यो यथादित्यः प्रभावयति खे व्रजन् ।
एवं ज्ञानविदुः शास्ता त्र्यध्वासङ्गप्रभावितः ॥ २४ ॥
पूर्णमास्यां यथा रात्रौ भासते चन्द्रमण्डलम् ।　　5
परिपूर्णं तथा शुक्लधर्मैः पश्यति नायकम् ॥ २५ ॥
अन्तरीक्षे यथैवेह व्रजत्यादित्यमण्डलम् ।
वितिष्ठते नैवेह तं तथा बुद्धविकुर्वितम् ॥ २६ ॥
यथापि गगनं दिक्षु सर्वक्षेत्रेष्वनिश्रितम् ।
एवं लोकप्रदीपस्य ज्ञेयं बुद्धविकुर्वितम् ॥ २७ ॥　　10
यथा हि पृथिवी लोके प्रतिष्ठा सर्वदेहिनाम् ।
लोके लोकप्रदीपस्य धर्मचक्रं तथा स्थितम् ॥ २८ ॥
यथापि मारुतोऽसज्जन् क्षिप्रं व्योम्नि प्रवायति ।
बुद्धस्य धर्मता तद्वल्लोकधातुषु वर्तते ॥ २९ ॥
अप्स्कन्धे हि यथा सर्वक्षेत्रसंख्याः प्रतिष्ठिताः ।　　15
एवं त्र्यध्वगता बुद्धा ज्ञानस्कन्धे प्रतिष्ठिताः ॥ ३० ॥

अथ खलु असङ्गश्रीगर्भराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

यथापि पर्वतः शैल उद्विद्धो वज्रसंभवः ।
सर्वलोकपरित्राता बुद्धो लोके तथोद्गतः ॥ ३१ ॥　　20
यथैव सागरे तोयमप्रमेयमनाविलम् ।
बुद्धदर्शनमेवं हि लोकतृष्णां छिनत्ति च ॥ ३२ ॥
पर्वतो हि यथा मेरुः सागराम्भःसमुद्गतः ।
तथैव लोकप्रद्योत उद्गतो धर्मसागरात् ॥ ३३ ॥
यथैव सागरः पूर्णः सर्वरत्नमहाकरः ।　　25
स्वयंभुवस्तथा ज्ञानमक्षयं क्षणबोधनम् ॥ ३४ ॥
गम्भीरं नायके ज्ञानमसंख्येयमथामितम् ।
दर्शयत्यमिताचिन्त्यं येन बुद्धो विकुर्वितम् ॥ ३५ ॥
मायाकारो यथा विद्वान् मायालक्षणदर्शकः ।
एवं ज्ञानवशी बुद्धो विकुर्वितनिदर्शकः ॥ ३६ ॥　　30
चिन्तामणिर्यथा शुद्धोऽभीप्सितार्थप्रपूरणः ।
एवमाशयशुद्धानां जिनः प्रणिधिपूरणः ॥ ३७ ॥

वैरोचनं यथा रत्नं प्रभासयति भास्करम् ।
सर्वज्ञता विशुद्धैवं जगदाशयभासनी ॥ ३८ ॥
तथैव दिग्मुखं रत्नमष्टाङ्गं सुप्रतिष्ठितम् ।
तथाप्यसङ्गप्रद्योतो धर्मधात्ववभासनः ॥ ३९ ॥
5 दकप्रसादं शुद्धाभं आविलाम्बुप्रसादनम् ।
बुद्धस्य दर्शनं तद्वज्जगदिन्द्रियशोधनम् ॥ ४० ॥

अथ खलु धर्मधातुप्रणिधिसुनिर्मितचन्द्रराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

यथापीन्द्रनीलेन एकवर्णा दिशः कृताः ।
10 बोधिवर्णाः प्रजामेवं कुरुते बुद्धदर्शनम् ॥ ४१ ॥
एकैकस्मिन्नसौ बुद्धो नानाविधविकुर्वितम् ।
विदर्शयत्यप्रमेयं बोधिसत्त्वविशोधनम् ॥ ४२ ॥
तथातिचित्रगम्भीरमपर्यन्तं दुरासदम् ।
यस्मिन्न गाहते लोको धीमतां ज्ञानगोचरे ॥ ४३ ॥
15 व्यूहानपि च संपन्नान् बुद्धकारविशोधितान् ।
निर्यातैर्बोधिसत्त्वानां धर्मधातुप्रवेशनात् ॥ ४४ ॥
बुद्धक्षेत्राण्यचिन्त्यानि यत्र दर्शयते जिनः ।
धीमतां परिवृतैर्बुद्धैराकीर्णानि समन्ततः ॥ ४५ ॥
सर्वधर्मवशी शास्ता उत्पन्नः शाक्यपुंगवः ।
20 प्रातिहार्यं हि यस्येदमप्रमेयं प्रवर्तते ॥ ४६ ॥
नानाध्वचर्यां धीराणामप्रमेयां विपश्यथ ।
विकुर्वितान्यनन्तानि दर्शयत्यमितद्युतिः ॥ ४७ ॥
धर्मधातौ शिक्षयति लोकनाथो जिनौरसान् ।
भवन्ति सर्वधर्मेषु तेऽसङ्गज्ञानगोचराः ॥ ४८ ॥
25 अधिष्ठानान्नरेन्द्रस्य धर्मचक्रं प्रवर्तते ।
प्रातिहार्यशताकीर्णं सर्वलोकविशोधनम् ॥ ४९ ॥
विषये सत्त्वसारस्य ज्ञानमण्डलशोभिताः ।
भूमिष्ठा महानागाः सर्वलोकप्रमोचनाः ॥ ५० ॥

अथ खलु धर्मार्चिप्रभतेजोराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य
30 तस्यां वेलायामिमा गाथा अभाषत—

---

१ B विलाम्बु°.　२ S एकैकस्मिन् रजो बुद्धो.　३ B निष्पन्नैर्बोधि°.　४ S पश्यथ.
५ B भूमिस्थ महा°.

येऽप्यत्रये विनीयन्ते श्रावकाः परमर्षिणा ।
न क्रमोत्क्षेपनिक्षेपं संबुद्धस्य विदन्ति ते ॥ ५१ ॥
येऽपि प्रत्येकसंबुद्धाः त्रिष्वप्यध्वेष्वशेषतः ।
न क्रमोत्क्षेपनिक्षेपं तेऽपि जानन्ति तायिनः ॥ ५२ ॥
किं पुनः सर्वसत्त्वा हि विज्ञास्यन्ति विनायकम् । 5
श्वेव गर्दुलबद्धा[1] ये ह्यविद्यातमसावृताः ॥ ५३ ॥
प्रमाणैरप्रमेयोऽसौ न शक्यं जानितुं जिनः ।
असङ्गज्ञानवान् बुद्धः समतिक्रान्तवाक्पथः ॥ ५४ ॥
पूर्णचन्द्रप्रभो धीरो लक्षणैः सुविचित्रितः ।
क्षपयत्यमितान् कल्पानधितिष्ठन् विकुर्वितैः ॥ ५५ ॥ 10
नयादेकैकतो बुद्धं चिन्तयन् सुसमाहितः ।
अनभिलाप्याः क्षपयेत्कल्पकोटीरचिन्तियाः ॥ ५६ ॥
गुणैकदेशपर्यन्तं नाधिगच्छेत्स्वयंभुवः ।
निरीक्षमाणो बुद्धोऽपि बुद्धधर्मा ह्यचिन्तियाः ॥ ५७ ॥
येषां च प्रणिधिस्तत्र येषां च मनसो रतिः । 15
तेऽप्येवंगोचराः सर्वे भविष्यन्ति सुदुर्दशाः ॥ ५८ ॥
पुण्यज्ञानमथानन्तं महासंभारविक्रमाः ।
नयं ह्यवतरन्त्येतं धीमच्चित्तेऽमले स्थिताः ॥ ५९ ॥
विपुलः प्रणिधिस्तेषां विपुलश्चित्तसंवरः ।
लप्स्यन्ति विपुलां बोधिमाक्रम्य जिनगोचरम् ॥ ६० ॥ 20

अथ खलु सर्वमारमण्डलविकिरणज्ञानध्वजराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

असङ्गज्ञानकायत्वादशरीराः स्वयंभुवः ।
अचिन्त्यज्ञानविषयाः शक्यं चिन्तयितुं न ते ॥ ६१ ॥
अचिन्त्यैः कर्मभिः शुक्लैर्बुद्धकायः समार्जितः । 25
त्रैलोक्यानुपलिप्तोऽसौ लक्षणव्यञ्जनोज्ज्वलः ॥ ६२ ॥
समन्तावभासो लोके धर्मधातुविशोधितः ।
बुद्धबोधेरपि द्वारं सर्वज्ञानमहाकरः ॥ ६३ ॥
विरजो निष्प्रपञ्चश्च सर्वसङ्गविवर्जितः ।
आदित्यभूतो लोकस्य ज्ञानरश्मिप्रमुञ्चनः ॥ ६४ ॥ 30

---

[1] S गद्दुलबद्धा.

भवसंत्रासविच्छेत्ता त्रैधातुकविशोधनः ।
निष्पत्तिर्बोधिसत्त्वानां बुद्धबोध्याकरस्तथा ॥ ६५ ॥
अनन्तवर्णदर्शावी सर्ववर्णेष्वनिश्रितः ।
दर्शयत्यपि तान् वर्णानचिन्त्यान् सर्वदेहिभिः ॥ ६६ ॥
5 शक्यं न ज्ञानपर्यन्तो गन्तुं बुद्धस्य केनचित् ।
एकक्षणे बुद्धबोधिरचिन्त्या येन शोधिता ॥ ६७ ॥
अक्षयो ज्ञाननिर्देशो निर्विकारः स्वभावतः ।
एकक्षणे प्रभाव्यन्ते यस्मिंस्त्र्यध्वगता जिनाः ॥ ६८ ॥
अनन्तकर्मा सप्रज्ञो बोध्यर्थी चिन्तयेत्सदा ।
10 चिन्तासित्यपि यत्रास्य चित्ते चित्तं न जायते ॥ ६९ ॥
सर्वाभिलापाविषया गम्भीरा वाक्पथोज्झिताः ।
अचिन्त्या बुद्धधर्मास्ते यैः संबुद्धाः प्रभाविताः ॥ ७० ॥

अथ खलु वैरोचनप्रणिधानकेतुध्वजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

15 अमूढस्मृतयः शुद्धा धर्मोद्गतसुनिश्चिताः ।
अचिन्त्यमतिमन्तस्ते अक्षया बोधिसागराः ॥ ७१ ॥
मनोऽत्र निश्चितं तेषां तच्चर्यागोचरो ह्ययम् ।
तेषामत्राचलं ज्ञानं तेऽत्र च्छिन्नकथंकथाः ॥ ७२ ॥
खेदो नोत्पद्यते तेषां न तेषां सीदते मनः ।
20 तेषां प्रवर्तते चित्तं बुद्धधर्मपरायणम् ॥ ७३ ॥
तेषां प्रजायते श्रद्धा मूलजाता समुद्गता ।
ज्ञानेऽत्र हि रतिस्तेषामनिलम्भे निरालये ॥ ७४ ॥
संपूर्णाः कुशलैर्धर्मैः कल्पकोटीसमार्जितैः ।
नामयन्ति च तत्सर्वे एते ज्ञानार्थिनोऽसमाः ॥ ७५ ॥
25 विचरन्ति च संसारे न च संसारनिश्रिताः ।
निश्रिता बुद्धधर्मेषु रमन्ते बुद्धगोचरे ॥ ७६ ॥
यावती लोकसंपत्तिः सत्त्वधातौ प्रवर्तते ।
सर्वा प्रहीणा धीराणां बुद्धसंपत्स्थिता हि ते ॥ ७७ ॥
S 31 वृथा समाश्रितो लोकः सदा श्रद्धः प्रवर्तते ।
30 असङ्गचारिणस्तत्र सदा सत्त्वार्थनिश्रिताः ॥ ७८ ॥

१ B °संसारविच्छेत्ता. २ D समुद्भवा.

अतुल्यं चरितं तेषामचिन्त्यं सर्वदेहिभिः ।
लोकसौख्यं चिन्तयन्ति येन दुःखं निवर्तते ॥ ७९ ॥

बोधिज्ञानविशुद्धास्ते सर्वलोकानुकम्पकाः ।
आलोकभूता लोकस्य सर्वलोकप्रमोचकाः ॥ ८० ॥

अथ खलु सर्वावरणविकिरणज्ञानविक्रान्तराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो 5 व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

सुदुर्लभो बुद्धशब्दः कल्पकोटीशतैरपि ।
किं पुनर्दर्शनं सर्वकाङ्क्षाछेदनमुत्तमम् ॥ ८१ ॥

स दृष्टो लोकप्रद्योतः सर्वधर्मगतिं गतः ।
पुण्यतीर्थं त्रिलोकस्य सर्वसत्त्वविशोधनम् ॥ ८२ ॥ 10

पश्यतां रूपकायेन सत्त्वसारमनिन्दितम् ।
न समुत्पद्यते तृप्तिः कल्पकोट्ययुतैरपि ॥ ८३ ॥

रूपकायं नरेन्द्रस्य प्रेक्षमाणा जिनौरसाः ।
असङ्गाः स्वं शुभं बोधौ नामयन्ति परार्थिनः ॥ ८४ ॥

बुद्धबोधेर्मुखमिदं रूपकायो महामुनेः । 15
निश्चरन्ति यतोऽसङ्गा अक्षयाः प्रतिसंविदः ॥ ८५ ॥

अचिन्त्यानमितान् सत्त्वानवभास्य महामुनिः ।
अवतार्य महायाने व्याकरोत्यग्रबोधये ॥ ८६ ॥

महत्पुण्यमयं क्षेत्रमुदितं ज्ञानमण्डलम् ।
भासयत्यमितं लोकं पुण्यस्कन्धविवर्धनम् ॥ ८७ ॥ 20

छेदनो दुःखजालस्य ज्ञानस्कन्धविशोधनः ।
न दुर्गतिभयं तेषां यैरिहाराधितो जिनः ॥ ८८ ॥

विपुलं जायते चित्तं पश्यतां द्विपदोत्तमम् ।
प्रज्ञाबलमसंख्येयं जायते चन्द्रभास्करम् ॥ ८९ ॥

भवन्ति नियता बोधौ दृष्ट्वा बुद्धं नरोत्तमम् । 25
निश्चितं च भवत्येषां भविष्यामि तथागतः ॥ ९० ॥

अथ खलु धर्मधातुतलभेदज्ञानाभिज्ञाराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

अनन्तगुणसंपन्नं दृष्ट्वा शाक्यर्षभं मुनिम् । 30
परिणामयतां चित्तं महायाने विशुध्यति ॥ ९१ ॥

भवसंत्रासविच्छेत्ता त्रैधातुकविशोधनः।
निष्पत्तिर्बोधिसत्त्वानां बुद्धबोध्याकरस्तथा॥ ६५॥
अनन्तवर्णदर्शावी सर्ववर्णैरनिश्रितः।
दर्शयन्नपि तान् वर्णानचिन्त्यान् सर्वदेहिभिः॥ ६६॥
5 शक्यं न ज्ञानपर्यन्तो गन्तुं बुद्धस्य केनचित्।
एकक्षणे बुद्धबोधिरचिन्त्या येन शोधिता॥ ६७॥
अक्षयो ज्ञाननिर्देशो निर्विकारः स्वभावतः।
एकक्षणे प्रभाव्यन्ते यस्मिन्नध्वगता जिनाः॥ ६८॥
अनन्तकर्मा सप्रज्ञो बोध्यर्थी चिन्तयेत्सदा।
10 चित्तमित्यपि यत्रास्य चित्ते चित्तं न जायते॥ ६९॥
सर्वाभिलापाविषया गम्भीरा वाक्पथोज्झिताः।
अचिन्त्या बुद्धधर्मास्ते यैः संबुद्धाः प्रभाविताः॥ ७०॥

अथ खलु वैरोचनप्रणिधानकेतुध्वजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

15 असमूढस्मृतयः शुद्धा धर्मोद्गतसुनिश्चिताः।
अचिन्त्यमतिमन्तस्ते अक्षया बोधिसागराः॥ ७१॥
मनोऽत्र निश्चितं तेषां तच्चर्यागोचरो ह्ययम्।
तेषामत्राचलं ज्ञानं तेऽत्र च्छिन्नकथंकथाः॥ ७२॥
खेदो नोत्पद्यते तेषां न तेषां सीदते मनः।
20 तेषां प्रवर्तते चित्तं बुद्धधर्मपरायणम्॥ ७३॥
तेषां प्रजायते श्रद्धा मूलजाता स्थैर्यगता।
ज्ञानेऽत्र हि रतिस्तेषामनिलम्भे निरालये॥ ७४॥
संपूर्णाः कुशलैर्धर्मैः कल्पकोटीसमार्जितैः।
नामयन्ति च तान्सर्वे एते ज्ञानार्थिनोऽसमाः॥ ७५॥
25 विचरन्ति च संसारे न च संसारनिश्रिताः।
निश्रिता बुद्धधर्मेषु रमन्ते बुद्धगोचरे॥ ७६॥
यावती लोकसंपत्तिः सत्त्वानां प्रवर्तते।
सर्वा प्रहीणा धीराणां बुद्धसंपत्स्थिता हि ते॥ ७७॥
B 31 तृष्णा समाश्रितो लोकः सदा बद्धः प्रवर्तते।
30 असङ्गचारिणस्त्वत्र सदा सत्त्वार्थनिश्रिताः॥ ७८॥

१ B °संत्रासविच्छेत्ता. २ B समुद्गता.

अतुल्यं चरितं तेषामचिन्त्यं सर्वदेहिभिः ।
लोकसौख्यं चिन्तयन्ति येन दुःखं निवर्तते ॥ ७९ ॥
बोधिज्ञानविशुद्धास्ते सर्वलोकानुकम्पकाः ।
आलोकभूता लोकस्य सर्वलोकप्रमोचकाः ॥ ८० ॥

अथ खलु सर्वावरणविकिरणज्ञानविक्रान्तराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभापत— 5

सुदुर्लभो बुद्धशब्दः कल्पकोटीशतैरपि ।
किं पुनर्दर्शनं सर्वकाङ्क्षाछेदनमुत्तमम् ॥ ८१ ॥
स दृष्टो लोकप्रद्योतः सर्वधर्मगतिं गतः ।
पुण्यतीर्थं त्रिलोकस्य सर्वसत्त्वविशोधनम् ॥ ८२ ॥ 10
पश्यतां रूपकायेन सत्त्वसारमनिन्दितम् ।
न समुत्पद्यते तृप्तिः कल्पकोट्ययुतैरपि ॥ ८३ ॥
रूपकायं नरेन्द्रस्य प्रेक्षमाणा जिनौरसाः ।
असङ्गाः स्वं शुभं बोधौ नामयन्ति परार्थिनः ॥ ८४ ॥
बुद्धबोधेर्मुखमिदं रूपकायो महामुनेः । 15
निश्चरन्ति यतोऽसङ्गा अक्षयाः प्रतिसंविदः ॥ ८५ ॥
अचिन्त्यानमितान् सत्त्वानवभास्य महामुनिः ।
अवतार्य महायाने व्याकरोत्यग्रबोधये ॥ ८६ ॥
महत्पुण्यमयं क्षेत्रमुदितं ज्ञानमण्डलम् ।
भासयत्यमितं लोकं पुण्यस्कन्धविवर्धनम् ॥ ८७ ॥ 20
छेदनो दुःखजालस्य ज्ञानस्कन्धविशोधनः ।
न दुर्गतिभयं तेषां यैरिहाराधितो जिनः ॥ ८८ ॥
विपुलं जायते चित्तं पश्यतां द्विपदोत्तमम् ।
प्रज्ञाबलमसंख्येयं जायते चन्द्रभास्वरम् ॥ ८९ ॥
भवन्ति नियता बोधौ दृष्ट्वा बुद्धं नरोत्तमम् । 25
निश्चितं च भवत्येषां भविष्यामि तथागतः ॥ ९० ॥

अथ खलु धर्मधातुतलभेदज्ञानाभिज्ञाराजो बोधिसत्त्वो बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभापत—

अनन्तगुणसंपन्नं दृष्ट्वा शाक्यर्षभं मुनिम् । 30
परिणामयता चित्तं महायाने विशुध्यति ॥ ९१ ॥

अर्थाय सर्वसत्त्वानामुत्पद्यन्ते तथागताः ।
महाकारुणिका धीरा धर्मचक्रप्रवर्तकाः ॥ ९२ ॥
प्रतिकर्तुं कथं शक्यं बुद्धानां सर्वदेहिभिः ।
सत्त्वार्थेष्वभियुक्तानां कल्पकोटिशतैरपि ॥ ९३ ॥
कल्पकोट्यो वरं पक्वमपाये भृशदारुणे ।
न त्वेवादर्शनं शास्तुः सर्वसङ्गविवर्तिनः ॥ ९४ ॥
सर्वसत्त्वगतो यावान् दुःखस्कन्धः प्रवर्तते ।
उत्सोढव्यः स निखिलो बुद्धानां न त्वदर्शनम् ॥ ९५ ॥
यावन्त्यः सर्वलोकेऽस्मिन्नपायगतयः पृथक् ।
वरं तत्र चिरं वासो बुद्धानामश्रुतिर्न च ॥ ९६ ॥
एकैकत्र वरं कल्पान् निवासो नरकेऽपि तान् ।
न त्वन्यत्र जिनाज्ञायाः स्थितो बोधेर्विदूरतः ॥ ९७ ॥
किं कारणमपायेषु निवासश्चिरमिष्यते ।
यत्कारणं जिनेन्द्रस्य दर्शनं ज्ञानवर्धनम् ॥ ९८ ॥
छिद्यन्ते सर्वदुःखानि दृष्ट्वा लोकेश्वरं जिनम् ।
संभवत्यवतारश्च ज्ञाने संबुद्धगोचरे ॥ ९९ ॥
क्षपयत्यावृतीः सर्वा दृष्ट्वा बुद्धं नरोत्तमम् ।
वर्धयत्यमितं पुण्यं येन बोधिरवाप्यते ॥ १०० ॥
छिनत्ति काङ्क्षा विमतीः सत्त्वानां बुद्धदर्शनम् ।
प्रपूरयति संकल्पाल्लौकिकाल्लोकोत्तरानपि ॥ १०१ ॥

## २ समन्तभद्रः ।

अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्वः सर्वावन्तं बोधिसत्त्वगणं व्यवलोक्य
भूयस्या मात्रया विभजन् विस्तारयन् देशयन् उत्तानीकुर्वन् संप्रकाशयन् अवभासयन्
प्रभासयन् उपदिशन् धर्मधातुनयेन आकाशधातुसमतया त्र्यध्वसमतया धर्मधातुसमतया
सत्त्वधातुसमतया सर्वलोकधातुसमतया सर्वकर्मवंशसमतया सत्त्वाशयसमतया सत्त्वाधिमुक्ति- 5
समतया धर्मप्रतिभाससमतया सत्त्वपरिपाककालसमतया सर्वजगदिन्द्रियसमतया च,
एवं सिंहविजृम्भितं तथागतसमाधिं चैषां बोधिसत्त्वानां संप्रकाशयति स्म दशभिर्निर्देशपदैः ।
कतमैर्दशभिः? यदुत सर्वधर्मधातुपर्यापन्नेषु बुद्धक्षेत्रपरमाणुरजःसर्वबुद्धपरंपराक्षेत्रपरंपरा-
निर्देशः । यदुत आकाशधातुपरमेषु सर्वबुद्धक्षेत्रेषु अपरान्तकोटीगतैकल्पतथागतगुणानुचरण-
निर्देशः । यदुत सर्वबुद्धक्षेत्रतथागतसमुत्पत्त्यनन्तमध्याभिसंबोधिमुखसमुद्रसंदर्शननिर्देशः । 10
यदुत आकाशधातुपरमबुद्धक्षेत्रतथागतपर्षन्मण्डलबोधिसत्त्वसंघबोधिमण्डाभिमुखावस्थान-
निर्देशः । यदुत सर्वत्र्यध्वबुद्धकायसदृशनिर्माणसर्वरोमसुखप्रमुञ्चनचित्तक्षणधर्मधातुस्फरण-
निर्देशः । यदुत सर्वदिक्समुद्रेषु सर्वक्षेत्रसागरसमतलाधिष्ठानैककायस्फरणप्रभासनिर्देशः ।
यदुत सर्वारम्बणतलेषु बुद्धभूमिविकुर्वितसर्वत्र्यध्वसमवसरणाधिष्ठानसंदर्शननिर्देशः ।
यदुत सर्वक्षेत्रपरमाणुरजःसमत्र्यध्वक्षेत्रपरंपरानानाबुद्धविकुर्वितकल्पसागरसंदर्शननिर्देशः । 15
यदुत सर्वत्र्यध्वबुद्धप्रणिधानसागरसर्वरोमनिगर्जनापर्यन्ताधिष्ठानबोधिसत्त्वसंभवनिर्देशः ।
यदुत धर्मधातुप्रमाणबुद्धसिंहासनबोधिसत्त्वपर्षन्मण्डलासंभिन्नबोधिमण्डालंकारनानाधर्मचक्र-
प्रवर्तनापरान्ताधिष्ठाननिर्देशः । इति हि भो जिनपुत्रा एतान् दशान् प्रमुखान् कृत्वा
अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् एतस्य सिंहविजृम्भितस्य समाधिनिर्देशाननुगच्छामि ।
अपि तु खलु पुनर्भो जिनपुत्राः तथागतज्ञानगोचर एषः ॥ 20

अथ खलु समन्तभद्रो बोधिसत्त्व एतस्यैव सिंहविजृम्भितस्य तथागतसमाधेरर्थनिर्देशं
द्योतयमानो बुद्धाधिष्ठानेन तथागतवदनं प्रेक्षमाणः सर्वावन्तं पर्षन्मण्डलसमुद्रं व्यवलोक्य
अचिन्त्यबुद्धविषयानन्तमध्यतथागतसमाधिविकुर्वितानि व्यवलोक्य अचिन्त्यज्ञानमायागत-
धर्मतां व्यवलोक्य अचिन्त्यत्र्यध्वबुद्धसमतां व्यवलोक्य अचिन्त्यानन्तमध्यसर्ववाक्पथ-
निरुक्तिसर्वधर्मनयान् व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत— 25

सर्वक्षेत्रपरमाणुसादृशा

एकरोमि जिनक्षेत्रसागराः ।

बोधिसत्त्वपर्षत्परीवृत-

स्तत्र बुद्ध स्थितु बुद्धआसने ॥ १ ॥

---

१ B सर्व सं. २ S om. बोधिसत्त्वानां. ३ S °द्रव°. ४ B om. °बोधिसत्त्वसंघ°.
५ B °परमाणुरजसादृशा.

एकरोमि बहुक्षेत्रसागरा
बोधिमण्डस्थित पद्मआसने ।
धर्मधातु विपुलं करित्वना
दृश्यते द्रुमवरेषु नायकः ॥ २ ॥

5 सर्वक्षेत्रपरमाणुसादृशा
एकरोमि जिन संनिषण्णकाः ।
बोधिसत्त्वपर्षत्परीवृताः
सर्वभद्रचरिया प्रभाषते ॥ ३ ॥

एकक्षेत्रि जिन संनिषण्णकाः
10 सर्वक्षेत्रप्रसरान् स्फरित्वना ।
बोधिसत्त्व बहुमेघ अक्षया
एन्ति ते दशदिशा समन्ततो ॥ ४ ॥

क्षेत्रकोटिपरमाणुसादृशा
बोधिसत्त्वगुणसागरप्रभाः ।
13 15 उत्थिहन्तु पर्षासु शास्तुनो
धर्मधातु स्फरिषु दश दिशः ॥ ५ ॥

सर्वक्षेत्रप्रतिभासदर्शना
धर्मराजजिनज्ञानसागराः ।
ते च भद्रचरियप्रतिष्ठिताः
20 सर्वबुद्धपरिषा उपागमि ॥ ६ ॥

सर्वक्षेत्रप्रसरे निषण्णका
बोधिसत्त्वचरप्रीतिगोचरा ।
धर्ममेघ शृणमान सुव्रता
एकक्षेत्रि चरि कल्पकोटियः ॥ ७ ॥

25 बोधिसत्त्व विचरन्ति चारिकां
धर्मसागरचरी विरोचना ।
ओतरन्ति प्रणिधानसागरा-
स्ते प्रविष्ट जिनभूमिगोचराः ॥ ८ ॥

अन्यमन्यजिनधर्मसमता-
30 स्ते समन्तचरि भद्रबुद्धिषु ।
सर्वबुद्धगुणवर्णसागरा-
नोतरन्ति विपुल विकुर्वितम् ॥ ९ ॥

धर्मधातुसुगतिं स्फरित्विना
सर्वक्षेत्रपरमाणुसादृशान्।
कायमेघ सततं प्रमुञ्चतो
धर्मवर्षतु उपेतु बोधये ॥ १० ॥

अथ खलु भगवान् भूयस्या मात्रया तेषां बोधिसत्त्वानामत्रैव सिंहविजृम्भिते बुद्ध- ५
समाधौ संनियोजनार्थं भ्रूविवरान्तरादूर्णाकोशाद्धर्मधातुसमन्तद्वारविज्ञप्तित्र्यध्वावभासं नाम
रश्मिं निश्चारयित्वा अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमरश्मिपरिवारां दशदिक्सर्वलोकधातु-
समुद्रेषु सर्वक्षेत्रप्रसरानवभासयति स्म ॥

अथ खलु ये ते बोधिसत्त्वा जेतवने संनिपतिताः, ते पश्यन्ति स्म सर्वधर्मधातुगतेषु
सर्वबुद्धक्षेत्रेषु आकाशधातुपर्यवसानेषु सर्वबुद्धक्षेत्रपरमाणुरजःसमबुद्धक्षेत्रपरमाणुरजोन्तर्गतेषु १०
बुद्धक्षेत्रसंगतेषु नानाबलेषु नानाविशुद्धेषु नानाप्रतिष्ठानेषु नानासंस्थानेषु बुद्धक्षेत्रेषु
बोधिमण्डवरगतं बोधिसत्त्वसिंहासननिषण्णं सर्वलोकेन्द्रसंपूजितं बोधिसत्त्वगणपरिवृतमनुत्तरां
सम्यक्संबोधिमभिसंबुध्यमानं क्वचिद्धर्मचक्रं प्रवर्तयन्तं धर्मधातुस्फरणेन स्वरमण्डलेन अन-
भिलाप्यबुद्धक्षेत्रविपुलेषु पर्षन्मण्डलेषु, क्वचिद्देवभवनगतं क्वचिन्नागभवनगतं क्वचिद्
यक्षभवनगतं क्वचिद् गन्धर्वभवनगतं क्वचिदसुरभवनगतं क्वचिद्गरुडभवनगतं क्वचित्किंनर- १५
भवनगतं क्वचिन्महोरगभवनगतं क्वचिन्मनुष्येन्द्रभवनगतं क्वचिन्मनुष्यलोके ग्रामनगर-
निगमजनपदराष्ट्रराजधानीषु नानाविकुर्वितैर्धर्मं देशयमानं नानेर्यापथैर्नानाविधैरालम्बनैर्ना-
नासमाधिमुखविज्ञप्तिभिर्नानासमाध्यभिज्ञाभिर्नानाकुलगोत्रसंभवैर्नानावर्णविज्ञप्तिभिर्नानाप्रभा-
मण्डलैर्नानारश्मिजालप्रमुखैर्नानास्वरमण्डलैर्नानापर्षन्मण्डलैर्नानाकायापुरुषाधिष्ठानैर्नाना-
शासनाधिष्ठानैर्नानापदव्यञ्जनैर्नानानिरुक्तिभिर्धर्मं देशयन्तं पश्यन्ति स्म। यावन्तश्च ते २०
बोधिसत्त्वास्तेषु तेषु पर्षन्मण्डलेषु तथागतस्य गम्भीरबुद्धसमाधिविकुर्वितानि पश्यन्ति
स्म। धर्मधातुपथेषु लोकधातुव्याकाशधातुपर्यवसानेषु दशदिग्व्यवस्थानेषु अनन्त-
दिक्परिवर्तसमवसरणेषु सर्वदिक्समुद्रेषु नानाधर्मदिङ्मुखेषु नानादिक्संगतेषु नानादिक्समव-
सरणेषु नानादिग्भागेषु नानादिग्जालेषु नानादिक्सागरेषु यदुत पूर्वस्यां दिशि दक्षिणायां
पश्चिमायामुत्तरस्यामुत्तरपूर्वायां पूर्वदक्षिणायां दक्षिणपश्चिमायां पश्चिमोत्तरस्यामधः ऊर्ध्वं २५
दिशि क्षेत्रकायदिक्षु सत्त्वकायदिक्ष्वपि गगनसंगतदिक्ष्वपि पूर्वान्तकोटीगतदिक्ष्वपि दश-
दिक्त्र्यध्वपर्यापन्नदिक्ष्वपि सर्वाकाशपथसूक्ष्मसंक्रान्तिज्ञाननिक्षेपप्रवेशदिक्ष्वपि सर्वक्षेत्रपरमाणुरजः-
पर्यन्तदिक्ष्वपि दिक्प्रदेशानन्तगतदिक्ष्वपि नानाकर्माभिसंस्कारसमुत्थितदिक्ष्वपि एकाग्र-
[illegible] सर्वानुगताभिनिर्भिन्न[illegible]
[illegible] ३०
[illegible] सर्वकल्पेषु नानाभिनिर्भिन्नानि सर्वक्षेत्रेषु सर्वत्र समन्तात्।

[1] S om. [illegible] [2] B om. [illegible]

यथाशयानां सत्त्वानामभिमुखरूपसंदर्शनविज्ञप्तीनि सर्वबुद्धधर्मसंप्रकाशनसर्वसत्त्वविनयाप्रति-
प्रस्रब्धानि तथागतविकुर्वितानि पश्यन्ति स्म । सर्वे ते भगवता वैरोचनेन पूर्वकुशलचर्यास-
भागतया चतुर्भिः संग्रहवस्तुभिः संगृहीताः, दर्शनेन श्रवणेन अनुस्मृत्या पर्युपासनेन च
परिपाचिताः, पूर्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादिताः, तत्र तत्र तथागतेषूपसंक्रम्य
5 कुशलमूले[1] संगृहीताः, यथाकुशलमूल[1]समागतया सर्वज्ञतापरिपाकोपायसुपरिगृहीतत्वात्तद-
चिन्त्यं भगवतो वैरोचनस्य समाधिविकुर्वितमवतरन्ति धर्मधातुविपुलमाकाशधातुपर्यवसानम् ।
केचिद्धर्मकायमवतरन्ति, केचिद्रूपकायम्, केचित्पूर्वं बोधिसत्त्वसमुदागमम्, केचित्
पारमितापरिपूरिम्, केचिच्चर्यामण्डलविशुद्धिव्यूहम्, केचिद्बोधिसत्त्वभूमिविकुर्वितम्,
केचिदभिसंबोधिविकुर्वितम्, केचिद्बुद्धविहारसमाध्यसंभेदविकुर्वितम्, केचित्तथागतबल
10 वैशारद्यज्ञानम्, केचिद्बुद्धप्रतिसंवित्सागरमवतरन्ति । एवंप्रमुखान् दशबुद्धक्षेत्रानभिलाप्य
परमाणुरजःसमान् बुद्धविकुर्वितसमुद्रानवतरन्ति । नानाधिमुक्तिभिर्नानापथैर्नानाद्वारैर्नानाप्र
वेशैर्नानावतारैर्नानानयैर्नानानुगमैर्नानादिग्भिर्नानाभाजनैर्नानादेशैर्नानालोकैर्नानाधिगमैर्
नानासंभारैर्नानाविकुर्वितैर्नानोपायैर्नानासमाधिभिः तान् बुद्धविकुर्वितसमुद्रानवतरन्ति[2] नाना
समाध्यवतारैः । यदुत समन्तधर्मधातुव्यूहेन बोधिसत्त्वसमाधिना अवतरन्ति । सर्वत्र्यध्वासङ्ग-
15 ज्ञानविषयावभासेन बोधिसत्त्वसमाधिना, धर्मधातुतलासंभेदज्ञानालोकेन बोधिसत्त्वसमाधिना,
तथागतविषयतलप्रवेशेन बोधिसत्त्वसमाधिना, गगनतलावभासेन बोधिसत्त्वसमाधिना, दश-
तथागतबलाक्रमणविवरेण बोधिसत्त्वसमाधिना, बुद्धविजृम्भितव्यूहविक्रमविजृम्भितेन बोधिसत्त्व
समाधिना, सर्वधर्मधातुनयावर्तगर्भेण बोधिसत्त्वसमाधिना, सर्वधर्मधात्वसङ्गनिगर्जनस्फरण
चन्द्रेण बोधिसत्त्वसमाधिना, समन्तव्यूहधर्मप्रभेण च बोधिसत्त्वसमाधिना ते बोधिसत्त्वास्तान्
20 भगवतो वैरोचनस्य बुद्धविकुर्वितसमुद्रानवतरन्ति । असङ्गपट्टधर्मराजध्वजेन[3] च बोधिसत्त्वसमा
धिना, सर्वावरणबुद्धसमुद्रविपश्यिना बोधिसत्त्वसमाधिना, सर्वलोकगत्यसंभेदकाय-
प्रतिभासध्वजेन बोधिसत्त्वसमाधिना, तथागतकायासंभेदविषयप्रवेशेन बोधिसत्त्वसमाधिना,
सर्वलोकावर्तानुप्रवर्तनकरुणागर्भेण च बोधिसत्त्वसमाधिना, सर्वधर्मपदप्रतिष्ठानाधिष्ठाना
धिष्ठितेन च बोधिसत्त्वसमाधिना, अत्यन्तशान्तप्रशान्तसमतावभासमण्डलेन बोधिसत्त्व
25 समाधिना, अनिलम्भसुनिर्मितसमन्तनिर्माणप्रतिभासेन बोधिसत्त्वसमाधिना, सर्वक्षेत्रसमन्त
समवसरणाधिष्ठानेन बोधिसत्त्वसमाधिना, सर्वबुद्धक्षेत्राभिसंबोध्याकारेणाभिनिर्हारेण बोधि
सत्त्वसमाधिना, सर्वजगद्विद्रववेगविसरणेन बोधिसत्त्वसमाधिना, सर्वजगद्विशेषासङ्गमण्ड-
विसरणेन बोधिसत्त्वसमाधिना, सर्वतथागतजनेत्रीसंभवाधिष्ठानेन बोधिसत्त्वसमाधिना,
सर्वसागरगुणप्रतिपत्त्यवतारेण बोधिसत्त्वसमाधिना, अशेषसर्वारम्बणविकुर्विताभिनिर्हारा
30 परान्ताधिष्ठानेन बोधिसत्त्वसमाधिना, सर्वतथागतपूर्वयोगसमुद्रावतारेण बोधिसत्त्वसमाधिना,

---

१ B om `मूल' २ B om from नानाधिमुक्ति up to अवतरन्ति ३ B °धर्मराजेन
४ B om सर्व

अपरान्तसर्वतथागतवंशसंधारणाधिष्ठानेन बोधिसत्त्वसमाधिना, प्रत्युत्पन्नदशदिक्सर्वक्षेत्र-
सागरपरिशुद्धाधिमुक्त्यधिष्ठानेन बोधिसत्त्वसमाधिना, सर्वबुद्धैकचित्तक्षणविहारावभासेन
बोधिसत्त्वसमाधिना, सर्वारम्बणासङ्गकोटिप्रवेशेन बोधिसत्त्वसमाधिना, सर्वलोकधात्वेक-
बुद्धक्षेत्राधिष्ठानेन बोधिसत्त्वसमाधिना, सर्वबुद्धकायनिर्माणाभिनिर्हारेण बोधिसत्त्वसमाधिना,
वज्रेन्द्रसर्वेन्द्रियसागरप्रतिवेधेन बोधिसत्त्वसमाधिना, सर्वतथागतैकशरीरगर्भाधिष्ठानेन बोधि-
सत्त्वसमाधिना, चित्तक्षणकोटिसर्वधर्मधातुनयानुगमक्षणविहारेण बोधिसत्त्वसमाधिना, सर्व-
धर्मधातुक्षेत्रप्रसरनिर्वृतिसंदर्शनाधिष्ठानेन बोधिसत्त्वसमाधिना, अधमूर्धतलविहाराधिष्ठानेन
बोधिसत्त्वसमाधिना, सर्वबुद्धक्षेत्रसत्त्वकायासंभेदाधिष्ठानेन बोधिसत्त्वसमाधिना, सर्वज्ञाना-
यताभिमुखसमवसरणेन बोधिसत्त्वसमाधिना, सर्वधर्मस्वभावलक्षणापरिज्ञाप्रभेदेन बोधिसत्त्व-
समाधिना, त्र्यध्वैकचित्तक्षणसंभेदमण्डलेन बोधिसत्त्वसमाधिना, सर्वचित्तक्षणधर्मधातुनय- 10
शरीरगर्भेण बोधिसत्त्वसमाधिना, सर्वतथागतवंशानुगमसिंहेन बोधिसत्त्वसमाधिना, सर्वारम्बण-
धर्मधातुमतिचक्षुर्मण्डलेन बोधिसत्त्वसमाधिना, दशबलाक्रमनिष्क्रमसमारम्भेन बोधिसत्त्वसमा-
धिना, सर्वारम्बणसमन्तदर्शनचक्षुर्मण्डलेन बोधिसत्त्वसमाधिना, सर्ववर्णमण्डलजगद्रोचना-
भिनिर्हारेण बोधिसत्त्वसमाधिना, अचलानङ्गगर्भेण बोधिसत्त्वसमाधिना, एकधर्मसर्वधर्म
समवसरणनिर्देशेन बोधिसत्त्वसमाधिना, एकधर्मवाक्पथनिरुक्तिपदप्रभेदेन बोधिसत्त्वसमा- 15
धिना ते बोधिसत्त्वास्तान् भगवतो वैरोचनस्य बुद्धविकुर्वितसमुद्रानवतरन्ति। सर्वबुद्ध
ध्वजाधिष्ठानधर्मनिर्देशेन बोधिसत्त्वसमाधिना, त्र्यध्वकोट्यसङ्गज्ञानभासेन बोधिसत्त्वसमाधिना,
सर्वकल्पानुगमासंभिन्नज्ञानेन बोधिसत्त्वसमाधिना, सूक्ष्मनयदशबलान्तर्गतेन बोधिसत्त्वसमा-
धिना, अनाच्छेद्यबोधिसत्त्वचर्यासर्वकल्पाभिनिर्हारेण बोधिसत्त्वसमाधिना, सर्वदिक्समन्त
जवाभिमुखमेघेन बोधिसत्त्वसमाधिना, अभिसंबोधिविकुर्वितनिदर्शनेन बोधिसत्त्वसमाधिना, 20
सर्ववेदयितासर्वक्षेमध्वजेन बोधिसत्त्वसमाधिना, सर्वव्यूहगगनालम्बनाभिनिर्हारेण बोधिसत्त्व-
समाधिना, क्षणक्षणजगदुपनिर्मितबिम्बमेघाभिनिर्हारेण बोधिसत्त्वसमाधिना, गगननिरजस्तथा-
गतचन्द्रप्रभेण बोधिसत्त्वसमाधिना, सर्वतथागतगगनाधिष्ठानेन बोधिसत्त्वसमाधिना, सर्व-
धर्मेन्द्रियव्यूहप्रभासेन बोधिसत्त्वसमाधिना, सर्वधर्मार्थविवरणप्रदीपेन बोधिसत्त्वसमाधिना,
दशबलमण्डलावभासेन बोधिसत्त्वसमाधिना, त्र्यध्वबुद्धकेतुध्वजेन बोधिसत्त्वसमाधिना, सर्व- 25
बुद्धैकगर्भेण बोधिसत्त्वसमाधिना, सर्वक्षणक्षणारम्भनिष्ठेन बोधिसत्त्वसमाधिना, अक्षयपुण्य-
गर्भेण बोधिसत्त्वसमाधिना, अनन्तबुद्धदर्शननिर्यावभासेन बोधिसत्त्वसमाधिना, सर्वधर्मवज्र-
सिंहप्रतिष्ठानेन बोधिसत्त्वसमाधिना, सर्वतथागतनिर्माणसंदर्शनसमन्तविज्ञप्त्यभिनिर्हारेण
बोधिसत्त्वसमाधिना, सर्वतथागतदिवसाक्रमणान्तिना बोधिसत्त्वसमाधिना, एकत्र्यध्वसनापेन
बोधिसत्त्वसमाधिना, प्रश्नविप्रश्नात्सर्वधर्मसमन्तप्रभप्रमुक्तघोषस्वरेण बोधिसत्त्वसमाधिना, 30
सर्वबुद्धदर्शनसीमानतिक्रमेण बोधिसत्त्वसमाधिना, निरवशेषसर्वधर्मधातुपद्मनग्निनीप्रतिबुद्धेन

१ B °धर्मस्वभावाधिष्ठानेन २ B om. सर्वा° °समाधिना ३ B °विध°.

बोधिसत्त्वसमाधिना, अनालयधर्मगगनव्यवलोकनेन बोधिसत्त्वसमाधिना, एकदिग्दशदिक्सा-
गरसमवसरणावर्तेन बोधिसत्त्वसमाधिना, सर्वधर्मधातुतलप्रमुखप्रवेशेन बोधिसत्त्वसमाधिना,
सर्वधर्मसागरवतिगर्भेण बोधिसत्त्वसमाधिना, सर्वसत्त्वप्रभामुञ्चनप्रशान्तकायेन बोधिसत्त्व-
समाधिना, एकचित्तक्षणसर्वाभिज्ञाप्रणिध्यभिनिर्हारेण बोधिसत्त्वसमाधिना, सदासर्वत्र-
समन्ताभिसंबोध्यधिष्ठानेन बोधिसत्त्वसमाधिना, सर्वधर्मधात्वेकव्यूहानुगमप्रवेशेन बोधि-
सत्त्वसमाधिना, सर्वबुद्धस्मृतिशरीरावभासेन बोधिसत्त्वसमाधिना, सर्वजगद्भूरिविशेषज्ञाना-
भिज्ञेन बोधिसत्त्वसमाधिना, चित्तक्षणानन्तधर्मधातुनयस्वकायस्फरणेन बोधिसत्त्वसमाधिना,
एकनयधर्मधातुसर्वधर्मैकनयव्यूहप्रभेण बोधिसत्त्वसमाधिना, सर्वबुद्धधर्ममण्डलचक्रतेजो-
धिष्ठानेन बोधिसत्त्वसमाधिना, इन्द्रजालसत्त्वधातुसंग्रहप्रणिधिचर्याधिष्ठानेन बोधिसत्त्वसमा-
धिना, सर्वलोकधातुतलासंभेदेन बोधिसत्त्वसमाधिना, पद्मश्रीविकुर्वितसमन्तविक्रामिणा
बोधिसत्त्वसमाधिना, सर्वसत्त्वकायपरिवर्तज्ञानाभिज्ञेन बोधिसत्त्वसमाधिना, सर्वसत्त्वाभि-
मुखकायाधिष्ठानेन बोधिसत्त्वसमाधिना, सर्वसत्त्वस्वराङ्गसागरजगन्मन्त्रसंभेदनयाभिज्ञेन
बोधिसत्त्वसमाधिना, सर्वजगत्तलभेदज्ञानाभिज्ञेन बोधिसत्त्वसमाधिना, महाकरुणाकोशा-
संभेदगर्भेण बोधिसत्त्वसमाधिना, सर्वबुद्धतथागतकोटिप्रवेशेन बोधिसत्त्वसमाधिना,
सर्वतथागतविमोक्षभवनव्यवलोकनसिंहविजृम्भितेन बोधिसत्त्वसमाधिना. एतत्प्रमुखैरनभि-
लाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्बोधिसत्त्वसमाधिनयावतारैस्ते बोधिसत्त्वास्तान् भगवतो
वैरोचनस्य बुद्धविकुर्वितसमुद्रानवतरन्ति । पूर्वसभागचरितविकुर्वितं च समनुस्मरन्ति ।
चित्तक्षणे चित्तक्षणे सर्वधर्मधातुस्फरणेनावतारेण तेषां पुनर्बोधिसत्त्वानां भगवत
संमुखीभावगतानां जेतवनानुप्राप्तानां दशबुद्धक्षेत्रपरमाणुरजःसमलोकधातुविपुलनानारत्न-
पद्मगर्भसिंहासनसंनिषण्णानां महाज्ञानाभिज्ञाविकुर्वितनिर्यातानां तीक्ष्णज्ञानाभिज्ञावति-
भूम्यनुप्राप्तानां समन्तज्ञानव्यवचाराणां प्रज्ञाकरगोत्रसंभवानां सर्वज्ञज्ञानाभिमुखानां
वितिमिरज्ञानचक्षुषां सत्त्वसारथिभावानुप्राप्तानां सर्वबुद्धसमतानुगतानां सदा-
विकल्पधर्मचरणानां सर्वधर्मारम्बणप्रतिविद्धानां सर्वधर्मप्रकृतिशान्तारम्बणानां सर्वलोक-
प्रशान्तनिर्वाणाव्ययपरमाणां सर्वगोचरनानात्वप्रतिष्ठानाम् अनिकेतसर्वक्षेत्रगमनानाम् अप्रति-
ष्ठानसर्वधर्मपदानाम् अनायूहसर्वधर्मनिर्माणप्रतिष्ठानां सर्वजगत्परिपाकविनयप्रतिपन्नानां सर्व-
सत्त्वक्षेमगतिसंदर्शकानाम् अप्युद्धतज्ञानविमोक्षभवनगोचराणां विरागकोट्यनुगतज्ञानशरीराणां
सर्वभवसमुद्रोच्चलितानां सर्वजगद्भूतकोटीविपश्यकानां धर्मसागरप्रज्ञावभासमण्डलानां
सागरवतीनातुसमाधिसुसमाहितमहाकरुणाचित्तानां मायागतधर्मनयसुप्रतिविद्धानां
स्वप्नोपमसर्वलोकधातववतीर्णानां प्रतिभासोपमसर्वतथागतदर्शनप्रतिविद्धानां प्रतिश्रुत्कोपमसर्व-
रुतविनिश्चयविधिज्ञानां निर्मितोपमसर्वधर्माभिनिर्वृत्तिज्ञानप्रतिविद्धानां सुसमार्जितविषयप्रणि-
धानानां समन्तज्ञानमण्डलविशुद्धिकौशल्यानुगतानाम् अत्यन्तशान्तप्रशान्तचित्तानां
सर्वधारणीगोचरज्ञानविषयाणां अच्छम्भितसमाधिवरसमन्तपर[illegible]णां धर्मधातुस्थितिकोटी-

गतचक्षुषां सर्वधर्मानिलम्भविहारप्राप्तानां अनन्तप्रज्ञासागरविचारिणां ज्ञानपारमितापारगतानां प्रज्ञापारमिताबलाधानप्राप्तानाम् ऋद्धिपारमितासर्वजगत्पारंगतानां समाधिपारमितावशगतानां सर्वतथागतार्थकौशल्याविपरीतज्ञानिनां धर्मकौशल्यप्रकाशननिधिज्ञानां निरुक्तिज्ञानाभिज्ञाना-मक्षयप्रतिभानबलधर्ममेघानां वैशारद्यर्षभसिंहनादिनाम् अनालयधर्मासमरतिरतानां विति-मिरसर्वधर्मप्रसारितचक्षुषां सर्वलोकसंचित्तविभवज्ञानचन्द्राणां प्रज्ञामण्डलसर्वसत्यनयव्यवहार- 5 रश्मीनां ज्ञानवज्रपुण्यचक्रवालानां सर्वौपम्योपम्यसमतिक्रान्तानां सर्वधर्मेन्द्रियज्ञानाङ्कुरविरूढानां शूरध्वजानां सर्वमारध्वजप्रमर्दनवीर्याणामनन्तज्ञानमण्डलतेजसां सर्वजगदभ्युद्गतकायानां सर्वधर्मानावरणप्रज्ञानां क्षयाक्षयकोटिज्ञानविबुद्धानां समन्तकोट्यनुगतभूतकोटिप्रतिष्ठानां अनिमित्तव्यवहरणप्रत्यवेक्षज्ञानचक्षुषां सर्वबोधिसत्त्वचर्याभिनिर्हारनिमित्तकुशलानाम् अद्वय-ज्ञानगोचराणां सर्वलोकगतिनिपश्यकानाम् अनिकेतसर्वबुद्धक्षेत्रगतिप्रतिभासप्राप्तानां सर्वधर्मा- 10 न्धकारविगतानाम् अतमोज्ञानमण्डलप्रतिपन्नानां समन्तदिग्धर्मावभासप्रयुक्तानां सर्वजगद्वरेण्य-पुण्यक्षेत्राणाम् अमोघश्रवणदर्शनप्रणिधिचन्द्राणां सर्वलोकाभ्युद्गतपुण्यसुमेरूणां सर्वपरप्रवादि-चक्रविनिग्रहशूराणां सर्वबुद्धक्षेत्रघोषस्वरशब्दनिर्नादिनां सर्वबुद्धकायातृप्तदर्शनानां सर्वबुद्ध-शरीरप्रतिभासवशवर्तिनां जगद्विनयानुकूलकायाधिष्ठानानां सर्वक्षेत्रप्रसरैककायस्फरणानाम् अभिसंस्कारविमण्डलपरिशुद्धानामनावरणगगनमहाज्ञानयानपात्राणां ज्ञानमण्डलसर्वधर्मधातु- 15 कायप्रभासनानां सर्वजगदुदितज्ञानादित्यानां सर्वजगदुचितयथाशयबलानां सर्वजगदाशये-न्द्रियप्रतिविद्धज्ञानानाम् अनावरणविषयसर्वधर्मोपपन्नानाम् अनुत्पत्तिसर्वधर्मस्वभावविज्ञातानां सूक्ष्मोदारान्योन्यसमवसरणज्ञानसंवर्धितवर्तिनां गम्भीरबुद्धभूमिगतिविनिश्चितानां गम्भीरार्थ-पदव्यञ्जनव्यवहारज्ञानानाम् अक्षयपदव्यञ्जनार्थसूचकानां सर्वसूत्रसागरैकपदप्रवेशप्रभाप-माणानां विपुलधारणीज्ञानशरीराधिष्ठानानाम् अनन्तकल्पसंधारणानुगताधिष्ठानानाम् 20 एकचित्तक्षणानभिलाप्यकल्पसंवासप्रतिविद्धज्ञानानाम् एकचित्तक्षणत्र्यध्वज्ञानसर्वलोका-भिज्ञानानां सर्वधर्मधारण्यनन्तबुद्धधर्मसागरप्रतिभासानां सर्वजगज्ज्ञानोपनामिकधर्म-चक्रप्रवर्तनाविवर्तिनां बुद्धविषयज्ञानावभासप्रतिलब्धानां सुदर्शनसमाधिसदासमापन्नानाम् असङ्ख्यकोटीसर्वधर्मप्रभेदज्ञानाभिज्ञानां सर्वधर्मविशेषविमोक्षविषयज्ञानविक्रीडितानां सर्वारम्बण-शुभव्यूहाधिष्ठानानां दशदिग्धर्मधातुदिगनुशरणप्रविष्टानां सर्वदिग्विभङ्गधर्मधातुसमवसरणानां 25 सूक्ष्मोदारपरमाणुरजोबोधि विबुध्यतां सुवर्णप्रकृतिसर्ववर्णसंदर्शकानां एकादिक्समव-सरणानाम् एकरूपानन्तगुणस्थानसंवर्धितज्ञानपुण्यगर्भाणां सर्वबुद्धस्तुतस्तवितप्रशस्तानाम् अक्षीणपदव्यञ्जनगुणवर्णनिर्देशानां बोधिमण्डानां जेतवने संनिपतितानां संनिषण्णानां तथागतगुणसमुद्रावतरतां तथागतरश्म्यवभासितानां सर्वशरीरेभ्य तेभ्यश्च कूटागारेभ्यो बोधिमण्डपरिभोगेभ्य तेभ्यश्च बोधिमण्डासनेभ्य. सर्वेभ्यश्चैतेभ्यो महाप्रीतिवेगप्रतिलाभ- 31 धर्मतया अचिन्त्यबोधिसत्त्वसर्वारम्भप्रतिलम्भेन प्रीतिवेगमभवन्महाविकुर्वितव्यूहानिश्चरिता

१ S om. पुण्य　२ B °ध्वजानां　३ B °संवर्धितवर्तिनां　४ B °प्रविष्टानां

सर्वधर्मधातु स्फरन्ति स्म । यदुत चित्तक्षणे चित्तक्षणे विपुलरश्मिजालमेघा सर्वजगत्संतो षणा निश्चरित्वा दश दिशः स्फरन्ति स्म । सर्वरत्नमणिघण्टामेघा निश्चरित्वा सर्वत्र्यध्वतथा गतगुणवर्णनिर्देशमेघनिर्नादाननुरवन्तो दश दिशः स्फरन्ति स्म । सर्वजगद्वाद्यमेघा सर्वारम्बणेभ्यो निश्चरित्वा सर्वसत्त्वकर्मविपाकमधुरवाग्घोषसंप्रयुक्ता अनुरवन्तो दश दिशः स्फरन्ति स्म । सर्वबोधिसत्त्वप्रणिधानविचित्रबोधिसत्त्वचर्यासंदर्शनरूपमेघा निश्चरित्वा सर्वबोधिसत्त्वप्रणिधानरुतघोषान् निगर्जन्तो दश दिशः स्फरन्ति स्म । लक्षणानुव्यञ्जन विभूषितबोधिसत्त्वकायमेघा निश्चरित्वा सर्वक्षेत्रेष्वनुगतबुद्धोत्पादपरंपरामुदीरयन्तो दश दिशः स्फरन्ति स्म । सर्वत्र्यध्वतथागतसदृशबोधिमण्डमेघा निश्चरित्वा सर्वतथागता भिसंबोधिनिर्याणव्यूहान् संदर्शयन्तो दश दिशः स्फरन्ति स्म । सर्वारम्बणेभ्यः सर्वनागे न्द्रकायमेघा निश्चरित्वा सर्वगन्धवर्षाणि प्रवर्षन्तो दश दिशः स्फरन्ति स्म । सर्वजगदिन्द्र सदृशकायमेघा निश्चरित्वा समन्तभद्रबोधिसत्त्वचर्यामुदीरयन्तो दश दिशः स्फरन्ति स्म । सर्वारम्बणेभ्यः सर्वरत्नमयसर्वपरिशुद्धबुद्धक्षेत्रप्रतिभासमेघा निश्चरित्वा सर्वतथागतधर्मचक्र प्रवर्तनानि दर्शयन्तो दश दिशः स्फरन्ति स्म । एवंप्रमुखा अनभिलाप्यबुद्धक्षेत्रपरमाणु रजःसमा महाव्यूहविकुर्वितमेघा निश्चरन्ति स्म तेषां बोधिसत्त्वानामधिष्ठानेन अचिन्त्य धर्मसमुद्रावभासप्रतिलाभधर्मतया च ॥

अथ खलु मञ्जुश्रीर्बोधिसत्त्वो बुद्धाधिष्ठानेन एतान्येवं सर्वविकुर्वितानि संदर्शयन् दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत—

संप्रेक्षतो जेतवने अनन्त
बुद्धाधिष्ठान विपुल प्रवृत्तम् ।
आरम्बणा सर्वतु कायमेघा
निश्चार्य ते सर्वदिशः स्फरन्ति ॥ ११ ॥

अनन्तवर्णा विपुला विशुद्धा
व्यूहा विचित्रा सुगतात्मजानाम् ।
दृश्यन्ति सर्वेहि त आसनेभ्य
सारम्बणेभ्य प्रतिभासप्राप्ता ॥ १२ ॥

नानाविव्यूहा रतनार्चिमेघा
स्फरन्ति क्षेत्रान्तर सर्वमाना ।
रोम्णां मुखेभ्य सुगतात्मजाना
रुतानि बौद्धानि निगर्जमाना ॥ १३ ॥

भूमेन्द्ररूपे सदृशात्ममाना
प्रशान्तईर्यापथ शुद्धमाया ।

वृक्षाण पुष्पेभि विनिश्चरित्वा
व्रजन्ति घ्यानाङ्गमुदीरयन्तः ॥ १४ ॥

समन्तभद्रोपमबोधिसत्त्वाः
सलक्षणव्यञ्जनभूषिताङ्गाः ।
अचिन्त्या असंख्याः सुगतस्य रोम्णो
अधिष्ठिता निर्मित निश्चरन्ति ॥ १५ ॥ 5

त्र्यध्वोद्भवानां सुगतात्मजानां
ये वर्णनिश्चारमहासमुद्राः ।
गर्जन्ति तान् जेतवनोपविष्टा-
स्ते व्यूहमेघा गुणसागराणाम् ॥ १६ ॥ 10

ये सर्वदिक्सत्त्वगणस्य कर्म-
महासमुद्रा निखिला विचित्रा ।
श्रूयन्ति ते जेतवने द्रुमाणां
कोशान्तरेभ्योऽपि विनिश्चरन्तः ॥ १७ ॥

त्र्यध्वस्थितानामिह या जिनानां 15
क्षेत्रेषु सर्वेष्वखिला विकुर्वा ।
क्षेत्राद्घस्तात्परमाणुसंख्या
प्रत्येकमारम्वणमानिमान्ति ॥ १८ ॥

एकैकरोम्णि प्रविभक्तु चित्रा
बुद्धा दिक्क्षेत्रे समुद्रमेघाः । 20
आभासयन्ति जिनाधिवासां
प्रतिक्षणं तेषु च बुद्धमेघाः ॥ १९ ॥

जगत्समाः सर्वदिशः स्फरित्वा
सत्त्वानुपायैः परिपाचयन्तः ।
तेषां प्रभाभ्यश्च विनिश्चरन्तो 25
गन्धार्चिपुष्पौघसमुद्रमेघाः ॥ २० ॥

व्योमप्रमाणानि विमानरत्नान्
अशेषसद्व्यूहविराजितानि ।
स्फरन्ति सर्वाण्यपि सर्वदिक्षु
क्षेत्राणि सर्वाण्यपि बोधिमण्डान् ॥ २१ ॥ 30

येऽशेषतश्चाध्वगता हि दिक्षु
त्र्यध्वस्थितानां सुगतौरसानाम् ।
समन्तभद्रैश्चरितप्रकारै-
र्विशोधिताः क्षेत्र महौषधीनाम् ॥ २२ ॥

5 व्यूहा विचित्रा जगदप्रमाणै-
र्विशोधिताः कल्पमहासमुद्रैः ।
दृश्यन्ति तेऽपि प्रतिभासयोगा-
दशेषतो जेतवनान्तरिक्षे ॥ २३ ॥

अथ खलु तेषां बोधिसत्त्वानां बुद्धसमाध्यवभासितसंतानानामेकैकस्य बोधिसत्त्वस्य 10 अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानि महाकरुणामुखान्यवक्रान्तानि । ते भूयस्या मात्रया सर्वजगद्धितसंग्रहाय प्रतिपन्नाः । तेषां तथा समाहितानामेकैकस्माद्रोममुखादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमा रश्मयो निश्चरन्ति। एकैकस्माच्च रश्मिमुखादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमा बोधिसत्त्वनिर्माणमेघा निश्चरन्ति स्म सर्वलोकेन्द्रसदृशकायाः सर्वजगन्मुखकायाः सर्वसत्त्वपरिपाकानुकूलकायाः । निश्चरित्वा सर्वदिक्षु धर्मधातुं स्फरित्वा सत्त्वान् संबोधयन्ति 15 परिपाचयन्ति विनयन्ति । अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्देवभवनच्युतिसंदर्शनमुखैः सर्वलोकोपपत्तिसंदर्शनमुखैर्बोधिसत्त्वचर्यामण्डलसंदर्शनमुखैः स्वप्नसंदर्शनमुखैर्धिसूचनामकार्षुः । सर्वबोधिसत्त्वप्रणिधाननिर्याणमुखैर्लोकधातुसंपन्नमुखैर्दानपारमिताचर्यासंदर्शनमुखैः सर्वतथागतगुणप्रतिपत्तिनिष्पत्तिमण्डलमुखैः अङ्गप्रत्यङ्गच्छेदनाक्षान्तिपारमितासंदर्शनमुखैः महाबोधिसत्त्वविकुर्वितवीर्यपारमितासंदर्शनमुखैः सर्वबोधिसत्त्वध्यानविमोक्षसमाधिसमापत्ति-20 बुद्धज्ञानमार्गमण्डलालोकप्रभासस्वरमुखैः सर्वबुद्धधर्मपर्येषणाय एकैकस्य धर्मपदव्यञ्जनस्यार्थाय असंख्येयात्मभावपरित्यागसंदर्शनमुखैः सर्वतथागतोपसंक्रमणसर्वधर्मपरिपृच्छनमुखैः यथाकालयथाशयजगदुपसंक्रमणोपनायिकसर्वज्ञतापरिपूरकोपायनयसागरालोकविज्ञप्तिमुखैः सर्वबोधिसत्त्वपुण्यज्ञानसंभारसर्वमारपराजयवायनवमृषचक्ष्यकेतुसंदर्शनमुखैः सर्वशिल्पज्ञानाभिज्ञावतीज्ञानभूमिसंदर्शनमुखैः सर्वजगद्विशेषज्ञानाभिज्ञावतीज्ञानभूमिसंदर्शनमुखैः सर्वसंख्या-25 शयविशेषज्ञानाभिज्ञावतीज्ञानभूमिसंदर्शनमुखैः सर्वसत्त्वेन्द्रियप्रवेशप्रयोगनानाक्लेशवासनासमुद्घातज्ञानाभिज्ञावतीज्ञानभूमिसंदर्शनमुखैः सर्वसत्त्वनानाकर्मप्रतिपत्तिज्ञानाभिज्ञावतीज्ञानभूमिसंदर्शनमुखैः । एतप्रमुखाननभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैः सत्त्वपरिपाकविनयोपायसंग्रहमुखैस्तैर्बोधिसत्त्वाः सर्वसत्त्वभवनेषूपसंक्रान्ताः संदृश्यन्ते स्म । केचिद्देवभवनेषु केचिन्नागभवनेषु केचिद् यक्षभवनेषु केचिद्गन्धर्वभवनेषु केचिदसुरभवनेषु केचिद्गरुडभव-30 नेषु केचित्किन्नरभवनेषु केचिन्महोरगभवनेषु केचिद्ब्रह्मेन्द्रभवनेषु केचिन्मनुष्येन्द्रभवनेषु केचिद् यमनगरेषु केचित् सर्वप्रेतालयेषु केचित् सर्वनरकलोकेषु केचित् सर्वतिर्यग्योनिगतिषु

1 B सर्वलोकाशय°.

असंभिन्नया महाकरुणया असंभिन्नेन प्रणिधानेन असंभिन्नेन ज्ञानेन असंभिन्नेन सत्त्वसंग्रहप्रयोगेन दर्शनवैनयिकानां सत्त्वानां श्रवणवैनयिकानामनुस्मृतिवैनयिकानां स्वरमण्डलवैनयिकानां नामनदीनिर्घोषवैनयिकानां प्रभामण्डलवैनयिकानां रश्मिजालप्रमुञ्चनवैनयिकानां यथाशयानां सत्त्वानां परिपाकविनयार्थं जेतवनान्ते वोधिसत्त्वा नानाविकुर्वितव्यूहैः सर्वलोकधातुसमुद्रेषु सर्वसत्त्वधातुप्रसरान् स्फरन्तः संदृश्यन्ते स्म । न च तथागतपादमूलादुच्चलन्ति । केचित् स्वभवनकूटागारासनपरिवारा दश दिशः स्फरन्तः संदृश्यन्ते, तथागतपादमूलाच्च न चलन्ति । केचिन्निर्मितमेघान् प्रमुञ्चतः संदृश्यन्ते सत्त्वपरिपाकाय, तथागतपर्षन्मण्डलाच्च न चलन्ति । केचिच्छ्रमणरूपेण केचिद्ब्राह्मणरूपेण केचित्सर्वप्रतिलिङ्गाकल्पारोहपरिणाहरूपेण केचिद्वैद्यरूपेण केचिद्वणिग्रूपेण केचिच्छुभाजीवरूपेण केचिन्नर्तकरूपेण केचिद्देवेल्करूपेण केचित् सर्वशिल्पाधाररूपेण सर्वग्रामनगरनिगमजनपदराष्ट्रराजधानीषूपसंक्रान्ताः संदृश्यन्ते स्म । कालवशेन कालमनुवर्तमाना अनुरूपकायाभिनिर्हारभेदेन अनुरूपकायवर्णसंस्थानभेदेन स्वरभेदेन मन्त्रभेदेन ईर्यापथभेदेन अवस्थानभेदेन सर्वजगदिन्द्रजालोपमायां वोधिसत्त्वचर्यायां सर्वशिल्पमण्डलप्रभासनायां सर्वजगज्ज्ञानोद्योतनालोकप्रदीपायां सर्वसत्त्वाधिष्ठानव्यूहायां सर्वधर्मावभासनप्रभायां सर्वदिग्यानव्यवस्थानशोधनायां सर्वधर्ममण्डलप्रदीपायां वोधिसत्त्वचर्यायां चरन्तः सर्वग्रामनगरनिगमजनपदराष्ट्रराजधानीषूपसंक्रान्ताः संदृश्यन्ते स्म सत्त्वपरिपाकविनयाय ॥

---

१ B श्रुतार्थेष°. २ B देवरूपेण.

# कल्याणमित्राणि ।

## २ मञ्जुश्रीः ।

अथ खलु मञ्जुश्रीरपि कुमारभूत प्रतिष्ठानकूटागारगत सार्धं सभागचरितैर्बोधिसत्त्वै, नित्यानुबद्धैश्च वज्रपाणिभि, सर्वलोकरक्षावरणप्रयुक्ताभिश्च सर्वबुद्धोपस्थानप्रणिधानचित्ताभि शरीरकायिकाभिर्देवताभि, पूर्वप्रणिधानानुबद्धाभिश्च पदकायिकाभिर्देवताभि, धर्मश्रवणाभिमुखाभिश्च पृथिवीदेवताभि, महाकरुणाप्रयुक्ताभिश्च उत्ससरोह्रदतडागोदपाननदीदेवताभि, प्रज्ञालोकज्वलनप्रभावभासाभिश्च ज्वलनदेवताभि, आबद्धमकुटाभिश्च वायुदेवताभि, सर्वदिगवभासज्ञानाभिश्च दिग्देवताभि, अविद्यान्धकारविधमनप्रयुक्ताभिश्च रात्रिदेवताभि, तथागतदिवसाभिनिर्हारप्रयुक्ताभिश्च दिवसदेवताभि, सर्वधर्मधातुगगनप्रतिमण्डनप्रयुक्ताभिश्च गगनदेवताभि, सर्वजगद्भवसमुद्रसंतारणप्रयुक्ताभिश्च सागरदेवताभि, सर्वज्ञतासंभारसमार्जनप्रयुक्ताभिश्च कुशलमूलकूटागाराभ्युद्गतचित्ताभि पर्वतदेवताभि, सर्वजगच्छरीरालंकारप्रयुक्ताभिश्च सर्वबुद्धवर्णाभिधानप्रणिधानप्रयुक्ताभिर्नदीदेवताभि, सर्वजगच्चित्तनगरपरिपालनप्रयुक्ताभिश्च नगरदेवताभि, सर्वधर्मनगरप्रतिमानाधिमुक्तैश्च नागेन्द्रै सार्धं सर्वसत्त्वरक्षाप्रतिपन्नैश्च यक्षेन्द्रै, सर्वसत्त्वप्रीतिवेगविवर्धनप्रयुक्तैश्च गन्धर्वेन्द्रै, सर्वप्रेतगतिविनिवर्तनप्रयुक्तैश्च कुम्भाण्डेन्द्रै, सर्वसत्त्वभवसागराभ्युद्धरणप्रणिधिप्रतिपन्नैश्च गरुडेन्द्रै, सर्वलोकाभ्युद्गततथागतकायवर्णपरिनिष्पत्तिप्रणिधानसंजातैश्च असुरेन्द्रै, तथागतदर्शनप्रीतिलब्धैश्च प्रणतकायैर्महोरगेन्द्रै, संसारोद्विग्नमानसैश्च उल्लोकितवदनैर्देवेन्द्रै, महागौरवप्रतिलब्धैश्च प्रणतशरीरैर्ब्रह्मेन्द्रै, महागौरवाभिष्टुतमहितम् एवंरूपया बोधिसत्त्वविक्रमव्यूहसंपदा मञ्जुश्रीर्बोधिसत्त्व स्वकाद्विहारान्निष्क्रम्य भगवन्तमनेकशतकृत्व प्रदक्षिणीकृत्य अनेकाकारया पूजयित्वा भगवतोऽन्तिकादपक्रम्य येन दक्षिणापथस्तेन जनपदचर्यां प्रक्रान्त ॥

अथ खलु आयुष्मान् शारिपुत्रो बुद्धानुभावेन अद्राक्षीन्मञ्जुश्रियं कुमारभूतमनया ईदृश्या बोधिसत्त्वविकुर्वितव्यूहसंपदा जेतवनान्निष्क्रम्य येन दक्षिणा दिक् तेनोपसंक्रामन्तम्। दृष्ट्वा च अस्यैतदभवत्-यन्न्वहं मञ्जुश्रिया कुमारभूतेन सार्धं जनपदचर्यां प्रक्रमेयम्। स षष्टिमात्रैर्भिक्षुभि परिवृत पुरस्कृत स्वकाद्विहारान्निष्क्रम्य येन भगवांस्तेनोपसंक्रामत्। उपसंक्रम्य भगवत पादौ शिरसाभिवन्द्य भगवन्तमवलोक्य भगवताभ्यनुज्ञातो भगवन्तं त्रि प्रदक्षिणीकृत्य भगवतोऽन्तिकादपक्रम्य येन मञ्जुश्री कुमारभूतस्तेनोपजगाम सार्धं तै षष्टिभिर्भिक्षुभि परिवृत पुरस्कृत, सार्धविहारिभिर्नवैरचिरप्रव्रजितै, यदुत सागरबुद्धिना च भिक्षुणा, महासुदत्तेन च भिक्षुणा, पुण्यप्रभेण च महावत्सेन च विभुदत्तेन च विशुद्धचारिणा च देवश्रिया च इन्द्रमतिना च ब्रह्मोत्तमेन च प्रशान्तमतिना च भिक्षुणा। एवंप्रमुखै षष्टिभिर्भिक्षुभि परिवृत पुरस्कृत । सर्वे च ते भिक्षव पूर्वजिनकृताधिकारा अवरोपितकुशलमूला दूरानुगताधिमुक्तय श्रद्धानयपरिशुद्धा महाचेतना-

---

1 B om. महावत्सेन च भिक्षुणा

समुदाचारा बुद्धदिग्विलोकनसमर्था धर्मस्वभावप्रकृतिनिष्पत्तिचेतसः परहितपरिणतबुद्धय-स्तथागतगुणाभिलाषिणो मञ्जुश्रीधर्मदेशनावैनयिकाः ॥

अथ खलु आयुष्मान् शारिपुत्रो गच्छन्नेव मार्गे सर्वांस्तान् भिक्षूनवलोक्य सागरबुद्धिं भिक्षुमामन्त्रयामास–पश्य सागरबुद्धे मञ्जुश्रियो बोधिसत्त्वस्य कायपरिशुद्धिमचिन्त्यां सदेवकेन लोकेन, लक्षणानुव्यञ्जनविचित्रितां प्रभामण्डलपरिशुद्धिं च, अप्रमेयसत्त्वसंजननीरश्मिजाल- 5 व्यूहं च, अपरिमाणसर्वदुःखप्रशमनं परिवारसंपदं च, पूर्वकुशलमूलसुपरिगृहीतान् मार्गव्यूहांश्च गच्छतोऽष्टापदो मार्गः संतिष्ठते । मार्गविक्रमव्यूहांश्च सर्वदिग्मण्डलाभिमुखान् वर्तमानान् पुण्यसम्यग्व्यूहांश्च वामदक्षिणेन महानिधानान्युद्वेलानि भवन्ति । पूर्वबुद्धोपस्थानकुशलमूल-निष्यन्दैश्च सर्ववृक्षकोशेभ्यो व्यूहा निर्गच्छन्ति । सर्वलोकेन्द्राः पूजामेघानभिप्रवर्षन्तः प्रणमन्ति । दशभ्यो दिग्भ्यः सर्वतथागतोर्णाकोशेभ्यो रश्मिजालमण्डलानि निश्चरित्वा 10 सर्वबुद्धधर्मान्निगर्जमानान् मूर्ध्नि निपतन्ति । एवंप्रमुखानायुष्मान् शारिपुत्रो मञ्जुश्रियः कुमारभूतस्य अपरिमाणान् मार्गक्रमणगुणव्यूहांस्तेषां भिक्षूणां संदर्शयति, भाषते उदीरयति प्रभावयति संवर्णयति विवरति विभजति उत्तानीकरोति । यथा यथा स्थविरः शारिपुत्रो मञ्जुश्रियः कुमारभूतस्य गुणानुदीरयति, तथा तथा तेषां भिक्षूणां चित्तानि विशुद्ध्यन्ति प्रसीदन्ति, प्रीतिवेगा विवर्धन्ते, हर्ष उत्पद्यते, संतानानि चैषां कर्मण्यानि भवन्ति, 15 इन्द्रियाणि प्रसीदन्ति, सौमनस्यं विवर्धते, दौर्मनस्यं प्रहीयते, चित्तमलोऽपगच्छति, सर्वा-वरणानि विनिवर्तन्ते, बुद्धदर्शनमभिमुखीभवति, बुद्धधर्मेषु चित्तानि परिणमन्ति, बोधि-सत्त्वेन्द्रियाणि परिशुध्यन्ते, बोधिसत्त्वप्रसादवेगा उत्पद्यन्ते, महाकरुणा संभवति, पारमिता-मण्डलमवक्रामति, महाप्रणिधानानि संजायन्ते, दशसु दिक्षु बुद्धसमुद्रा आभासीभवन्ति । ते एवमुदारं सर्वज्ञताप्रसादवेगं प्रतिलभ्धा एतदवोचन्–उपनयतु उपाध्यायोऽस्मानेतस्य 20 सत्पुरुषस्य सकाशम् । अथ खलु आयुष्मान् शारिपुत्र तैर्भिक्षुभिः सार्धं येन मञ्जुश्रीः कुमार-भूतस्तेनोपसंक्रम्य एतदवोचत्–इमे मञ्जुश्रीः भिक्षवः त्वद्दर्शनकामाः । अथ खलु मञ्जुश्रीः कुमारभूतो महता बोधिसत्त्वविकुर्वितेन सार्धं पर्षन्मण्डलप्रमाणेन[1] भूमिमण्डलेन नागाव-लोकितेन प्रत्युदावृत्य तान् भिक्षूनवलोकयामास । अथ खलु ते भिक्षवो मञ्जुश्रियः कुमारभूतस्य पादौ शिरोभिरभिवन्द्य अञ्जलीन् प्रगृह्य एतदवोचन्–अनेन वयं सत्पुरुष 25 त्वद्दर्शनकुशलमूलेन यदप्यस्माकमन्यत्कुशलमूलं त्वं जानीषे, उपाध्यायश्च, यच्च भगवतः शाक्यमुनेस्तथागतस्य प्रत्यक्षम्, तेन वयं कुशलमूलेन ईदृशा एव भवेम, यादृशस्त्वम् । एवंरूपं च कायं प्रतिलभेम, एवंरूपं घोषम्, एवंरूपाणि लक्षणानि, ईदृशानि विकुर्वितानि यादृशानि तव ॥

एवमुक्ते एभिर्भिक्षुभिः मञ्जुश्रीः कुमारभूतस्तान् भिक्षूनिदमवोचत्–दशभिरपरि- 30 खेदचित्तोत्पादैः समन्वागतो भिक्षवो महायानसंप्रस्थितः कुलपुत्रो वा कुलदुहिता वा

[1] B om. °प्रमाणेन भूमिमण्डलेन.

तथागतभूमिमवक्रामति, प्रागेव बोधिसत्त्वभूमिम् । कतमैर्दशभिः ? यदुत सर्वतथागत-
दर्शनपर्युपासनपूजोपस्थानेष्वपरिखेदचित्तोत्पादेन, सर्वकुशलमूलोपचयेष्वनिवर्त्यापरिखेद-
चित्तोत्पादेन, सर्वधर्मपर्येष्टिष्वपरिखेदचित्तोत्पादेन, सर्वबोधिसत्त्वपारमिताप्रयोगेष्वपरि-
खेदचित्तोत्पादेन, सर्वबोधिसत्त्वसमाधिपरिनिष्पादनेष्वपरिखेदचित्तोत्पादेन, सर्वाध्वपरंपरा-
5 वतारेष्वपरिखेदचित्तोत्पादेन, दशदिक्सर्वबुद्धक्षेत्रसमुद्रस्फरणपरिशुद्धिषु अपरिखेदचित्तो-
त्पादेन, सर्वसत्त्वधातुपरिपाकविनयेष्वपरिखेदचित्तोत्पादेन, सर्वक्षेत्रकल्पबोधिसत्त्वचर्या-
निर्हारेषु अपरिखेदचित्तोत्पादेन, सर्वबुद्धक्षेत्रपरमाणुरजःसमपारमिताप्रयोगैकसत्त्वपरिपाचन-
क्रमेण सर्वसत्त्वधातुपरिपाचनेन, एकतथागतबलपरिनिष्पादनेषु अपरिखेदचित्तोत्पादेन ।
एभिर्भिक्षवो दशभिरपरिखेदचित्तोत्पादैः समन्वागतः श्राद्धः कुलपुत्रः कुलदुहिता वा
10 संवर्तते सर्वकुशलमूलेषु, विवर्तते सर्वसंसारगतिभ्यः, उच्चलति सर्वलोकवंशेभ्यः, अतिक्रामति
सर्वश्रावकप्रत्येकबुद्धभूमिभ्यश्च । संभवति सर्वतथागतकुलवंशेषु, संपद्यते बोधिसत्त्वप्रणि-
धानेषु, विशुध्यते सर्वतथागतगुणप्रतिपत्तिषु, परिशुध्यते सर्वबोधिसत्त्वचर्यासु, समुदा-
गच्छति सर्वतथागतबलेषु, प्रमर्दति सर्वमारपरप्रवादिनः, आक्रामति सर्वबोधिसत्त्वभूमीः,
आसन्नीभवति तथागतभूमेः ॥

15 अथ खलु ते भिक्षव इमं धर्मनयं श्रुत्वा सर्वबुद्धविदर्शनासङ्गचक्षुर्वीर्यं नाम
समाधिं प्रत्यलभन्त, यस्यानुभावाद्दशदिगनन्तापर्यन्तलोकधातुस्थितांस्तथागतान् पर्षन्मण्डला-
नद्राक्षुः । ये च तेषु लोकधातुषु सर्वजगत्युपपन्नाः सत्त्वास्तानशेषानद्राक्षुः । तांश्च
लोकधातून् नानाविभक्तिकानपश्यन् । यानि च तेषु लोकधातुषु परमाणुरजांसि, तान्यपि गण-
नायोगेन प्रजानन्ति स्म । ये च तेषां सत्त्वानां नानारत्नमया भवनविमानपरिभोगास्तानपि
20 पश्यन्ति स्म । तेषां च तथागतानां स्वराङ्गसमुदानश्रोषुः । तां च धर्मदेशनां नानापद-
व्यञ्जननिरुक्तिमन्त्रनामसंज्ञाभिराजानन्ति स्म । तेषां च सत्त्वानां चित्तेन्द्रियाशयान् व्यवलोक-
यन्ति स्म । दश च पूर्वान्तापरान्तजातिपरिवर्ताननुस्मरन्ति स्म । तेषां च तथागतानां दश-
धर्मचक्रनिरुक्तिनिर्हारानवतरन्ति स्म । दशर्द्धिविकुर्वितविहारान् दशादेशनानयनिर्हारान् दशा-
नुशास्तिपदनिर्हारानवतरन्ति स्म । तेषां च तथागतानां दशप्रतिसंविन्नयाभिनिर्हारानवतरन्ति
25 स्म । सहप्रतिलम्भादस्य समाधेर्दशबोधिचित्ताकारसहस्राणि परिनिष्पादयन्ति स्म । दशसमाधि-
सहस्राण्युपक्रामन्ति स्म । दशपारमिताङ्गसहस्राणि विशोधयन्ति स्म । ते महावभासप्रतिलब्धा
महाप्रज्ञामण्डलावभासिता दश बोधिसत्त्वाभिज्ञाः प्रतिलभन्ते स्म । तान् मृदुसूक्ष्माभिज्ञा-
ङ्कुरप्रतिलब्धान् बोधिचित्तोत्पाददृढप्रतिष्ठितान् मञ्जुश्रीः कुमारभूतः समन्तभद्रायां बोधि-
सत्त्वचर्यायां समादाप्य प्रतिष्ठापयामास । ते समन्तभद्रबोधिसत्त्वचर्याप्रतिष्ठिता महाप्रणि-
30 धानसमुद्रावतीर्णा अभिनिर्हरन्ति स्म । ते महाप्रणिधानसागराभिनिर्हृतया चित्तविशुद्ध्या
कायविशुद्धिं प्रतिलभन्ते स्म । कायविशुद्ध्या कायलघुतां प्रतिलभन्ते स्म, यया काय-

1 B सर्व. 2 B om. from दश च...upto सहप्रतिलम्भाच.

विशुद्धया कायलघुतया तान्यभिज्ञामुखानि विपुलीकुर्वन्ते, अच्युतागामिनीरभिज्ञाः प्रतिलभन्ते
स्म, येनाभिज्ञाप्रतिलाभेन मञ्जुश्रियश्च कुमारभूतस्य पादमूलान्न चलन्ति । दशसु च
दिक्षु सर्वतथागतकायमेघानभिनिर्हरन्ति स्म सर्वबुद्धधर्मपरिनिष्पत्तये ॥

अथ खलु मञ्जुश्रीः कुमारभूतस्तान् भिक्षूननुत्तरायां सम्यक्संबोधौ प्रतिष्ठाप्य
अनुपूर्वेण जनपदचर्यां चरन् येन दक्षिणापथे धन्याकरं नाम महानगरं तेनोपजगाम । 5
उपेत्य धन्याकरस्य महानगरस्य पूर्वेण विचित्रसारध्वजव्यूहं नाम महावनषण्डं पूर्वबुद्धा-
ध्युषितचैत्यं तथागताधिष्ठितं सत्त्वपरिपाकाय अनन्तक्षेत्रानुरवितनामनिर्घोषम्, यत्र भगवता
पूर्वं बोधिसत्त्वचर्यां चरता अनेके दुष्करपरित्यागाः परित्यक्ताः[1], यस्मिन् पृथिवीप्रदेशे
सततसमितं देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्याः पूजां प्रत्युत्सुकाः, तत्र
वासमुपगतः सार्धं सपरिवारेण । तत्र मञ्जुश्रीः कुमारभूतो धर्मधातुनयप्रभासं नाम 10
सूत्रान्तं प्रकाशयामास दशसूत्रान्तकोटीनियुतशतसहस्रप्रस्रवनम् । तस्य संप्रकाशयतो
महासमुद्रादनेकानि नागकोटीनियुतशतसहस्राण्युपसंक्रान्तानि । ते तं धर्मनयं श्रुत्वा
नागगतिं विजुगुप्सन्तस्तथागतगुणान् स्पृहयन्तो नागगतिं विवर्त्य देवमनुष्योपपत्तिं परि-
गृह्णन्ति स्म । तत्र दश नागसहस्राण्यवैवर्तिकान्यभूवन्ननुत्तरायाः सम्यक्संबोधेः । तस्य तं धर्मं
देशयतः कालान्तरेण अनन्तमप्यसत्त्वधातुर्विनयं गतस्त्रिभिर्यानैः ॥ 15

अश्रौषुर्धन्याकरमनुष्याः—मञ्जुश्रीः कुमारभूतः इदं धन्याकरं नगरमनुप्राप्तः, इहैव
विचित्रसारध्वजव्यूहे चैत्ये विहरतीति । श्रुत्वा च पुनरुपासकोपासिका दारकदारिका
महाप्रज्ञोपासकश्रेष्ठिपूर्वंगमाः प्रत्येकं पञ्चशतपरिवारा धन्याकरान्नगरान्निष्क्रम्य येन मञ्जुश्रीः
कुमारभूतस्तेनोपसंक्रान्ताः । तत्र महाप्रज्ञोपासकः सुदत्तेन चोपासकेन सार्धं वसुदत्तेन च
पुण्यप्रभेण च यशोदेवेन च सोमश्रिया च सोमनन्दिना च सुमतिना च महामतिना च 20
राहुलभद्रेण च भद्रश्रिया चोपासकेन सार्धमेतत्प्रमुखैः पञ्चभिरुपासकशतैः परिवृतः
पुरस्कृतः येन मञ्जुश्रीः कुमारभूतस्तेनोपसंक्रम्य मञ्जुश्रियः कुमारभूतस्य पादौ शिरसाभिवन्द्य
मञ्जुश्रियं कुमारभूतं त्रिः प्रदक्षिणीकृत्य एकान्ते न्यषीदत् ॥

तत्र महाप्रज्ञा नामोपासिका सुप्रभया चोपासिकया सार्धं सुगात्रया च सुभद्रया
च भद्रश्रिया च चन्द्रप्रभासया च केतुप्रभया च श्रीभद्रया च सुलोचनया चोपासिकया 25
सार्धमेतत्प्रमुखैः पञ्चभिरुपासिकाशतैः परिवृता पुरस्कृता येन मञ्जुश्रीः कुमारभूतस्तेनोप-
संक्रम्य मञ्जुश्रियः कुमारभूतस्य पादौ शिरसाभिवन्द्य मञ्जुश्रियं कुमारभूतं त्रिः प्रदक्षिणी-
कृत्य एकान्ते न्यषीदत् ॥

तत्र सुधनः श्रेष्ठिदारकः सुनेत्रेण च श्रेष्ठिदारकेण सार्धं सुशीलेन च स्वाचारेण च
सुविक्रामिणा च सुचिन्तिना च सुमतिना च सुबुद्धिना च सुनेत्रेण च सुबाहुना च 30

---

1 B om. परित्यक्ताः

सुप्रभेण च श्रेष्ठिदारकेण सार्धमेतत्प्रमुखैः पञ्चभिः श्रेष्ठिदारकशतैः परिवृतः पुरस्कृतो येन
मञ्जुश्रीः कुमारभूतस्तेनोपसंक्रम्य मञ्जुश्रियः कुमारभूतस्य पादौ शिरसाभिवन्द्य मञ्जुश्रियं
कुमारभूतं त्रिः प्रदक्षिणीकृत्य एकान्ते न्यषीदत् ॥

तत्र सुभद्रा दारिका महाप्रज्ञस्य गृहपतेर्दुहिता भद्रया च दारिकया सार्धमभि-
5 रामवर्तया च दृढमत्या च श्रीभद्रया च प्रह्लादच्छाया च श्रीप्रभया च सुप्रभया दारिकया सार्ध-
मेतत्प्रमुखैः पञ्चभिर्दारिकाशतैः परिवृता पुरस्कृता येन मञ्जुश्रीः कुमारभूतस्तेनोपसंक्रम्य
मञ्जुश्रियः कुमारभूतस्य पादौ शिरसाभिवन्द्य मञ्जुश्रियं कुमारभूतं त्रिः प्रदक्षिणीकृत्य
एकान्ते न्यषीदत् ॥

अथ खलु मञ्जुश्रीः कुमारभूतो धन्याकरान्नगरात् ताः स्त्रीपुरुषदारकदारिकाः
10 संनिपतिताः संनिषण्णा विदित्वा यथाशयं संदर्शनाधिपत्येनाभिभूय महामैत्र्याधिपत्येन
प्रह्लाद्य महाकरुणाधिपत्येन धर्मदेशनामभिनिर्हृत्य ज्ञानाधिपत्येन चित्ताशयान् प्रविचिन्त्य
महाप्रतिसंविदा धर्ममुपदेष्टुकामः सुधनं श्रेष्ठिदारकमवलोकयामास । ( सुधनः खलु पुनः
श्रेष्ठिदारकः केन कारणेनोच्यते सुधन इति ? सुधनस्य खलु श्रेष्ठिदारकस्य समनन्तरा-
वक्रान्तस्य मातुः कुक्षौ तस्मिन् गृहे सप्त रत्नाङ्कुराः प्रादुर्भूताः समन्ताद्गृहस्य सुविभक्ताः ।
15 तेषां च रत्नाङ्कुराणामधः सप्त महानिधानानि, यतस्ते रत्नाङ्कुराः समुत्पत्य धरणितलमभि-
निर्भिद्य अभ्युद्गताः सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तेरश्मगर्भस्य मुसार-
गल्वस्य सप्तमस्य रत्नस्य । स यदा सर्वाङ्गप्रत्यङ्गैः परिपूर्णो दशानां मासानामत्ययाज्जातः, तदा
तानि सप्त महानिधानानि सप्तहस्तायामविस्तारोद्वेधप्रमाणानि[1] धरणितलादभ्युद्गम्य विधूतानि
विरोचन्ति भ्राजन्ते स्म । पञ्च च भाजनशतानि तस्मिन् गृहे प्रादुर्भूतानि नानारत्न-
20 मयानि, यदुत सर्पिर्भाजनानि तैलभाजनानि मधुभाजनानि नवनीतभाजनानि, प्रत्येकं
च सर्वोपकरणपरिपूर्णानि । यदुत वज्रभाजनानि सर्वगन्धपरिपूर्णानि सुगन्धभाजनानि,
नानावस्त्रपरिपूर्णानि शिलाभाजनानि, नानाभक्ष्यभोज्यरसरसाग्रपरिपूर्णानि मणिभाजनानि,
नानारत्नपरिपूर्णानि सुवर्णभाजनानि रूप्यचूर्णपरिपूर्णानि, रूप्यभाजनानि सुवर्णवर्णचूर्ण-
परिपूर्णानि, सुवर्णरूप्यभाजनानि वैडूर्यमणिरत्नपरिपूर्णानि, स्फटिकभाजनानि मुसारगल्व-
25 परिपूर्णानि, मुसारगल्वभाजनानि स्फटिकरत्नपरिपूर्णानि, अश्मगर्भभाजनानि लोहितमुक्ता-
परिपूर्णानि, लोहितमुक्ताभाजनानि अश्मगर्भपरिपूर्णानि, ज्योतिर्ध्वजमणिरत्नभाजनानि
उदकप्रसादकमणिरत्नपरिपूर्णानि, उदकप्रसादकमणिरत्नभाजनानि ज्योतिर्ध्वजमणिरत्न-
परिपूर्णानि । एतत्प्रमुखानि पञ्च रत्नभाजनशतानि सहजातस्य खलु सुधनस्य श्रेष्ठिदारकस्य
गृहे सर्वकोशकोष्ठागारेषु धनधान्यहिरण्यसुवर्णविविधरत्नवर्षाण्यभिप्रवर्षितानि । तस्य
30 नैमित्तिकैर्ब्राह्मणैर्मातापितृभ्यां ज्ञातिवर्गेण च विपुलसमृद्धिरस्य जातमात्रस्य गृहे प्रादुर्भूतेति
सुधनः सुधन इति नामधेयं कृतम् । ) सुधनः खलु श्रेष्ठिदारकः पूर्वजिनकृताधिकारोऽ-

---

1 S °भिप्रारूवांय प्रमाणानि.

धरोपितकुशलमूलः उदाराधिमुक्तिकः कल्याणमित्रानुगताशयोऽनवद्यकायवाङ्मनस्कर्मसमुदाचारो बोधिसत्त्वमार्गपरिशोधनप्रयुक्तः सर्वज्ञताभिमुखो भाजनीभूतो बुद्धधर्माणामाशयगमनपरिशुद्धोऽसङ्गबोधिचित्तपरिनिष्पन्नः ॥

अथ खलु मञ्जुश्रीः कुमारभूतः सुधनं श्रेष्ठिदारकमवलोक्य प्रतिसंमोदते स्म, धर्मं चास्य देशयामास—यदुत सर्वबुद्धधर्मानारभ्य सर्वबुद्धधर्मसमुदयावाप्तिमारभ्य सर्वबुद्धानन्तता- 5 मारभ्य सर्वबुद्धपरंपरावतारमारभ्य सर्वबुद्धपर्षन्मण्डलविशुद्धिमारभ्य सर्वबुद्धधर्मचक्रनिर्वाणव्यूहमारभ्य सर्वबुद्धरूपकायलक्षणानुव्यञ्जनविशुद्धिमारभ्य सर्वबुद्धधर्मकायपरिनिष्पत्तिमारभ्य सर्वबुद्धसरस्वतिव्यूहमारभ्य सर्वबुद्धप्रभामण्डलव्यूहविशुद्धिमारभ्य सर्वबुद्धसमतामारभ्य धर्मं देशयामास ॥

अथ खलु मञ्जुश्रीः कुमारभूतः सुधनं श्रेष्ठिदारकं तं च महाजनकायं धर्मकथया 10 संदर्श्य समादाप्य समुत्तेज्य संप्रहर्षयित्वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य पूर्वकुशलमूलं संस्मार्य धन्याकरे महानगरे यथाशयानां सत्त्वानां धर्मदेशनाधिष्ठानं प्रतिप्रस्रभ्य प्रक्रान्तः ॥

अथ खलु सुधनः श्रेष्ठिदारको मञ्जुश्रियः कुमारभूतस्य सकाशादिदमेवंरूपं बुद्धगुणमाहात्म्यं श्रुत्वा अनुत्तरसम्यक्संबोध्यभिलाषपरमः पृष्ठतः पृष्ठतोऽनुबद्धो मञ्जुश्रियं 15 कुमारभूतं गाथाभिरभ्यष्टावीत्—

त्वत्प्रभावत अहं महामते
बोधि प्रस्थितु हिताय देहिनाम्।
तत्र निश्चयु अनन्तगोचरो
यो ममा भवति तं शृणोहि मे ॥ १ ॥ 20

नन्दितोयपरिखावरोपितं
मानदर्पप्राकारउच्छ्रितम्।
सर्वसत्त्वगतिद्वारमापितं
तत्पुरं त्रिभवैनात्मकं महत् ॥ २ ॥

मोहविद्यतिमिरावगुण्ठितं 25
रागदोषशिखिना प्रतापितम्।
मारईश्वरवशंगताः सदा
यत्र बाल अबुधा भिनिश्रिताः ॥ ३ ॥

तृष्णपाशनिगडैः सुदामिता
मायशाठियखिलैः खिलीकृताः। 30

१ S त्रभवनायकं.

संशयाविमतिअन्धलोचना
मिथ्यपृथिवीपथेन प्रस्थिताः ॥ ४ ॥
ईर्ष्य मात्सर्य सदा सुदामिताः
प्रेततिर्यन्नरकाक्षणे गताः ।
5 जातिव्याधिजरमृत्युपीडिताः
संभ्रमन्ति गतिचक्रमोहिताः ॥ ५ ॥
तेष त्वं कृपविशुद्धमण्डल
ज्ञानरश्मिकिरणप्रभंकर ।
क्लेशसागरक्षयार्थमुद्गत
10 सूर्यभूत अवभासयाहि मे ॥ ६ ॥
मैत्रभावनसुपूर्णमण्डला
पुण्यज्योत्स्नकिरणा सुखं दद ।
सर्वसत्त्वभवनैरुदागता
पूर्णचन्द्रसदृशा प्रभाससे ॥ ७ ॥
15 सर्वशुक्लबलकोशसंभृता
धर्मधातुगगनेन सज्जसे ।
धर्मचक्ररतनं पुरोजवा
राजभूत अनुशासयाहि मे ॥ ८ ॥
बोधियानप्रणिधीपराक्रमा
20 पुण्यज्ञानविपुला समार्जिता ।
सर्वसत्त्वहितयाभिप्रस्थिता
सार्थवाह परिपालयाहि मे ॥ ९ ॥
क्षान्तिसारदृढवर्मवर्मिता
ज्ञानखड्गकरुणायताभुजा ।
25 मारमण्डलरणस्मि आमुखे
शूरभूत अभिवाहयाहि मे ॥ १० ॥
धर्ममेरुशिखरे समाश्रिता
अप्सरोवरसमाधिनिर्वृता ।
क्लेशराहुअसुरप्रमर्दना
30 शक्रभूत अवलोकयाहि मे ॥ ११ ॥
त्वं पुरे तृभवबालआलये
क्लेशकर्मनिलये विनिश्चित ।

हेतुभूमिगतिचक्रसंभ्रमे
　　दीपभूत गति दर्शयाहि मे ॥ १२ ॥
दुर्गतीगतपथाद्विवर्तना
　　सूगतीगतपथाविशोधन ।
सर्वलोकगतिवीतिसंक्रमा　　5
　　मोक्षद्वारमुपनामयाहि मे ॥ १३ ॥
नित्यआत्मसुखसंज्ञसंहतं
　　वितथग्राहपियनासुपीथितम् ।
सत्यज्ञानबलतीक्ष्णचक्षुषा
　　मोक्षद्वारु विवराहि मे लघु ॥ १४ ॥　　10
सत्यवीतथपथेषु कोविदा
　　मार्गज्ञानविधिषू विशारदा ।
सर्वमार्गविनये विनिश्चिता
　　बोधिमार्गमुपदर्शयाहि मे ॥ १५ ॥
सम्यदृष्टितलभूमिसंस्थिता　　15
　　सर्वबुद्धगुणतोयवर्धिता ।
बुद्धधर्मगुणपुष्पवर्षणा
　　बोधिमार्गमुपदर्शयाहि मे ॥ १६ ॥
यामतीतजिन यामनागता
　　प्रत्युत्पन्नजिनभास्करांश्च यान् ।　　20
सैर्वसारसुगतान् दिशं गता-
　　स्तान् पि दर्शयहि मार्गदेशक ॥ १७ ॥
कर्मयानविधिषू विशारदा
　　धर्मयानरथयानकोविदा ।
ज्ञानयानविधिषू विनिश्चिता　　25
　　बोधियानमुपदर्शयाहि मे ॥ १८ ॥
प्रार्थनाप्रणिधिचक्रमण्डलं
　　क्षान्तिपञ्जरपअक्षसंस्थितम् ।
श्रद्धपगुणरत्नचित्रितं
　　बोधियानमभिरोहयाहि मे ॥ १९ ॥　　30

---

१ S सत्त्वप्रु°.

सर्वधारणविशुद्धमण्डलं
मैत्रकूटछदनं स्वलंकृतम् ।
घण्टमाल्यप्रतिसंविदं शुभं
अग्रयानमुपसंहराहि मे ॥ २० ॥

ब्रह्मचर्यशयनाभ्यलंकृतं
स्त्रीसमाधिनयुतैः समाकुलम् ।
धर्मदुन्दुभिरुताभिनादितं
यानराज्यमुपनामयाहि मे ॥ २१ ॥

संग्रहैश्चतुर्भिः कोश अक्षयं
ज्ञानरत्नगुणहारलंकृतम् ।
दामह्रीपरत्रपसंयतं
यानश्रेष्ठमुपदर्शयाहि मे ॥ २२ ॥

स्वागतरश्मिशुभमण्डलप्रभे
शीलचन्दनकृपानुलेपने ।
क्षान्तिशल्यदृढसंधिसंहते
अग्रयानि लघु स्थापयाहि मे ॥ २३ ॥

सर्वसत्त्वविनयानिवर्तिये
ध्यानपञ्जरसमाधिउच्छ्रिते ।
सज्ञपायसमयोगवाह ते
धर्मयानि प्रवरे स्थपेहि मे ॥ २४ ॥

प्रणिधिचक्रगतिचक्रशोधनं
धर्मधारणिदृढं महीतलम्[1] ।
ज्ञानयग्रसुकृतं सुनिष्ठितं
धर्मयानमभिरोहयाहि मे ॥ २५ ॥

तत्समन्तचरिभद्रशोधितं
सत्त्वपेक्षसविलम्बविक्रमम् ।
सर्वतः शुभचरीपराक्रमं
ज्ञानयानमुपनामयाहि मे ॥ २६ ॥

तदूर्ध्वं वज्रिरसारसंस्थितं
ज्ञानमार्यसुकृत सुनिष्ठितम् ।

१ B महातलम्.

सर्वआवरणसंप्रछेदनं
　　महयानमभिरोहयाहि मे ॥ २७ ॥
तद्विशालममलं जगत्समं
　　सर्वसत्त्वशरणं सुखावहम् ।
धर्मधातुविपुलं विरोचनं　　5
　　बोधियानमभिरोहयाहि मे ॥ २८ ॥
तत्प्रवृत्तिदुखस्कन्धछेदनं
　　कर्मक्लेशरजचक्रशोधनम् ।
सर्वमारपरवादिमर्दनं
　　धर्मयानमभिरोहयाहि मे ॥ २९ ॥　　10
तत्समन्तदिशज्ञानगोचरं
　　धर्मधातुगगनं वियूहनम् ।
सर्वसत्त्वअभिप्रायपूरणं
　　धर्मयानमभियाहयाहि मे ॥ ३० ॥
तद्विशुद्धगगनामिताक्षयं　　15
　　दृष्टिवियतमदृष्टिनिर्मलम् ।
सर्वसत्त्वउपकारसंस्थितं
　　धर्मयानमभिरोहयाहि मे ॥ ३१ ॥
तन्महाअनिलवेगवेगितं
　　प्रणिधिवायुबललोकधारणम् ।　　20
सर्वशान्तिपुरभूमिस्थापनं
　　धर्मयानमभिरोहयाहि मे ॥ ३२ ॥
तन्महामहितवाचलोपमं
　　करुणवेगबलभारवाहितम् ।
ज्ञानसंपजगतोपजीवितं　　25
　　अग्रयानमभिरोहयाहि मे ॥ ३३ ॥
तद्री यथ जगोपजीवितं
　　संपदं विपुलरश्मिनन्दनम् ।
धारणीशशिविशुद्धिसुप्रभं
　　ज्ञानपूर्णसुरसंपदाहि मे ॥ ३४ ॥　　30
तद्दर्शनकायदुर्लभदिशिनं
　　[illegible] ।

सर्वधारणिविशुद्धमण्डल
मैत्रकूटछदन सलंकृतम्।
घण्टमालप्रतिसंविद शुभ
अग्रयानमुपसंहराहि मे ॥ २० ॥

5 ब्रह्मचर्यशयनाभ्यलंकृत
श्रीसमाधियुते समाकुलम्।
धर्मदुन्दुभिरुताभिनादित
यानराज्यमुपनामयाहि मे ॥ २१ ॥

संग्रहैश्चतुर्भि कोश अक्षय
10 ज्ञानरत्नगुणहारलंकृतम्।
दामह्रीनरवरत्रसंयत
यानश्रेष्ठमुपदर्शयाहि मे ॥ २२ ॥

सागरश्मिशुभमण्डलप्रभे
शीलचन्दनकृपानुलेपने।
15 क्षान्तिशल्यदृढसंधिसंहते
अप्रमानि लघु स्थापयाहि मे ॥ २३ ॥

सर्वसत्त्वविनयानिवर्तिये
ध्यानपञ्जरसमाधिउच्छ्रिते।
प्रज्ञुपायसमयोगग्राह ते
20 धर्मयानि प्रवरे स्थपेहि मे ॥ २४ ॥

प्रणिधिचक्रगतिचक्रशोधन
धर्मधारणिदृढ महीतलम्।
ज्ञानयन्त्रसुकृत सुनिष्ठित
धर्मयानमभिरोहयाहि मे ॥ २५ ॥

25 तं समन्तचरिभद्रशोधित
सत्त्वनेक्षमनिलम्बनिक्रमम्।
सर्वत शुभचरीपराक्रम
ज्ञानयानमुपनामयाहि मे ॥ २६ ॥

तद्दृढ वज्रिरसारसंस्थित
30 ज्ञानमार्यसुकृत सुनिष्ठितम्।

---

१ B महाभ्रम्

ज्ञानवज्र दृढमार्य देहि मे
येन संस्कृतपुरं विदार्यते ॥ ३५ ॥
यत्र ते विपुलज्ञानसागरे
शिक्षिता अतुलबुद्धिसागरा ।
सर्वबुद्धगुणसिक्तसंपदा
साधु तन्मम वदार्य कीदृशम् ॥ ३६ ॥
यत्र ते समभिरूढचक्षुषा
ज्ञानराजमकुटाम्यलंकृता ।
धर्मपट्टवरबद्धशीर्षया
धर्मराजनगरं विलोकयि ॥ ३७ ॥

अथ खलु मञ्जुश्रीः कुमारभूतो नागावलोकितेनावलोक्य सुधनं श्रेष्ठिदारकमेतदवोचत्–साधु साधु कुलपुत्र, यस्त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य कल्याणमित्राण्यनुबध्नासि । बोधिसत्त्वचर्यां परिप्रष्टव्यां मन्यसे बोधिसत्त्वमार्गं परिपूरयितुकामः । एष हि कुलपुत्र आदिः, एष निष्यन्दः सर्वज्ञतापरिनिष्पत्तये, यदुत कल्याणमित्राणां सेवनं भजनं पर्युपासनम् । तस्मात्तर्हि कुलपुत्र अपरिखिन्नेन ते भवितव्यं कल्याणमित्रपर्युपासनतायै । सुधन आह–वदार्य विस्तरेण कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम् ? कथं प्रतिपत्तव्यम् ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या प्रारब्धव्या ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां चरितव्यम् ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या परिपूरयितव्या ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या परिशोधयितव्या ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या अवतर्तव्या ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या अभिनिर्वर्तयितव्या ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या अनुसर्तव्या ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या अध्यालम्बितव्या ? कथं बोधिसत्त्वेन बोधिसत्त्वचर्या विस्तर्तव्या ? कथं बोधिसत्त्वस्य परिपूर्णं भवति समन्तभद्रचर्यामण्डलम् ? अथ खलु मञ्जुश्रीः कुमारभूतः सुधनं श्रेष्ठिदारकं गाथाभिरभ्यभाषत–

साधु शुभपुण्यसागर यो हि त्वमुपागतो मम सकाशम् ।
विपुलकृपकरुणमानस पर्येषसे अनुत्तमां बोधिम् ॥ ३८ ॥
सर्वजगन्मोक्षार्थं निपुण प्रणिधिं सि चारिकामसमाम् ।
भेष्यसि जगत्त्राण एष नयो बोधिचर्यायाः ॥ ३९ ॥
ये बोधिसत्त्व सुदृढा अखिन्नमनसः संसारि ते चरिषु ।
समन्तभद्रा लभते अपराजिता अराद्धा हि ॥ ४० ॥
पुण्यप्रभ पुण्यकेतु पुण्यानन्त पुण्यसागर निशुद्धिम् ।
यस्त्वं समन्तभद्रां प्रणिधिं [illegible] सचारिषीं जगदर्थम् ॥ ४१ ॥
अमितानन्तानसंख्यान् द्रक्ष्यसि बुद्धान् दशदिशि लोके ।
तेषां च धर्ममेघान् धारयितासि स्मृतिबलेन ॥ ४२ ॥

स त्व जिनान् दशदिशि पश्यन्नपि येषु बुद्धक्षेत्रेषु ।
तेषां प्रणिधानसागर शोधयिष्यसि बोधिचर्यायाम् ॥ ४३ ॥
ये एत नयसमुद्रानवतीर्ण स्थिहित्व बुद्धभूमिये ।
ते भोन्ति सर्वदर्शी शिक्षन्तो लोकनाथानाम् ॥ ४४ ॥
त्व सर्वक्षेत्रप्रसरे क्षेत्ररज समाश्चरित्व बहुकल्पान् ।
चर्यां समन्तभद्रां स्पृशिष्यसि शिवां प्रसर बोधिम् ॥ ४५ ॥ 5
चरितव्य कल्पसागर अनन्तमन्य अशेषक्षेत्रेषु ।
परिपूरितव्य प्रणिधी समन्तवरभद्रचर्यायाम् ॥ ४६ ॥
प्रेक्षस्व सत्त्वनयुतान् श्रुत्वा तव प्रणिधिप्रीति सजाता ।
ये बोधि प्रार्थयन्ते समन्तभद्रेण ज्ञानेन ॥ ४७ ॥ 10

अथ खलु मञ्जुश्री कुमारभूत इमा गाथा भाषित्वा सुधन श्रेष्ठिदारकमेतदवोचत्—साधु साधु कुलपुत्र, यस्त्वमनुत्तराय सम्यक्सबोधये चित्तमुत्पाद्य बोधिसत्त्वचर्यां परिगवेषितव्यां मन्यसे । दुर्लभास्ते कुलपुत्र सत्त्वा येऽनुत्तरायै सम्यक्संबोधये चित्तमुत्पादयन्ति । अतस्ते दुर्लभतमा सत्त्वा येऽनुत्तरायै सम्यक्संबोधये चित्तमुत्पाद्य बोधिसत्त्वचर्यां परिगवेषन्ते । तेन हि कुलपुत्र भूतकल्याणमित्रेषु निश्चयप्राप्तेन बोधिसत्त्वेन भवितव्य सर्वज्ञज्ञान- 15 प्रतिलम्भाय । अपरिखिन्नमानसेन भवितव्य कल्याणमित्रपर्येष्टिषु । अतृप्तेन भवितव्य कल्याणमित्रदर्शनेषु । प्रदक्षिणग्राहिणा ते भवितव्य कल्याणमित्रानुशासनीषु । अप्रतिहतेन भवितव्य कल्याणमित्रोपायकौशल्यचरितेषु । अस्ति कुलपुत्र इहैव दक्षिणापथे रामावरान्तो नाम जनपद । तत्र सुग्रीवो नाम पर्वत । तत्र मेघश्रीर्नाम भिक्षु प्रतिवसति । तमुपसक्रम्य परिपृच्छ—कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया शिक्षितव्यम्, कथ प्रयोक्तव्यम् । कथ 20 बोधिसत्त्वचर्या प्रारम्या[1] कथ बोधिसत्त्वचर्याया चरितव्यम्[2] कथ बोधिसत्त्वचर्या परिपूरयितव्या? कथ परिशोधयितव्या? कथमवतर्तव्या? कथमभिनिर्हर्तव्या? कथमनुसर्तव्या? कथमध्यालम्बितव्या? कथ विस्तारयितव्या? कथ बोधिसत्त्वस्य परिपूर्णं भवति समन्तभद्रचर्यामण्डलम्? स ते कुलपुत्र कल्याणमित्र समन्तभद्रचर्यामण्डलमुपदेक्ष्यति ॥

अथ खलु सुधन श्रेष्ठिदारकस्तुष्ट उदग्र आत्तमना प्रमुदित प्रीतिसौमनस्यजातो 25 मञ्जुश्रिय कुमारभूतस्य पादौ शिरसाभिवन्द्य मञ्जुश्रिय कुमारभूतमनेकशतसहस्रकृत्व प्रदक्षिणीकृत्य अनेकशतसहस्रकृत्वोऽवलोक्य कल्याणमित्रप्रेमानुगतचित्त कल्याणमित्रादर्शनमसहमानोऽश्रुमुखो रुदन् मञ्जुश्रिय कुमारभूतस्यान्तिकात्प्रक्रान्त ॥ १ ॥

---

१ B प्रारब्धव्या २ B प्रचर्त

## ४ मेघश्रीः ।

अथ खलु सुधनः श्रेष्ठिदारकोऽनुपूर्वेण येन रामावरान्तो जनपदस्तेनोपजगाम । उपेत्य रामावरान्ते जनपदे विचरन् पूर्वकुशलमूलसमनो दारकर्माधिष्ठानमनोभिरुचितान् भोगान् परिभुञ्जानो येन सुग्रीवः पर्वतस्तेनोपसंक्रम्य सुग्रीवं पर्वतमधिरुह्य मेघश्रियं भिक्षुमनुगवेषमाणः पूर्वां दिशं निर्ययौ । एवं दक्षिणां पश्चिमामुत्तरामुत्तरपूर्वां पूर्वदक्षिणां दक्षिणपश्चिमां पश्चिमोत्तरामपि दिशं निर्ययौ । मेघश्रियं भिक्षुमनुगवेषमाणः ऊर्ध्वतोऽप्यव-लोकयति स्म, अधस्तादपि । स सप्ताहस्यात्ययान्मेघश्रियं भिक्षुमपश्यदन्यतमस्मिन् पर्वत-शिखरोत्सङ्गे चङ्क्रम्यमाणम् । स येन मेघश्रीर्भिक्षुस्तेनोपसंक्रम्य मेघश्रियो भिक्षोः पादौ शिरसाभिवन्द्य मेघश्रियं भिक्षुं प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एतदवोचत्—यत्खलु आर्यो जानीयात्—मया अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जाने कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्, कथं बोधिसत्त्वचर्या प्रारब्धव्या, कथं बोधिसत्त्वचर्यायां चरितव्यम्, कथं बोधिसत्त्वचर्या परिपूरयितव्या, कथं परिशोधयितव्या, कथमवतर्तव्या, कथमभिनिर्हर्तव्या, कथमनुसर्तव्या, कथमध्यालम्बितव्या, कथं विस्तारयितव्या, कथं बोधिसत्त्वस्य परिपूर्णं भवति समन्तभद्रचर्यामण्डलम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः कथं बोधिसत्त्वा निर्यान्ति अनुत्तरायां सम्यक्संबोधौ । एवमुक्ते मेघश्रीर्भिक्षुः सुधनं श्रेष्ठिदारक-मेतदवोचत्—साधु साधु कुलपुत्र, यस्त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य बोधिसत्त्व-चर्यां परिपृच्छसि । दुष्करं हि एतत् कुलपुत्र परमदुष्करं यदुत बोधिसत्त्वचर्यापरिमार्गणं बोधिसत्त्वगोचरपरिमार्गणं बोधिसत्त्वनिर्याणविशुद्धिपरिमार्गणं बोधिसत्त्वमार्गविशुद्धिपरिमार्गणं[2] बोधिसत्त्वचर्यावैपुल्यविशुद्धिपरिमार्गणं बोधिसत्त्वाभिज्ञाभिनिर्हारविशुद्धिपरिमार्गणं बोधिसत्त्व-विमोक्षसंदर्शनं बोधिसत्त्वलोकधातुप्रचारसंदर्शनं बोधिसत्त्वयथाशयजगदनुवर्तनं बोधिसत्त्व-संसारनिर्वाणमुखसंदर्शनं बोधिसत्त्वानां संस्कृतासंस्कृतदोषभयानुपलेपविचारपरिमार्गणम् । अहं कुलपुत्र अधिमुक्तिबलाधिपतेयतया चक्षुर्मतिश्रद्धानयनविशुद्ध्या अपराङ्मुखज्ञाना-लोकावभासेन समन्ताभिमुखावलोकनतया समन्तविषयाप्रतिहतेन दर्शनेन सर्वावरणविगतेन विपश्यिना कौशल्येन समन्तचक्षुर्विषयपरिशुद्ध्या शरीरविशुद्ध्या सर्वदिक्स्रोतःप्रसराभि-मुखप्रणतेन कायप्रणामकौशल्येन सर्वबुद्धधर्ममेघसंधारणेन च धारणीबलेन सर्वदि-क्षेत्राभिमुखांस्तथागतान् पश्यामि । यदुत पूर्वस्यां दिशि एकं तथागतं पश्यामि । द्वावपि, दशापि, बुद्धशतमपि, बुद्धसहस्रमपि, बुद्धशतसहस्रमपि, बुद्धकोटीमपि, बुद्धकोटी-शतमपि, बुद्धकोटीसहस्रमपि, बुद्धकोटीशतसहस्रमपि, बुद्धकोटीनियुतशतसहस्रमपि, यावदपरिमाणानप्रमेयानसंख्येयानचिन्त्यानतुल्यानसमन्तानसीमाप्राप्तानमाप्याननभिलाप्यान्

---

[1] B रामावर्तो throughout [2] B om. बोधिसत्त्वमार्गविशुद्धिपरिमार्गणं

अपि तथागतान् पश्यामि । जम्बुद्वीपपरमाणुरजःसमानपि तथागतान् पश्यामि । चातुर्द्वीपकलोकधातुपरमाणुरजःसमानपि, साहस्रद्विसाहस्रत्रिसाहस्रमहासाहस्रबुद्धक्षेत्रपरमाणुरजःसमानपि तथागतान् पश्यामि । दशबुद्धक्षेत्रपरमाणुरजःसमानपि तथागतान् पश्यामि । शतबुद्धक्षेत्रपरमाणुरजःसमानपि, बुद्धक्षेत्रसहस्रपरमाणुरजःसमानपि, बुद्धक्षेत्रशतसहस्रपरमाणुरजःसमानपि, बुद्धक्षेत्रकोटीपरमाणुरजःसमानपि, बुद्धक्षेत्रकोटीशतपरमाणुरजःसमानपि, बुद्धक्षेत्रकोटीसहस्रपरमाणुरजःसमानपि, बुद्धक्षेत्रकोटीशतसहस्रपरमाणुरजःसमानपि, बुद्धक्षेत्रकोटीनियुतशतसहस्रपरमाणुरजःसमानपि, यावदनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानपि तथागतान् पश्यामि । यथा पूर्वस्यां दिशि, एवं दक्षिणायां पश्चिमायामुत्तरायामुत्तरपूर्वायां पूर्वदक्षिणायां दक्षिणपश्चिमायां पश्चिमोत्तरायामध ऊर्ध्वं दिशि एकमपि तथागतं पश्यामि । यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानपि 10 तथागतान् पश्यामि । एकैकस्यां दिशि अनुविलोकयन् नानावर्णांस्तथागतान् पश्यामि नानासंस्थानान् नानाविकुर्वितान् नानावृषभिताविक्रीडितान् विचित्रपर्षन्मण्डलव्यूहान् अनेकवर्णानेकवर्णरश्मिजालावभासमुक्तान् विविधबुद्धक्षेत्रविशुद्धिभवनव्यूहान् नानाविधायुःप्रमाणविशुद्धान् यथाशयजगद्विज्ञापनान् विविधाभिसंबोधिविशुद्धिमुखविकुर्वितान् बुद्धर्षभसिंहनादविनर्दितांस्तथागतान् पश्यामि । अस्या अहं कुलपुत्र समन्तमुखसर्वारम्वणविज्ञप्ति- 15 समवसरणालोकाया बुद्धानुस्मृतेर्लाभी । किं मया शक्यं बोधिसत्त्वानामनन्तज्ञानमण्डलविशुद्धानां चर्या ज्ञातुम्, गुणान्[1] वा वक्तुम्, ये ते समन्तावभासमण्डलबुद्धानुस्मृतिमुखप्रतिलब्धाः सर्वतथागतमण्डलसर्वबुद्धक्षेत्रभवनविशुद्धिव्यूहाभिमुखपश्यनतया । ये ते सर्वजगत्समारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा यथाशयजगद्विज्ञप्तितथागतदर्शनविशुद्ध्या । ये ते दशबलसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा दशतथागतबलाप्रमाणानुसरणतया । 20 ये ते धर्मसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा धर्मश्रवणाकारसर्वतथागतकायमेघावलोकनतया । ये ते दिग्विरोचनगर्भबुद्धानुस्मृतिमुखप्रतिलब्धाः सर्वदिक्समुद्रेष्वसंभिन्नबुद्धसमुद्रावतरणतया । ये ते दशदिक्प्रवेशबुद्धानुस्मृतिमुखप्रतिलब्धाः सूक्ष्मावलम्बनसर्वतथागतविकुर्वितवृषभितावतरणतया । ये ते कल्पसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा अविरहितसर्वकल्पतथागतदर्शनविज्ञप्त्या । ये ते कालसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धाः सर्वकाल- 25 तथागतकालदर्शनसंवासाविजहनतया । ये ते क्षेत्रसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धाः सर्वबुद्धक्षेत्राभ्युद्गतानभिभूतबुद्धकायदर्शनविज्ञप्त्या । ये ते त्र्यध्वसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धास्त्र्यध्वतथागतमण्डलखचित्ताशयसमवसरणतया । ये ते आरम्वणसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धाः सर्वारम्वणतथागतपरंपरासमुदागमदर्शनविज्ञप्त्या । ये ते शान्तसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा एकक्षणसर्वलोकधातुषु सर्वतथागतपरिनिर्वाण- 30 विज्ञप्त्या । ये ते विगमसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा एकदिवसे सर्वावासेषु सर्वतथा-

१ B विदू॰. २ S गुणा.

गतप्रक्रमणविज्ञप्त्या । ये ते विपुलसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा एकैकतथागतधर्म-
धातुपर्यङ्कपरिस्फुटबुद्धशरीरविज्ञप्त्या । ये ते सूक्ष्मसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा एक-
वालपथेन अनभिलाप्यबुद्धोत्पादारागणावतरणतया । ये ते व्यूहसमारोपितबुद्धानुस्मृतिमुख
प्रतिलब्धा एकक्षणे सर्वलोकधातुषु अभिसंबोधिविकुर्वितसंदर्शनविज्ञप्त्या । ये ते कार्य-
5 समारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा सर्वबुद्धोत्पादधर्मचक्रविकुर्वितज्ञानावभासप्रतिलाभ-
तया । ये ते समारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा स्वचित्ताशयदर्शनसर्वतथागतप्रतिभास-
प्राप्त्या । ये ते कर्मसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धाः सर्वजगद्यथोपचितकर्मप्रतिबिम्ब-
संदर्शनतया । ये ते विकुर्वितसमारोपितबुद्धानुस्मृतिमुखप्रतिलब्धा अशेषसर्वधर्मधातु
नलिनीपद्मपरिस्फुटविपुलबुद्धविकुर्वितदर्शनसमन्तदिगभिमुखविज्ञप्त्या । ये ते गगनसमारोपित-
10 बुद्धानुस्मृतिमुखप्रतिलब्धास्तथागतबिम्बमेघविरचितधर्मधातुगगनालोकनतया ॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे सागरमुखो नाम दिक्प्रत्युद्देशः । तत्र
सागरमेघो नाम भिक्षुः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ, कथं बोधिसत्त्वेन बोधिसत्त्व-
चर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । स ते कुलपुत्र कल्याणमित्रं परिदीपयिष्यति ।
कुशलमूलसंभारहेतुं समुत्तारयिष्यति । विपुलां संभारभूमिं संजनयिष्यति । विपुलं कुशल-
15 मूलवेगबलं संवर्णयिष्यति । विपुलं बोधिचित्तसंभारहेतुं जनयिष्यति । विपुलं महायानाव-
भासहेतुमुपस्तम्भयिष्यति । विपुलं पारमितासंभारबलं प्रभावयिष्यति । विपुलं चर्यासागरा-
वतारनयं परिशोधयिष्यति । विपुलं प्रणिधानमण्डलं विशोधयिष्यति । विपुलं समन्तमुख-
निर्याणव्यूहं संवर्धयिष्यति । विपुलं महाकरुणाबलं प्रवर्धयिष्यति ॥

अथ खलु सुधनः श्रेष्ठिदारको मेघश्रियो भिक्षोः पादौ शिरसाभिवन्द्य मेघश्रियं भिक्षु-
20 मनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य अवलोक्य च मेघश्रियो भिक्षोरन्तिकात् प्रक्रान्तः ॥ २ ॥

## ५ सागरमेघः ।

अथ खलु सुधनः श्रेष्ठिदारकस्तां कल्याणमित्रानुशासनीमनुविचिन्तयन्, तं लोकमनुस्मरन्, तं बोधिसत्त्वविमोक्षं विचारयन्, तं बोधिसत्त्वसमाधिनयमनुमार्जन्, तं बोधिसत्त्वसागरनयमवलोकयन्, तं बुद्धमण्डलमभिमुखमधिमुच्यमानः, तां बुद्धदर्शनदिशमभिलपन्, तं बुद्धसमुद्रमनुविचिन्तयन्, तां बुद्धपरंपरामनुस्मरन्, तं बुद्धनयानुगममनुगच्छन्, तं बुद्धगगनमनुविलोकयन् अनुपूर्वेण येन सागरमुखं दिक्प्रत्युद्देशो येन च सागरमेघो भिक्षुस्तेनोपसंक्रम्य सागरमेघस्य भिक्षोः पादौ शिरसाभिवन्द्य सागरमेघं भिक्षुमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य सागरमेघस्य भिक्षोः पुरतः प्राञ्जलिः स्थित्वा एतदवोचत्–अहमार्य अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थितोऽनुत्तरं ज्ञानसागरमवतर्तुकामः । न च जाने कथं बोधिसत्त्वा विवर्तन्ते लोकवशात् । आवर्तन्ते तथागतवंशे । उत्तरन्ति संसारसागरात् । अवतरन्ति सर्वज्ञज्ञानसागरम् । उच्चलन्ति बालपृथग्जनभूमेः । संपद्यन्ते तथागतकुले । विवर्तन्ते संसारस्रोतसः । प्रवर्तन्ते बोधिसत्त्वचर्यास्रोतसि, विवर्तन्ते संसारसागरगतिचक्रात् । आवर्तन्ते बोधिसत्त्वचर्याप्रणिधानचक्रम् । प्रमर्दयन्ति सर्वमारमण्डलम् । द्योतयन्ति सर्वबुद्धमण्डलप्रभवम् । शोषयन्ति तृष्णासागरम् । विवर्धयन्ति महाकरुणातोयम् । पिधयन्ति सर्वाक्षणापायदुर्गतिविनिपातद्वाराणि । विवृण्वन्ति स्वर्गनिर्वाणद्वारम् । विनिर्भिन्दन्ति त्रैधातुकनगरकपाटम् । विवृण्वन्ति सर्वज्ञतापुरद्वारकपाटम् । विजहन्ति सर्वोपकरणतृष्णाम् । उत्पादयन्ति सर्वजगत्संग्रहप्रणिधिम् ॥

एवमुक्ते सागरमेघो भिक्षुः सुधनं श्रेष्ठिदारकमेतदवोचत्–साधु साधु कुलपुत्र, यत्त्वया अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न हि कुलपुत्र अनवरोपितकुशलमूलानां सत्त्वानां बोधाय चित्तमुत्पद्यते । समन्तमुखकुशलावभासप्रतिलब्धानामुपायगर्भमार्गसमाधिज्ञानालोकावभासितानां विपुलपुण्यसागरसमृतसंभाराणां सर्वशुक्लोपचयाप्रतिप्रस्रब्धानां सर्वकल्याणमित्रोपस्तब्धोपायापरिखिन्नानां कायजीवितानपेक्षाणां सर्वसत्त्वद्रहविगतानामविनोन्नतपृथिवीसमचित्तानां अप्रतिरूपाक्लेशानुगतानां सर्वभवगतिसंवासाभिमुखानां तथागतविषयाभिलाषिणां सत्त्वानां बोधाय चित्तमुत्पद्यते । यदुत महाकरुणाचित्तं सर्वसत्त्वपरित्राणाय, महामैत्रीचित्तं सर्वजगत्समयोगताये, सुखचित्तं सर्वजगद्दुःखस्कन्धव्युपशमनाय, हितचित्तं सर्वाकुशलधर्मविनिवर्तनतायै, दयाचित्तं सर्वभयारक्षायै, असङ्गचित्तं सर्वावरणविनिवर्तनतायै, विपुलचित्तं सर्वधर्मधात्वनुस्फरणतायै, अनन्तचित्तमाकाशधातुसमवसरणसमतानुगमाय, विमलचित्तं सर्वतथागतदर्शनविशुद्ध्यै, विशुद्धचित्तं त्र्यध्वावशेषज्ञानस्फरणतायै, ज्ञानचित्तं सर्वावरणज्ञानविनिवर्तनतायै सर्वज्ञज्ञानसागरावतरणतायै ॥

अहं कुलपुत्र पूर्णानि द्वादश वर्षाणि इह सागरमुखे दिक्प्रत्युद्देशे विहरामि इमं महासागरमारम्बणीकृत्य आमुखीकृत्य, यदुत महासागरस्य विपुलाप्रमाणतामनुविचिन्तयन् विमलप्रसन्नतां च गम्भीरदुरवगाहतां च अनुपूर्वनिम्नसुस्थितां च अनेकरत्नाकरविचित्रतां च वारिरत्नधाप्रमाणतां च अचिन्त्योदारवर्णनिर्भासतां च अनन्तभूतां च विचित्रोदारप्राणि-

वासनतां च महामेघप्रतिच्छन्नतां च अन्तरापूर्णतां च अनुविचिन्तयन् । तस्य मम कुलपुत्र एवं भवति—अस्ति न पुनरन्यः कश्चिदिह लोके योऽस्मान्महासागराद्विपुलतरश्च विस्तीर्णतरश्च अप्रमाणतरश्च गम्भीरतरश्च विचित्रतरश्च । तस्य मम कुलपुत्र एवं योनिशश्चिन्तामनसिकारप्रयुक्तस्य महासागरस्याधस्तान्महापद्मं प्रादुरभूत् । अपराजितमणिरत्नेन्द्रनीलमणिवज्रदण्ड महावैडूर्यमणिरत्नायतसक्त जाम्बूनदसुवर्णविमलविपुलपत्र कालानुसारिचन्दनकर्णिकाव्यूहम् अश्मगर्भरत्नकेसरोपेत सागरविपुलविस्तीर्णप्रमाण दशासुरेन्द्रशतसहस्रसंधारितदण्डगर्भं दशमणिरत्नशतसहस्रविचित्ररत्नजालसंछन्न दशनागेन्द्रशतसहस्रगन्धोदकमेघाभिप्रवर्षित दशगरुडेन्द्रशतसहस्रमुखप्रलम्बितपट्टमणिदामहार दशकिंनरेन्द्रशतसहस्रहितचित्तसंप्रेक्षित दशमहोरगेन्द्रशतसहस्रमुखप्रणतोपचार दशराक्षसेन्द्रशतसहस्रप्रणतकायाभिपूजित दशगन्धर्वेन्द्रशतसहस्रविचित्रतूर्यसंगीतिसंस्तुतोपचितं दशदेवेन्द्रशतसहस्रदिव्यपुष्पगन्धमाल्यधूपविलेपनचूर्णचीवरच्छत्रध्वजपताकामेघाभिप्रवर्षित दशब्रह्मेन्द्रशतसहस्रमूर्धप्रणतोपचार दशशुद्धावासकायिकदेवताशतसहस्रकृताञ्जलिपुटनमस्कृत दशचक्रवर्तिमनुजेन्द्रशतसहस्रसप्तरत्नप्रत्युद्गताभिपूजित दशसागरदेवताशतसहस्राभ्युद्गतनमस्कृत दशज्योतीरसमणिरत्नशतसहस्ररश्मिव्यूहावभासित दशपुण्यशुद्धमणिरत्नशतसहस्रसुनिश्चितविन्यस्तोपशोभित दशवैरोचनमणिरत्नशतसहस्रविमलगर्भं दशश्रीमणिरत्नशतसहस्रमहाश्रीप्रतापन दशविचित्रकोशमणिरत्नशतसहस्रानन्ताबभासित दशजम्बूध्वजमणिरत्नशतसहस्रसुपरिगृहीतस्थितप्रासादोपशोभित दशवज्रसिंहमणिरत्नशतसहस्रापराजितव्यूह दशसूर्यगर्भमणिरत्नशतसहस्रोदारोपशोभोपचित दशरुचिरमणिरत्नशतसहस्रविविधवर्णोपचार दशचिन्ताराजमणिरत्नशतसहस्राक्षयव्यूहप्रभोज्ज्वलितम् । तच्च महापद्मं तथागतलोकोत्तरकुशलमूलनिर्जातबोधिसत्त्वाशयसंप्रस्थित सर्वदिगभिमुखविज्ञपन मायागतधर्मनिर्यात निरामगन्धकर्मसंभूतम् अरणाधर्मतानयव्यूह स्वप्नसमधर्मतासमुदाचारम् अनभिसंस्कारधर्मनयमुद्रितम् असङ्गधर्मनयानुगत समन्ताद्दशदिक्कुलधर्मधातुस्फरण बुद्धविषयप्रभावभासनाकुलम्, यस्य न शक्यमसंख्येयैरपि कल्पशतसहस्रैराकारगुणसंस्थानवर्णव्यूहपर्यन्तोऽधिगन्तुम् । तच्च महापद्मं तथागतकायपर्यङ्कपरिस्फुटं परिपूर्णं पश्यामि । तं च तथागतकायमित उपादाय यावद्भवाग्रपरमं पश्यामि । तस्य च तथागतस्य अचिन्त्यमासनव्यूहं पश्यामि । अचिन्त्यपर्षन्मण्डलव्यूहान् । अचिन्तियान् प्रभामण्डलव्यूहान् । अचिन्त्यां लक्षणसंपदमचिन्त्यामनुव्यञ्जनचित्रतामचिन्त्यां बुद्धरूपभिन्नताम् । अचिन्त्यं बुद्धविकुर्वितम् । अचिन्त्यां तथागतवर्णविशुद्धिम् । अचिन्त्यामनवलोकितमूर्धताम् । अचिन्त्यां प्रभूतजिह्वतां पश्यामि । अचिन्त्यान् बुद्धसरस्वतीव्यूहान् शृणोमि । अचिन्त्यां बलाप्रमाणताम्, अचिन्त्यां वैशारद्यव्यूहविशुद्धिम्, अचिन्त्यं प्रतिसंविद्व्याभिनिर्हारमनुगच्छामि । अचिन्त्यं पूर्वबोधिसत्त्वचर्यासमुदागममनुस्मरामि । अचिन्त्यमभिसंबोधिविकुर्वितं पश्यामि । अचिन्त्यं धर्ममेघाभिनिगर्जितम्, अचिन्त्यं समन्त-

१ B °सोपचित्र २ B °निष्कान्त

दर्शनविज्ञप्त्याश्रयव्यूह शृणोमि। अचिन्त्याप्रमाणा वामदक्षिणेन शरीरविभक्तिम्, अचिन्त्य सत्त्वार्थकायपरिप्राप्तिं पश्यामि॥

स च मे तथागतो दक्षिण पाणिं प्रसार्य शिरस परिमार्ज्य समन्तनेत्र नाम धर्मपर्याय सर्वतथागतविषय बोधिसत्त्वचर्याप्रभासन सर्वधर्मधातुतलप्रभेदावभासन सर्वधर्ममण्डलसमवसरणावभासन सर्वक्षेत्रमण्डलाकारविशुद्ध्यालोक सर्वपरप्रवादिमण्डलविकिरण सर्वमारकलिप्रमर्दन सर्वसत्त्वधातुसतोपण सर्वसत्त्वचित्तगहनावभासन सर्वसत्त्वयथाशयविज्ञापन सर्वसत्त्वेन्द्रियचक्रपरिवर्तप्रभासन प्रकाशयति। त चाह समन्तनेत्र धर्मपर्यायमुद्गृह्णामि सधारयामि प्रवर्तयामि उपनिध्यायामि एवरूपेणोद्ग्रहेण, यस्य लिख्यमानस्य महासमुद्रास्कन्धप्रमाणा च मषि, सुमेरुपर्वतराजमात्रकल्मसचय क्षय व्रजेत्। न च तस्य धर्मपर्यायस्य एकैकस्मात्परिवर्तादेकैकस्माद्धर्मद्वारादेकैकस्माद्धर्मनयादेकैकस्माद्धर्मयोने एकैकस्माद्धर्मपदप्रभेदात् क्षय उपलभ्यते, न ऊनत्व वा पर्यादान वा पर्यवस्थान वा पर्यन्तनिष्ठा वा॥

इति हि कुलपुत्र पूर्णानि द्वादश वर्षाण्यहमिम समन्तनेत्र धर्मपर्यायमुद्गृहीतवान्। एवरूपेणोद्ग्रहेण यदेकदिवसेन असख्येयान् परिवर्तान् पर्यवाप्नोमि श्रुतोद्ग्रहणधारण्यालोकावभासेन। असख्येयान् परिवर्तानवतरामि शान्तमुखधारण्यालोकावभासेन। असख्येयान् परिवर्तान् अवतरामि शान्तमुखधारण्यालोकावभासेन। असख्येयान् परिवर्तान् समवसरामि अनन्तावर्तधारण्यालोकावभासेन। असख्येयान् परिवर्तान् विभावयामि प्रतिचिनोमि भूम्यवचारणानुगमधारण्यालोकावभासेन। असख्येयान् परिवर्तान् पर्याददामि तेजोवतीधारण्यालोकावभासेन। असख्येयान् परिवर्तान् अभिनिर्हरामि पद्मव्यूहधारण्यालोकावभासेन। असख्येयान् परिवर्तान् सप्रकाशयामि स्वरविविक्तधारण्यालोकावभासेन। असख्येयान् परिवर्तान् प्रतिभजामि गगनगर्भधारण्यालोकावभासेन। असख्येयान् परिवर्तान् प्रविस्तरामि ज्योतिष्कूटधारण्यालोकावभासेन। असख्येयान् परिवर्तान् परिसस्थापयामि सागरगर्भधारण्यालोकावभासेन। ये च मे केचित् सत्त्वा उपसक्रामन्ति पूर्वस्या दिशि देवा वा देवेन्द्रा वा नागा वा नागेन्द्रा वा यक्षा वा यक्षेन्द्रा वा असुरा वा असुरेन्द्रा वा गरुडा वा गरुडेन्द्रा वा महोरगा वा महोरगेन्द्रा वा मनुष्या वा मनुष्येन्द्रा वा ब्रह्माणो वा ब्रह्मेन्द्रा वा, तान् सर्वानेव समन्तनेत्रे तथागतबोधिसत्त्वचर्यावभासे धर्मपर्याये प्रतिष्ठापयामि निवेदयामि। सर्वेषा च तेषामेव समन्तनेत्र धर्मपर्याय रोचयामि निरूपयामि परिदीपयामि सवर्णयामि सदर्शयामि विभजामि विस्तारयामि उत्तानीकरोमि विवरामि प्रभुत्वानि अवभासयामि। यथा पूर्वस्यां दिशि, एव दक्षिणाया पश्चिमाया उत्तराया उत्तरपूर्वाया पूर्वदक्षिणाया दक्षिणपश्चिमाया पश्चिमोत्तराया अध ऊर्ध्वायाश्च दिशि ये केचित् सत्त्वा उपसक्रामन्ति—पूर्ववत्॥

एतमहं कुलपुत्र, एकं धर्मपर्यायं जानामि । किं मया शक्यं बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुं सर्वबोधिसत्त्वचर्यासमुद्रावतीर्णानां परिशुद्धप्रणिध्यनुगमेन, सर्वप्रणिधानसागरावतीर्णानां सर्वकल्पसंवासव्यवच्छेदाय, सर्वसत्त्वसंसारावतीर्णानां यथाशयचर्यानुवर्तनतायै, सर्वजगच्चित्तसागरावतीर्णानामज्ञानविज्ञप्त्या, सर्वगुणसागरावतीर्णानामसङ्गदशबलज्ञानालोकसंजननतायै, सर्वसत्त्वेन्द्रियसागरावतीर्णानां परिपाचनविनयकालानतिक्रमणतायै, सर्वक्षेत्रसागरावतीर्णानां सर्वक्षेत्रविशुद्धिप्रणिध्यभिनिर्हारेण, सर्वबुद्धसागरावतीर्णानां तथागतपूजोपस्थानप्रणिधिबलेन, सर्वधर्मसागरावतीर्णानां ज्ञानविज्ञप्त्या, सर्वगुणसागरावतीर्णानां प्रतिपत्त्यनुगमेन, सर्वजगन्मन्त्रसागरावतीर्णानां सर्वमन्त्रेषु धर्मचक्रप्रवर्तनाभिनिर्हरणतायै ॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे इतः षष्टियोजनैः सागरतीरं नाम लङ्कापथम् । तत्र सुप्रतिष्ठितो नाम भिक्षुः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ कथं बोधिसत्त्वेन महासत्त्वेन बोधिसत्त्वचर्या परिशोधयितव्या ॥

अथ खलु सुधनः श्रेष्ठिदारकः सागरमेघस्य भिक्षोः पादौ शिरसाभिवन्द्य सागरमेघं भिक्षुमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य अवलोक्य सागरमेघस्य भिक्षोरन्तिकात् प्रक्रान्तः ॥२॥

## ६ सुप्रतिष्ठितः ।

अथ खलु सुधनः श्रेष्ठिदारकस्तां कल्याणमित्रानुशासनीं तं च समन्तनेत्रं धर्मपर्यायमनुस्मरन्, तच्च तथागतनिकुर्वितमनुविचिन्तयन्, तांश्च धर्मपदव्यञ्जनमेघान् धारयन्, तांश्च धर्ममुखसागरानवतरन्, तं च धर्मविधिमनुविलोकयन्, तांश्च धर्मावर्तनयाननवगाहमानः, तच्च धर्मगगनं समवसरन्, तच्च धर्ममण्डलं परिशोधयन्, तं च धर्मरत्नद्वीपमनुविचारयन्, अनुपूर्वेण येन सागरतीरं लङ्कापथस्तेनोपसंक्रम्य पूर्वां दिशमवलोकयामास सुप्रतिष्ठितस्य भिक्षोर्दर्शनकामतया । एवं दक्षिणां पश्चिमामुत्तरामुत्तरपूर्वां पूर्वदक्षिणां दक्षिणपश्चिमां पश्चिमोत्तरामथ ऊर्ध्वां दिशमवलोकयामास सुप्रतिष्ठितस्य भिक्षोर्दर्शनकामतया । सोऽपश्यत् सुप्रतिष्ठितं भिक्षुं गगनतले चंक्रम्यमाणमसंख्येयदेवताशतसहस्रपरिवृतम्, तच्च गगनतलं दिव्यपुष्पमेघाभिकीर्णमद्राक्षीदसंख्येयदिव्यतूर्यमेघनिर्घोषम्, असंख्येयपट्टपताकालंकारं देवेन्द्रैः सुप्रतिष्ठितस्य भिक्षोः पूजाकर्मणि । अचिन्त्यकालागुरुमेघोन्नतनिगर्जनं च गगनतलमपश्यत् नागेन्द्रैः । असंख्येयदिव्यमनोज्ञवचनोपचारस्तुतिसर्वनाथतूर्यसंगीतिनिर्घोषांश्च किंनरेन्द्रैः संप्रयोजितान् गगनतलेऽश्रौषीत् । अचिन्त्यांश्च सूक्ष्मस्फुटनअमेघान् गगनतले प्रीतिमनोभिर्महोरगेन्द्रैः प्रहितान् प्रसृतानपश्यत् सुप्रतिष्ठितस्य भिक्षोः स्पृहमाणर्णैः । अचिन्त्यांश्च मणिरत्नमेघान् असुरेन्द्रगगनतलमधिष्ठितान् अचिन्त्यगुणव्यूहावभासगमनवत् । अचिन्त्यांश्च गरुडेन्द्रगणानुदारमानवरूपवत्संस्थानान् गरुडेन्द्रकन्यापरिवारान् अभिदिग्गावरमान् प्राञ्जलीभूतान् गगनतलेऽपश्यत् । अचिन्त्यानि च यक्षेन्द्रशतसहस्राणि सपरिवाराणि विकृतशरीराणि गगनतलस्थानान्यपश्यत् सुप्रतिष्ठितस्य भिक्षोर्भृत्याधिपतेयतया । अचिन्त्यानि च राक्षसेन्द्रशतसहस्राणि सपरिवाराणि गगनतले अनुपरिवर्तमानानि सुप्रतिष्ठितस्य भिक्षोरारक्षाप्रतिगमान्यपश्यत् । अचिन्त्यानि च ब्रह्मेन्द्रशतसहस्राणि गगनतले कृताञ्जलिपुटानि अभिप्रेतमनोज्ञवचनोपचारस्तुतिप्रयुदाहारप्रयुक्तान्यपश्यत् । अचिन्त्यानि च शुद्धावासकायिकदेवताशतसहस्राणि गगनतले विमानगतान्यपश्यत् सुप्रतिष्ठितस्य भिक्षोः पूजाकर्मणि ॥

च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्य—कथं
बोधिसत्त्वेन बुद्धधर्मेषु प्रयोक्तव्यम्, यथा प्रयुज्यमानोऽविरहितो भवति बुद्धदर्शनेन,
यथाभूताविप्रनाशाय अविरहितो भवति बोधिसत्त्वदर्शनेन । सर्वबोधिसत्त्वकुशलमूलैक-
ध्यातायै अविरहितो भवति बुद्धधर्मैः । ज्ञानानुगमायाविरहितो भवति सर्वबोधिसत्त्वप्रणिधानैः ।
5 सर्वबोधिसत्त्वकार्यपरिप्रापणाय अविरहितो भवति बोधिसत्त्वचर्यया । सर्वकल्पसंवासापरि-
खेदतायै अविरहितो भवति सर्वबुद्धक्षेत्रस्फरणेन । सर्वलोकधातुपरिशुद्धये अविरहितो
भवति बुद्धविकुर्वितदर्शनेन । सर्वतथागतनिर्गर्जितविज्ञप्त्यै अविरहितो भवति सत्त्वसंवा-
सेन । निर्मितोपमबोधिसत्त्वचर्यायाः सर्वभवगतिच्युत्युपपत्त्यायतनस्वशरीरानुगमनतायै
अविरहितो भवति धर्मश्रवणेन । सर्वतथागतधर्ममेघसंप्रतीच्छनतायै अविरहितो भवति
10 ज्ञानालोकेन त्र्यध्वज्ञानानुगमानुसरणतायै ॥

एवमुक्ते सुप्रतिष्ठितो भिक्षुः सुधनं श्रेष्ठिदारकमेतदवोचत्—साधु साधु कुलपुत्र,
यस्त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य बुद्धधर्मान् सर्वज्ञताधर्मान् स्वयंभूधर्मान्
परिपृच्छसि । अहं कुलपुत्र असङ्गमुखस्य बोधिसत्त्वविमोक्षस्य लाभी । एतं मे कुलपुत्र
असङ्गमुखं बोधिसत्त्वविमोक्षमायूहता निर्यूहता अनुसरता विभजता निचिन्वता प्रविचिन्वता
15 प्रतिभासयता प्रभासयता असङ्गकोटिर्नाम ज्ञानालोकः प्रतिलब्धः, यस्य प्रतिलम्भान्नास्ति
मे सर्वसत्त्वचित्तचरितावभासेषु सङ्गः । नास्ति सर्वसत्त्वच्युत्युपपत्तिपरिज्ञासु सङ्गः । नास्ति
पूर्वनिवासानुस्मृतिमुखावतारेषु सङ्गः । नास्त्यपरान्तकल्पसर्वजगत्संवासेषु सङ्गः । नास्ति
प्रत्युत्पन्नाध्वसर्वजगद्विज्ञप्तिषु सङ्गः । नास्ति सर्वसत्त्वरुतमन्त्रसंवृतिपरिज्ञानेषु सङ्गः । नास्ति
सर्वसत्त्वसंशयच्छेदेषु सङ्गः । नास्ति सर्वसत्त्वेन्द्रियसंभेदावतारेषु सङ्गः । नास्ति सर्वसत्त्व-
20 परिपाकविनयकालोपसंक्रमणेषु सङ्गः । नास्ति रात्रिंदिवक्षणमुहूर्तकालसंज्ञागतावतारेषु सङ्गः ।
नास्ति दशदिग्बुद्धक्षेत्रेषु अशरीरस्फरणतासु सङ्गः, यदुत अभावप्रतिष्ठितानभिसंस्कार-
विप्रतिलम्भेन । अस्याहं कुलपुत्र अनभिसंस्कारिकाया ऋद्धेरनुभावेन इह गगनतले
चङ्क्रमामि, तिष्ठामि, निषीदामि, निपद्यामि, विविधानीर्यापथान् कल्पयामि, अन्तर्धामि
प्रादुर्भवामि, धूमायामि प्रज्वलामि । एकोऽपि भूत्वा बहुधा भवामि, बहुधा भूत्वैको भवामि ।
25 आविर्भावं तिरोभावं प्रत्यनुभवामि । तिरः कुड्यं तिरः प्राकारमसज्जन् गच्छामि तद्यथापि
नाम आकाशे । आकाशेऽपि पर्यङ्केन क्रमामि तद्यथापि नाम पक्षी शकुनिः । पृथिव्यामपि
उन्मज्जननिमज्जनं करोमि तद्यथोदके । उदकेऽप्यसज्जमानो गच्छामि तद्यथा पृथिव्याम् ।
धूमायामि प्रज्वलामि तद्यथापि नाम महानग्निस्कन्धः । पृथिवीमपि कम्पयामि ।
इमावपि चन्द्रसूर्यौ एवं महर्द्धिकौ एवं महानुभावौ एवं महौजस्विनौ पाणिना
30 संपरिमार्जयामि । यावद्ब्रह्मलोकं काये च संवर्तयामि । गन्धधूपपटलमेघसंछन्नं लोकं कृत्वा
प्रज्वलामि । सर्वरत्नार्चिर्मेघसंछन्नं लोकं कृत्वा सर्वजगत्सदृशनिर्मितमेघान् प्रमुञ्चामि ।
अनन्तवर्णप्रभाजालमेघान् प्रमुञ्चन् समन्ताद्दिशो निर्यामि—यदुत पूर्वां दिशं निर्यामि,

दक्षिणां पश्चिमामुत्तरामुत्तरपूर्वां पूर्वदक्षिणां दक्षिणपश्चिमां पश्चिमोत्तरामध ऊर्ध्वामपि दिशं निर्यामि । एकैकेन चित्तक्षणेन पूर्वस्यां दिशि एकं लोकधातुमतिक्रमामि । द्वावपि दशापि लोकधातुशतमपि लोकधातुसहस्रमपि लोकधातुशतसहस्रमपि लोकधातुकोटीमपि लोकधातु-कोटीशतमपि लोकधातुकोटीसहस्रमपि लोकधातुकोटीशतसहस्रमपि लोकधातुकोटी-नियुतशतसहस्रमपि, अपरिमाणानपि लोकधातूनप्रमेयान्, असंख्येयानपि अचिन्त्यानपि 5 अतुल्यानपि अमाप्यानपि असमन्तानपि अपर्यन्तानपि असीमाप्राप्तानपि अनभिलाप्यानभि-लाप्यानपि लोकधातूनतिक्रमामि । ये च तेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, तेषु तेषु लोकधातुसमुद्रेषु, तेषु तेषु लोकधातुप्रसरेषु, तासु तासु लोक-धातुदिक्षु, तेषु तेषु लोकधातुपरिवर्तेषु, तेषु तेषु लोकधातुसमवसरणेषु, तेषु तेषु लोकधातु-संभवेषु, तेषु तेषु लोकधातुनिर्देशेषु[1], तेषु तेषु लोकधातुद्वारेषु, तेषु तेषु लोकधातुकल्पनिर्दे- 10 शेषु, तेषु तेषु लोकधात्ववतारेषु, तेषु तेषु लोकधातुबोधिमण्डव्यूहेषु, तेषु तेषु लोकधातु-पर्षन्मण्डलेषु ये बुद्धा भगवन्तो धर्मं देशयन्ति, तेषां तथागतानामेकैकं तथागतमनन्तबुद्ध-क्षेत्रपरमाणुरजःसमैः कायनानात्वैरेकैकेन कायेन अनन्तबुद्धक्षेत्रपरमाणुरजःसमैः पूजामेघैः प्रवर्षन्नुपसंक्रमामि । उपसंक्रम्य पूजां करोम्यप्रतिप्रस्रब्धः सर्वपुष्पैः सर्वगन्धैः सर्वमाल्यैः सर्वविलेपनैः सर्वछत्रैः सर्वध्वजैः सर्वपताकाभिः सर्ववितानैः सर्वजालैः सर्वविग्रहैः । यच्च 15 ते बुद्धा भगवन्तो भाषन्ते देशयन्ति उदीरयन्ति संप्रकाशयन्ति संवर्णयन्ति परिदीपयन्ति उपदिशन्ति निर्दिशन्ति प्रभावयन्ति, तत्सर्वमाजानामि, उद्गृह्णामि । या च तेषां बुद्धानां भगवतां बुद्धक्षेत्रपरिशुद्धिस्तां सर्वामनुस्मरामि । यथा पूर्वस्यां दिशि, एवमेव दक्षिणायां पश्चिमायामुत्तरायामुत्तरपूर्वायां पूर्वदक्षिणायां दक्षिणपश्चिमायां पश्चिमोत्तरायामध ऊर्ध्वायां दिशि एकमपि लोकधातुमतिक्रमामि । द्वावपि दशापि लोकधातुशतमपि यावदनभि- 20 लाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानपि लोकधातूनतिक्रमामि । ये च तेषु लोक-धातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, तेषु तेषु लोकधातुसमुद्रेषु तासु तासु लोकधातुविशुद्धिषु, यावत् तेषु तेषु लोकधातुषु पर्षन्मण्डलेषु धर्मं देशयन्ति, तान् सर्वान् पश्यामि । तेषां च तथागतानां पूजां करोमि सर्व-पुष्पैर्यावत्सर्वपरिग्रहैः । यच्च ते बुद्धा भगवन्तो भाषन्ते यावत्प्रभावयन्ति तत्सर्व- 25 माजानामि उद्गृह्णामि । या च तेषां बुद्धानां भगवतां बुद्धक्षेत्रपरिशुद्धिस्तां सर्वामनुस्मरामि । येषां च सत्त्वानामाभासमागच्छामि, यैः समागच्छामि, ते सर्वे नियता भवन्त्यनुत्तरायां सम्यक्संबोधौ । ये च सत्त्वा ममाभासमागच्छन्ति, सूक्ष्मा वा उदारा वा हीना वा प्रणीता वा सुखिता वा दुःखिता वा, तेषां सर्वेषां तत्प्रमाणं कायमधितिष्ठामि परिपाकविनयकाला-नतिक्रमणतायै । ये च सत्त्वा मामुपसंक्रामन्ति तान् सर्वानत्रैव समन्तजवेऽमोघविक्रम- 30 पर्यवसाने बोधिसत्त्वविमोक्षे प्रतिष्ठापयामि । एतमहं कुलपुत्र समन्तजवं तथागतपूजो-

[1] B om. लोकधातुनिर्देशेषु.

पस्थानप्रयोगं सर्वसत्त्वपरिपाकानुकूलमसङ्गमुखं बोधिसत्त्वविमोक्षं प्रजानामि। किं मया शक्यं बोधिसत्त्वानां महासत्त्वानां महाकरुणाशीलानां महायानप्रतिपत्तिशीलानां बोधिसत्त्व-मार्गाविप्रवासशीलानामसङ्गशीलानां बोधिसत्त्वाशयगर्भाविपातनशीलानां बोधिचित्तापरि-त्यागशीलानां बुद्धधर्माध्यालम्बनशीलानां सर्वज्ञतामनसिकाराविप्रवसितशीलानां गगनसम-
5 शीलानां सर्वलोकानिश्रितशीलानामनिनाष्टशीलानामनुपहतशीलानामखण्डशीलानामच्छिद्र-शीलानामशबलशीलानामकल्मषशीलानां[1] विशुद्धशीलानां विरजोनिर्मलशीलानां बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुम्॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे वज्रपुरं नाम द्रमिडपट्टनम्[2]। तत्र मेघो नाम द्रमिडः प्रतिवसति। तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन महासत्त्वेन बोधिसत्त्वचर्यायां
10 शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारकः सुप्रतिष्ठितस्य भिक्षोः पादौ शिरसाभिवन्द्य सुप्रतिष्ठितं भिक्षुमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य सुप्रतिष्ठितस्य भिक्षोरन्तिकात् प्रक्रान्तः॥ ४॥

---

1 B adds विगतदोषयशीलानां   2 B द्रविड throughout.

# ७ मेघः।

अथ खलु सुधनः श्रेष्ठिदारकस्तं धर्मालोकमनुस्मरन् धर्मप्रसादवेगाविष्टो बुद्धानुगतसंज्ञामनसिकारः त्रिरत्नवंशानुपच्छेदप्रयुक्तः कल्याणमित्राण्यनुस्मरन् त्र्यध्वलोकावभासितचित्तो महाप्रणिधानानुगतमनस्कारः सर्वसत्त्वधातुपरित्राणयोगप्रसृतः सर्वसंस्कृतरत्यनिश्रितचित्तो विरागवंशमुदीरयन् सर्व[1]धर्मस्वभावनिध्यप्तिपरमः सर्वलोकधातुपरिशुद्धिप्रणिध्यनुचलितः सर्वबुद्धपर्षन्मण्डलानिश्रितविहारी अनुपूर्वेण वज्रपुरं नाम द्रमिड[2]पट्टनमुपसंक्रम्य मेघं द्रमिडं पर्येषन् अद्राक्षीत् मध्येनगरं शृङ्गाटके धर्मसांकथ्याय सिंहासने निषण्णं दशानां प्राणिसहस्राणां चक्राक्षरपरिवर्तव्यूहं नाम धर्मपर्यायं संप्रकाशयमानम्॥

अथ खलु सुधनः श्रेष्ठिदारको मेघस्य द्रमिडस्य पादौ शिरसाभिवन्द्य मेघं द्रमिडमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्? कथं प्रतिपत्तव्यम्? कथं बोधि[3]सत्त्वस्य बोधिसत्त्वबोधिचित्तोत्पादो न प्रणश्यति? सर्वभवगतिषु कथमाशयो दृढीभवत्यपरिखेदतया? कथमध्याशयः परिशुद्ध्यत्यनवमर्दतया? कथं महाकरुणाबलं संजायते अपरिखेदतया? कथं धारणीबलमाक्रामति समन्तमुखविशुद्धतया? कथं प्रज्ञालोकः संजायते सर्वधर्मवितिमिरालोकः सर्वाज्ञानतिमिरपटविकिरणतया? कथं प्रतिसंविद्बलमाक्रामति अर्थधर्मनिरुक्तिप्रतिभानकौशलस्वरमण्डलपरिपूरये? कथं स्मृतिबलमाक्रामति सर्वबुद्धधर्मचक्रासंभिन्नसंधारणतया? कथं गतिबलं विशुध्यति सर्वधर्मदिग्गत्यालोकानुगमनुगमनतया? कथं बोधिसत्त्वस्य समाधिबलं निष्पद्यते सर्वधर्मार्थनिश्चयप्रभेदपरमतया?

अथ खलु मेघो द्रमिडो बोधिसत्त्वगौरवेण ततः सिंहासनादुत्थाय अवतीर्य सुधनस्य श्रेष्ठिदारकस्य सर्वशरीरेण प्रणिपत्य सुधनं श्रेष्ठिदारकं सुवर्णपुष्पराशिना अभ्यवकिरत्। अनर्घैश्च मणिरत्नैरुदारचन्दनचूर्णैश्चाभिप्राकिरत्। नानाचित्ररत्नरक्तैश्च अनेकैर्वस्त्रशतसहस्रैरभिच्छादयामास। अनेकैश्च नानावर्णै रुचिरैर्मनोरमैर्गन्धपुष्पैरभ्यवकीर्य अभिप्रकीर्य अन्यैश्च विविधैः पूजाप्रकारैः पूजयित्वा सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वा सुधनं श्रेष्ठिदारकमेतदवोचत्—साधु साधु कुलपुत्र, येन ते अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। येन कुलपुत्र अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्, स सर्वबुद्धवंशस्यानुपच्छेदाय प्रतिपन्नो भवति विरागवंशस्य यथावद्विज्ञप्तयेऽभियुक्तः, सर्वक्षेत्रवंशस्य परिशुद्धये प्रतिपन्नः, सर्वसत्त्ववंशस्य परिपाकविनयाय प्रत्युपस्थितः, सर्वधर्मवंशस्य यथावन्निस्तीरणाय प्रयुक्तः, सर्वकर्मवंशस्याविरोधाय स्थितः, सर्वबोधिसत्त्वचर्यावंशस्य परिपूरये प्रयुक्तः, सर्वप्रणिधानवंशस्याव्यवच्छेदाय संप्रस्थितः, सर्वत्र्यध्ववंशस्य ज्ञानानुगमाय प्रतिपन्नः, अधिमुक्तिवंशस्य दृढीकरणायोद्युक्तः, साधिष्ठितो भवति सर्वतथागतमण्डलेन समन्वाहृतः, सर्व-

---

१ H सर्वसत्त्वस्वभाव°. २ B द्रविड° throughout. ३ S om. बोधिसत्त्वस्य.

बुद्धैः समतानुगतः, सर्वबोधिसत्त्वैरनुमोदितः, सर्वार्यैरभिनन्दितः, सर्वब्रह्मेन्द्रैः पूजितः, सर्वदेवेन्द्रैरारक्षितः, सर्वयक्षेन्द्रैरपचितः, सर्वराक्षसेन्द्रैः प्रत्युद्गतः, सर्वनागेन्द्रैरभिष्टुतः, सर्वकिन्नरेन्द्रैः संवर्णितः, सर्वलोकेन्द्रैरन्वेषितः, सर्वलोकधातुत्रिविधापायगतिसमुच्छेदाय सर्वाक्षणदुर्गतिपथविनिवर्तनतायै सर्वदारिद्र्यपथसमतिक्रमाय देवमनुष्यसंपत्प्रतिलाभाय कल्याणमित्रसंदर्शनाविप्रवासाय उदारबुद्धधर्मश्रवाविकाराय बोधिचित्ताशयपरिशोधनाय बोधिचित्तहेतुसंभवसमुदयाय बोधिसत्त्वमार्गावभासप्रतिलाभाय बोधिसत्त्वज्ञानानुगमाय बोधिसत्त्वभूम्यवस्थानाय। तस्य मम कुलपुत्र एवं भवति—दुष्करकारका बोधिसत्त्वा दुर्लभदर्शनप्रादुर्भावा आश्वासका लोकस्य। मातापितृभूता बोधिसत्त्वाः सर्वसत्त्वानाम्। अलंकारभूता बोधिसत्त्वाः सदेवकस्य लोकस्य। प्रतिशरणभूता बोधिसत्त्वा दुःखार्दितानाम्। लयनभूता बोधिसत्त्वाः सर्वजगदारक्षायै। त्राणभूता बोधिसत्त्वा विविधभयोपद्रवाणाम्। वातमण्डलीभूता बोधिसत्त्वाः सर्वजगदपायप्रपातसंधारणतया। धरणीभूता बोधिसत्त्वाः सर्वसत्त्वकुशलमूलविवर्धनतया। सागरभूता बोधिसत्त्वाः अक्षयपुण्यरत्नकोशगर्भतया। आदित्यभूता बोधिसत्त्वाः ज्ञानालोकावभासकरणतया। सुमेरुभूता बोधिसत्त्वाः कुशलमूलैरभ्युद्गततया[3]। चन्द्रभूता बोधिसत्त्वाः बोधिमण्डज्ञानचन्द्रोदागमनतया। शूरभूता बोधिसत्त्वाः सर्वमारसैन्यप्रमर्दनतया। वीरभूता बोधिसत्त्वाः स्वयंभूधर्मनगरानुप्राप्त्यै। तेजोभूता बोधिसत्त्वाः सर्वसत्त्वात्मस्नेहपर्यादानतया। मेघभूता बोधिसत्त्वाः विपुलधर्ममेघाभिसंप्रवर्षणतया। वृष्टिभूता बोधिसत्त्वाः श्रद्धादिसत्त्वेन्द्रियाङ्कुरविवर्धनतया। दाशभूता बोधिसत्त्वाः धर्मसागरतीर्थप्रदर्शनतया। सेतुभूता बोधिसत्त्वाः सर्वसत्त्वसंसारसमुद्रसंतारणतया। तीर्थभूता बोधिसत्त्वाः सर्वसत्त्वाभिगमनतया॥

इति हि मेघो द्रमिडः सुधनस्य श्रेष्ठिदारकस्य पुरत एभिर्वचनपदैर्बोधिसत्त्वान् संवर्ण्य सुधनस्य श्रेष्ठिदारकस्य साधुकारमदात्। तस्येमां बोधिसत्त्वसंहर्षणीं वाचमुदीरयतो मुखद्वारात्तथारूपोऽर्चिःस्कन्धो निश्चचार, येनार्चिःस्कन्धेन साहस्रो लोकधातुः स्फुटोऽभूत्। ये च सत्त्वास्तमवभासं संजानन्ति स्म, देवमहर्द्धिका वा देवा वा, नागमहर्द्धिका वा नागा वा, यक्षमहर्द्धिका वा यक्षा वा, गन्धर्वमहर्द्धिका वा गन्धर्वा वा, असुरमहर्द्धिका वा असुरा वा, गरुडमहर्द्धिका वा गरुडा वा, किन्नरमहर्द्धिका वा किन्नरा वा, महोरगमहर्द्धिका वा महोरगा वा, मनुष्यमहर्द्धिका वा मनुष्या वा, अमनुष्यमहर्द्धिका वा अमनुष्या वा, ब्रह्ममहर्द्धिका वा ब्रह्माणो वा, ते तेनावभासेनावभासिताः सन्तो मेघस्य द्रमिडस्यान्तिकमुपसंक्रामन्तः। एतेषां मेघेन द्रमिडेनाधिष्ठिताशयानां कृताञ्जलिपुटानां ह्लादितकायचित्तानाम् उदारप्रामोद्यजातानां महागौरवस्थितानां निहतमारध्वजानां मायाशाठ्यापगतानां विप्रसन्नेन्द्रियाणां मेघो द्रमिडस्तमेव चक्राक्षरपरिवर्तव्यूहं धर्मपर्यायं विस्तरेण संप्रकाशयति प्रवेदयति, प्रवेशयति, नयति, अनुगमयति, यं श्रुत्वा सर्वे तेऽविनिवर्तनीया अभूवन् अनुत्तरायां सम्य-

१ B om. सर्वराक्षसेन्द्रैः प्रत्युद्गतः. २ S °ध्याधित°. ३ B °मूलाभ्युद्गततया.

क्संबोधौ। स पुनरपि धर्मासने निषद्य सुधनं श्रेष्ठिदारकमेतदवोचत्—अहं कुलपुत्र सरस्वत्या धारण्यालोकस्य लाभी। सोऽहमेकद्वित्रिसाहस्रमहासाहस्रे लोकधातौ देवानां देवमन्त्रान् प्रजानामि। एवं नागानां यक्षाणां गन्धर्वाणामसुराणां गरुडानां किन्नराणां महोरगाणां मनुष्याणाममनुष्याणां ब्रह्मणां ब्रह्ममन्त्रान् प्रजानामि। देवानां देवमन्त्रनानात्वं प्रजानामि। एवं नागानां यक्षानां गन्धर्वाणामसुराणां गरुडानां किन्नराणां महोरगाणां मनुष्याणाममनुष्याणां ब्रह्मणां ब्रह्ममन्त्रनानात्वं प्रजानामि। देवानां देवमन्त्रैकत्वं प्रजानामि। एवं नागानां यक्षाणां गन्धर्वाणामसुराणां गरुडानां किन्नराणां महोरगाणां मनुष्याणाममनुष्याणां ब्रह्मणां ब्रह्ममन्त्रैकत्वं प्रजानामि। देवानां देवमन्त्रसंभेदं प्रजानामि। एवं नागानां यक्षाणां गन्धर्वाणामसुराणां गरुडानां किन्नराणां महोरगाणां मनुष्याणाममनुष्याणां ब्रह्मणां ब्रह्ममन्त्रसंभेदं प्रजानामि। तिर्यग्योनिगतानां सत्त्वानां सर्वव्यवहारमन्त्रसंज्ञाः प्रजानामि। नारकाणां सत्त्वानां मन्त्रसंज्ञाः प्रजानामि। यामलौकिकानां सत्त्वानां मन्त्रसंज्ञाः प्रजानामि। आर्यमन्त्रसंज्ञाः प्रजानामि। अनार्यमन्त्रसंज्ञाः प्रजानामि। बोधिसत्त्वमन्त्रसत्त्वाशयवाग्निरुक्तीः प्रजानामि। त्र्यध्वप्राप्ततथागतस्वराङ्गघोषसागरान् सर्वसत्त्वानां कथारुतमन्त्रसंप्रयुक्तानवतराम्यधिमुञ्चामि। चित्तक्षणे चित्तक्षणे यथा चेह त्रिसाहस्रमहासाहस्रलोकधातौ सत्त्वानां सर्वव्यवहारनिरुक्तिमन्त्रसंज्ञा[1]सागरमवतरामि, तथा पूर्वस्यां दिशि लोकधातुकोटीनियुतशतसहस्रेषु अप्रमाणेषु असंख्येयेषु अचिन्त्येषु अतुल्येषु असमन्तेषु असीमाप्राप्तेषु अनभिलाप्यानभिलाप्येषु, तथा दक्षिणायां पश्चिमायामुत्तरायामुत्तरपूर्वायां पूर्वदक्षिणायां दक्षिणपश्चिमायां पश्चिमोत्तरायामध ऊर्ध्वायां दिशि लोकधातुकोटीनियुतशतसहस्रेष्वप्रमाणेषु यावदनभिलाप्यानभिलाप्येषु सत्त्वानां सर्वव्यवहारनिरुक्तिमन्त्रसंज्ञासागरमवतरामि—यदुत देवानां देवमन्त्रान् प्रजानामि। यावद्ब्रह्मणां ब्रह्ममन्त्रान् प्रजानामि। एतमहं कुलपुत्र, बोधिसत्त्वानां सरस्वतीधारण्यालोकं प्रजानामि। किं मया शक्यं बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुम्, ये ते विविधसंज्ञागतसागरानुप्रविष्टाः। ये ते विविधसर्वजगत्संज्ञामन्त्रसागरानुप्रविष्टाः। ये ते विविधजगन्नामनिर्देशसागरानुप्रविष्टाः। ये ते विविधसर्वजगदभिलाप्यप्रज्ञप्तिव्यवहारसागरानुप्रविष्टाः। ये ते सर्वपदानुसंधिसागरानुप्रविष्टाः। ये ते पदपरमसागरानुप्रविष्टाः। ये ते सर्वत्र्यध्वारम्बणैकारम्बणव्यवहारसमुद्रानुप्रविष्टाः। ये ते पदोत्तरनिर्देशसागरानुप्रविष्टाः। ये ते द्विपदोत्तरनिर्देशसागरानुप्रविष्टाः। ये ते पदप्रभेदनिर्देशसागरानुप्रविष्टाः। ये ते सर्वधर्मपदप्रभेदविनयनिर्देशसागरानुप्रविष्टाः। ये ते सर्वजगन्मन्त्रसागरानुप्रविष्टाः। ये ते सर्वस्वरमण्डलविशुद्धिव्यूहावक्रान्ताः। ये ते चक्राक्षरकोटीगतिप्रभेदनिर्याताः॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे वनवासी नाम जनपदः। तत्र मुक्तको नाम श्रेष्ठी प्रतिवसति। तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायामभियोक्तव्यम्, कथं निर्यातव्यम्, कथं चित्तं निध्यातव्यम्॥

---

1 B नामसंज्ञाः.

अथ खलु सुधनः श्रेष्ठिदारको मेघस्य द्रमिडस्य पादौ शिरसाभिवन्द्य धर्मगौरवेण कृत्वा मूलं जातश्रद्धालक्षणं प्ररूपयमाणः कल्याणमित्रानुगतां सर्वज्ञतां संपश्यन् अश्रुमुखो रुदन् मेघं द्रमिडमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य प्रणिपत्य मेघस्य द्रमिडस्यान्तिकात् प्रक्रान्तः ॥ ५ ॥



## ८ मुक्तकः ।

अथ खलु सुधनः श्रेष्ठिदारकस्तमेव बोधिसत्त्वसरस्वतीधारण्यालोकव्यूहमनुविचिन्तयन्, तमेव बोधिसत्त्वमन्त्रनयसागरमवतरन्, तमेव बोधिसत्त्वचित्तव्यवदानविशुद्धिमनुस्मरन्, तमेव बोधिसत्त्वकुशलवासनोपसंहाराभिनिर्हारमभिनिर्हरन्, तदेव बोधिसत्त्वपरिपाकमुखं विशोधयन्, तदेव बोधिसत्त्वानां सत्त्वसंग्रहज्ञानमुत्तापयन्, तामेव बोधिसत्त्वाशयबलविशुद्धिं दृढीकुर्वाणः, तदेव बोधिसत्त्वाध्याशयबलमुपस्तम्भयन्, तमेव बोधिसत्त्वाधिमुक्तिवंशं परिशोधयन्, तामेव बोधिसत्त्वाशयचित्तकल्याणतां संभावयन्, तमेव बोधिसत्त्वव्यवसायमुत्तारयन्, सुधनः श्रेष्ठिदारको दृढप्रतिज्ञाप्रणिधिचित्तापरिखिन्नसंतानव्यूहोऽनिवर्त्यविक्रान्तवीर्यः प्रत्युदावर्त्यमनोव्यवसायः असंहार्यश्रद्धाबलोपेतः वज्रनारायणाभेद्यचित्तः सर्वकल्याणमित्रानुशासनीप्रदक्षिणग्राही अनुपहतप्रज्ञाविषयः समन्तमुखविशुद्ध्यभिमुखः अप्रतिहतज्ञानविशुद्धिगोचरः समन्तनेत्रज्ञाननयालोकः समन्तभूमिधारण्यवभासप्रतिलब्धः धर्मधातुतलभेदाभिमुखचित्तः समन्ततलाप्रतिष्ठानव्यूहविशुद्धिस्वभावविज्ञः अनिकेतासमाद्वयगोचरपरमः सर्वसंज्ञाविक्रमणज्ञानमुखविशुद्धः सर्वदिक्कुलभेददिक्प्रत्यूहव्यूहः लोकतलदिग्भेदानिवर्त्यः धर्मतलदिग्भेदाप्रत्युदावर्त्यः बुद्धदिक्कुलभेददर्शनविज्ञप्तिपरमः अध्वदिक्कुलभेदानुगतज्ञानी रुचिरधर्मचक्रसंभृतबुद्धिः समन्तरुचिरज्ञानसमाप्त्याकारलोकावभासितचित्तः समन्तविषयभूम्यनुगतमनःशरीरः तथागतज्ञानविद्युदवभासितसंतानः सर्वज्ञतोर्मिप्रसादावेगसंजातः बुद्धधर्मप्रसादवेगाविरहितः तथागताधिष्ठानावेगाविष्टः सर्वबुद्धस्वचित्तानुगमालोकावभासितः सर्वलोकधातुजालस्वशरीरस्फरणप्रणिधिसमन्वागतः सर्वधर्मधातुस्वकायसमवसरणाभिनिर्हारपरमोऽनुपूर्वेण द्वादशभिर्वर्षैस्तं वनवासिजनपदमनुप्राप्तः । स तं मुक्तकं श्रेष्ठिनं परिमार्गमाणोऽद्राक्षीत् । दृष्ट्वा च पुनः सर्वशरीरेण प्रणिपत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—आर्य, लब्धा मे लाभाः, यस्य मेयकल्याणमित्रसमवधानम् । तत्कस्य हेतोः ? दुर्लभदर्शनानि हि कल्याणमित्राणि दुर्लभप्रादुर्भावानि दुःप्रत्यागतानि दुरुपसंक्रमणानि दुःपर्युपास्यानि । दुरासदानि[1] दुःसंवासानि दुरभिसाध्यानि दुरनुबन्ध्यानि कल्याणमित्राणि । तच्च मेयकल्याणमित्रसमवधानं जातम् । मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । यदुत सर्वबुद्धारागणतायै सर्वबुद्धाभिराधनतायै सर्वबुद्धदर्शनतायै सर्वबुद्धविज्ञप्तये सर्वबुद्धसमतानुगमाय सर्वबुद्धप्रणिध्यनुगमाय सर्वबुद्धप्रणिधिपरिपूरये सर्वबुद्धसमुदागमज्ञानालोकनतायै सर्वबुद्धस्वशरीराभिनिर्हरणतायै सर्वबुद्धसमुदागमस्वचर्याभिनिर्हरणतायै सर्वबुद्धविकुर्वितप्रत्यक्षाभिज्ञतायै सर्वबुद्धबलवैशारद्यपरिशुद्धये सर्वधर्मदेशनाश्रवणावितृप्ततायै सर्वबुद्धधर्मदेशनाश्रवणोद्ग्रहणतायै सर्वबुद्धधर्मदेशनासंधारणतायै सर्वबुद्धधर्मदेशनाविभजनतायै सर्वबुद्धशासनसंधारणतायै सर्वबुद्धसत्त्वैकत्वतायै सर्वबोधिसत्त्वसभागतायै सर्वबोधिसत्त्वचर्यापरिशुद्धये सर्वबोधिसत्त्वपारमितापरिपूरये सर्व-

---

१ B om. दुरासदानि.

बोधिसत्त्वप्रणिध्यभिनिर्हारविशुद्धये सर्वबोधिसत्त्वबुद्धाधिष्ठानकोशप्रतिलाभितायै सर्वबोधि-
सत्त्वधर्मनिधानकोशाक्षयज्ञानालोकतायै सर्वबोधिसत्त्वनिधानकोशानुगमाय सर्वबोधिसत्त्वा-
प्रमाणकोशाभिनिर्हरणतायै सर्वबोधिसत्त्वमहाकरुणानिधानकोशसत्त्वविनयनिष्ठापर्यन्तगमन-
तायै सर्वबोधिसत्त्वविकुर्वितनिधानकोशविज्ञप्तये सर्वबोधिसत्त्ववशितानिधानकोशस्वचित्तवश-
5 वर्तनतायै सर्वबोधिसत्त्वविशुद्धिनिधानकोशसर्वाकारव्यूहतायै । एवंचित्तोऽहमार्य इहोप-
संक्रान्त, एवमभिप्राय एवंमनोरथ एवमभिनन्द्य, एवमाशय एवंनिष्पत्तिपरम एवंगोचरा-
भिमुख एवंनयानुगमाभिमुख एवंविशुद्धिपरम एवंव्यूहाभिप्राय एवंप्रणतचित्त एवं
कल्याणप्रयोग एवमभिमुखेन्द्रिय । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं
ददातीति, नयमुपदिशति, अनुगमनमवभासयति, मार्गमुपदिशति, तीर्थमवतारयति, धर्म-
10 द्वारं विवृणोति, संशयान् छिनत्ति, काङ्क्षां विनोदयति, कथंकथाशल्यमुद्धरति, विचिकित्सा-
मलमपकर्षयति, चित्तगहनमवभासयति, चित्तमलमपहरति, चित्तसंततिं प्रसादयति,
चित्तकौटिल्यमपनयति[1], चित्ततापं प्रह्लादयति, व्यावर्तयति, संसारचित्तं विनिवर्तयति,
अकुशलेभ्यो निवर्तयति, नरकेभ्यो विवेचयति, निकेतनेभ्य उच्चालयति, अनभिनिवेशाद्
परिमोचयति, सर्वसङ्गेभ्य आवर्जयति, सर्वज्ञतायामभिमुखीकरोति, धर्मनगरानुप्रवेशाय
15 आवर्तयति, महाकरुणायां प्रतिष्ठापयति, महामैत्र्यां नियोजयति, बोधिसत्त्वचर्यायां प्रवेश-
यति, समाधिमुखमननतायां निवेशयति, अनुगममुखेषु स्थापयति, स्वभावनिष्पत्तौ स्फरति,
बलानुगमेन विभजति सर्वजगत्समतानुगमाय चित्तम् । तद्वदतु मे आर्य—कथं बोधिसत्त्वेन
बोधिसत्त्वचर्यायां शिक्षितव्यम्? कथमभियोक्तव्यम्? कथं प्रयोक्तव्यम्? कथं प्रयुक्तस्य
क्षिप्रं विशुध्यति बोधिसत्त्वचर्यामण्डलम्?

20 अथ खलु मुक्तक श्रेष्ठी तस्यां वेलायां सर्वबुद्धक्षेत्रसमवसरणं नाम अनन्तावर्त-
धारणीमुखपूर्वंगमं बोधिसत्त्वसमाधिमुखं समापद्यत पूर्वकुशलमूलबलाधानेन तथागताधिष्ठानेन,
मञ्जुश्रियश्च कुमारभूतस्य समन्वाहरेण ज्ञानालोकोपसंहारेण च । समनन्तरसमापन्नस्य च
मुक्तकस्य श्रेष्ठिनस्तथारूपा कायपरिशुद्धिः संस्थिता यया कायपरिशुद्ध्या दशसु दिक्षु
दशबुद्धक्षेत्रपरमाणुरजःसमा बुद्धा भगवन्तः सह बुद्धक्षेत्रपरिशुद्ध्या सपर्षन्मण्डलाः सह
25 प्रभाविशुद्ध्या सपूर्वचर्यासमाप्ताः सबुद्धविकुर्विताः सप्रणिधानसमाराः सहचर्यानिर्याणव्यूह-
विशुद्ध्या साभिसंबोधिसंदर्शनाः सहधर्मचक्रोद्द्योतनाः ससत्त्वपरिपाकाः सधर्मनिष्ठापर्यन्ताः
सर्वकायेऽन्तर्गता अनुप्रविष्टाः संदृश्यन्ते स्म । अन्योन्यासंभिन्ना अन्योन्यानावरणा अन्योन्य-
सुविभक्ता अन्योन्यसुव्यवस्थितनानाकल्पसंस्थाना यथावद्विज्ञप्ता नानाबुद्धक्षेत्रव्यूहा नाना-
बोधिसत्त्वपर्षन्मण्डलप्रकारा नानाबुद्धविकुर्वितं संदर्शयन्तः संदृश्यन्ते स्म । नानायाननय-
30 व्यवस्थाना नानाप्रणिधानमुखपरिदीपना: कचिल्लोकधातौ तुषितभवनोपपन्नाः संदृश्यन्ते ।
सर्वबुद्धकार्यं कुर्वन्तः कचित्तुषितभवनाच्च्यवमाना, कचिन्मातुः कुक्षिगता विविधविकुर्वितानि

---

1 B om चित्तकौटिल्यमपनयति

संदर्शयन्त, क्वचिज्जायमाना बाल्क्रीडामुपदर्शयन्त, क्वचिदन्तःपुरमध्यगता, क्वचिदभिनिष्क्रामन्त, क्वचिद्बोधिमण्डवरगता महाव्यूहविकुर्वितमारसैन्यपराजयं कुर्वन्त संदृश्यन्ते। क्वचिद्देवनागयक्षगन्धर्वपरिवृता ब्रह्मेन्द्रैर्धर्मचक्रप्रवर्तनायाध्येष्यमाणा, क्वचिद्धर्मचक्रं प्रवर्तयन्त क्वचित्सर्वसत्त्वभवनगता क्वचित्परिनिर्वायमाणा संदृश्यन्ते। क्वचिल्लोकधातौ तथागतानां परिनिर्वृतानां धातुविभङ्गा संदृश्यन्ते। क्वचिद्बुद्धक्षेत्रदेवमनुष्यास्तथागतचैत्यान्यलंकुर्वन्त संदृश्यन्ते। यत्र ते बुद्धा भगवन्तो भाषन्ते नानासत्त्वनिकायेषु नानासत्त्वलोकेषु नानासत्त्वगतिषु नानासत्त्वोपपत्तिषु नानासत्त्वसंनिपातेषु नानासत्त्वकुशलमूलपरिवर्तेषु नाना सत्त्वगतिपरिवर्तेषु नानासत्त्वाशयपरिवर्तेषु नानासत्त्वाधिमुक्तिपरिवर्तेषु नानासत्त्वेन्द्रिय परिवर्तेषु नानाकालपरिवर्तेषु नानासत्त्वकर्मसंभेदेषु नानासत्त्वकर्मविमात्रतासु नानासत्त्व लोकविभावनासु नानागतिचर्याविचरितेषु सत्त्वनयेषु नानाशयप्रयोगेषु सत्त्वसमुद्रेषु नानेन्द्रियविमात्रताविशुद्धेषु नानाक्लेशवासनानुशयितेषु सत्त्वप्रसरेषु विविधबुद्धिविकुर्वितसंदर्शनैर्नानानिरुक्तिभिर्नानास्वराङ्गरुतनिर्हारैर्नानासूत्रान्तनयोदाहारैर्नानावारणीमुखपरिवर्तैर्नानाप्रतिसंविन्नयप्रभवैर्नानासत्यनामसमुद्रपरिवर्तैः नानाबुद्धर्षभसिंहनादैः नानासत्त्वकुशलमूलदेशनाप्रातिहार्यसंदर्शनैः नानामुखस्मृतिनिदर्शनविकुर्वितैः नानाबोधिसत्त्वव्याकरणसिंहनादैः नानातथागतधर्मचक्रविजृम्भितैः अनन्तनयेषु पर्षन्मण्डलेषु अनन्तसंभेदेष्वन्योन्यारम्बणेषु नानाविशुद्धपर्षन्मण्डलेषु विपुलेषु सूक्ष्मपर्षन्मण्डलसमवसरणेषु योजनप्रमाणेषु दशयोजनप्रमाणेषु यावदनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमलोकधातुप्रमाणेषु पर्षन्मण्डलेषु यत्ते बुद्धा भगवन्तो धर्मं भाषन्ते सर्वस्वराङ्गरुतघोषानुगामिन्या तथागतवाचा, तं सर्वं सुधन श्रेष्ठिदारक शृणोति उद्गृह्णाति संधारयति प्रवर्तयति उपनिध्यायति। तच्च विकुर्वितं पश्यति, तां च अचिन्त्यां बोधिसत्त्वसमाधिवृषभिताम्॥

अथ खलु मुक्तकः श्रेष्ठी स्मृतः संप्रजानंस्तस्मात्समाधेर्व्युत्थाय सुधनं श्रेष्ठिदारकमेतदवोचत्-अहं कुलपुत्र असङ्गव्यूहं नाम तथागतविमोक्षमायूहामि निर्यूहामि। तस्य मे कुलपुत्र असङ्गव्यूहं तथागतविमोक्षमायूहतो निर्यूहतः पूर्वस्यां दिशि जाम्बूनदप्रभासवत्यां लोकधातौ तारेश्वरराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धं वैरोचनगर्भबोधिसत्त्वप्रमुखेन सर्वबोधिसत्त्वपर्षन्मण्डलेन चक्षुष आभासमागच्छति। दक्षिणायां दिशि सर्वबलवेगवत्यां[1] लोकधातौ समन्तगन्धवितानो नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धं चिन्ताराजबोधिसत्त्वप्रमुखेन सर्वबोधिसत्त्वपर्षन्मण्डलेन चक्षुष आभासमागच्छति। पश्चिमायां दिशि सर्वगन्धप्रभासवत्यां लोकधातौ मेरुप्रदीपराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धमसङ्गचित्तबोधिसत्त्वप्रमुखेन सर्वबोधिसत्त्वपर्षन्मण्डलेन चक्षुष आभासमागच्छति। उत्तरायां दिशि काषायध्वजायां लोकधातौ वज्रप्रमर्दनो नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धं वज्रपदविक्रामिबोधिसत्त्वप्रमुखेन सर्वबोधिसत्त्वपर्षन्मण्डलेन चक्षुष

1 B °वरवत्यां

आभासमागच्छति । उत्तरपूर्वाया दिशि सर्वरत्नरुचिरायां लोकधातौ अनिलम्भचक्षुर्वैरोचनो
नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धमनिलम्भसुनिर्मितबोधिसत्त्वपूर्वंगमेन सर्वबोधिसत्त्वपर्ष-
न्मण्डलेन चक्षुष आभासमागच्छति । पूर्वदक्षिणाया दिशि गन्धार्चिःप्रभास्वराया लोकधातौ
गन्धप्रदीपो नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धं सर्वधर्मधातुतलभेदकेतुराजबोधिसत्त्वपूर्वं-
5 गमेन बोधिसत्त्वपर्षन्मण्डलेन चक्षुष आभासमागच्छति । दक्षिणपश्चिमाया दिशि सूर्य-
केसरनिर्भासाया लोकधातौ समन्तमुखज्ञानविरोचनघोषो नाम तथागतोऽर्हन् सम्यक्संबुद्धः
सार्धं समन्तकुसुमार्चिःप्रलम्बचूडबोधिसत्त्वपूर्वंगमेन सर्वबोधिसत्त्वपर्षन्मण्डलेन चक्षुष
आभासमागच्छति । पश्चिमोत्तराया दिशि गन्धालंकाररुचिरशुभगर्भाया लोकधातावप्रमाण-
गुणसागरप्रभो नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धमसङ्गकायरश्मितेजोमतिबोधिसत्त्वपूर्वं-
10 गमेन सर्वबोधिसत्त्वपर्षन्मण्डलेन चक्षुष आभासमागच्छति । अधोदिशि रत्नसिंहावभास-
ज्वलनाया लोकधातौ धर्मधातुविद्योतितरश्मिर्नाम तथागतोऽर्हन् सम्यक्संबुद्धः सार्धं धर्मधातु-
र्चिर्वैरोचनसंभवमतिबोधिसत्त्वपूर्वंगमेन सर्वबोधिसत्त्वपर्षन्मण्डलेन चक्षुष आभासमागच्छति ।
ऊर्ध्वाया दिशि लक्षणरुचिरवैरोचनाया लोकधातावप्रतिहतगुणकीर्तिविमोक्षप्रभराजो नाम
तथागतोऽर्हन् सम्यक्संबुद्धः सार्धमसङ्गबलवीर्यमतिबोधिसत्त्वपूर्वंगमेन सर्वबोधिसत्त्वपर्षन्मण्ड-
15 लेन चक्षुष आभासमागच्छति ॥

इति हि कुलपुत्र, एतान् दश तथागतान् प्रमुखान् कृत्वा दशसु दिक्षु दशबुद्ध-
क्षेत्रपरमाणुरजःसमांस्तथागतानर्हतः सम्यक्संबुद्धान् पश्यामि । न च ते तथागता इहा-
गच्छन्ति, न चाहं तत्र गच्छामि । यस्यां च वेलायामिच्छामि, तस्यां वेलायां सुखावत्यां
लोकधातावमिताभं तथागतं पश्यामि । चन्दनवत्यां लोकधातौ वज्राभं तथागतं पश्यामि ।
20 गन्धवत्यां लोकधातौ रत्नाभं तथागतं पश्यामि । पद्मवत्यां लोकधातौ रत्नपद्माभं तथागतं
पश्यामि । कनकवत्यां लोकधातौ शान्ताभं तथागतं पश्यामि । अभिरत्यां लोकधातावक्षोभ्यं
तथागतं पश्यामि । सुप्रतिष्ठायां लोकधातौ सिंहं तथागतं पश्यामि । आदर्शमण्डलनिभा-
सायां लोकधातौ चन्द्रबुद्धिं तथागतं पश्यामि । रत्नश्रीहंसचित्रायां लोकधातौ वैरोचनं
तथागतं पश्यामि । इति हि कुलपुत्र यस्यां यस्यां दिशि यस्यां यस्यां लोकधातौ यं यमेव
25 तथागतं द्रष्टुमाकाङ्क्षामि, तं तमेव तथागतं पश्यामि । यस्मिन् यस्मिन्नध्वनि यस्मिन् यस्मि-
न्नारम्बणे यस्यां यस्यां पूर्वचर्यायां तथागतं द्रष्टुमाकाङ्क्षामि, यस्मिन् यस्मिन् विकुर्वितकारणे
यस्मिन् यस्मिन् सत्त्वविनयकारणे यं यं तथागतं द्रष्टुमाकाङ्क्षामि, तं तमेव तथागतं पश्यामि ।
न च ते तथागता इहागच्छन्ति, न चाहं तत्र गच्छामि । सोऽहं कुलपुत्र न कुतश्चिदाग-
मनतां तथागतानां प्रजानन्, न क्वचिद्गमनतां स्वकायस्य प्रजानन्, स्वप्नोपमविज्ञप्तिं च
30 तथागतानां प्रजानन्, स्वप्नसमविचारविज्ञप्तिं स्वचित्तस्य प्रजानन्, प्रतिभाससमविज्ञप्तिं च
तथागतानां प्रजानन्, अच्छोदकभाजनविज्ञप्तिं च स्वचित्तस्य प्रजानन्, मायाकृतरूपविज्ञप्तिं
च तथागतानां प्रजानन्, मायोपमविज्ञप्तिं च स्वचित्तस्य प्रजानन्, प्रतिश्रुत्कागिरिघोषानु-
रवणतां च तथागतघोषस्य प्रजानन्, प्रतिश्रुत्कासमविज्ञप्तिं च स्वचित्तस्य प्रजानन्, एवमनु-

गच्छामि एवमनुस्मरामि स्वचित्ताधिष्ठान बोधिसत्त्वाना सर्वबुद्धधर्म इति। स्वचित्ताधिष्ठान सर्वबुद्धक्षेत्रपरिशुद्धि, स्वचित्ताधिष्ठान सर्वबुद्धबोधिसत्त्वचर्या, स्वचित्ताधिष्ठान सर्वसत्त्वपरिपाकविनय, स्वचित्ताधिष्ठान सर्वबोधिसत्त्वप्रणिधानाभिनिर्हार, स्वचित्ताधिष्ठान सर्वज्ञता नगरानुप्राप्ति, स्वचित्ताधिष्ठानमचिन्त्यबोधिसत्त्वविमोक्षविक्रीडनता, स्वचित्ताधिष्ठान बुद्धबोध्यभिसबोध, स्वचित्ताधिष्ठान समन्तधर्मधातुसमवसरणवृषभिताविकुर्वितम्, स्वचित्ता धिष्ठान सर्वकल्पसूक्ष्मसमवसरणज्ञानमिति॥

तस्य मम कुलपुत्र एव भवति—स्वचित्तमेवोपस्तम्भयितव्य सर्वकुशलमूलै। स्वचित्त मेव परिष्यन्दयितव्य धर्ममेघै। स्वचित्तमेव परिशोधयितव्यमावरणीयधर्मेभ्य। स्वचित्त मेव दृढीकर्तव्य वीर्येण। स्वचित्तमेव शमीकर्तव्य क्षान्त्या। स्वचित्तमेव प्रणयितव्य ज्ञानानुगमेषु। स्वचित्तमेवोत्तापयितव्य प्रज्ञया। स्वचित्तमेवाभिनिर्हर्तव्य वशिताषु। स्वचित्तमेव 10 विपुलीकर्तव्य बुद्धसमतायाम्। स्वचित्तमेवावभासयितव्य दशतथागतबलै। एतमह कुल पुत्र असङ्गव्यूहतथागतविमोक्ष जानामि आयूहामि निर्यूहामि। किं मया शक्य बोधिसत्त्वानामसङ्गचित्तानामसङ्गविहारगोचराणा प्रत्युत्पन्नसर्वबुद्धधर्मसमुखावस्थितसमाधिप्रतिलब्धानामपरिनिर्वाणकोटिगतसर्वबोधिमुखसमाधिप्रतिलब्धाना त्र्यध्वसमतानुप्राप्ताना समन्त तत्सभेदसमाधिगोचरविधिज्ञाना सर्वबुद्धक्षेत्रसुविभक्तशरीराणामसभिन्नबुद्धविषयविहारिणा 15 सर्वदिगभिमुखगोचराणामपराङ्मुखज्ञानमण्डलव्यवलोकनाना चर्या ज्ञातु गुणान् वा वक्तुम्, येषामात्मभावसर्वलोकधातुमवर्तविवर्ता प्रज्ञायते। न चैषामात्मनि लोकधातुषु वा द्वयसना प्रवर्तते॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे मिलस्फरण नाम जम्बूद्वीपशीर्षम्। तत्र सारध्वजो नाम भिक्षु प्रतिवसति। तमुपसक्रम्य परिपृच्छ—कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया 20 शिक्षितव्यम्, कथ प्रयोक्तव्यम्॥

अथ खलु सुधन श्रेष्ठिदारको मुक्तकस्य श्रेष्ठिन पादौ शिरसाभिवन्द्य मुक्तक श्रेष्ठिनमनेकशतसहस्रकृत्व प्रदक्षिणीकृत्य पुन पुनरवलोक्य मुक्तकस्य श्रेष्ठिनोऽसख्यान् गुणाननुदानयन् उपविचारयन्, अभिलपन्, अविजहन् रुदन् परिदेवन् कल्याणमित्र स्नेहजात कल्याणमित्रप्रतिशरण कल्याणमित्राराधणाभिमुख कल्याणमित्रज्ञानमविकोपयन् 25 कल्याणमित्राधीना सर्वज्ञता समनुपश्यन् कल्याणमित्रानुगताशय कल्याणमित्रोपायसाध्योप चार कल्याणमित्रचेतनावशवर्ती, मातृसज्ञी कल्याणमित्रेषु सर्वाहितपरिवर्जनतया, पितृसज्ञी कल्याणमित्रेषु सर्वकुशलधर्मसजननतया, मुक्तकस्य श्रेष्ठिनोऽन्तिकात्प्रक्रान्त॥ ६॥

---

## ९ सारध्वजः ।

अथ खलु सुधनः श्रेष्ठिदारकस्तामेव मुक्तकस्य श्रेष्ठिनोऽनुशासनीमनुविचिन्तयन्,
मुक्तकस्य श्रेष्ठिनोऽववादे प्रतिपद्यमानोऽचिन्त्यं बोधिसत्त्वविमोक्षमनुस्मरन्, अचिन्त्यं बोधि
सत्त्वज्ञानालोकमनुस्मरन्, अचिन्त्यं धर्मधातुप्रवेशावतारमनुगच्छन्, अचिन्त्यं बोधिसत्त्वसमव
5 सरणनयमवतरन्, अचिन्त्यं तथागतविकुर्वितमनुपश्यन्, अचिन्त्यं बुद्धक्षेत्रसमवसरणमधिमुच्य
मानः, अचिन्त्यं बुद्धाधिष्ठानव्यूहमनुमार्जन्, अचिन्त्यं बोधिसत्त्वसमाधिविमोक्षव्यवस्थानवृष
भितामवकल्पयन्, अचिन्त्यां लोकधातुसंभेदानावरणतामवगाहमानः, तस्यामचिन्त्यबोधिसत्त्व-
धर्मदृढाध्याशयतायां प्रतिपद्यमानः, तदचिन्त्यबोधिसत्त्वकर्मप्रणिधानस्रोतोऽनुकुर्वन्, अनुपूर्वेण
येन मिलस्फरणं जम्बूद्वीपशीर्षं तेनोपसंक्रम्य सारध्वजं भिक्षुं परिमार्गयन् अपश्यदन्यतर
10 स्मिन्नाश्रमे चङ्क्रमकोट्यां निषण्णं समाधिसमापन्नमनुश्वसन्तमनुप्रश्वसन्तमनिञ्जमानमस्य
मानमृजुकायं प्रतिमुखस्मृतिमचिन्त्येन समाधिविकुर्वितेन विकुर्वमाणं वामदक्षिणाभ्यामूर्ध्व
या अचिन्त्याप्रमाणानन्तकायमनवलोकितमूर्धानमनेकवर्णकायाप्रमेयवर्णविमात्रता चित्तक्षणे
चित्तक्षणे संदर्शयमानम्। तस्य तथा समापन्नस्य गम्भीरस्य शान्तस्य निरुद्भिञ्जितस्य निरा
रम्भस्य रोमाञ्चोर्ध्वकायस्य सर्वरोममुखेभ्योऽचिन्त्यं बोधिसत्त्वविमोक्षविकुर्वितं प्रवर्तयमान
15 मपश्यत्। येन विमोक्षमुखविकुर्वितेन स चित्तक्षणे चित्तक्षणे सर्वधर्मधातुं स्फरति अनन्त
नानाविकुर्वितविकल्पैः सर्वसत्त्वपरिपाकाय सर्वतथागतपूजाप्रयोगाय सर्वबुद्धक्षेत्रपरिशोध
नाय सर्वसत्त्वदुःखस्कन्धविनिवर्तनाय सर्वदुर्गतिमार्गसमुच्छेदाय सर्वसत्त्वसुगतिद्वारविवरणाय
सर्वसत्त्वक्लेशसंतापप्रशमनाय सर्वसत्त्वाज्ञानावरणविकिरणाय सर्वसत्त्वसर्वज्ञताप्रतिष्ठापनाय॥

तस्याथ क्रमतलाभ्यामसंख्येयबुद्धक्षेत्रपरमाणुरजःसमान् श्रेष्ठिगणान् नानोपस्थान
20 प्रत्युपस्थानान् सर्वलोकधातुपर्यापन्नश्रेष्ठिसदृशरूपातिरेकविषयप्राकारान् नानाभूषणविभूषित
शरीरान् विचित्रमौलिचूडामणिमकुटधरान् दारकबिम्बपरिवारान् निश्चरमाणानपश्यत्।
ब्राह्मणगृहपतींश्च सर्वान्नपानविधिभिः सर्वसाङ्गोपचारैः सर्वाभरणैः सर्ववस्त्रैः सर्वपुष्पैः सर्व
माल्यैः सर्वगन्धैः सर्वविलेपनैः सर्वकामोपचारैः सर्वरत्नैः सर्वायतनैः सर्वभाजनविधिभिः
सर्वोपकरणविधिभिः दरिद्रान् सत्त्वान् संगृह्णमाणान् दुःखित जगदाश्वासयमानान् सत्त्व
25 मनांसि परितोषयमाणान् सत्त्वाशयान् विशोधयमानान् सत्त्वान् बोधौ परिपाचयमानान्
दश दिशः स्फरित्वा गच्छतोऽपश्यत्॥

जानुमण्डलाभ्यां निश्चरित्वा क्षत्रियपण्डितरूपान् ब्राह्मणपण्डितरूपान् लोकपण्डित
रूपान् विविधशिल्पपण्डितरूपान् मनुष्यगतिपण्डितरूपान् लौकिकलोकोत्तरक्रियाविधि
ज्ञानपटुपण्डितरूपान् लोकाचार्यसंमतपण्डितरूपान् अनेकाकारवरूपान्[1] अनेकाकारसत्त्वा
30 नव्यूहान् मनोज्ञानि वचांस्युदीरयतो दुर्मनसः सत्त्वान् प्रहर्षयमाणान् धर्मधनपरिहीणान्
सत्त्वाननुगृह्णमाणान् दुःखितान् सत्त्वान् सुखयमानान् विनिपतितान् सत्त्वानभ्युद्धरमाणान्

[1] B °पट°

विपन्नयानपात्रान् सत्त्वानाश्वासयमानान् भीतान् सत्त्वान् परित्रायमाणान् कुशलमूलशब्द-मनुश्रावयमाणान् पापविनिवृत्तिशब्दमुदीरयमाणान् कुशलधर्मसमादापने सत्त्वान् विनि-योजयमानान् अर्थचर्यायां सत्त्वान् प्रतिष्ठापयमानान् प्रीतिवेगं संजनयमानान् प्रिय-वादितासंग्रहवस्तून्युदीरयमाणान् समानार्थतां च लोकस्योपदर्शयमानान् दश दिशः स्फरित्वा गच्छतोऽपश्यत् ॥ 5

नाभिमण्डलाद् सर्वसत्त्वान् सत्त्वजगच्छरीरसंस्थानान् अजिनचीवरवल्कलधरान् दण्डकाष्ठकुण्डिकागृहीतान्[1] नानारूपान् कल्पसंस्थानान् प्रशान्तेर्यापथान् ऋषिगणान्नि-श्चरित्वा उपर्यन्तरीक्षे बुद्धवर्णानुदीरयमानान् धर्मशब्दं संश्रावयमाणान् बुद्धघोषं निश्चारय-माणान् बोधिसत्त्वसंघं संदर्शयमानान् ब्रह्मचर्यं संप्रवर्णयमानान् गुप्तेन्द्रियतायां सत्त्वान्नियो-जयमानान् *निःस्वभावार्थं प्ररूपयमाणान् ज्ञानार्थे लोकं प्रतिष्ठापयमानान् लौकिकशास्त्र-* 10 विधिं प्रणयमानान् सर्वज्ञज्ञाननिर्याणमार्गविधिं प्रदर्शयमानान् अनुपूर्वक्रियायां सत्त्वान् प्रति-ष्ठापयमानान् दश दिशः स्फरित्वा गच्छतोऽपश्यत् ॥

द्वाभ्यां पार्श्वाभ्यां सर्वलोकप्रवृत्तिसंख्या अचिन्त्यानेकशरीरसंस्थाननागकन्या निश्चरित्वा अचिन्त्यं नागविकुर्वितं संदर्शयमानाः अचिन्त्यसुगन्धमेघालंकारगगनतलमधिष्ठ-माना अचिन्त्यपुष्पमेघालंकारैः सर्वगगनतलमलंकुर्वतीः अचिन्त्यमाल्यमेघालंकारैः सर्वमाका- 15 शधातुं व्यूहयमाना अचिन्त्यरत्नच्छत्रमेघालंकारैः सर्वधर्मधातुं संछादयमाना अचिन्त्यरत्नध्वज-मेघालंकारम् अचिन्त्यरत्नपताकामेघालंकारम् अचिन्त्यरत्नपताकाविचित्ररत्नाभरणमेघवर्षालंका-रम् अचिन्त्यानन्तमहामणिरत्नमेघप्रवर्षणालंकारम् अचिन्त्यरत्नहारविचित्रकुसुममेघप्रवर्षणा-लंकारम् अचिन्त्यरत्नासनपर्यङ्कनिषण्णबोधिसत्त्वबुद्धधर्ममेघप्रवर्षणालंकारम् अचिन्त्यदिव्य-रत्नाभरणमेघाप्सरोगणधर्मसंगीतिरुतघोषमेघप्रवर्षणालंकारम्, अचिन्त्यमुक्ताजालालंकृतरत्न- 20 पद्मोर्ध्वकेसरसर्वरत्नराजचूर्णमेघवर्षविकिरणालंकारम्, अचिन्त्यरत्नमकुटमेघसर्वमणिरत्नविभूषि-तानन्तरश्मिमेघप्रवर्षणालंकारम्, अचिन्त्यदेवकायमेघपुष्पमाल्यच्छत्रध्वजपताकालंकारम्, अचिन्त्याप्सरोमेघोन्नतकायकृताञ्जलिपुटसुवर्णपुष्पविकिरणप्रमुक्तपुटकोशसर्वतथागतगुणवर्ण-स्तुतिमेघनिगर्जितप्रवर्षणालंकारं गगनतलमधितिष्ठमाना: सर्वरत्नवर्णगन्धकूटमेघैरुदारधूप-पटलमेघैश्च सर्वतथागतपर्षन्मण्डलानि संछादयमानाः, सर्वलोकधातुप्रसरानलंकुर्वतीः 25 सर्वसत्त्वानि प्रहर्षयमाणाः सर्वबुद्धान् पूजयमानाः क्षणे क्षणे सर्वधर्मधातुं स्फरमाणाः सुधनः श्रेष्ठिदारकोऽपश्यत् ॥

उरसः श्रीवत्सादसंख्येयबुद्धक्षेत्रपरमाणुरजःसमानसुरेन्द्रान्निश्चरित्वा अचिन्त्यासुर-मायाविकुर्वितानि प्रदर्शयमानान्[2] महाजलधरान् संक्षोभयमाणान् लोकधातुशतसहस्राणि संप्रकम्पयमानान् सर्वशैलेन्द्राजान् संघट्टयमानान् सर्वदेवभवनानि संप्रकम्पयमानान्[3] 30

---

[1] B दण्डकमण्डलुगृहीतान् for दण्डकाष्ठकुण्डिका°. [2] S °प्राप्ति° for °शरीर°. [3] B adds दुश्चित्ताभिप्रायं प्रसादयमानान्.

सर्वमारमण्डलानि जिह्मीकुर्वाणान् सर्वमारसैन्यं प्रमर्दयमानान् सर्वलोकमदमानदर्पान् प्रभञ्जय-
मानान् प्रदुष्टचित्तान्निवार्य प्रसादयमानान्[1] विहिंसाचित्तान् प्रतिनिवारयमाणान् सत्त्वानामकुश-
लान् धर्मानुपशमयमानान् क्लेशपर्वतान् विकिरयमाणान् रणसंग्रामानुपशमयमानान् विविधा-
सुरमायाविकुर्वितविक्रीडिते सत्त्वान् संवेजयमानान् पापादुद्वेजयमानान् संसारादुत्त्रासय-
5 मानान् सर्वभवगतिभ्य उच्चाल्य अनिकेते निवेशयमानान् बोधिचित्ते सत्त्वान् प्रतिष्ठापय-
मानान् बोधिसत्त्वानां बोधिसत्त्वचर्यां विशोधयमानान् बोधिसत्त्वान् पारमितासु प्रतिष्ठापय-
मानान् बोधिसत्त्वभूमिषु अवतारयमाणान् बोधिसत्त्वानां बुद्धधर्मनयावभासं जनयमानान्
नानाधर्मनयव्यवस्थानैश्चित्तक्षणे चित्तक्षणे धर्मधातुं स्फरमाणानपश्यत् सुधनः श्रेष्ठिदारकः॥

पृष्ठवंशादसंख्येयबुद्धक्षेत्रपरमाणुरजःसमान् श्रावकप्रत्येकबुद्धकायान्निश्चरित्वा
10 श्रावकप्रत्येकबुद्धत्वेनाधिकानां सत्त्वानामात्माभिनिविष्टानां निरात्मतां निःसत्त्वतामुदीरय-
माणान् शाश्वताभिनिविष्टानां सर्वसंस्कारानित्यतां परिदीपयमानान् रागचरितानामशुभां
भावनां द्वेषचरितानां मैत्रीं मोहचरितानामिदंप्रत्ययताप्रतीत्यसमुत्पादमुदीरयमाणान् समभाग-
चरितानां ज्ञानविषयसंप्रयुक्तं धर्मनयमभिद्योतयमानान् विषयाभिरतानामनालयतां कथय-
मानान् शान्तौ निकेताशयतानां प्रणिधिविशेषमभिरोचयमानान् सर्वदिक्परिवर्तमुखेषु
15 सर्वधर्मनयसागरपरिवर्तमुखेषु सर्वसत्त्वार्थक्रियामभिद्योतयतो धर्मधातुं स्फरयमाणानपश्यत्
सुधनः श्रेष्ठिदारकः॥

अंसकूटाभ्यामसंख्येयबुद्धक्षेत्रपरमाणुरजःसमान् यक्षराक्षसेन्द्रान्निश्चरित्वा नाना-
संस्थानविकृतशरीरान् नानावर्णारोहपरिणाहान् नानेर्यापथविकल्पान् नानायानाभिरूढान्
नानापरिवारपरिवृतान् सत्त्वधातुपरिपालनप्रयुक्तान् नानाप्रभावभासप्रमुक्तान् नानाघोषनि-
20 र्घोषनिगर्जितान् नानोपायाभिनिर्हारैरसंभिन्नैः समन्ताद्दिग्विदिग्गगनं स्फरमाणान् सर्वसत्त्व-
कुशलचर्यारक्षायै सर्वार्यमण्डलारक्षायै सर्वबोधिसत्त्वपरिग्रहाय सर्वसम्यग्गतसम्यक्प्रतिपन्न-
परिपालनाय वज्रपाणिकर्मणा सर्वबुद्धोपस्थानपूजाविधानतायै, विनिपतितानां सत्त्वानां
सर्वापायगतिविनिवर्तनतायै, सर्वरोगकर्मव्याध्याद्युपद्रवभयोपशमनाय प्रयुक्तान् सत्त्वार्थ-
क्रियायोगपरिपालनोद्युक्तान् पुण्यज्ञानसंभारचक्रं परिपूरयमाणान् धर्मचक्रमनुप्रवर्तयमानान्
25 परवादिचक्रं निगृह्णमाणान् सर्वधर्मधातुं स्फरमाणान् सुधनः श्रेष्ठिदारकोऽपश्यत्॥

उदरादसंख्येयबुद्धक्षेत्रपरमाणुरजःसमान् किन्नरेन्द्रान् असंख्येयकिन्नरेन्द्रकन्या-
शतसहस्रपरिवारान् असंख्येयबुद्धक्षेत्रपरमाणुरजःसमांश्च गन्धर्वेन्द्रान् असंख्येयगन्धर्वेन्द्र-
कन्याशतसहस्रपरिवारान् निश्चरित्वा असंख्येयदिव्यतूर्यशतसहस्रसंगीतिसंप्रभणितधर्म-
स्वभावोपसंहितानि बुद्धस्तोत्राण्युदीरयमाणान् बोधिचित्तं परिदीपयमानान् बोधिसत्त्वचर्यां
30 संवर्णयमानान् सर्वाभिसंबोधिमुखान्यभिष्टवमानान् सर्वधर्मचक्रमुखान्यवगाहयमानान् सर्व-
विकुर्वितमुखान्यभिरोचयमानान् सर्वपरिनिर्वाणमुखानि परिदीपयमानान् सर्वबुद्धशासन-

[1] B om प्रदुष्ट प्रसादयमानान्.

मुखानि संपरिगृह्णमाणान् सर्वसत्त्वमुखानि संप्रहर्षयमाणान् सर्वबुद्धक्षेत्राणि परिशोधयमानान् सर्वधर्ममुखानि अभिद्योतयमानान् सर्वावरणमुखानि विनिवर्तयमानान् सर्वकुशलमूलमुखानि संजयमानान् धर्मधातुं स्फरयमाणान् सुधनः श्रेष्ठिदारकोऽपश्यत् ॥

मुखद्वारादसंख्येयबुद्धक्षेत्रपरमाणुरजःसमान् सप्तरत्नचतुरङ्गबलकायपरिवारान् चक्रवर्तिनो निश्चरित्वा महात्यागरश्मिव्यूहान् प्रमुञ्चमानान् सर्वरत्नाकरानुत्सृज्यमानान् सर्वमणिरत्नाकरान् विश्राणयमानान् दरिद्रान् सधनीकुर्वाणान् प्राणिवधाल्लोकं विनिवर्तयमानान् मैत्रीचित्ते सत्त्वान् संनियोजयमानान् अदत्तादानाद्विवेचयमानान् स्वलंकृतासंख्येयकन्याकोटीनियुतशतसहस्राणि प्रतिपादयमानान् काममिथ्याचाराद्विच्छन्दयमानान् ब्रह्मचर्ये प्रतिष्ठापयमानान् मृषावादाद्विनिवर्तयमानान् असंविवादपरमतायां नियोजयमानान्, पिशुनवचनाद्विनिवर्तयमानान् परमसंग्रहप्रयुक्तं वाचमुदीरयमानान् परुषवचनाल्लोकं विनिवर्तयमानान्, मनोज्ञश्लक्ष्णां वाचमुदीरयमाणान्, अनर्थाधर्मोपसंहितात्संभिन्नप्रलापात् सत्त्वान् विनिवर्तयमानान्, गम्भीरार्थपदप्रभेदविनिश्चये संनियोजयमानान्, सर्ववचनदोषेभ्यो लोकं विनिवर्तयमानान्, करुणावद्वाचमुदीरयमाणान्, हृदयमलं लोकेऽपहरणमाणान्, अल्पेच्छतासंतुष्टिपरमतायां सत्त्वान्नियोजयमानान्, व्यापादाल्लोकं विनिवर्तयमानान्, परसंततिप्रसादने संनियोजयमानान्, सर्वदृष्टिजालं लोके उद्धरमाणान्, सर्वविमतिप्रकारान् विकिरयमाणान्, सर्वसंदेहकूटान् प्रपातयमानान्, सर्वसंशयविचिकित्सातिमिरमपनयमानान्, धर्मप्रविचयं लोके प्रविभजमानान्, इदंप्रत्ययताप्रतीत्यसमुत्पादमुदीरयमाणान्, स्वभावसत्यनये सत्त्वान्नियोजयमानान्, सर्वावरणानि विनिवर्तयमानान्, अनावरणनयेऽवतारयमाणान्, बुद्धार्थनयमुद्योतयमानान्, दश दिशो धर्मधातुं स्फरमाणान् सुधनः श्रेष्ठिदारकोऽपश्यत् ॥

नयनाभ्यामसंख्येयबुद्धक्षेत्रपरमाणुरजःसमानि सूर्यमण्डलशतसहस्राणि निश्चरित्वा सर्वमहानिरयानवभासमानानि, महान्धकारं लोके विधमन्ति, मोहतिमिरं सत्त्वानामपनयमानानि, शीतनरकापायगतानां सत्त्वानां शीतदुःखं प्रशमयमानानि, मृण्मयेषु क्षेत्रेषु अवदातवर्णां प्रभां प्रमुञ्चमानानि, सुवर्णमयेषु क्षेत्रेषु वैडूर्यवर्णां प्रभां प्रमुञ्चमानानि, वैडूर्यमयेषु क्षेत्रेषु सुवर्णवर्णां प्रभां प्रमुञ्चमानानि, रूप्यमयेषु क्षेत्रेषु सुवर्णवर्णां प्रभां प्रमुञ्चमानानि, सुवर्णमयेषु क्षेत्रेषु स्फटिकवर्णां प्रभां प्रमुञ्चमानानि, स्फटिकमयेषु क्षेत्रेषु सुवर्णवर्णां प्रभां प्रमुञ्चमानानि, सुवर्णमयेषु क्षेत्रेषु मुसारगल्ववर्णां प्रभां प्रमुञ्चमानानि, मुसारगल्वमयेषु क्षेत्रेषु सुवर्णवर्णां प्रभां प्रमुञ्चमानानि, लोहितमुक्तामयेषु क्षेत्रेषु सुवर्णवर्णां प्रभां प्रमुञ्चमानानि, सुवर्णमयेषु क्षेत्रेषु लोहितमुक्तावर्णां प्रभां प्रमुञ्चमानानि, अश्मगर्भमयेषु क्षेत्रेषु सुवर्णवर्णां प्रभां प्रमुञ्चमानानि, सुवर्णमयेषु क्षेत्रेषु अश्मगर्भवर्णां प्रभां प्रमुञ्चमानानि, इन्द्रनीलमयेषु क्षेत्रेषु सूर्यगर्भमणिराजवर्णां प्रभां प्रमुञ्चमानानि, सूर्यगर्भमणिराजशरीरेषु क्षेत्रेषु इन्द्रनीलमणिराजवर्णां प्रभां प्रमुञ्चमानानि, लोहितमुक्तामयेषु क्षेत्रेषु चन्द्रांशुजालमण्डलगर्भमणिराजवर्णां प्रभां प्रमुञ्चमानानि, चन्द्रांशु-

जालमण्डलगर्भमणिराजशरीरेषु क्षेत्रेषु लोहितमुक्तावर्णां प्रभा प्रमुञ्चमानानि, एकरत्नमयेषु
क्षेत्रेषु नानारत्नवर्णां प्रभा प्रमुञ्चमानानि, नानारत्नमयेषु क्षेत्रेषु एकरत्नवर्णां प्रभा प्रमुञ्च
मानानि, एव सर्वबोधिसत्त्वपर्षन्मण्डलेषु अपरिमाणसत्त्वकार्यप्रयुक्तानि सर्वसत्त्वधर्मधातु
स्फरमाणान्यपश्यत् सुधन श्रेष्ठिदारक ॥

5 भ्रूविवरान्तरादूर्णाकोशादसख्येयबुद्धक्षेत्रपरमाणुरज समान् शशाङ्कायान्निश्चरित्वा
सर्वदेवेन्द्रानभिभवमानान्, कामरति सर्वलोके विनिवर्तयमानान्, बुद्धदर्शनरतिमनु
वर्तयमानान्, अपरिमाणसत्त्वविनयप्रयुक्तान् दश दिशो धर्मधातु स्फरमाणानपश्यत् ॥

ललाटादसख्येयबुद्धक्षेत्रपरमाणुरज समान् महाब्रह्मणो निश्चरित्वा प्रशान्तेर्यापथान्
ब्रह्मघोषमुदीरयमाणान् सर्वबुद्धानध्येष्यमाणान् सर्वबुद्धानभिष्टुवमानान् सर्वबोधिसत्त्वान्
10 प्रहर्षयमाणान् अपरिमाणसत्त्वकार्यप्रयुक्तान् दश दिश सर्वधर्मधातु स्फरमाणान् सुधन
श्रेष्ठिदारकोऽपश्यत् ॥

शिरस्तोऽसख्येयबुद्धक्षेत्रपरमाणुरज समान् बोधिसत्त्वान्निश्चरित्वा नानावर्णसस्थान
विभूषितशरीरता सदर्शयमानान् अनुव्यञ्जनविचित्रगात्रता प्रभावयमानान् अनन्तमध्यप्रभा
मण्डलमेघान् प्रमुञ्चमानान् सर्वबुद्धाना पूर्वबोधिसत्त्वचर्यामारभ्य दायकप्रतिग्राहकवस्तुपरि
15 त्यागप्रकारमेघान् सर्वरोमविवरेभ्यो निश्चारयमाणान् नानापारमितासप्रयुक्तान् पूर्वयोगसमुद्रान्
सदर्शयमानान् दानचर्यां लोकस्य सवर्णयमानान् मात्सर्यमल विनिवर्तयमानान् सर्वप्राह्यो
त्सर्गे सत्त्वान्नियोजयमानान्, विचित्रसर्वरत्नालकारालकृत लोकमधितिष्ठमानान्, दानपार
मिताया सत्त्वान् प्रतिष्ठाप्य परिष्कारवशिताया प्रतिष्ठापयमानान्, सर्वलक्षणगुणान्
सवर्णयमानान्, बुद्धलक्षणसभवे हेतुमुपदिश्यमानानपश्यत् । असख्येयबुद्धक्षेत्रपरमाणुरज
20 समाश्च बोधिसत्त्वान्निश्चरित्वा शीलपारमिता सवर्णयमानान्, सर्वबुद्धाना शीलपारमिता
सप्रयुक्तान् पूर्वयोगसमुद्रान् सर्वरोमविवरेभ्य सदर्शयमानान्, सर्वसत्त्वान् सर्वलोकगति
विषयेभ्यो विमुखीकृत्य तथागतविषयाभिमुखीकुर्वाणान्, कामलोक विजुगुप्समानान्, विषया
सपटल लोके विकिरमाणान्, वितर्कपरिकल्पान् प्रशमयित्वा बोधिसत्त्वशीले सनियोजय
मानान्, महाकरुणाशील सवर्णयित्वा तथागतशीलप्रतिलम्भाय बुद्धमार्गप्रतिपत्तिशीले सत्त्वान्
25 प्रतिष्ठापयमानान्, स्वप्नोपमा भवगति सत्त्वाना प्रभावयित्वा स्वप्नविधिसमवसरणतायै विषय
परिग्रहक्लेशवशिताया सत्त्वान् प्रतिष्ठापयमानानपश्यत् । असख्येयबुद्धक्षेत्रपरमाणुरज समाश्च
बोधिसत्त्वान्निश्चर्य सुवर्णवर्णच्छविता लोकेऽभिद्योतयमानान्, अक्रोधानुपायासतायामखिल
दुष्टचित्तप्रतिहतचित्ताया सत्त्वान् प्रतिष्ठापयमानान्, सर्वतिर्यग्योनिगतिसमुच्छेदाय
सर्वरोममुखेभ्य क्षान्तिपारमितासप्रयुक्तान् तथागतपूर्वयोगमेघान्निश्चारयमाणान्, क्षान्ति
30 बले सत्त्वान् प्रतिष्ठापयमानान्, धर्मवशिताया सत्त्वानवभासयमानानपश्यत् । असख्येय
बुद्धक्षेत्रपरमाणुरज समाश्च बोधिसत्त्वान्निश्चर्य अनन्तबोधिसत्त्ववीर्यबल सदर्शयमानान्, सर्व-

१ B निश्चर्य

इतारम्भाविवर्त्यवल्येन सर्वसत्त्वश्रुतसागरपर्येष्टिपरिखेदता संवर्णयमानान्, सर्वतथागतपूजोप-
स्थाने सत्त्वान्नियोजयमानान्, सर्वदुःखस्कन्धविनिवर्तनमहावीर्यारम्भे सत्त्वान् प्रतिष्ठापय
मानान्, वीर्यपारमिताप्रतिसंयुक्तान् पूर्वयोगमेघान् सर्वशरीरान्निश्चारयमाणान्, बोधिसत्त्व-
वीर्यपारमिताचर्यां संदर्शयमानान्, कौसीद्यपर्वतान् सत्त्वानां विकिरमाणान्, वीर्यपार-
मितायां सत्त्वान् प्रतिष्ठापयमानान्, कर्मवशितायां लोकं विनियोजयमानान् अधिष्ठान- 5
प्रयुक्तानपश्यत् । असंख्येयबुद्धक्षेत्रपरमाणुरजःसमांश्च बोधिसत्त्वान्निश्चरित्वा बोधिसत्त्वानु-
स्मृतिपथे सत्त्वान् प्रतिष्ठापयमानान्, सर्वावरणनिवरणतिमिरं विधमयमानान्, सर्वमद
प्रमादात् सत्त्वान् विनिवर्तयमानान्, अप्रमादधर्मे प्रतिष्ठापयमानान्, स्तम्भसंरम्भमानध्वजान्
प्रपातयमानान्, बुद्धध्यानाङ्गसागरमुदीरयमाणान्, ध्यानपारमितां लोके संवर्णयमानान्,
ध्यानपारमिताप्रतिसंयुक्तान् पूर्वयोगमेघान् सर्वरोमविवरेभ्यो निश्चारयमाणान्, चित्तवशि- 10
तायां सत्त्वान् प्रतिष्ठापयमानान्, क्षणे क्षणे धर्मधातुं स्फरमाणानपश्यत् । असंख्येय-
बुद्धक्षेत्रपरमाणुरजःसमांश्च बोधिसत्त्वान्निश्चरित्वा बुद्धधर्मपर्येष्टिसंप्रयुक्तान् पूर्वयोगमेघान्
सर्वरोमविवरेभ्यो निश्चारयमाणान्, सर्वस्वराङ्गसागररुतैः प्रज्ञापारमितामेघान्निगर्जमानान्,
सम्यग्दृष्टिविद्युतं निश्चारयमाणान्, धर्मस्वभावरुतघोषान् रवमाणान्, आत्मदृष्टिपर्वतकूटानि
सत्त्वानां प्रदार्यमाणान्, सर्वदृष्टिशल्यान्युद्धरमाणान्, काङ्क्षाविमतिविचिकित्सातिमिरं विधम- 15
मानान्, अधिमुक्तिवशितां संवर्णयमानान्, चित्तक्षणे चित्तक्षणे धर्मधातुं स्फरमाणा-
नपश्यत् । असंख्येयबुद्धक्षेत्रपरमाणुरजःसमांश्च बोधिसत्त्वान्निश्चरित्वा सर्वबुद्धोपायकौशल्यनय-
मण्डलं प्रभावयमानान्, उपायकौशल्यप्रतिसंयुक्तान् पूर्वयोगमेघान् सर्वरोमविवरेभ्यो निश्चारय
माणान्, उपायकौशल्यचर्यां लोके प्रभावयमानान्, महायाननिर्याणमभिद्योतयमानान्,
सर्वबुद्धमण्डलं संवर्णयमानान्, संसारनिर्वाणासंभिन्नां बोधिसत्त्वचर्यां संवर्णयमानान्, दर्श- 20
यमानान्, बोधिसत्त्वोपायकौशल्यपारमितायां सत्त्वान् प्रतिष्ठापयमानान्, सर्वबोधिसत्त्वो-
पपत्तिवशितामण्डलं लोके निदर्शयमानान्, चित्तोत्पादे धर्मधातुं स्फरमाणानपश्यत् ।
असंख्येयबुद्धक्षेत्रपरमाणुरजःसमांश्च बोधिसत्त्वान्निश्चरित्वा सर्वतथागतनामसमुद्रमेघान् सर्वरोम
विवरेभ्यो निर्गर्जमानान्, सर्वबोधिसत्त्वप्रणिधानपारमितापरिशुद्धिसंप्रयुक्तान् पूर्वयोगमेघान्
सर्वरोममुखमण्डलेभ्यः प्रमुञ्चमानान्, प्रणिधानपारमितां संवर्णयमानान्, सर्वबोधिसत्त्ववशि- 25
तासु सत्त्वान् प्रतिष्ठापयमानान्, अपरान्तकोट्याविद्धं महाप्रणिधानरयचक्रं सर्वधर्मानुसरणं
सर्वक्लेशविनिवर्तनमज्ञानपर्वतविकिरणं लोके प्रभावयमानान्, नानाप्रणिधानविकुर्वितैश्चित्त
क्षणे चित्तक्षणे धर्मधातुं स्फरमाणानपश्यत् । असंख्येयबुद्धक्षेत्रपरमाणुरजःसमांश्च बोधि-
सत्त्वान्निश्चरित्वा बोधिसत्त्वबलमवभासयमानान्, बोधिसत्त्वबलपरिनिष्पत्तिरुतं प्रमुञ्चमानान्,
बलपारमितापरिनिष्पत्तिसमवसृतपूर्वयोगमेघान् सर्वरोमविवरेभ्यो निश्चारयमाणान्, सर्वमारपर- 30
प्रवादिननमुचिबलं संदर्शयमानान्, सर्वचक्रवालवज्रपर्वतशरीरोपनिपाताभेद्यबलं प्रभावय

१ B ज्ञानवशिता

मानान्, सर्वकल्पोदाहाभिसागरसनासशरीरानुद्द्योतबल सदर्शयमानान्, गगनतले सर्वलोक-
धातुप्रसरपाणितलसधारणबलता सदर्शयमानान्, चित्तक्षणे चित्तक्षणे ऋद्धिवशिताया
सत्त्वान् प्रतिष्ठापयमानान् धर्मधातुस्फरणाप्रतिप्रस्रब्धानपश्यत् । असङ्ख्येयबुद्धक्षेत्रपरमाणुरज -
समाश्च बोधिसत्त्वान् निश्चरित्वा सत्त्वाना ज्ञानमण्डल द्योतयमानान्, ज्ञानपारमितापरिशुद्धि-
5 सप्रयुक्तान् पूर्वयोगमेघान् सर्वरोमविवरेभ्य प्रमुञ्चमानान्, सर्वबुद्धगुणज्ञानाभिज्ञावतीं ज्ञान
भूमिं लोके प्रभावयमाणान्, सर्वबुद्धसज्ञाभिज्ञावतीं ज्ञानभूमिं सदर्शयमानान्, सर्वप्रणिध्यभि
निर्हाराभिज्ञानाभिज्ञावतीं ज्ञानभूमिं परिदीपयमानान्, सर्वसत्त्वसग्रहप्रणिध्यभिनिर्हारज्ञाना
भिज्ञावतीं ज्ञानभूमिं निर्यापयमानान्, सर्वसत्त्वनैरात्म्यास्वभावावताराभिज्ञावतीं ज्ञानभूमिं
निरूपापयमानान्, सर्वसत्त्वचित्तसागरव्यवलोकनाभिज्ञावतीं ज्ञानभूमिं प्रकाशयमानान्,
10 सर्वसत्त्वेन्द्रियविचयज्ञानाभिज्ञावतीं ज्ञानभूमिं प्रविभजमानान्, सर्वसत्त्वाशयाधिमुक्तिव्यव
लोकनज्ञानाभिज्ञावतीं ज्ञानभूमिं सवर्णयमानान्, सर्वसत्त्वकर्मसागरावताराभिज्ञावतीं ज्ञानभूमिं
निवरमाणान्, सर्वसत्त्वप्रणिधानसागरावतारज्ञानाभिज्ञावतीं ज्ञानभूमिं सदर्श्य ज्ञानपारमिताया
सत्त्वान् प्रतिष्ठापयमानान्, चित्तक्षणे चित्तक्षणे धर्मधातु स्फरमाणान् सुधन श्रेष्ठि
दारकोऽपश्यत् ॥

15 मूर्धत उष्णीषविवरादसङ्ख्येयबुद्धक्षेत्रपरमाणुरज समास्तथागतविग्रहान् वरलक्षणा-
नुव्यञ्जनविशुद्धपल्कारान् प्रतप्तजाम्बूनदकनकपर्वतनिर्भासान् सर्वदशदिक्प्रतापनाप्रमाण
दीप्तप्रभामण्डलधर्मधातुनयस्फरणघोषान् अनन्तमध्यबुद्धनिर्वर्तितसदर्शनान् सर्वजगद-
सभिन्नधर्ममेघानभिप्रवर्षमाणान्, यदुत बोधिमण्डवरगताना बोधिसत्त्वाना समन्तधर्मधातु-
तलभेदाभिमुखज्ञानमेघ नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, अभिषेकप्राप्ताना बोधिसत्त्वाना
20 समन्ततलमेघ नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, महाधर्मयौवराज्याभिषिक्ताना बोधिसत्त्वाना
समन्तमुखप्रवेश नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, कुमारभूताना बोधिसत्त्वाना समन्तव्यूह
नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, अविवर्त्याना बोधिसत्त्वाना महाकरुणादृढकूट नाम धर्म
मेघवर्षमभिप्रवर्षमाणान्, शुद्धाध्याशयाना बोधिसत्त्वाना सर्वधर्मस्वभावभेदज्ञानचक्र नाम
धर्ममेघवर्षमभिप्रवर्षमाणान्, पूर्वयोगसपन्नाना बोधिसत्त्वाना समन्तजगत्सग्रहव्यूह नाम धर्म-
25 मेघवर्षमभिप्रवर्षमाणान्, जन्मजाना बोधिसत्त्वाना त्र्यध्वतथागतपर्षन्मण्डलाभिमुखविज्ञप्तिमेघ
नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, योगाचाराणा बोधिसत्त्वाना सर्वधर्मस्वभावतलनिर्घोष
नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, आदिकर्मिकाणा बोधिसत्त्वाना महाकरुणानयोपायगर्भ
मेघसभव नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, प्रथमचित्तोत्पादिकाना बोधिसत्त्वाना प्रमह
कोशोपचयगर्भ नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, उदाराधिमुक्तिकाना बोधिसत्त्वानामक्षय-
30 विमोक्षतथागतप्रणिधिप्रग्रहकोश नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, रूपावचराणा सत्त्वाना
समन्ततलाक्षयकोश नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, ब्रह्मकायिकाना देवानामप्रमाणनय-

---

1 B om आदि प्रतिष्ठापयमानान्

सागरनिगर्जितघोषं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, वशवर्तिनां देवानां बलसंभवधर्मोपकरणाक्षयकोशं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, मारकायिकानां देवानां चित्रध्वजसर्वज्ञतासभारसंमार्जनघोषं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, निर्माणरतीना देवानां ज्ञानरत्नविचित्रधुरं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, तुषितानां देवानां बोधिसत्त्वप्रणिधिविचित्रध्वजं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, यामानां देवानां सर्वतथागतानुस्मृतिकोशं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, शक्रदेवेन्द्रभवनेषु तथागतदर्शनप्रीतिवेगसंभवं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, यक्षेन्द्रभवनेषु धर्मधातुगगनतथागतविकुर्वितस्फरणमेघं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, गन्धर्वेन्द्रभवनेषु सर्वतथागतधर्मसंगीतिनिर्घोषं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, असुरेन्द्रभवनेषु ज्ञाननयचक्रमण्डलं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, गरुडेन्द्रभवनेषु सर्वतथागतसंभवोपायमेघं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, किन्नरेन्द्रभवनेषु सर्वधर्ममेघसंगीतिनिर्घोषं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, नागेन्द्रभवनेषु बोधिसत्त्वविकुर्वितनिर्घोषभवगत्युद्वेगसमवं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, महोरगेन्द्रभवनेषु प्रीतिसागरविवर्धनवेगं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, मनुष्यलोकेषु सर्वजगद्विशेषज्ञानविषयं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, नरकलोकेषु सर्वसंसारदुःखप्रशान्तिनिर्घोषापायमार्गवचनाधारालंकारं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, तिर्यग्योनिषु अनवद्यकर्मपथप्रतिपत्तिनिर्घोषतथागतानुस्मृतिमेघमण्डलशरीरं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, यमलौकिकेषु सर्वतथागतपारमितानिर्नादसर्वसत्त्वत्यागचित्तसंभवं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्[1], विनिपतितेषु सत्त्वेषु सर्वदुःखोपशमप्रतिलाभसमाश्वासनस्वरनिर्घोषं नाम धर्ममेघवर्षमभिप्रवर्षमाणान्, सर्वधर्मधातुं स्फरमाणान् सुधनः श्रेष्ठिदारकोऽपश्यत् ॥

सर्वरोममुखेभ्यश्च एकैकस्माद्रोमविवरादसंख्येयबुद्धक्षेत्रपरमाणुरजःसमानि रश्मिजालमण्डलानि निश्चरित्वा असंख्येयवर्णरूपावर्तव्यूहान् असंख्येयविचित्रकार्यप्रत्युपस्थानानि दश दिशो धर्मधातुं स्फरमाणान्यपश्यत् । यदुत कुतश्चिद्रोममुखरश्मिजालमण्डलाद्विमलदानचर्यासर्वस्वपरित्यागविकुर्वितमपश्यत् । कुतश्चिद्रोममुखरश्मिजालमण्डलात्सर्वबोधिसत्त्वशीलव्रतसमादानाकल्पमण्डलविकुर्वितमपश्यत् । कुतश्चिद्रोममुखरश्मिजालमण्डलात्सर्वबोधिसत्त्वक्षान्तिचर्यापर्यन्तप्राप्तानां बोधिसत्त्वानां हस्तपादोत्तमाङ्गच्छेदाधिवासनविकुर्वितं पाणिदण्डशस्त्रशरीरोपनिपाताधिवासनविकुर्वितं सर्वशरीरभेदनहृदयनयनोद्धरणाधिवासनविकुर्वितमपश्यत् । येऽप्यन्यैरप्रमाणबोधिसत्त्वविकल्पितान्मारैः सर्वजगतधर्मपर्येष्टिनिदानं सर्वपापिकानेनविप्रपीडितान्यङ्गप्रत्यङ्गच्छेदनानि महाकरुणाप्रपीडितैरधिवासितानि मर्दितानि अप्युपेक्षितानि, तान्यपि सर्वबोधिसत्त्वक्षान्तिचर्याविकुर्वितप्रतिबिम्बरूपाण्यपश्यत् । पुनश्चिद्रोममुखरश्मिजालमण्डलात्सर्वबोधिसत्त्ववीर्यचर्याभियानानाविक्रमरूपाण्यनेकानागमनपुरस्थानि बोधिसत्त्वविकुर्वितानि लोकधातुगमनागमनशोभनसुरनरजनदर्शनीयगमन-

---

१ B निर्वं

मारमण्डलविद्रावणधर्मदिग्द्योतनमहाबोधिसत्त्वविक्रमविकुर्वितान्यपश्यत् । कुतश्चिद्रोममुखरश्मि-
जालमण्डलाद् यानि सर्वबोधिसत्त्वचर्यानिरूपणानि यान्यात्मभावोपादानानि ये कुलोपपत्तिपरि-
ग्रहाय रूपकाय परिनिष्पत्तये ये कल्याणमित्रानुशासनीपरिग्रहाः, यानि कल्याणमित्रोपदेशप्रति-
पत्तिस्थानानि, यानि तथागतध्यानाङ्गपरिनिष्पत्त्यनुरूपविहारभवनविमानजनपदगिरिकन्द-
5 राणि, यानि ऋषिशरीराणि, यैस्तानि ध्यानाङ्गानि निष्पादितानि, यानि नृपाधिपत्यानि, यानि
नैष्क्रम्यमुखानि, ये व्रतसमादानाकल्पेर्यापथाः, तत्सर्वं सुधनः श्रेष्ठिदारकोऽपश्यत् ॥

कुतश्चिद्रोममुखरश्मिजालमण्डलात् प्रज्ञापारमिताचर्याविहारसर्वधर्मपर्येष्टिसंप्रयुक्तान्
कायपरिग्रहानपश्यत् । यैः कायैरेकैकंधर्मपदं सर्वास्तिपरित्यागितया सर्वसत्त्वानामन्तिका-
त्पर्येषितं सर्वोपस्थानपरिचर्यासर्वकल्याणमित्रसकाशात्पर्येषितं श्रद्धागौरवनिर्जातेन च काय-
10 प्रमाणेन तथागतसकाशात्पर्येषितम्, यथा चैकत्वं धर्मपदं तथा सर्वधर्मपदानि प्रज्ञापारमिता-
प्रतिसंयुक्तानि यानि सर्वजगदुपपत्तिप्रतिभासैः कायैः पर्येषितानि, तत्सर्वं सुधनः श्रेष्ठि-
दारकः एकैकस्माद्रोममुखरश्मिजालमण्डलादपश्यत् । कुतश्चिद्रोममुखरश्मिजालमण्डलात्सर्व-
बोधिसत्त्वपरिपाकोपायसत्त्वगतिसमुद्रप्रसरितान् सर्वसत्त्वसंग्रहप्रयोगानपश्यत् । एकैकं च
सत्त्वं सर्वसत्त्वकायसदृशैरात्मभावोपचारमुखैः पूर्वात्मभावोपादानैरुपायकौशल्यचर्याप्रयुक्तैः
15 संगृह्यमाणं तत एकैकस्माद्रोममुखरश्मिजालमण्डलादपश्यत् । कुतश्चिद्रोममुखरश्मिजाल-
मण्डलात् या भगवतः पूर्वसर्वकल्पप्रणिध्यभिनिर्हारचर्या सर्वसत्त्वपरिपाकप्रणिध्यभिनि-
र्हारचर्या सर्वक्षेत्रपरिशुद्धिप्रणिध्यभिनिर्हारचर्या, यानि च सर्वप्रणिध्यभिनिर्हारमण्डलानि
तेषु तेषु तथागतपादमूलेषु अभिनिर्हृतानि सर्वसंसारदोषाणां तस्य तस्य संसारदोषस्य
प्रतिपक्षेण, तत्सर्वं सुधनः श्रेष्ठिदारकस्तत एकैकस्माद्रोममुखरश्मिजालमण्डलादपश्यत् ।
20 कुतश्चिद्रोममुखरश्मिजालमण्डलात्सर्वबलपारमिताचर्यासंप्रयुक्तान् पूर्वयोगसमुद्रानपश्यत् ।
कुतश्चिद्रोममुखरश्मिजालमण्डलात्सर्वज्ञानचर्याविचारसंप्रयुक्तानज्ञाननिद्राप्रसुप्तसत्त्वप्रबोधन-
शरीरान् पूर्वयोगसमुद्रानपश्यत् ॥

अथ खलु सुधनः श्रेष्ठिदारकः सारध्वजं भिक्षुं तथा समाहितमुपनिध्यायन्त-
मुपपरीक्षमाणः, तत्समाधिविमोक्षमण्डलमनुस्मरन्, तामचिन्त्यां बोधिसत्त्वसमाधिवृषभिता-
25 मनुविचिन्तयन्, तमचिन्त्यं सत्त्वार्थनयसागरमवतरन्, तदचिन्त्यं समन्तस्रोताभिमुखव्यूहा-
भिसंस्कारमुखमनुसरन्, अधिमुच्यमानः, तद्धर्मधातुव्यूहविशुद्धिज्ञानमुखमवतरन्, तद्बुद्धा-
धिष्ठानं संप्रतीच्छन्, ज्ञानं निस्तीरयमाणः, तद्बोधिसत्त्ववशिताबलं संजनयन्, तद्बोधि-
सत्त्वप्रणिधिबलं दृढीकुर्वाणः, तद्बोधिसत्त्वचर्याबलं विस्तारयन्, सारध्वजस्य भिक्षोः
पुरतः एकमपि रात्रिंदिवमतिनामयति, द्वावपि, सप्तापि रात्रिंदिवानि पुरतोऽतिनामयति,
30 अर्धमासमपि, मासद्वयमपि, यावत् षडपि मासान् षड् वा रात्रिंदिवानि सारध्वजस्य भिक्षोः
पुरतोऽतिनामयति । ततः षण्णां मासानां षण्णां च रात्रिंदिवानामत्ययेन सारध्वजो
भिक्षुस्तस्मात्समाधेर्व्युत्थितः । सुधन आह—आश्चर्यं बतेदम्, आर्य, यावद्गम्भीर एष

समाधिः। यावद्विपुलो यावदप्रमाणविषयो यावदचिन्त्यविकुर्वितव्यूहः यावदतुल्यालोकः यावदसंख्येयव्यूहः यावदसंहार्यगोचरः यावदसंभिन्नविषयः यावत्समदिग्विरोचनः यावदप्रमाणसत्त्वार्थप्रयोग एष समाधिः, यत्र हि नाम एवं सर्वसत्त्वानामपरिमाणदुःखस्कन्धव्युपशमाय प्रत्युपस्थितः, [1]यदुत दारिद्र्यदुःखस्कन्धव्युपशमार्थेन प्रत्युपस्थितः। नरकगतिव्युपच्छेदनार्थेन तिर्यग्योनिगतिपरित्राणार्थेन सर्वाक्षणगतिद्वारपिथनार्थेन स्वर्गगत्युपनयनार्थेन देवमनुष्यरतिसुखसंभवार्थेन ध्यानविषयरत्यनुभवार्थेन संस्कृतावचरसुखसंवर्धनार्थेन त्रैधातुकनिःसरणसुखसंदर्शनार्थेन प्रत्युपस्थितः। बोधिचित्तसंभवहेतुपरिदीपनार्थेन प्रत्युपस्थितः। पुण्यज्ञानसंभारसंभवहेतुसंवर्धनार्थेन विपुलमहाकरुणावेगविवर्धनार्थेन महाप्रणिधानबलसंजननार्थेन बोधिसत्त्वमार्गावभासप्रतिलम्भार्थेन महापारमितायानव्यूहार्थेन महायानविशेषावताराभिनिर्हारार्थेन समन्तभद्रचर्याज्ञानावलोकार्थेन बोधिसत्त्वभूमिज्ञानालोकप्रतिलाभार्थेन सर्वबोधिसत्त्वप्रणिधिचर्यानिर्याणव्यूहविशुद्धिसमुदागमार्थेन सर्वज्ञविषयाक्रमणाधिष्ठानार्थेन प्रत्युपस्थितः। को नाम आर्य एष समाधिः? आह—अस्ति कुलपुत्र, समन्तचक्षुरुपेक्षाप्रतिलब्धा नाम प्रज्ञापारमिता। तदालोक एष समाधिः समन्तमुखविशुद्धिव्यूहो नाम। एतस्य कुलपुत्र समन्तचक्षुरुपेक्षाप्रतिलब्धप्रज्ञापारमितालोकनिर्जातस्य समन्तमुखविशुद्धिव्यूहस्य समाधेः सुभावितत्वात्समन्तमुखविशुद्धिव्यूहपूर्वंगमानि परिपूर्णानि दश समाध्यसंख्येयशतसहस्राण्याजायन्ते। आह—एतावत्परमः आर्य अस्य समाधेर्विषयः? आह—एतं कुलपुत्र समाधिं समापन्नस्य अधिष्ठानं लोकधातुविज्ञप्तिषु। अधिष्ठानं लोकधात्ववतारेषु। अधिष्ठानं लोकधातुविक्रमेषु। अधिष्ठानं लोकधातुप्रतिमण्डलेषु। अधिष्ठानं लोकधातुपरिकर्मसु। अधिष्ठानं लोकधातुपरिशोधनेषु। अधिष्ठानं बुद्धदर्शनविज्ञप्तिषु। अधिष्ठानं बुद्धमाहात्म्यप्रत्यवेक्षायाम्। अधिष्ठानं बुद्धविकुर्वितज्ञानतायाम्। अधिष्ठानं बुद्धबलावतारानुगमेषु। अधिष्ठानं बुद्धगुणसमुद्रावतरणतासु। अधिष्ठानं बुद्धधर्ममेघसंप्रतीच्छनतासु। अधिष्ठानं सर्वबुद्धधर्मचक्रप्रवर्तनासंभेदज्ञानानुगमेषु। अधिष्ठानं बुद्धपर्षण्डलसमुद्रावतरणावगाहनतासु। अधिष्ठानं दशदिक्प्रवेशानुसरणतासु। अधिष्ठानं बुद्धधर्मदेशनानुविलोकनेषु। अधिष्ठानं बुद्धदिगनुलोकनतासु। अधिष्ठानं महाकरुणादिगविजहनतासु। अधिष्ठानं मैत्रीदिक्स्फरणतासु। अधिष्ठानं बुद्धदर्शनदिगवतारातृप्तिषु। अधिष्ठानं सर्वसत्त्वसमुद्रावतारानुगमेषु। अधिष्ठानं सर्वसत्त्वेन्द्रियसमुद्रज्ञानानुगमेषु। अधिष्ठानं सर्वसत्त्वेन्द्रियसभेदज्ञानेषु। एतमहं कुलपुत्र प्रज्ञापारमिताविहारं जानामि। किं मया शक्यं प्रज्ञापारमिताविहारसागरावतीर्णानां धर्मधातुविषयमतिविशुद्धानां सर्वधर्मगत्यनुसृतिज्ञानिनां विपुलबुद्धप्रमाणविषयस्फरणानां महाधारण्यवभासवशवर्तिनां सर्वसमाधिमण्डलालोकसुपरिशुद्धानामभिज्ञाविकुर्वितवृषभितानिर्यातानामक्षयप्रतिसंवित्सागरावतीर्णानां भूमिगर्भमधुरनिर्घोषाणां सर्वजगत्प्रतिशरणभूतानां बोधिसत्त्वानां चर्यां ज्ञातुम्, गुणान् वा वक्तुम्, गोचरो वा निदर्शयितुम्,

[1] B om. यदुत...प्रत्युपस्थितः.

विषयो वा प्रभावयितुम्, महाप्रणिधानबलं वा संवर्णयितुम्, निर्याणमुखं वा अवभासयितुम्, समुदागमो वा अभिद्योतयितुम्, मार्गं वा परिदीपयितुम्, समाधिस्रोतो वा अनुसर्तुम्, चित्तविषयो वा ज्ञातुम्, ज्ञानं वा समता वा अवगन्तुम् ॥

गच्छ कुलपुत्र इहैव दक्षिणापथे समुद्रवेताडी नाम प्रत्युदेशः । तत्र समन्तव्यूहं 5 नामोद्यानं महाप्रभस्य नगरस्य पूर्वेण । तत्र आशा नामोपासिका प्रतिवसति सुप्रभस्य मनुजेन्द्रस्य भार्या । तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रयोक्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारकस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः सारध्वजस्य भिक्षोरन्तिकादात्तसारः उपजीवितधर्मा अवतीर्णसमाधिविषयो लब्धालोकाव-10 भासितज्ञानः समाध्यवभासप्रतिलब्धः अधिमुक्तिविशुद्ध्यनुगतधर्मनयालोकानुगतचेतनः विशुद्धिमुखानुगतालोको दिगालोकप्रसृतज्ञानः सारध्वजस्य भिक्षोः पादौ शिरसाभिवन्द्य अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य सारध्वजं भिक्षुमवलोक्य प्रणिपत्य पुनः पुनरवलोकयन् अभिविलोकयन् निपतन् प्रणिपतन् नमस्यन् अवनमन् मनसिकुर्वंश्चिन्तयन् भावयन् परिभावयन् उदानमुदानयन् हाकारं कुर्वन् गुणानभिमुखीकुर्वन् अनुगमयन् 15 अनुस्मरन् अनुस्मारयन् दृढीकुर्वन् अविजहन् मनसा आगमयन् उपनिबध्नन् प्रणिधिं समवसरन् दर्शनमभिलषन् स्वरनिमित्तमुद्गृह्णन् धारयन्[1] धारणानुगतचित्तो वर्णसंस्थानमनुस्मरन् ज्ञानविशेषमनुविचिन्तयन् समाधिविषयं समवतरन् प्रणिधिविषयमनुप्रबन्धन् गोचरविषयं विचारयन् ज्ञानावभासं संप्रतीच्छन् सारध्वजस्य भिक्षोरन्तिकात्प्रक्रान्तः ॥ ७ ॥

---

[1] S adds अनुगमगतिर्नाम संधारणा°.

## १० आशा ।

अथ खलु सुधनः श्रेष्ठिदारकः कल्याणमित्रगुणाराधितः कल्याणमित्रसंप्रेषितः
कल्याणमित्रदर्शनावेशाविष्टः कल्याणमित्रानुशासनीं प्रतिपद्यमानः, कल्याणवचनान्यनुस्मरन्,
कल्याणमित्रानुगतप्रेमा कल्याणमित्राण्याकरं बुद्धदर्शनं संपश्यन्, कल्याणमित्राणि बुद्धधर्म-
संदर्शकानि संपश्यन्, कल्याणमित्राण्याचार्याणि सर्वज्ञताधर्मेषु समनुपश्यन्, चक्षुर्भूतानि 5
कल्याणमित्राणि बुद्धगगनालोकनतायै संपश्यन्, अनुपूर्वेण येन समुद्रवेतालीप्रदेशे समन्त-
व्यूहमुद्यानं तेनोपसंक्रान्तः । सोऽपश्यत् समन्तव्यूहमुद्यानं सर्वरत्नप्राकारपरिक्षितं सर्वरत्न-
द्रुमपङ्क्तिषु आविद्धसमलंकृतं सर्वरत्नपङ्क्तिरुचिरसूक्ष्मकुसुमरेणुप्रमुक्तं सर्वरत्नद्रुमसमलंकृतं
सर्वरत्नद्रुमपुष्पविचित्रकुसुमाकीर्णं सर्वगन्धद्रुमपङ्क्तिसमन्तदिग्विश्वरितगन्धं सर्वरत्नमालाद्रुमकोश-
प्रमुक्तप्रलम्बनानारत्नमालावृष्ट्यभिप्रवर्षणं सर्वमणिराजद्रुममणिरत्नकृतविचित्रभक्तिसंस्तीर्णो- 10
पशोभिततलं सर्वकल्पपुष्पद्रुमनानारङ्गवस्त्रप्रलम्बप्रच्छन्नोपचारसुविभक्तदेशं सर्ववाद्यद्रुम-
दिव्यातिरेकतूर्यमारुतसमीरितनिर्नादितमधुरनिर्घोषमनिज्ञोन्नतपृथिवीसमतलाविद्धं सर्वाभरण-
वृक्षकोशप्रमुक्ताभरणविकृतविचित्रधाराभिप्रलम्बितोपशोभितव्यूहम् । तस्मिन् खलु पुनः
समन्तव्यूहे महोद्याने दश प्रासादकोटीशतसहस्राणि सर्वमहामणिरत्नप्रतिमण्डितनिर्यूह-
व्यूहानि, दश कूटागारशतसहस्राणि जाम्बूनदकूटकनकच्छदनोपेतानि, दश विमानशतसह- 15
स्राणि वैरोचनमणिरत्नोपशोभितगर्भाणि, दश पुष्करिणीशतसहस्राणि सर्वरत्नमयानि रत्नेष्ट-
कानिचितानि सप्तरत्नविचित्रसोपानानि नानामणिरत्नवेदिकापरिवृतानि दिव्यचन्दनवारिनि-
ष्यन्दगन्धानि सुवर्णवालुकासंस्तीर्णदशप्रासादकनकमणिरत्नाकीर्णतलानि चतुर्दिक्षु विभक्त-
सोपानानि अष्टाङ्गोपेतवारिपरिपूर्णानि हंसक्रौञ्चमयूरकोकिलकलविङ्ककुणालनिर्नादरुत-
मधुरनिर्घोषाणि रत्नतालपङ्क्तिपरिवृतानि सुवर्णघण्टाजालसंछन्नमारुतसमीरितमनोज्ञनिर्घोष- 20
शब्दानि उपरिमहामणिरत्नवितानविततानि नानारत्नवृक्षवाटिकापरिवृतानि उच्छ्रितच्छत्र-
ध्वजमणिरत्नजालोद्योतितानि दश च तडागशतसहस्राणि, कालानुसारिचन्दनकर्दमोप-
चितानि सर्वरत्नमयविचित्रवर्णपद्मसंछन्नानि महामणिरत्नपद्मावभासितविमलसलिलानि ।
तस्य चोद्यानस्य मध्ये विचित्रध्वजं नाम महाविमानं सागरगर्भरत्नपृथिवीतलसंस्थानं
वैडूर्यमणिरत्नस्तम्भोपशोभितं जाम्बूनदसुवर्णसमुद्गतकूटं जगद्विरोचनमणिरत्नगर्भव्यूहफलका- 25
बद्धमसंख्येयमणिरत्नजालोज्ज्वलिततलमजितवतिगन्धमणिराजनिर्धूपितोपचारमनुरचितगन्ध-
मणिराजसमीरितगन्धं विबोधनगन्धमणिराजविधमनतीक्ष्णेन्द्रियवासनम् । तस्मिंश्च
विचित्रध्वजे महाविमानेऽपरिमितान्यासनानि[1] प्रज्ञप्तानि—यदुत पद्मगर्भाणि दिग्विरोचनमणिरत्न-[2]
पद्मगर्भाणि वैरोचनमणिरत्नपद्मगर्भाणि जगद्रोचनमणिरत्नपद्मगर्भाणि चित्रकोशमणिरत्न-
पद्मगर्भाणि सिंहपञ्जरमणिरत्नपद्मगर्भाणि विमलमणिरत्नपद्मगर्भाणि मणिरत्नरचितपद्म- 30
गर्भाणि समन्तमुखमणिरत्नपद्मगर्भाणि प्रभाव्यूहमणिरत्नपद्मगर्भाणि सागरप्रतिष्ठानविशुद्ध-

---

१ B अपरिमाणानि. २ S दुर्योधन.

मणिरत्नव्यूहसमन्तरश्मिप्रभासमणिराजपद्मगर्भाणि वज्रसिंहाक्रान्तमणिरत्नपद्मगर्भाणि । तस्य
च विचित्रध्वजस्य महाविमानस्य अनेके निर्यूहा अचिन्त्यरत्नमया विचित्ररत्नव्यूहा
अचिन्त्यवर्णनिर्भासरुचिरसंस्थाना । तच्च समन्तव्यूहमुद्यानमुपरिष्ठाद्दशभिर्महावितानशत
सहस्रैः सछन्नं यदुत वस्त्रवितानैर्द्रुमलतावितानैः पुष्पवितानैर्माल्यवितानैर्गन्धवितानैर्मणि
5 रत्नवितानैः सुवर्णवितानैराभरणवितानैः वज्रप्रभासमणिवितानैरैरावणनागराजविकुर्विताप्सरो
वितानैः शक्राभिलग्नमणिरत्नवितानैः । एतत्प्रमुखैर्दशभिर्वितानशतसहस्रैः सछन्नम् ।
दशभिश्च महारत्नजालशतसहस्रैः सछन्नम् । यदुत रत्नगर्भकिङ्किणीजालैः रत्नच्छत्रजालैः
रत्नबिम्बजालैः[1] सागरगर्भमुक्ताजालैः नीलवैडूर्यमणिरत्नजालैः सिंहलताजालैः चन्द्रकान्तमणि
रत्नजालैः गन्धविग्रहजालैः रत्नमकुटजालैः रत्नहारजालैः । एतत्प्रमुखैर्दशभिर्महामणिरत्न-
10 जालशतसहस्रैः सछन्नम् । दशभिश्च महावभासशतसहस्रैरवभासितम्—यदुत ज्योतिरश्मिमणि
रत्नावभासेन आदित्यगर्भमणिरत्नावभासेन चन्द्रध्वजमणिरत्नावभासेन गन्धप्रधूपनार्चिमणि
रत्नावभासेन श्रीगर्भमणिरत्नावभासेन पद्मगर्भमणिरत्नावभासेन ज्योतिर्ध्वजमणिरत्नावभासेन
महाप्रदीपमणिरत्नावभासेन समन्तदिग्विरोचनमणिरत्नावभासेन महागन्धमेघनिश्चरितविद्यु
न्मालामणिरत्नावभासेन । एतत्प्रमुखैर्दशभिर्महामणिरत्नावभासशतसहस्रैर्नित्यावभासित
15 तन्महोद्यानम् । दशमहाभरणमेघशतसहस्राभिवर्षितालंकारं च तन्महोद्यानं दशकालानु
सारिचन्दनमेघशतसहस्राभिगर्जितं दशदिव्यसमतिक्रान्तमहामाल्यदाममेघशतसहस्राभिप्रल
म्बितोपशोभितं दशदिव्यसमतिक्रान्तनानारङ्गविचित्रवस्त्रमेघशतसहस्राभिप्रवर्षितं दश
दिव्यसमतिक्रान्ताभरणमेघशतसहस्रविभूषितं दशदेवपुत्रशतसहस्रदर्शनकामाधोमुखप्रणता
भिप्रनर्दितं दशाप्सरोमेघशतसहस्रपूर्वसभागचरितस्वकस्वकात्मभावोत्सृजनाभिप्रनर्दितं दश
20 बोधिसत्त्वमेघशतसहस्रधर्मश्रवणतपोपसंक्रान्ताभिप्रनर्दितं च तन्महोद्यानम् । यत्र आशोपा
सिका काञ्चनगर्भमहाभद्रासनोपनिषण्णा सागरगर्भमुक्ताजालालंकृता अनवद्यमकुटा दिव्यातिरेक
कनककेयूरवलयबाहुव्यूहा श्रीकायरश्मिमणिरत्नविराजितबाहुः अभिनीलविमलविलम्बमणि
कुण्डला महारत्नजालसंछन्नोपशोभितशीर्षा सिंहमुखमणिरत्नकर्णचूडकधारणी चिन्ताराज
मणिरत्नहारावसक्तकण्ठा सर्वरत्नजालसंछन्नप्रभोज्ज्वलितशरीरा प्राणिकोटिनियुतशतसहस्र
25 प्रणतकाया । तत्र ये आशाया उपासिकायाः सकाशमपरिमाणा सत्त्वा पूर्वस्या दिश आगच्छन्ति,
महाब्रह्माणो वा ब्रह्मपुरोहिता वा ब्रह्मकायिका वा वशवर्तिनो वा परनिर्मितवशवर्तिकायिका
वा सुनिर्मिता वा निर्माणरतिकायिका वा संतुषिता वा तुषितकायिका वा सुयामा वा
सुयामकायिका वा देवेन्द्रा वा त्रायस्त्रिंशत्कायिका वा यक्षेन्द्रा वा यक्षा वा गन्धर्वेन्द्रा वा
गन्धर्वा वा कुम्भाण्डेन्द्रा वा कुम्भाण्डा वा नागेन्द्रा वा नागा वा असुरेन्द्रा वा असुरा वा
30 गरुडेन्द्रा वा गरुडा वा किन्नरेन्द्रा वा किन्नरा वा महोरगेन्द्रा वा महोरगा वा यमा वा
यमकन्या वा, प्रेतमहर्द्धिका वा प्रेता वा मनुष्येन्द्रा वा मनुष्या वा । एवं ये दक्षिणाया
वा पश्चिमाया उत्तराया उत्तरपूर्वाया पूर्वदक्षिणाया दक्षिणपश्चिमाया पश्चिमोत्तराया अध

1 B om. रत्नबिम्बजालैः

ऊर्ध्वाया दिश आगच्छन्ति। महाब्रह्माणो वा ब्रह्मपुरोहिता वा ब्रह्मकायिका वा वशवर्तिनो वा वशवर्तिकायिका वा यावन्मनुष्येन्द्रा वा मनुष्या वा आगच्छन्ति नानाव्याधिस्पृष्टा नानाक्लेशपर्यवस्थिता विविधदृष्टिगताभिनिविष्टाः कर्मावरणावृता', ते सहदर्शनादाशाया उपासिकाया सर्वव्याध्युपशान्ता भवति। विगतक्लेशमलचित्ता अपगतदृष्टिशल्या सर्वावरणपर्वतविकीर्णा अनावरणविशुद्धिमण्डलमवतरन्ति। यत्र विशुद्धिमण्डले सर्वकुशलमूलान्युत्त- 5 पन्ते, सर्वेन्द्रियाङ्कुरा विवर्धन्ते, सर्वज्ञज्ञाननयसागरा समवसरन्ति। सर्वधारणीमुखनयसमुद्रा आवर्तन्ते। सर्वसमाधिमुखनयसमुद्रा अभिमुखीभवन्ति। सर्वप्रणिधानमुखानि सजायन्ते। सर्वचर्यामुखानि प्रवर्तन्ते। सर्वगुणाभिनिर्हारमुखानि विशुध्यन्ते। चित्तवैपुल्यतासर्वाभिज्ञावतिनयेन प्रवर्तन्ते। कायासङ्गता सर्वत्रानुगता भवन्ति॥

अथ खलु सुधनः श्रेष्ठिदारक' समन्तव्यूहमुद्यान प्रविश्य समन्तादनुविलोकयन् 10 अद्राक्षीदाशामुपासिका भद्रासने निषण्णाम्। स येन आशोपासिका तेनोपजगाम। उपेत्य आशाया उपासिकाया. पादौ शिरसाभिवन्द्य आशोपासिकामनेकशतसहस्रकृत्व. प्रदक्षिणीकृत्य एतदवोचत्—मया आर्ये अनुत्तराया सम्यक्सबोधौ चित्तमुत्पादितम्। न च जानामि कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया शिक्षितव्यम्, कथ प्रतिपत्तव्यम्। श्रुत च मे आर्या बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्या—कथ बोधि- 15 सत्त्वेन बोधिसत्त्वचर्याया शिक्षितव्यम्, कथ प्रतिपत्तव्यम्॥

सा आह—अह कुलपुत्र, अशोकक्षेमध्वजस्य बोधिसत्त्वविमोक्षस्य लाभिनी। साह कुलपुत्र अमोघदर्शना अमोघश्रवणा अमोघपर्युपासना अमोघैकवाससवासना अमोघानुस्मरणा। नाह कुलपुत्र, अनवरोपितकुशलमूलाना सत्त्वाना चक्षुष आभासमागच्छामि दर्शनविज्ञप्त्या, नापरिगृहीतकल्याणमित्राणा नासमन्वाहृतसम्यक्सबुद्धानाम्। 20 मम कुलपुत्र सहदर्शनेन सत्त्वा अवैवर्तिका भवन्त्यनुत्तराया सम्यक्सबोधे.। अपि तु खलु पुनर्मे कुलपुत्र, पूर्वस्या दिशि तथागता आगत्य इह रत्नासने निषद्य धर्मं देशयन्ति। यथा पूर्वस्या दिशि, एव दशभ्यो दिग्भ्य.। साह कुलपुत्र अविरहिता तथागतदर्शनेन, अविरहिता धर्मश्रवणेन, अविरहिता बोधिसत्त्वसमवधानेन। यान्यपीमानि कुलपुत्र चतुरशीति. प्राणिकोटीनियुतशतसहस्राणि इह समन्तव्यूहे महोद्याने प्रतिवसन्ति, सर्वाण्येतान्य- 25 वैवर्तिकान्यनुत्तराया सम्यक्सबोधेः मम सभागचरितानि। येऽप्यन्ये कुलपुत्र केचिदिह सत्त्वा. प्रतिवसन्ति, तेऽप्यविवर्त्या सर्वेऽनुत्तराया सम्यक्संबोधेः। अविवर्त्यसघसमवसरणा मम सभागचरिता बोधिसत्त्वा। आह—कियच्चिरोत्पादित त्वया आर्ये अनुत्तराया सम्यक्सबोधौ चित्तम्?[1] आह—अह कुलपुत्र पूर्वेनिवासमनुस्मरामि, दीपकर तथागतमर्हन्त सम्यक्सबुद्धम्। तस्य मे तथागतस्यान्तिके ब्रह्मचर्यं चीर्णम्। स च मे तथागत. 30 पूजित, धर्मदेशना च मे तस्यान्तिकादुद्गृहीता। तस्य परेण विमलो नाम तथागतोऽभूत्।

---

[1] S om अविरहिता

तस्याहं शासने प्रव्रजिता, धर्मचक्रं च मे संधारितम् । तस्य परेण केतुर्नाम तथागतोऽभूत् । स मया आरागित । तस्य परेण मेरुश्रीर्नाम तथागतोऽभूत् । तस्य परेण पद्मगर्भो नाम तथागतोऽभूत् । तस्य परेण वैरोचनो नाम तथागत । तस्य परेण समन्तचक्षुर्नाम तथागत । तस्य परेण ब्रह्मशुद्धो नाम तथागत । तस्य परेण वज्रनाभिर्नाम तथागत । तस्य परेण वरुण
5 देवो नाम तथागतोऽभूत् । अनेन कुलपुत्र पर्यायेण जातिपरंपरया कल्पपरंपरया बुद्धपरंपरामवतरन्ती अनुस्मरमाणा तथागतानर्हतोऽनन्तर्यतया षट्त्रिंशद्गङ्गानदीवालुकासमांस्तथागताननुस्मरामि, ये मया आरागिता उपस्थिता पूजिता अर्चिता, येषां मया अन्तिकाद्धर्मदेशना श्रुता, येषां च मे शासने ब्रह्मचर्यं चीर्णम् । अत उत्तरि कुलपुत्र तथागता प्रजानन्ति, यावन्तो मया तथागता आरागिता । अप्रमाणा कुलपुत्र बोधिसत्त्वा प्रथम
10 चित्तोत्पादेनैव सर्वधर्मधातुस्फरणतया, अप्रमाणा कुलपुत्र बोधिसत्त्वा महाकरुणानयेन सर्वजगदन्तर्गततया, अप्रमाणा कुलपुत्र बोधिसत्त्वा महाप्रणिधानदशदिग्धर्मधातुतलनिष्ठानुगमनतया, अप्रमाणा कुलपुत्र बोधिसत्त्वा महामैत्र्या सर्वजगत्स्फरणतया, अप्रमाणा कुलपुत्र, बोधिसत्त्वा बोधिसत्त्वचर्यया सर्वक्षेत्रेषु सर्वकल्पसमवसरणतया, अप्रमाणा कुलपुत्र बोधिसत्त्वा समाधिबलेन बोधिसत्त्वमार्गाप्रत्युदावर्तनतया, अप्रमाणा कुलपुत्र बोधि
15 सत्त्वा धारणीबलेन सर्वजगत्संधारणधारणीनयानुगमनतया, अप्रमाणा कुलपुत्र बोधिसत्त्वा ज्ञानालोकबलेन त्र्यध्वज्ञाननयानुगमनसंधारणतया, अप्रमाणा कुलपुत्र बोधिसत्त्वा अभिज्ञाबलेन सर्वक्षेत्रेषु यथाशयसत्त्वाभिरुचितप्रभाजालचक्राभिनिर्हरणतया, अप्रमाणा कुलपुत्र बोधिसत्त्वा प्रतिसंविद्बलेन एकघोषोदाहारसर्वजगत्संतोषणतया, अप्रमाणा कुलपुत्र बोधिसत्त्वा कायविशुद्ध्या सर्वबुद्धक्षेत्रस्वशरीरस्फरणतया ॥

20 सुधन आह—कियच्चिरेण आर्ये त्वमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे? आह—न खलु कुलपुत्र एवं सत्त्वारम्बणतया बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते यदुत परिपाकविनयाय । न सत्त्वशतस्यार्थाय, न सत्त्वसहस्रस्य, न सत्त्वशतसहस्रस्य, न सत्त्वकोटे, न सत्त्वकोटीशतस्य, न सत्त्वकोटीसहस्रस्य, न सत्त्वकोटीनियुतशतसहस्रस्य अर्थाय बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते । न सत्त्वकङ्करस्यार्थाय, न सत्त्वबिम्बरस्य, न सत्त्वप्रवरस्य, न सत्त्वपरमस्य,
25 न सत्त्वावरस्य, न सत्त्वाक्षोभ्यस्य, न सत्त्वानौपम्यस्य, न सत्त्वनेमस्य, न सत्त्वनिपासस्य, न सत्त्वभूगमस्य, न सत्त्वनिर्नोहस्य, न सत्त्वनिरागस्य, न सत्त्वावगमस्य, न सत्त्वनिगमस्य, न सत्त्वसंक्रमस्य, न सत्त्वनिसरस्य, न सत्त्वविजङ्गस्य, न सत्त्वनिस्रोतस, न सत्त्वविवाहस्य, न सत्त्वविभक्ते, न सत्त्वनिर्धीतस्य, न सत्त्वतुल्यस्य, न सत्त्वातुल्यस्य, न सत्त्वावरणस्य, न सत्त्वनिवरणस्य, न सत्त्वगणनस्य, न सत्त्वनिर्णयस्य, न सत्त्वसाम्यस्य, न सत्त्ववरणस्य, न
30 सत्त्वनिचारस्य, न सत्त्वनिसारस्य, न सत्त्वव्यवस्तस्य, न सत्त्वाभ्युद्गतस्य, न सत्त्वनिग्रहस्य, न सत्त्वदेवम्यस्य, न सत्त्वपरिभेदस्य, न सत्त्वनिश्चोभस्य, न सत्त्वपरिगुह्यस्य, न सत्त्वहरि

१ S एकघोषधारणतया २ B सत्त्वविग्रहस्य ३ B सत्त्वविसरस्य

तस्य, न सत्त्वालोकस्य, न सत्त्वेन्द्रियस्य, न सत्त्वहेलुकस्य, न सत्त्वदुर्वुदस्य, न सत्त्वहरुणस्य, न सत्त्वमालुतस्य, न सत्त्वमैलुतस्य, न सत्त्वक्षयस्य, न सत्त्वाक्षयमुकस्य, न सत्त्वैलतायाः, न सत्त्वमालुतायाः, न सत्त्वमण्डुमायाः, न सत्त्वविषमतायाः, न सत्त्वसमतायाः, न सत्त्वप्रमन्तायाः, न सत्त्वप्रमर्तायाः, न सत्त्वामन्नायाः, न सत्त्वान्नमन्नायाः, न सत्त्वसङ्गमन्नायाः, न सत्त्वविमन्नायाः, न सत्त्वहिमन्नायाः, न सत्त्वपरमन्नायाः, न सत्त्वशिवमन्नायाः, 5 न सत्त्वैलायाः, न सत्त्ववेलायाः, न सत्त्वतेलायाः, न सत्त्वशैलायाः, न सत्त्वकेलायाः, न सत्त्वशिलायाः, न सत्त्वश्वेलायाः, न सत्त्वनेलायाः, न सत्त्वभेलायाः, न सत्त्वसेलायाः, न सत्त्वपेलायाः, न सत्त्वहेलायाः, न सत्त्वमेलायाः, न सत्त्वसरडस्य, न सत्त्वमारुतस्य, न सत्त्वमेरुतस्य, न सत्त्वखेलुतस्य, न सत्त्वमालुतस्य, न सत्त्वमुलुतस्य, न सत्त्वाजवस्य, न सत्त्वकमलस्य, न सत्त्वकमरस्य, न सत्त्वातरस्य, न सत्त्वहेलुवस्य, न सत्त्ववेलुवस्य, न 10 सत्त्वजावकस्य, न सत्त्वह्वयस्य, न सत्त्वह्वलस्य, न सत्त्वबिम्बरस्य, न सत्त्वबिम्बहुरस्य, न सत्त्वचरणस्य, न सत्त्वचरमस्य, न सत्त्वपरवस्य, न सत्त्वधवरस्य, न सत्त्वप्रमदस्य, न सत्त्वविगमस्य, न सत्त्वोद्वर्तनस्य, न सत्त्वनिर्देशस्य, न सत्त्वक्षयस्य, न सत्त्वसंभूतस्य, न सत्त्वममस्य, न सत्त्ववदस्य अर्थाय, न सत्त्वोरपलस्य, न सत्त्वपद्मस्य, न सत्त्वसंख्यायाः, न सत्त्वोपागमस्य, न सत्त्वगत्याः, न सत्त्वासंख्येयस्य, न सत्त्वासंख्येयपरिवर्तस्य, न सत्त्वापरिमा- 15 णस्य, न सत्त्वापरिमाणपरिवर्तस्य, न सत्त्वापर्यन्तस्य, न सत्त्वापर्यन्तपरिवर्तस्य, न सत्त्वासमन्तस्य, न सत्त्वासमन्तपरिवर्तस्य, न सत्त्वागणेयस्य, न सत्त्वागणेयपरिवर्तस्य, न सत्त्वातुल्यस्य, न सत्त्वातुल्यपरिवर्तस्य, न सत्त्वाचिन्त्यस्य, न सत्त्वाचिन्त्यपरिवर्तस्य, न सत्त्वापर्यन्तस्य, न सत्त्वापर्यन्तपरिवर्तस्य, न सत्त्वामाप्यस्य, न सत्त्वामाप्यपरिवर्तस्य, न सत्त्वानभिलाप्यस्य, न सत्त्वानभिलाप्यपरिवर्तस्य, न सत्त्वानभिलाप्यानभिलाप्यस्य अर्थाय, न सत्त्वानभिलाप्यानभि- 20 लाप्यपरिवर्तस्यार्थाय। नैकलोकधातुपर्यापन्नानां सत्त्वानामर्थाय, न यावदनभिलाप्यानभिलाप्यलोकधातुपर्यापन्नानां सत्त्वानामर्थाय, न चातुर्द्वीपकलोकधातुपरमाणुरजःसमलोकधातुपर्यापन्नानां सत्त्वानामर्थाय, न सहस्रलोकधातुपरमाणुरजःसमलोकधातुपर्यापन्नानां सत्त्वानामर्थाय, न द्विसाहस्रलोकधातुपरमाणुरजःसमलोकधातुपर्यापन्नानां सत्त्वानामर्थाय, न त्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमलोकधातुपर्यापन्नानां सत्त्वानामर्थाय, न 25 यावदनभिलाप्यानभिलाप्यत्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमलोकधातुपर्यापन्नानां सत्त्वानामर्थाय बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते यदुत परिपाकविनयाय, अपि तु अशेषनिःशेषानवशेषसर्वलोकधातुपर्यापन्नानां सर्वसत्त्वानामर्थाय बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते यदुत परिपाकविनयाय। नैकबुद्धारागणतायै बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते यदुत आरागणाभिराधनपूजोपस्थानतायै। न दशबुद्धारागणाभिराधन- 30 पूजोपस्थानतायै, न यावदनभिलाप्यानभिलाप्यलोकधातुपरमाणुरजःसमबुद्धारागणाभिराधनपूजोपस्थानतायै बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते। नैकलोकधातुपर्या-

पन्नबुद्धवंशारागणाभिराधनपूजोपस्थानतायै, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपर-
माणुरज समलोकधातुपर्यापन्नतथागत[1]वंशारागणाभिराधनपूजोपस्थानतायै बोधिसत्त्वाना
बोधाय चित्तमुत्पद्यते। नैकबुद्धक्षेत्रपरिशोधनाय, न यावदनभिलाप्यानभिलाप्यलोकधातु-
परमाणुरज समबुद्धक्षेत्रपरिशोधनाय बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते। नैकतथागत-
5 शासनसंधारणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समतथागतशासन
संधारणाय बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते। नैकबुद्धप्रस्थानप्रणिधाननिमात्रतावतर-
णाय न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समबुद्धप्रस्थानप्रणिधाननिमात्रावरणाय
बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते। नैकतथागतबुद्धक्षेत्रव्यूहावतरणतायै, न यावदनभि
लाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समतथागतबुद्धक्षेत्रव्यूहावतरणाय बोधिसत्त्वाना बोधाय
10 चित्तमुत्पद्यते। नैकबुद्धपर्षन्मण्डलविभक्त्यवतरणाय, न यावदनभिलाप्यानभिलाप्य
बुद्धक्षेत्रपरमाणुरज समबुद्धपर्षन्मण्डलविभक्त्यवतरणाय बोधिसत्त्वाना बोधाय चित्त
मुत्पद्यते। नैकतथागतधर्मचक्रसंधारणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपर-
माणुरज समतथागतधर्मचक्रसंधारणाय बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते। नैकसत्त्व-
चित्तसमुद्रावतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समसत्त्वचित्तसमुद्रा
15 वतरणाय बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते। नैकसत्त्वेन्द्रियचक्रपरिज्ञायै, न यावदनभि-
लाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समसत्त्वेन्द्रियपरिज्ञायै बोधिसत्त्वाना बोधाय चित्त-
मुत्पद्यते। नैकसत्त्वेन्द्रियसागरावतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज-
समसत्त्वेन्द्रियसागरावतरणाय बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते। नैकलोकधातुकल्पपर-
परावतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समलोकधातुकल्पपरपराव
20 तरणाय बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते। नैकलोकधातुपर्यापन्नसर्वसत्त्वचर्यावासनानु-
संध्यवतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समलोकधातुपर्यापन्नसर्वसत्त्व
चर्यावासनानुसंध्यवतरणाय बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते। नैकलोकधातुपर्यापन्न
सर्वसत्त्वक्लेशसमुद्रावतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समलोकधातु
पर्यापन्नसर्वसत्त्वसर्वक्लेशसमुद्रावतरणाय बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते। नैकलोक-
25 धातुपर्यापन्नसर्वसत्त्वसर्वकर्मसमुद्रावतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज-
समलोकधातुपर्यापन्नसर्वसत्त्वसर्वकर्मसमुद्रावतरणाय बोधिसत्त्वाना बोधाय चित्तमुत्पद्यते।
नैकलोकधातुपर्यापन्नसर्वसत्त्वसर्वचर्यासमुद्रावतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्ध-
क्षेत्रपरमाणुरज समलोकधातुपर्यापन्नसर्वसत्त्वसर्वचर्यासमुद्रावतरणाय बोधिसत्त्वाना बोधाय
चित्तमुत्पद्यते। अपि तु अशेषनिःशेषानवशेषसर्वसत्त्वधातुपरिपाकविनयाय बोधिसत्त्वानां
30 बोधाय चित्तमुत्पद्यते। अनवशेषसर्वबुद्धारागणाभिराधनपूजोपस्थानतायै बोधिसत्त्वाना
बोधाय चित्तमुत्पद्यते। अनवशेषसर्वलोकधातुपर्यापन्नसर्वबुद्धवंशारागणाभिराधनपूजो

---

1 ... 'तथागत'.

पस्थानतायै बोधिसत्त्वानां प्रणिध्यभिलापो भवति । अनवशेषसर्वबुद्धक्षेत्रपरिशोधनाय बोधिसत्त्वानामाशयो दृढीभवति । अनवशेषसर्वबुद्धशासनसंधारणाय बोधिसत्त्वानां प्रयोगः संभवति । अनवशेषसर्वतथागतप्रस्थानप्रणिधिविमात्रतानुगमाय बोधिसत्त्वानां चित्तवेगाः प्रादुर्भवन्ति । अनवशेषसर्वतथागतसर्वबुद्धक्षेत्रगुणव्यूहावतरणाय बोधिसत्त्वानां व्यवसाय उत्पद्यते । अनवशेषसर्वतथागतपर्षन्मण्डलसमुद्रावतरणाय बोधिसत्त्वानामभिलापः 5 प्रभवति । अनवशेषसर्वजगच्चित्तसागरावगाहनतायै बोधिसत्त्वानां प्रार्थना संजायते । अनवशेषसर्वसत्त्वेन्द्रियचक्रपरिज्ञायै बोधिसत्त्वानामभिकाङ्क्षोत्पद्यते । अनवशेषसर्वसत्त्वेन्द्रियसागरावतरणतायै बोधिसत्त्वानामुत्सोढिराजायते । अनवशेषसर्वलोकधातुकल्पपरंपरावतरणाय बोधिसत्त्वानां छन्दः संभवति । अनवशेषसर्वसत्त्वक्लेशवासनानुसंधिसमुच्छेदाय बोधिसत्त्वानां पराक्रम आजायते । अनवशेषसर्वसत्त्वकर्मक्लेशसमुद्रोच्छोषणाय 10 बोधिसत्त्वानां महाज्ञानसूर्य उदागच्छति । अनवशेषसर्वसत्त्वचर्यापरिज्ञायै बोधिसत्त्वानां प्रज्ञालोकः प्रादुर्भवति । अनवशेषसर्वसत्त्वदुःखाग्निस्कन्धप्रशमनाय बोधिसत्त्वानां महाकरुणामेघः समुदागच्छति । संक्षेपेण कुलपुत्र एतत्प्रमुखानि दश बोधिसत्त्वचर्यानयमुखासंख्येयशतसहस्राणि, यानि बोधिसत्त्वेन समुदानयितव्यानि । अपि तु खलु पुनः कुलपुत्र सर्वधर्मसमवसरणा बोधिसत्त्वानां चर्या यदुत ज्ञानानुगमाय । सर्वक्षेत्रसमवसरणा 15 बोधिसत्त्वानां चर्या यदुत परिशोधनतायै । तस्या मम कुलपुत्र एवंप्रणिधेर्यन्निष्ठा कामधातुविशुद्धिः, तन्निष्ठानि मम प्रणिधानानि भवन्तु । यन्निष्ठा लोकधातुविशुद्धिः, तन्निष्ठानि मम प्रणिधानानि भवन्तु । या निष्ठा सर्वसत्त्वक्लेशवासनानुसंध्यनुशयानाम्, तन्निष्ठानि मम प्रणिधानानि भवन्तु ॥

आह—को नाम आर्ये एष विमोक्षः ? आह—अशोकक्षेमध्वजो[1] नाम कुलपुत्र एष 20 विमोक्षः । एतमहं कुलपुत्र, एकं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यं सागरसमचित्तानां बोधिसत्त्वानां सर्वबुद्धधर्मसंप्रतीच्छनतया, मेरुकल्पानां दृढाध्याशयतया, सुदर्शनभैषज्यराजोपमानां सर्वसत्त्वक्लेशव्याधिप्रमोक्षणतया, आदित्यकल्पानां सर्वसत्त्वाविद्यान्धकारविधमनतया, धरणीसमचित्तानां सर्वसत्त्वाश्रयप्रतिष्ठानभूततया, मारुतसदृशानां सर्वजगदर्थकरणतया, प्रदीपभूतानां सर्वसत्त्वज्ञानालोककरणतया, मेघोपमानां शान्तनिर्घोष- 25 यथावद्धर्मप्रवर्षणतया, चन्द्रोपमानां पुण्यरश्मिजालप्रमोचनतया, शक्रोपमानां सर्वजगदारक्षाप्रतिपन्नतया चर्या ज्ञातुं गुणान् वा वक्तुम्, अचिन्त्या वा बोधिसत्त्वशिक्षाः प्रभावयितुम्, अनन्तमध्या वा बोधिसत्त्वप्रणिधिविकल्पाः संदर्शयितुम् ॥

गच्छ कुलपुत्र अयमिहैव दक्षिणापथे समुद्रवेताल्यां नालयुर्नाम जनपदः । तत्र भीष्मोत्तरनिर्घोषो नाम ऋषिः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ । स ते कुलपुत्र बोधि- 30 सत्त्वचर्यामुपदेक्ष्यति ॥

---

[1] S अशोकक्षमध्वजो.

अथ खलु सुधनः श्रेष्ठिदारक आशाया उपासिकायाः पादौ शिरसाभिवन्द्य आशामुपासिकामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य प्रणिपत्य अश्रुमुखो रुदन् बोधिपरमदुर्लभतामनुविचिन्तयन्, कल्याणमित्रदुरारागणतामनुविचिन्तयन्, सत्पुरुषसमवधानसुदुर्लभतामनुविचिन्तयन्, बोधिसत्त्वेन्द्रियप्रतिलामदुरभिसंभवतामनुविचिन्तयन्, बोधि-
५ सत्त्वाशयविशुद्धिदुर्लभतामनुविचिन्तयन्, सभागमित्रसमवधानदुर्लभतामनुविचिन्तयन्, यथावद्धोध्यभिमुखचित्तनिध्याप्तिदुर्लभतामनुविचिन्तयन्, अविषमधर्मनयानुशासनीप्रयोगदुर्लभतामनुविचिन्तयन्, असंहार्यचित्तकल्याणतायोगसंजननदुर्लभतामनुविचिन्तयन्, सर्वज्ञतावेगविवर्धनधर्मालोकसुदुर्लभतामनुविचिन्तयन्, आशाया उपासिकाया अन्तिकात्प्रक्रान्तः॥ ८॥



# ११ भीष्मोत्तरनिर्घोषः।

अथ खलु सुधनः श्रेष्ठिदारको बोधिसत्त्वानुशासन्यनुगतचित्तो बोधिसत्त्वचर्यापरिशोधनानुगतचित्तो बोधिसत्त्वपुण्यबलविवर्धनचित्तो बुद्धदर्शनवेगावभासितचित्तो धर्मनिधानप्रतिलाभसंजातचित्तवेगो महाप्रणिधानाभिनिर्हारप्रवर्धितचित्तवेगः सर्वधर्मदिगभिमुखचित्तो धर्मस्वभावावभासितचित्तः सर्वावरणविकिरणचित्तो निरन्धकारधर्मधातुव्यवलोकनचित्तो नारायणवज्ररत्नाभेद्यविमलाशयचित्तः सर्वमारबलदुर्योधनदुर्धर्षणचित्तोऽनुपूर्वेण येन नालयुर्जनपदः तेनोपसंक्रम्य भीष्मोत्तरनिर्घोषमृषिमन्वेषते स्म। तेन च समयेन भीष्मोत्तरनिर्घोषर्षिरन्यतमस्मिन्नाश्रमपदे विहरति स्म असंख्येयविचित्रद्रुमलतावनरमणीये विविधवृक्षपत्रसंछन्ने सदाप्रफुल्लितविचित्रपुष्पवृक्षे सदाफलोपचितफलवृक्षे नानारत्नवृक्षोदारमणिफलकसंस्कृततले सुविभक्तमहाचन्दनद्रुमे मनोज्ञागरुवृक्षसदाप्रमुक्तगन्धोपशोभिते चतुर्दिक्षु विभक्तगन्धोपशोभिते चतुर्दिक्षु विभक्तपाटलीवृक्षसमलंकृते न्यग्रोधवृक्षपादपरुचिरसंस्थाने सदापक्वफलजम्बूवृक्षप्रवर्षणे नवनलिनीपद्मोत्पलकुमुदोपशोभिते। अद्राक्षीत्सुधनः श्रेष्ठिदारको भीष्मोत्तरनिर्घोषमृषिं दशऋषिसहस्रपरिवृतं चन्दनतलावबद्धायां कुट्यां जटामकुटधारिणमजिनदर्भचीवरवल्कलवसनं तृणसंस्तरोपविष्टम्। दृष्ट्वा च पुनर्येन भीष्मोत्तरनिर्घोष ऋषिस्तेनोपजगाम। उपेत्य भूतकल्याणमित्रप्रतिलम्भनाशयकल्याणमित्रायद्वारां सर्वज्ञतां संपश्यन्, भूतमार्गोपनयाय कल्याणमित्रानुशासन्यधीनां सर्वज्ञतां संपश्यन्, सर्वज्ञताभूम्युपनयेन कल्याणमित्रदासाधीनां सर्वज्ञतां संपश्यन्, दशबलज्ञानरत्नद्वीपोपनयेन कल्याणमित्रोल्कावभासितां सर्वज्ञतां संपश्यन्, दशबलज्ञानालोकसंजननतया कल्याणमित्रमार्गां सर्वज्ञतां संपश्यन्, अक्षुण्णसर्वज्ञतापुरप्रापणतया कल्याणमित्रप्रदीपां सर्वज्ञतां संपश्यन्, समविषमसंदर्शनतया कल्याणमित्रं सेतुं सर्वज्ञतायाः संपश्यन्, सर्वप्रपातभयविगमनतया कल्याणमित्रच्छत्रां सर्वज्ञतां संपश्यन्, महामैत्रीबलाह्लादसंजननतया कल्याणमित्रवेगां सर्वज्ञतां संपश्यन्, महाकरुणासंजननतया कल्याणमित्राधीनां सर्वज्ञतादर्शनपरिपुष्टिं संपश्यन्, धर्मस्वभावनयावभासनतया सर्वशरीरेण प्रणिपत्य उत्थाय भीष्मोत्तरनिर्घोषमृषिं अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य प्राञ्जलिभूतः पुरतः स्थित्वा मनोज्ञो[1]पचारेण मनोज्ञां वाचमुदीरयन् एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु भीष्मोत्तरनिर्घोषऋषिस्तानि दश माणवकसहस्राण्यनुविलोक्य एवमाह—अनेन माणवकाः कुलपुत्रेण अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। सर्वसत्त्वाश्वाभयेनोपनिमन्त्रिताः। अयं स कुलपुत्राः सर्वसत्त्वहितसुखाय प्रत्युपस्थितो ज्ञानसागराभिमुखः

1 B om. मनोज्ञोपचारेण.

अथ खलु सुधनः श्रेष्ठिदारक आशाया उपासिकायाः पादौ शिरसाभिवन्द्य आशामुपासिकामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य प्रणिपत्य अश्रुमुखो रुदन् बोधिपरमदुर्लभतामनुविचिन्तयन्, कल्याणमित्रदुरारागणतामनुविचिन्तयन्, सत्पुरुषसमवधानसुदुर्लभतामनुविचिन्तयन्, बोधिसत्त्वेन्द्रियप्रतिलाभदुरभिसंभवतामनुविचिन्तयन्, बोधि-
5 सत्त्वाशयविशुद्धिदुर्लभतामनुविचिन्तयन्, सभागमित्रसमवधानदुर्लभतामनुविचिन्तयन्, यथावद्धोध्यभिमुखचित्तनिध्यप्तिदुर्लभतामनुविचिन्तयन्, अविषमधर्मनयानुशासनीप्रयोगदुर्लभतामनुविचिन्तयन्, असंहार्यचित्तकल्याणतायोगसंजननदुर्लभतामनुविचिन्तयन्, सर्वज्ञतावेगविवर्धनधर्मालोकसुदुर्लभतामनुविचिन्तयन्, आशाया उपासिकाया अन्तिकात्प्रक्रान्तः ॥ ८ ॥



## ११ भीष्मोत्तरनिर्घोषः ।

अथ खलु सुधनः श्रेष्ठिदारको बोधिसत्त्वानुशासन्यनुगतचित्तो बोधिसत्त्वचर्यापरिशोधनानुगतचित्तो बोधिसत्त्वपुण्यबलविवर्धनचित्तो बुद्धदर्शनवेगावभासितचित्तो धर्मनिधानप्रतिलम्भसंजातचित्तवेगो महाप्रणिधानाभिनिर्हारप्रवर्धितचित्तवेगः सर्वधर्मदिगभिमुखचित्तो धर्मस्वभावावभासितचित्तः सर्वावरणविकिरणचित्तो निरन्धकारधर्मधातुव्यवलोकनचित्तो नारायणवज्ररत्नाभेद्यविमलाशयचित्तः सर्वमारबलदुर्योधनदुर्धर्षणचित्तोऽनुपूर्वेण येन नालयुर्जनपदः तेनोपसंक्रम्य भीष्मोत्तरनिर्घोषमृषिमन्वेषते स्म । तेन च समयेन भीष्मोत्तरनिर्घोषर्षिरन्यतमस्मिन्नाश्रमपदे विहरति स्म असंख्येयविचित्रद्रुमलतावनरमणीये विविधवृक्षपत्रसंछन्ने सदाप्रफुल्लितविचित्रपुष्पवृक्षे सदाफलोपचितफलवृक्षे नानारत्नवृक्षोदारमणिफलकसंस्कृततले सुविभक्तमहाचन्दनद्रुमे मनोज्ञागरुवृक्षसदाप्रमुक्तगन्धोपशोभिते चतुर्दिक्षु विभक्तगन्धोपशोभिते चतुर्दिक्षु विभक्तपाटलीवृक्षसमलंकृते न्यग्रोधवृक्षपादपरुचिरसंस्थाने सदापक्वफलजम्बूवृक्षप्रवर्षणे नवनलिनीपद्मोत्पलकुमुदोपशोभिते । अद्राक्षीत्सुधनः श्रेष्ठिदारको भीष्मोत्तरनिर्घोषमृषिं दशर्षिसहस्रपरिवृतं चन्दनतलावबद्धायां कुट्यां जटामकुटधारिणमजिनदर्भचीवरवल्कलवसनं तृणसंस्तरोपविष्टम् । दृष्ट्वा च पुनर्येन भीष्मोत्तरनिर्घोष ऋषिस्तेनोपजगाम । उपेत्य भूलकल्याणमित्रप्रतिलम्भनाशयकल्याणमित्रायद्वारां सर्वज्ञतां संपश्यन्, भूतमार्गोपनयाय कल्याणमित्रानुशासन्यधीनां सर्वज्ञतां संपश्यन्, सर्वज्ञताभूम्युपनयेन कल्याणमित्रदासाधीनां सर्वज्ञतां संपश्यन्, दशबलज्ञानरत्नद्वीपोपनयेन कल्याणमित्रोल्कावभासितां सर्वज्ञतां संपश्यन्, दशबलज्ञानालोकसंजननतया कल्याणमित्रमार्गां सर्वज्ञतां संपश्यन्, अक्षुण्णसर्वज्ञतापुरप्रापणतया कल्याणमित्रप्रदीपां सर्वज्ञतां संपश्यन्, समविषमसंदर्शनतया कल्याणमित्रं सेतुं सर्वज्ञतायाः संपश्यन्, सर्वप्रपातभयविगमनतया कल्याणमित्रच्छत्रां सर्वज्ञतां संपश्यन्, महामैत्रीबलाह्लादसंजननतया कल्याणमित्रवेगां सर्वज्ञतां संपश्यन्, महाकरुणासंजननतया कल्याणमित्राधीनां सर्वज्ञतादर्शनपरिशुद्धिं संपश्यन्, धर्मस्वभावनयावभासनतया सर्वशरीरेण प्रणिपत्य उत्थाय भीष्मोत्तरनिर्घोषमृषिं अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य प्राञ्जलिभूतः पुरतः स्थित्वा [1]मनोज्ञोपचारेण मनोज्ञां वाचमुदीरयन् एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु भीष्मोत्तरनिर्घोषऋषिस्तानि दश माणवकसहस्राण्यनुविलोक्य एवमाह—अनेन माणवकाः कुलपुत्रेण अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । सर्वसत्त्वाश्वाभयेनोपनिमन्त्रिताः । अयं स कुलपुत्राः सर्वसत्त्वहितसुखाय प्रत्युपस्थितो ज्ञानसागराभिमुखः

---

1 B om. मनोज्ञोपचारेण.

सर्वतथागतानां धर्ममेघान् धातुकामः सर्वधर्मनयसागरानवगाहयितुकामः महाज्ञानालोके-ऽवस्थातुकामो महाकरुणामेघमुपस्थापयितुकामो महाधर्मवर्षमभिप्रवर्षयितुकामो महाज्ञाना-लोके चन्द्रे उदागत्य सर्वक्लेशप्रतापं प्रशमयितुकामो सर्वसत्त्वकुशलमूलानि वर्धयितुकामः ॥

अथ खलु तानि दश माणवकसहस्राणि नानावर्णैः सुरुचिरैः सुगन्धैः पुष्पैः सुधनं श्रेष्ठिदारकमवकीर्य अभ्यवकीर्य अभिवन्द्य नमस्कृत्वा प्रणिपत्य प्रदक्षिणीकृत्य एवं वाचमुदीर-यामासुः—एष त्राता भविष्यति, सर्वसत्त्वानां सर्वनिरयदुःखानि प्रशमयिष्यति। सर्वतिर्यग्योनि-गतिं व्यवच्छेत्स्यति। सर्वयमलोकगतिं विनिवर्तयिष्यति। सर्वाक्षणद्वारकपाटानि पिधा-यिष्यति। तृष्णासमुद्रमुच्छोषयिष्यति। तृष्णाबन्धनं छेत्स्यति। दुःखस्कन्धं विनिवर्तयिष्यति। अविद्यान्धकारं विधमयिष्यति। पुण्यचक्रवालं लोके परिसंस्थापयिष्यति। ज्ञानरत्नाकरमुप-दर्शयिष्यति। ज्ञानसूर्यमुदागमिष्यति। धर्मचक्षुर्विशोधयिष्यति। समविषमं लोके संप्रकाश-यिष्यति। अथ खलु भीष्मोत्तरनिर्घोष ऋषिः तान् माणवकानेवमाह—येन माणवका अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितं भवति, स बोधिसत्त्वचर्यां चरन् सर्वसत्त्वानां सुखमुत्पादयति, अनुपूर्वेण च सर्वज्ञतां प्रतिलभते। अनेन माणवकाः कुलपुत्रेण अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। स एष सर्वबुद्धगुणभूमिं परिपूरयिष्यति। अथ खलु भीष्मोत्तरनिर्घोष ऋषिः सुधनं श्रेष्ठिदारकमेतदवोचत्—अहं कुलपुत्र अपराजितध्वजस्य बोधिसत्त्वस्य विमोक्षस्य लाभी। सुधन आह—क एतस्य आर्य अपराजितध्वजस्य बोधि-सत्त्वविमोक्षस्य विषयः? ततो भीष्मोत्तरनिर्घोषऋषिः दक्षिणं पाणिं प्रसार्य सुधनं श्रेष्ठिदारकं शिरसि परिमार्ज्य दक्षिणेन पाणिना पर्यगृह्णात्। समनन्तरपरिगृहीतश्च सुधनः श्रेष्ठिदारको भीष्मोत्तरनिर्घोषेण ऋषिणा दक्षिणेन पाणिना, अथ तावदेव सुधनः श्रेष्ठिदारकोऽपश्यद्दशसु दिक्षु दशबुद्धक्षेत्रशतसहस्रपरमाणुरजःसमानि बुद्धक्षेत्राणि। तेषु च दशबुद्धक्षेत्रशतसहस्रपरमाणुरजःसमानां तथागतानां पादमूलगतमात्मानं संजानाति स्म। तानि च बुद्धक्षेत्राण्यपश्यदसंख्येयाकारविशुद्धव्यूहानि। तेषु च तथागतपर्षन्मण्डलसमुद्रा-न्नानावर्णविचित्रव्यूहानपश्यत्। तेषु च पर्षन्मण्डलसमुद्रेषु तथागतशरीराणि लक्षणानु-व्यञ्जनोज्ज्वलितोपचितान्यपश्यत्। तेभ्यश्च धर्मदेशनां शृणोत्येकपदव्यञ्जनापराङ्मुखान्। तानि च तथागतधर्मचक्राण्यन्योन्यासंभिन्नानि संधारयति। तांश्च धर्मसेघानानासत्त्वाशयेषु प्रवर्षणां संप्रतीच्छति। तेषां च तथागतानां नानाधिमुक्तिबलविशोधितं पूर्वप्रणिधानसमुद्रा-नवतरति। तांश्च नानाप्रणिधानसागरविशुद्धान् बुद्धसमुदागमसमुद्रानवतरति। तांश्च यथाशयसर्वसत्त्वसहस्रसंतोषणविज्ञापनान् बुद्धवर्णानद्राक्षीत्। तानि च बुद्धरश्मिजालानि नानाविरागविशुद्धव्यूहमण्डलान्यपश्यत्। तानि च बुद्धबलान्यनावरणज्ञानालोकानुगमेनाव-तरति। स क्वचित्तथागतपादमूले रात्रिंदिवं संजानाति। क्वचित्सप्त रात्रिंदिवानि, क्वचिदर्ध-मासम्, क्वचिन्मासम्, क्वचित्संवत्सरं क्वचिद्वर्षशतं क्वचिद्वर्षसहस्रं क्वचिद्वर्षशतसहस्रं क्वचि-

१ B परितोषयिष्यति. २ B om. तानि च...पश्यत.

द्र्पकोटिं कचिद्वर्पकोटीशतं कचिद्वर्पकोटिसहस्रं कचिद्वर्पकोटीशतसहस्रं कचिद्वर्पकोट्ययुतं कचिद्वर्षकोटीनियुतं कचिदर्धकल्पं संजानाति। कचित्कल्पं कचित्कल्पशतं कचित्कल्पसहस्रं कचित्कल्पशतसहस्रं कचित्कल्पकोटीं कचित्कल्पकोटीशतं कचित्कल्पकोटीसहस्रं कचित्कल्प-कोटीशतसहस्रं कचित्कल्पकोटीनियुतशतसहस्रं कचित्तथागतपादमूले यावदनभिलाप्यान-भिलाप्यान् कल्पान् संजानाति। कचित्तथागतपादमूले जम्बूद्वीपपरमाणुरजःसमान् कल्पान् संजानाति। कचिद्यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् कल्पान् संजानाति अपराजितध्वजबोधिसत्त्वविमोक्षज्ञानावभासितो वैरोचनगर्भसमाध्यवभासप्रतिलब्धः अक्षय-ज्ञानविमोक्षसमाध्यनुगतः समन्तदिक्पञ्जरधारणीमुखावलोकप्रतिलब्धो वज्रमण्डलधारणीमुखा-वभासितचित्तः सुविभक्तज्ञानकूटविषयसमाधिविहारप्रतिलब्धः समन्ततलव्यूहमार्गप्रज्ञापार-मिताविहारविषयो बुद्धगगनगर्भमण्डलसमाध्यालोकप्रसृतः सर्वबुद्धधर्मचक्रनेमिसमाध्यव-भासितचित्तः त्र्यध्वज्ञानरत्नाक्षयमण्डलसमाध्यालोकप्राप्तः॥

अथ खलु भीष्मोत्तरनिर्घोष ऋषिः सुधनं श्रेष्ठिदारकं व्यमुञ्चत्। ॥ पुनरपि भीष्मोत्तरनिर्घोषस्य ऋषेः पुरतः स्थितमात्मानं संजानाति। तं भीष्मोत्तरनिर्घोष ऋषिराह—स्मरसि कुलपुत्र? आह—स्मरामि आर्य कल्याणमित्राधिष्ठानेन। आह—एतमहं कुलपुत्र अपराजितध्वजं बोधिसत्त्वविमोक्षं जानामि। किं मया शक्यं सर्वजगद्विशेषज्ञानाभि-ज्ञावतारसमाधिप्रतिलब्धानां बोधिसत्त्वानां सर्वकालचक्रानुवर्तिनां बुद्धलक्षणज्ञानाभिनिर्हार-कुशलानां तथागतदिव्यमात्रकान्तिविज्ञप्तिव्यूहानां त्र्यध्वविषयैकलक्षणज्ञानसमवसरणानां सर्वलोकधातुसुविभक्तकायानां सर्वधर्मधात्ववभासितज्ञानशरीराणां सर्वसत्त्वयथाशयाभिमुखा-भ्युत्थितानां यथाशयसत्त्वचर्याविचारानुकूलोपचाराणां समन्ताभिरुचितरोचनानाम् अमल-विपुलरश्मिज्ञानमण्डलविशुद्धानां चर्या ज्ञातुं गुणा वा वक्तुं प्रणिधिविशेषो वा सूचयितुं क्षेत्राभिसंस्कारो ॥ ज्ञातुं ज्ञानविषयो अवगाहितुं समाधिगोचरो वा अनुमन्तुं ऋद्धिविकुर्वितं वा अवतरितुं विमोक्षवृषभितानिक्रीडितं वा अनुगन्तुं शरीरविभक्तिनिमित्तं वा उद्ग्रहीतुं स्वरमण्डलविशुद्धिर्वा प्रभावयितुं ज्ञानावभासो वा निदर्शयितुम्॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे ईषाणो नाम जनपदः। तत्र जयोष्मायतनो नाम ब्राह्मणः प्रतिवसति। तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम् कथं प्रतिपत्तव्यम्॥

# १२ जयोष्मायतनः ।

अथ खलु सुधनः श्रेष्ठिदारकोऽपराजितध्वजबोधिसत्त्वविमोक्षज्ञानावभासित अचिन्त्यबुद्धविषयविकुर्वितप्रत्यक्षविहारी अचिन्त्यबोधिसत्त्वविमोक्षप्रत्यक्षज्ञानाभिज्ञ अचिन्त्यबोधिसत्त्वसमाधिज्ञानावभासितचित्त सर्वकालसमवसरणसमाधिज्ञानावभासप्रतिलब्ध सर्वरक्षासमन्तसमवसरणसमाधिविषयावभासित सर्वजगद्विशेषप्रतिज्ञानालोकप्रतिलब्ध सर्वत्र्यध्वानुगतगोचरविहाराभिमुख अद्वयविकल्पसमतानिर्देशज्ञानपरम सर्वारम्बणप्रसरितज्ञानालोक सत्त्वश्रद्धाभिमुखक्षान्तिविशुद्धाधिमुक्तिकोशकुशल स्वभावधर्मक्षान्तिनिश्चयज्ञानालोकप्रतिलब्ध सर्वत्रानुगताभिज्ञबोधिसत्त्वचर्यास्वभावभावनाविरहितचित्त सर्वज्ञतावेगाविवर्त्यचित्तो दशबलज्ञाननिष्ठुदवभासप्रतिलब्ध धर्मधातुनिर्घोषाभिलाषावितृप्तचित्त सर्वज्ञताविहारगोचरावतरणप्रतिपत्तिचित्त अनन्तबोधिसत्त्वचर्याव्यूहाभिनिर्हारचित्तोऽनन्तबोधिसत्त्वमहाप्रणिधानमण्डलपरिशोधनचित्त अनन्तभव्यलोकधातुजालाक्षयानुगमज्ञानाभिमुखचित्त अनन्तसत्त्वसागरपरिपाकविनयासकुचितचित्त अनन्तबोधिसत्त्वचर्याविषय सपश्यन् अनन्तलोकधातुगतिविमात्रता सपश्यन् अनन्तलोकधातुविभक्तिविचित्रता सपश्यन् अनन्तलोकधातुसूक्ष्मोदारारम्बणान्तर्गता सपश्यन् अनन्तलोकधातुप्रतिष्ठानसंज्ञाजालविचित्रता सपश्यन् अनन्तलोकधातुव्यवहारप्रज्ञप्तिसंवृतिविमात्रता सपश्यन् अनन्तसत्त्वाधिमुक्तिविमात्रता सपश्यन् अनन्तसत्त्वविभक्तिविमात्रता सपश्यन् अनन्तसत्त्वपरिपाकविनयानुगम सपश्यन् अनन्तसत्त्वदिक्कालसंज्ञागतविचित्रता सपश्यन् कल्याणमित्राण्यभिमुखीकुर्वाणोऽनुपूर्वेण येन ईषाणे जनपदे जयोष्मायतनो ब्राह्मण, तेनोपसक्रान्त । तेन च समयेन जयोष्मायतनो ब्राह्मण उग्र तप तप्यति सर्वज्ञतामारम्बणीकृत्य । तस्य चतुर्दिश महाग्निस्कन्ध पर्वतमात्रोज्ज्वलित । अभ्युद्गतमहापर्वतप्रपात क्षुरधारामार्गं सदृश्यते ॥

अथ खलु सुधन श्रेष्ठिदारको जयोष्मायतनस्य ब्राह्मणस्य पादौ शिरसाभिवन्द्य पुरत प्राञ्जलि स्थित्वा एवमाह—मया आर्य, अनुत्तराया सम्यक्सबोधौ चित्तमुत्पादितम् । न च जानामि कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया शिक्षितव्यम्, कथ प्रतिपत्तव्यम् । श्रुत च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्य—कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया शिक्षितव्यम्, कथ प्रतिपत्तव्यम् । स आह—गच्छ कुलपुत्र, एत क्षुरधारमार्गं पर्वतमभिरुह्य अत्र अग्निखदाया प्रपत । एव ते बोधिसत्त्वचर्या परिशुद्धिं गमिष्यति ॥

अथ खलु सुधनस्य श्रेष्ठिदारकस्य एतदभवत्—दुर्लभा अष्टाक्षणविनिवृत्ति । दुर्लभो मानुष्यप्रतिलाभ । दुर्लभा क्षणसपद्विशुद्धि । दुर्लभो बुद्धोत्पाद । दुर्लभा अविकलेन्द्रियता । दुर्लभो बुद्धधर्मश्रव । दुर्लभ सत्पुरुषसमवधानम् । दुर्लभानि भूतकल्याणमित्राणि । दुर्लभो भूतनयानुशासनोपसहार । दुर्लभ सम्यग्जीवित मनुष्यलोके । दुर्लभा धर्मानुधर्मप्रतिपत्ति । मा हैवाय मारो भविष्यति माराधिष्ठितो वा मारकायिको वा कल्याणमित्रप्रतिरूपको वा बोधिसत्त्वकण्टको वा, यो मम कुशलमूलान्तरायाय प्रतिपन्न, यो मम जीवितनिरोधाय

अभ्युत्थितः। मा हैव ममान्तरायं कर्तुकामः सर्वज्ञतायाम्। मा खलु मां विषमेण पथा प्रणेतुकामः। मा खलु मे धर्ममुखान्तरायं कर्तुकामो बुद्धधर्माधिगमाय। तस्यैवं चिन्तामनसिकारप्रयुक्तस्य दश ब्रह्मसहस्राण्युपर्यन्तरिक्षे स्थित्वा एवमाहुः–मा कुलपुत्र एवं चेतनां दृढीकार्षीः। एष कुलपुत्र आर्यो वज्रार्चिःसमाध्यवभासलब्धः अविवर्त्यवीर्यो महारम्भोत्तारणप्रतिपन्नः सर्वजगत्स्नेहपर्यादानायाभ्युत्थितः, सर्वदृष्टिगतजालदालनाय प्रयुक्तः, सर्वक्लेशकर्मकक्षनिर्दहनाय प्रत्युपस्थितः, सर्वाक्षणज्ञानकान्तारावभासनायोद्युक्तः, सर्वसत्त्वजरामरणप्रपातभयविनिवर्तनाय व्यवस्थितः, त्र्यध्वान्धकारविधमनतायै अभियुक्तः, सर्वधर्मरश्मिप्रमुञ्चनतायै प्रतिपन्नः। एतस्य हि कुलपुत्र, पञ्चतपस्तप्यमानस्य यावन्तः केचिद्ब्राह्मणाः कर्तृत्वमीश्वरत्वं सर्वलोकज्येष्ठत्वमात्मनि मन्यन्ते विविधदृष्टिगताभिनिविष्टाः, तस्य असमोग्रतपोव्रतसमादानप्रभावेण सर्वे स्वभवनेषु न रमन्ते। ते ध्यानरतिमनास्वादयन्तोऽस्य सकाशमुपसंक्रामन्ति। तानेष आगतान्द्युत्यनुभावेनाभिभूय उग्रव्रततपसा च तेभ्यः सर्वदृष्टिगतविनिवर्तनाय सर्वमानमदप्रहाणाय च धर्मं देशयति। सर्वजगन्महामैत्रीमहाकरुणास्फरणतायै बोध्याशयदृढीकरणतायै बोधिचित्तोत्पादविपुलकरणतायै सर्वबुद्धसंदर्शनाभिमुखतायै बुद्धस्वरमण्डलप्रतिलम्भपरिपूरणाय सर्वत्रानुरवणबुद्धघोषाप्रतिघातानावरणतायै च धर्मं देशयति॥

दश च मारसहस्राण्युपर्यन्तरीक्षे स्थित्वा दिव्यैर्मणिरत्नैरभ्यवकीर्य एवमाहुः–अस्य कुलपुत्र, पञ्चतपस्तप्यतोऽस्मादर्चिःस्कन्धादाभा निश्चरित्वा अस्मद्भवनान्यात्मभावनाभवनाभरणपरिभोगांश्च जिह्मीकुर्वन्ति। ते वयं संवेगजाताः सपरिवाराः एतस्य सकाशमुपसंक्रामाम। उपसंक्रान्तानां चैषोऽस्माकं तथा धर्मं देशयति, यथा स्वचित्तप्रतिलब्धा बोधाय चित्तमुत्पाद्य अविनिवर्तनीया भवामोऽनुत्तरायां सम्यक्संबोधौ॥

दश च वशवर्तिदेवराजसहस्राणि दिव्यैः पुष्पैरभ्यवकीर्य एवमाहुः–वयं कुलपुत्र, अस्य पञ्चतपस्तप्यतः स्वभवनेषु रतिं न विन्दामः। ते वयं स्वस्वजनपरिवारा एतस्य सकाशमुपसंक्रमामः। स एषोऽस्माकमुपसंक्रान्तानां स्वचित्तवशवर्तिताप्रतिलाभाय धर्मं देशयति। सर्वक्लेशवशिताप्रतिलाभाय यथाभिप्रायोपपत्तिवशिताप्रतिलाभाय सर्वकर्मावरणविशुद्धिवशिताप्रतिलाभाय सर्वसमापत्तिवशवर्तिताप्रतिलाभाय परिष्कारवशितान्यूहपरिशुद्धये यथाभिप्रायवशवर्तितायै च धर्मं देशयति॥

दश च सुनिर्मितदेवराजसहस्राण्युपर्यन्तरिक्षे स्थित्वा दिव्यसंगीतप्रयोगनिर्नादमधुरनिर्घोषेण पूजां कृत्वा एवमाहुः–एतस्य कुलपुत्र पञ्चतपस्तप्यत एभ्योऽग्निकूटेभ्यस्तद्रूपा प्रभा निश्चरति, यया अस्माकमिमानि विमानान्युत्तप्यन्ते, विशुध्यन्ति, प्रभास्वरतराणि भवन्ति। इमानि चाभरणानि, इमाश्चाप्सरसः, वयमपीदानीं सदेवपुत्राप्सरोगणपरिवारा न कामेषु रतिं विन्दामः। न काममुखमभिनन्दामः। ते वयं प्रह्लादितकायचित्ताः एतस्य सकाशमुपसंक्रमामः। स एषोऽस्माकमुपसंक्रान्तानां चित्तविशुद्धये धर्मं देशयति। चित्तप्रभास्वरतायै चित्तरत्यागतायै चित्तकर्मण्यतायै चित्तप्रीतिसंजननतायै दशबलज्ञानप्रति-

ळाभ्रविशुद्धये महाधर्ममेघविवर्धनतायै कायविशुद्धये अप्रमाणबुद्धकायाभिनिर्हरणतायै वाग्विशुद्धये तथागतघोषप्रतिलाभाय चित्तविशुद्धये सर्वज्ञताप्रतिलाभाय धर्मं देशयति ॥

दश च संतुषितदेवराजसहस्राणि सदेवपुत्राप्सरोगणोपरिवाराणि उपर्यन्तरिक्षे स्थित्वा सर्वगन्धचूर्णमेघवर्षमभिप्रवृष्य पूजयित्वा नमस्कृत्य एवमाहुः—अस्य कुलपुत्र, पञ्चतपस्तप्यमानस्य अस्माकं स्वभवनेषु रतिर्न भवति। ते वयमनभिरताः सन्त एतस्य सकाशमुपसंक्रामाम। तत एषोऽस्माकमुपसंक्रान्तानां सर्वविषयानवेक्षतायै धर्मं देशयति। सतुष्टिचित्ततायै चित्तपरितुष्टितायै कुशलमूलसंजननतायै बोधिचित्तोत्पादप्रतिलाभाय यावत्सर्वबुद्धधर्मपरिपूरणाय धर्मं देशयति ॥

दश च सुयामदेवराजसहस्राणि सदेवपुत्राप्सरोगणपरिवाराणि दिव्यानि मान्दारव- 10 कुसुमवर्षाण्यभिप्रवृष्य एवमाहुः—अस्य कुलपुत्र पञ्चतपस्तप्यमानस्य अस्माकं दिव्यसंगीतिषु रतिर्न भवति। ते वयमनभिरता एतस्य सकाशमुपसंक्रामाम। तत एषोऽस्माकमुपसंक्रान्तानां सर्वकामरतिविनिवर्तनतायै यावत्सर्वबुद्धधर्मप्रतिलाभाय धर्मं देशयति ॥

दश च शक्रदेवेन्द्रशतसहस्राणि प्रत्येकं द्वात्रिंशद्भिरुपेन्द्रैः सदेवपुत्राप्सरोगणपरिवारैः सार्धं दिव्यवस्त्ररत्नाभरणकुसुममेघवर्षमभिप्रवृष्य एवमाहुः—अस्य कुलपुत्र पञ्चतपस्तप्यमानस्य 15 अस्माकं सर्वशक्रभवनोद्यानक्रीडावनदिव्यतूर्यतालोपचारसंगीतिपरिभोगेषु रतिर्न भवति। ते वयमनभिरता एतस्य सकाशमुपसंक्रामाम। तत एषोऽस्माकमुपसंक्रान्तानां सर्वकामरतिप्रहाणाय धर्मं देशयति। सर्वमिदमनित्यं चलं व्ययधर्ममिति वाचमुदीरयति। सर्वमदप्रमादसमुच्छेदनाय धर्मं देशयति अनुत्तरबोधिच्छन्दविवर्धनतायै। अपि तु खलु पुनः कुलपुत्र अस्य संप्रेक्षितेन इमानि मेरुशिखराणि संप्रकम्पितानि। ते वयं व्यथितसंविग्न- 20 चित्ताः सर्वज्ञताचित्तोत्पादनदृढतया सर्वज्ञताज्ञाने प्रणिधिमभिनिर्हराम ॥

दश च नागसहस्राणि ऐरावतनन्दोपनन्दनागराजप्रमुखानि उपर्यन्तरिक्षे गतानि दिव्यकालानुसारिचन्दनमेघैर्नागकन्यासंगीतिनिर्नादमधुरनिर्घोषैर्दिव्यगन्धोदकधाराप्रसृतप्रमुक्तैरभिप्रवृष्य एवमाहुः—अस्य कुलपुत्र पञ्चतपस्तप्यत एभ्यो महाग्निस्कन्धराशिभ्य आभा प्रमुक्ता सर्वनागभवनान्यवभास्य वालिकावर्षसुपर्णिभयान्यपनयन्ति। क्रोधप्रवृत्तिं चैषां 25 प्रशमयित्वा आशयं प्रह्लाद्य मनः प्रसादयन्ति[1]। तत एषोऽस्माकं प्रसन्नचित्तानां धर्मं देशयति, यदुत हीननागगतिविजुगुप्सनतायै सर्वावरणीयकर्मप्रहाणाय। अत्ययं देशयित्वा अनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पाद्य सर्वज्ञतायां प्रतिष्ठापयति ॥

दश च यक्षेन्द्रसहस्राणि गगनतले स्थित्वा नानाविधया पूजया पूजयित्वा जयोष्मायतनं ब्राह्मणं सुधनं च श्रेष्ठिदारकमेवमाहुः—अस्य कुलपुत्र पञ्चतपस्तप्यमानस्य अस्मत्पार्ष- 30 दानां मनुष्येषु मैत्रं चित्तं संजायते। सर्वयक्षराक्षसकुम्भाण्डाश्च मैत्रचित्ता भवन्ति। ते मैत्र-

---

1 B प्रह्लादयन्ति

चित्ता अविहेठनप्रतिपन्ना अस्मत्सकाशमुपसंक्रामन्ति—वयमपीदानीं मैत्र्याधिपत्येनाभिभूताः स्वेषु स्वेषु भवनेषु रतिं न विन्दामः। ते वय सस्वजनपरिवारा एतस्य सकाशमुपसंक्रमामः। तदस्माकमुपसंक्रान्तानामस्य शरीरनिर्याता प्रभा अत्रभास्य सर्वशरीरं सुखेन स्फरति। स एषोऽस्माकं प्रीणितकायचित्तानां तथा धर्मं देशयति, यदनेकेषां यक्षराक्षसकुम्भाण्डकट-पूतनानां बोधाय चित्तान्युत्पद्यन्ते ॥ 5

दश च गन्धर्वेन्द्रसहस्राण्युपर्यन्तरिक्षे स्थित्वा एवमाहुः—अस्माकमपि कुलपुत्र स्वभवनेषु वसतामस्य पञ्चतपस्तप्यत एभ्योऽग्निकूटेभ्य आभा निश्चरित्वा अस्मद्भवनान्यव-भासयति। ते वयं तया प्रभया स्पृष्टा अचिन्त्यसुखसमर्पिता एतस्यान्तिकमुपसंक्रमामः। उपसंक्रान्तानामेषोऽस्माकं तथा धर्मं देशयति, यदविवर्त्या भवामोऽनुत्तरायाः सम्यक्संबोधेः॥

दश च असुरेन्द्रसहस्राणि महासमुद्रादभ्युद्गम्य आकाशे दक्षिणं जानुमण्डलमवनाम्य 10 कृताञ्जलिपुटानि नमस्यमानानि एवमाहुः—अस्य कुलपुत्र, पञ्चतपस्तप्यतोऽस्माकं सर्वेऽसुर-लोकाः ससागराणि सशैलानि च महापृथिवीमण्डलानि प्रकम्पन्ते। ततो वयं सर्वे निहत-मानमददर्पा व्रततपोभिभूता एतस्य सकाशमुपसंक्रमामः। उपसंक्रान्तानामेषोऽस्माकं सर्व-मायाशाठ्यप्रहाणाय गम्भीरधर्मक्षान्त्यवताराय अचलधर्मताप्रतिष्ठानाय दशबलज्ञानपरि-निष्पत्तये च धर्मं देशयति॥ 15

दश च गरुडेन्द्रसहस्राणि महोरगधारिगरुडेन्द्रप्रमुखानि उदारं माणवकरूपमभि-निर्माय एवमाहुः—अस्य कुलपुत्र, पञ्चतपस्तप्यत एभ्योऽग्निराशिभ्यः प्रभा निश्चरित्वा अस्मद्भवनान्यवभास्य संकम्पयति। ते वयं भीतास्त्रस्ताः सविग्नमनसो एतस्यान्तिकमुपसंक्र-मामः। स एष कुलपुत्र, अस्मान् धर्मदेशनया महामैत्र्यां संनियोजयति। महाकरुणायां समादापयति। संसारसागरावगाहनतायां संनियोजयति। कामपङ्कनिमग्नसत्त्वाभ्युद्धरणाय 20 संनियोजयति। बोध्याशयानुगतविशुद्धौ प्रयोजयति। प्रज्ञोपायतीक्ष्णतायां संनियोजयति। यथापरिपक्वसत्त्वविनयायोपयोजयति॥

दश च किंनरेन्द्रसहस्राणि उपर्यन्तरिक्षे स्थित्वा एवमाहुः—अस्य कुलपुत्र पञ्च-तपस्तप्यतो धातुसमीरिताभ्योऽस्मद्भवनगतताडपङ्क्तिभ्यः किङ्किणीजालरत्नमूर्धजालपवृक्षेभ्यो सर्वगायमण्डरत्नाभरणगृहपरिभोगेभ्यो बुद्धशब्दो निश्चरति। धर्मशब्दोऽविवर्त्यबोधि- 25 सत्त्वगणशब्दो बोधिसत्त्वप्रस्थानप्रणिधानशब्दो निश्चरति। अमुष्यां लोकधातुसंख्यायाममुको नाम बोधिसत्त्वो बोधाय प्रणिदधाति। अमुष्यां लोकधातुसंख्यायाममुको नाम बोधिसत्त्वो दुष्करचर्यां करोति। अमुष्यां लोकधातुसंख्यायाममुकनामा बोधिसत्त्वो सर्वज्ञताज्ञान-मण्डं परिशोधयति। अमुष्यां लोकधातुसंख्यायाममुकनामा बोधिसत्त्वो बोधिमण्डमुपसंक्रा-मति। अमुष्यां लोकधातुसंख्यायाममुकनामा बोधिसत्त्वो मारबलं सबलवाहनं पराजित्य अनुत्तरां 30 सम्यक्संबोधिमभिसंबुध्यते। अमुष्यां लोकधातुसंख्यायाममुकनामा तथागतो धर्मचक्रं प्रवर्तयति। अमुष्यां लोकधातुसंख्यायाममुको नाम तथागतोऽनन्तं बुद्धकार्यं कृत्वा अनुपधिशेषनिर्वाण-

धातौ परिनिर्वातीति। अपर्यन्ताः कुलपुत्र भवेज्जम्बुद्वीपे सर्वतृणकाष्ठशाखापत्रपलाशानां परमाणुभागशः परिच्छिन्नानाम्, न त्वेव तेषां तथागतनाम्नां बोधिसत्त्वप्रणिधीनां बोधिसत्त्वचर्याप्रस्थानविशेषाणाम्, येऽस्मद्भवनगततालपङ्क्तिभ्यो यावत्सर्ववाद्यभाण्डरत्नाभरणगृहपरिभोगेभ्यो वायुसमीरितेभ्यो बुद्धधर्मबोधिशब्दा निश्चरन्ति अनुरवन्ति, श्रोत्रविज्ञप्तिमागच्छन्ति। 5 ते वयं कुलपुत्र, बुद्धसंघबोधिसत्त्वप्रस्थानप्रणिधिचर्यानामनिर्घोषेण महाप्रीतिवेगहर्षसंजाता एतस्य सकाशमुपसंक्रामामः। स यथोऽस्माकमुपसंक्रान्तानां तथा धर्मं देशयति, यदस्मत्परिषदि अनेके सत्त्वा अविवर्त्या भवन्त्यनुत्तरायाः सम्यक्संबोधेः॥

अपरिमाणानि च कामावचरदेवपुत्रसहस्राण्युदारोदारवर्णान्याकाशे स्थित्वा मनोमय्या पूजया पूजयित्वा एवमाहुः—अस्य कुलपुत्र पञ्चातपस्तप्यत एभ्योऽग्निकूटेभ्यस्तथारूपा प्रभा 10 निश्चरति, यया प्रभया अवीचिपर्यन्तान् सर्वनिरयानवभास्य सर्वनैरयिकसत्त्वदुःखानि प्रतिप्रश्रब्धानि। तयैव प्रभया अयमस्माकं चक्षुषु आभासमागच्छति। ते वयमस्योपरि चित्तानि प्रसादयित्वा प्रणीतेषु कामावचरदेवनिकायेषूपपन्नाः। ते वयमस्य कृतज्ञतया दर्शनेनावितृप्ताः सर्वकामरतिमुत्सृज्य अस्य सकाशमुपसंक्रमामः। तत एषोऽस्माकमुपसंक्रान्तानां तथा धर्मं देशयति, यदपरिमाणाः सत्त्वा बोधाय प्रणिदधति॥

15 अथ खलु सुधनः श्रेष्ठिदारकस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः इममेवं रूपं धर्मनयं श्रुत्वा जयोष्मायतने ब्राह्मणे भूतकल्याणमित्रसंज्ञामुत्पाद्य जयोष्मायतनस्य ब्राह्मणस्य पादयोः प्रणिपत्य एवमाह—अत्ययमत्ययतो देशयाम्यार्य योऽहं कल्याणमित्राज्ञां प्रतियाहयामि। अथ खलु जयोष्मायतनो ब्राह्मणः सुधनं श्रेष्ठिदारकं गाथयाध्यभाषत—

प्रदक्षिणं य बोधिसत्त्व आनुशास्ति कुर्वती
20 न काङ्क्षये गुरुभ्य एकधा स्थपित्व मानसम्।
ततोऽस्य सर्व अर्थ भोन्ति तेऽपि च प्रदक्षिणाः
प्रदक्षिणं च बुद्धज्ञानु बोधिमूलि बुध्यते॥ १॥

अथ खलु सुधनः श्रेष्ठिदारकस्तं क्षुरधाराचितं पर्वतप्रपातमार्गमभिरुह्य तत्र महाग्निस्कन्धे प्रापतत्। तेन प्रपतता सुप्रतिष्ठितो नाम बोधिसत्त्वसमाधिः प्रतिलब्धः। तेन 25 चाग्निस्पर्शनेन प्रशमसुखाभिज्ञो नाम बोधिसत्त्वसमाधिः प्रतिलब्धः। स एवमाह—आश्चर्यमार्य यावत्सुखसंस्पर्शोऽयं अग्निस्कन्धः, एष च क्षुरधाराचितः पर्वतप्रपातमार्गः। स आह—अहं कुलपुत्र, अपर्यादत्तमण्डलस्य बोधिसत्त्वविमोक्षस्य लाभी। एतमहं कुलपुत्र अपर्यादत्तमण्डलं बोधिसत्त्वविमोक्षं जानामि। किं मया शक्यं तेजोरश्मिकल्पानां बोधिसत्त्वानां सर्वजगत्क्लेशदृष्टिपर्यादत्तप्रणिधानानामप्रत्युदावर्त्यकेतूनामपर्यादत्तहृदयानामदीन- 30 चित्तानामसंकुचितमानसानां वज्रगर्भनारायणकल्पानां महारम्भोत्तरणाविषण्णानामशिथिल-

1 S om. बुद्धधर्मबोधिशब्दा.

प्रयोगानां यातमण्डलीकल्पानां सर्वजगदर्थप्रयुक्तानामविवर्त्यवीर्याणामप्रत्युदावर्त्यसंनाहानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ?

गच्छ कुलपुत्र, इदमिहैव दक्षिणापथे सिंहविजृम्भितं नाम नगरम् । तत्र मैत्रायणी नाम कन्या, राज्ञः सिंहकेतोर्दुहिता, पञ्चकन्याशतपरिवारा । तामुपसंक्रम्य परिपृच्छ–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥ 5

अथ खलु सुधनः श्रेष्ठिदारको जयोष्मायतनस्य ब्राह्मणस्य पादौ शिरसाभिवन्द्य जयोष्मायतनं ब्राह्मणमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य जयोष्मायतनस्य ब्राह्मणस्यान्तिकात्प्रक्रान्तः ॥ १० ॥



## १२ मैत्रायणी ।

अथ खलु सुधनः श्रेष्ठिदारकः कल्याणमित्राचिन्त्यगोचरनिर्यातः उदाराधिमुक्ति-
विशुद्धो महायानाभिमुखो बुद्धज्ञानाभिलाषी बुद्धधर्मसमवसरणः कल्याणमित्रानुबन्धना-
भिकाङ्क्षी धर्मगोचरविचारी असङ्गज्ञानाभिमुखो भूतकोटीसुविनिश्चितः ज्ञानकोटीस्थित-
विषयः त्र्यध्वक्षणकोट्यनुगतः आकाशकोट्यद्वयाभिमुखः अद्वयकोटीविनिश्चयप्राप्तो धर्मधातु-
कोट्यविकल्पविहारी अनावरणकोटीविनयप्रतिषेधप्रविष्टः कर्मकोट्यविरोधपरमः तथागत-
कोट्यविकल्पविहारी सर्वसत्त्वसंज्ञाजालविकिरणज्ञानपरमः सर्वक्षेत्राभिनिवेशविगतः सर्वबुद्ध-
पर्षन्मण्डलेष्वनुनीतचित्तः सर्वबुद्धक्षेत्रपरिशुद्धिष्वनिकेतविहारी सर्वसत्त्वेषु निरात्मनिःसत्त्व-
संज्ञी सर्वशब्देषु प्रतिश्रुत्कोपमावतीर्णः सर्वरूपेषु रूपप्रतिभासविज्ञप्तिपरमोऽनुपूर्वेण येन सिंह-
10 विजृम्भितं नगरं तेनोपसंक्रम्य मैत्रायणीं कन्यामन्वेषमाणः परिमार्गमाणोऽश्रौषीत्—एषा मैत्रा-
यणी कन्या राज्ञः सिंहकेतोर्दुहिता पञ्चकन्याशतपरिवारा वैरोचनगर्भप्रासादतलाभिरूढा
उरगसारचन्दनपादे सुवर्णसूत्रजालक्ष्योते दिव्यचीवरप्रज्ञप्ते भद्रासने उपविष्टा धर्मं देशयति।
श्रुत्वा च पुनः सिंहविजृम्भितं नगरं प्रविश्य येन राज्ञः सिंहकेतोर्गृहं तेनोपसंक्रम्य राज्ञो
बहिर्द्वारशालायां प्रत्यस्थात् मैत्रायण्याः कन्याया दर्शनकामः । स तत्राद्राक्षीदनेकानि
15 प्राणिशतानि, अनेकानि प्राणिसहस्राणि, अनेकानि प्राणिशतसहस्राणि प्रविशमानानि ।
दृष्ट्वा च परिपृच्छति—क यूयं गच्छथ कुलपुत्राः, क वा आगच्छथ ? तेऽवोचन्—मैत्रायण्याः
सकाशं धर्मश्रवणाय । तस्यैतदभवत्—नात्र कश्चित्प्रतिनिवार्यतेऽनुप्रविशन् । इति स
प्राविशत् । प्रविष्टोऽद्राक्षीत्तं वैरोचनगर्भं प्रासादं स्फटिकसंस्थिततलायां पृथिव्यां वैडूर्यमयैः
स्तम्भैर्वज्रमयैर्भित्तिभिर्जाम्बूनदकनककूटनिर्यूहशतसहस्रालंकारमसंख्येयमणिरत्नविचित्रसह-
20 स्रगर्भरत्नादर्शमण्डलरचितं जगद्रोचनमणिरत्नव्यूहमसंख्येयरत्नजालपरिक्षिप्तं सुवर्णघण्टानां
शतसहस्रसमीरितं मधुरनिर्घोषाचिन्त्यव्यूहालंकारम्, तां च मैत्रायणीकन्यामद्राक्षीद् अभि-
नीलनेत्रामभिनीलकेशीं सुवर्णवर्णच्छविम् । स तस्याः पादौ शिरसाभिवन्द्य अनेकशत-
सहस्रकृत्वः प्रदक्षिणीकृत्य प्राञ्जलिः स्थित्वा एवमाह—मया आर्ये अनुत्तरायां सम्यक्संबोधौ
चित्तमुत्पादितम् । न च जानामि—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं
25 प्रतिपत्तव्यम् । श्रुतं च मे आर्या बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे
आर्या कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । आह—
प्रेक्षस्व कुलपुत्र मम भवनव्यूहानिति । स समन्तादनुविलोकयन्नद्राक्षीदेकैकस्या भित्तेरेकैक-
स्मात्स्तम्भादेकैकस्मादादर्शमण्डलादेकैकस्मादाकारादेकैकस्मात्संस्थानादेकैकस्मान्मणिरत्नात्
एकैकस्याः सुवर्णघण्टायाः एकैकस्माद्रत्नवृक्षादेकैकस्माद्रोमविवरादेकैकस्माद्रत्नहाराद् धर्म-
30 धातुगर्भांस्तथागतान् सप्रथमचित्तोत्पादान् सचर्याप्रणिधानविषयान् सनिर्याणव्यूहान् साभि-
संबोधिविकुर्वितान् सधर्मचक्रप्रवर्तनान् सपरिनिर्वाणदर्शनान् प्रतिभासयोगेन । यथा च

१ S °घोष°.

एकस्मादारम्बणात्, तथा सर्वारम्बणेभ्यः। तद्यथापि नाम उदकसरसि स्वच्छेऽनाविले विप्रसन्ने गगनं चन्द्रादित्यं ज्योतिर्गणप्रतिमण्डितं संदृश्यते प्रतिभासयोगेन, एवमेव वैरोचनगर्भप्रासादस्य एकैकस्मादारम्बणाद्धर्मधातुगतास्तथागताः संदृश्यन्ते प्रतिभासयोगेन, यदुत मैत्रायण्याः कन्यायाः पूर्वकुशलमूलनिष्यन्देन। सोऽनुविलोक्य तद्बुद्धदर्शनव्यूहनिमित्तं संधारयन् प्राञ्जलीभूतो मैत्रायण्याः कन्याया वचनं संप्रेक्षते स्म। सा प्रोवाच—अहं कुलपुत्र समन्तव्यूहस्य प्रज्ञापारमितामुखपरिवर्तस्य लाभिनी। एष च मे समन्तव्यूहः प्रज्ञापारमितामुखपरिवर्तः षट्त्रिंशद्गङ्गानदीवालिकासमानां तथागतानामन्तिकात्पर्यन्विष्टः। ते च मे तथागता नानामुखप्रवेशैरेतं समन्तव्यूहं प्रज्ञापारमितामुखपरिवर्तमवतारयामासुः। यच्चैकेन देशितम्, न तद् द्वितीयेन। आह—क एतस्य आर्ये समन्तव्यूहस्य प्रज्ञापारमितामुखपरिवर्तस्य विषयः? आह—एतन्मम कुलपुत्र समन्तव्यूहं प्रज्ञापारमितामुखपरिवर्तमभिमुखीकुर्वन्त्या उपनिध्यायन्त्या अनुसरन्त्या व्यवचारयन्त्या अनुविचिन्तयन्त्या आकारयन्त्या आधारयन्त्या व्यूहयन्त्या अभिनिर्हरन्त्याः समलंकुर्वन्त्याः प्रविचिन्वन्त्याः समन्तमुखा नाम धारणी आजायते, यत्र धारणीमण्डले दश धर्ममुखासंख्येयशतसहस्राण्यावर्तन्ते समवसरन्ति आमुखीभवन्ति अभिपतन्ति परिवर्तन्ते—यदुत बुद्धक्षेत्रमुखं बुद्धमुखं धर्ममुखं सर्वसत्त्वमुखमतीतमुखमनागतमुखं प्रत्युत्पन्नमुखं स्थितकोटीमुखं पुण्यमुखं पुण्यसंभारमुखं ज्ञानमुखं ज्ञानसंभारमुखं प्रणिधानमुखं प्रणिधानविकल्पमुखं चर्यामुखं चर्याविशुद्धिमुखं चर्यासमुदयमुखं चर्यापरिपूरिमुखं कर्ममुखं कर्मविरोचनमुखं कर्मस्रोतमुखं कर्माभिसंस्कारमुखं कर्मविषयमुखं विषमकर्मपरिवर्जनमुखं सम्यक्कर्मप्रतिपत्तिमुखं कर्मवशितामुखं सुचरितमुखं सुचरितसमादापनमुखं समाधिमुखं समाध्यनुचारमुखं समाधिविचारमुखं समाधिगोचरमुखं समाधिव्युत्थानमुखमभिज्ञामुखं चित्तसागरमुखं चित्तपर्यायमुखं चित्तलतापरिशुद्धिमुखं चित्तगहनावभासमुखं चित्तसरःप्रसादनमुखं चित्तसंभवमुखं चित्तविचारमुखं सत्त्वसंक्लेशप्रचारमुखं क्लेशवासनामुखं क्लेशप्रयोगमुखमधिमुक्तिमुखं सत्त्वचर्यामुखं सत्त्वचर्याविमात्रतामुखं लोकसंभवमुखं सत्त्वाशयमुखं सत्त्वसंज्ञागतमुखं दिग्मुखं धर्मदिङ्मुखं महाकरुणामुखं महामैत्रीमुखं शान्तिमुखं शमथमुखं नयमुखमनुगममुखं विभक्तिमुखं समवसरणमुखमसङ्गकोटीमुखं समन्तमुखं बुद्धधर्ममुखं बोधिसत्त्वधर्ममुखं श्रावकधर्ममुखं प्रत्येकबुद्धधर्ममुखं लोकधर्ममुखं लोकसंभवधर्ममुखं लोकविभवधर्ममुखं लोकसंस्थानधर्ममुखं लोकधातुविशुद्धिमुखं लोकधातुसंक्लिष्टमुखं संक्लिष्टविशुद्धिलोकधातुमुखं विशुद्धिसंक्लिष्टलोकधातुमुखमेकान्तसंक्लिष्टलोकधातुमुखमेकान्तविशुद्धलोकधातुमुखं लोकधातुसमतलानुगतमुखं व्यत्यस्तलोकधातुमुखमवमूर्धातमुखमिन्द्रजालप्रवेशमुखं लोकधातुपरिवर्तमुखं प्रतिष्ठानसंज्ञागतमुखं सूक्ष्मोदारानुगममुखमुदारसूक्ष्मप्रवेशमुखं बुद्धदर्शनमुखं बुद्धकायवैमात्र्यमुखं बुद्धरश्मिजालवैचित्र्यमुखं बुद्धस्वरमण्डलविभक्तिमुखं बुद्धधर्मचक्राभिनिर्हारमुखं बुद्धधर्मचक्राभेदमुखं बुद्धधर्मचक्रनिरुक्तिमुखं बुद्धधर्मचक्रप्रवर्तनपरिवर्तमुखं बुद्धकायमुखं बुद्धपर्षन्मण्डल-

1 S °भिदेन्मुखं. 2 S om. °वर्त°

मुखं बुद्धपर्षन्मण्डलविभक्तिमुखं बुद्धपर्षन्मण्डलसागरावतरणमुखं बुद्धबलावभासमुखं बुद्धसमाधिमुखं बुद्धसमाधिविकुर्वणमुखं बुद्धविहारमुखं बुद्धाधिष्ठानमुखं बुद्धनिर्माणमुखं बुद्धपरसत्त्वचित्तविज्ञप्तिमुखं बुद्धविकुर्वितमुखं तुषितभवनसंवासमुखं यावत्परिनिर्वाणसंदर्शनमुखम् अप्रमाणसत्त्वार्थनियामुखं गम्भीरधर्मनयमुखं विचित्रधर्मनयमुखं बोधिसत्त्वधर्मरूपमुखं बोधिचित्तसंभवरूपधर्ममुखं बोधिचित्तसंभाररूपमुखं प्रणिधिरूपमुखं चर्यारूपमुखमभिज्ञारूपमुखं निर्याणरूपमुखं धारणीविशुद्धिरूपमुखं ज्ञानमण्डलविशुद्धिरूपमुखं प्रज्ञापरिशुद्धिरूपमुखं बोध्यप्रमाणरूपमुखं स्मृतिविशुद्धिरूपमुखम् । एतमहं कुलपुत्र समन्तस्मृतिव्यूहं प्रज्ञापारमितामुखपरिवर्तं जानामि । किं मया शक्यमाकाशधातुसमचित्तानां बोधिसत्त्वानां धर्मधातुविपुलमतीनां पुण्यसंभारोपस्तम्भसंतानानां लोकोत्तरप्रतिपत्प्रतिपन्नानामसमुदाचारलोकधर्माणां वितिमिरज्ञानालोकचक्षुःप्रतिलब्धानामतमःसर्वधर्मधातुप्रतिविद्धानां अनन्तकल्पाप्रमाणबुद्धीनां सर्वारम्बणानुस्मृतचक्षुषां असङ्गभूम्यालोकगर्भाणां सर्वधर्मार्थपदप्रभेदकुशलानां सर्वलोकानभिभूतानां लोकचारित्रविविधविचाराणां सर्वलोकमलानवद्यानां सर्वलोकार्थक्रियापरमाणां सर्वजगत्प्रतिशरणानां सर्वजगद्वागुपचारविधिज्ञानां सर्वजगन्निवासाशयानां यथाशयविज्ञप्तिनिदर्शनानां सर्वकालचक्रवशवर्तिनां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे त्रिनयनो नाम जनपदः । तत्र सुदर्शनो नाम भिक्षुः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको मैत्रायण्याः कन्यायाः पादौ शिरसाभिवन्द्य मैत्रायणीं कन्यामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य मैत्रायण्याः कन्यायाः सकाशाद् प्रक्रान्तः ॥ ११ ॥

# १४ सुदर्शनः ।

अथ खलु सुधन श्रेष्ठिदारको गम्भीर बोधिसत्त्वज्ञानविचारमनुविचिन्तयन्, गम्भीर धर्मधातुतलानुगमनमनुविचिन्तयन्, गम्भीर सर्वसूक्ष्मज्ञानमनुविचिन्तयन्, लोकसज्ञागतगम्भीरतामनुविचिन्तयन्, अनभिसस्कारतलगम्भीरतामनुविचिन्तयन्, चित्तस्रोतस्तलगम्भीरतामनुविचिन्तयन्, प्रतीत्यसमुत्पादतलगम्भीरतामनुविचिन्तयन्, स्वभावसत्यतलगम्भीरतामनुविचिन्तयन्, सर्वजगद्व्यवहारसत्यतलगम्भीरतामनुविचिन्तयन्, धर्मधातुप्रतिमण्डितव्यूहतलगम्भीरतामनुविचिन्तयन्, कायवज्रापेक्षतलगम्भीरतामनुविचिन्तयन्, कर्मचित्तलोकतलगम्भीरतामनुविचिन्तयन्, अनुपूर्वेण येन त्रिनयनो जनपदस्तेनोपसक्रम्य सुदर्शन भिक्षु मार्गयमाणो जनपदव्यवचारेषु नगरव्यवचारेषु पट्टनव्यवचारेषु निगमव्यवचारेषु ग्रामव्यवचारेषु घोषव्यवचारेषु ऋष्याश्रमव्यवचारेषु देशप्रदेशव्यवचारेषु जल्पथव्यवचारेषु गिरिदरिव्यवचारेषु महावनषण्डव्यवचारेषु सोऽद्राक्षीद् सुदर्शन भिक्षुमन्यतमस्मिन् वनषण्डे चक्रम्यमाण दहर तरुणमभिरूप प्रासादिक दर्शनीयमभिनीलप्रदक्षिणावर्तकेश छत्राकारमूर्धानमुष्णीषशिरस पृथुललाटमभिनीलविशालगोपक्ष्मनयन मधुरोन्नतचारुतुङ्गनासिकावश हिङ्गुलकसुवर्णसुश्लिष्टोष्ठ समसहितसुशुक्लपूर्णचत्वारिंशद्दन्त सिंहहनु परिपूर्णोपचितकपोल सुरुचिरचापायतभ्रुव शशाङ्कवर्णोर्णया धृततिलकमायतमुक्तप्रलम्बकर्ण पूर्णचन्द्रसौम्यवदन कम्बुरुचिरवृत्तग्रीव श्रीवत्सालकृतहृदय सिंहपूर्वार्धकाय चितान्तरास सुसवृतस्कन्ध प्रलम्बबाहु जालावनद्धाङ्गुलिं चक्राङ्कितहस्तपाद मृदुतरुणोपचितपाणिपाद सप्तोत्सद वज्रसदृशमध्य बृहदृजुगात्र सुवर्तितोरु कोशगतवस्तिगुह्य ऐणेयजङ्घ दीर्घाङ्गुलिमायतपादपार्ष्णि व्यामप्रभ सुवर्णवर्णच्छविमेकैकप्रदक्षिणावर्तरोम न्यग्रोधराजपरिमण्डल लक्षणानुव्यञ्जनोपचितशरीर अनिमिषानिभ्रान्तदृष्टिमुपस्थितस्मृतिं हिमवत्पर्वराजमिव नानातृणवनौषधिप्रतोपशोभित विपुलबुद्धिमसहार्यज्ञानगोचरविषय जलधराकारस्वरमण्डलव्यूह सर्वेञ्जनमन्यनस्पन्दनप्रपञ्चनापगतचित्तम् असभिन्नज्ञानगोचर विपुलबुद्धज्ञानविषयावभासप्रतिलब्ध सर्वसत्त्वपरिपाकविनयाव्युच्छिन्नाशय सजातविपुलमहाकरुणामण्डल सर्वतथागतधर्मचक्रसधारणार्थं सर्वसत्त्वज्ञानालोकसजननार्थं तथागतगतिमनुस्मरन्त सर्वजगदर्थचक्रमाभिरूढमद्रुतमविलम्बित निभृत सुव्यवस्थित चक्रम्यमाण शुद्धावासदेवकल्पवसन देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालमनुष्यामनुष्यै परिवृतम् ॥

तस्य खलु पुन सुदर्शनस्य भिक्षोश्चक्रम्यमाणस्याभिमुखदिगावृता दिग्देवता दिङ्मण्डलमावर्तयन्ति । पदगामिन्यो देवता रत्नपद्मै क्रमविक्षेप सप्रतीच्छन्ति । अपर्यादत्तालोकमण्डलोपचलनदेवतास्तमो विकार विधमन्ति । जम्बुध्वजवनदेवता कुसुमौघवर्षमभिप्रवर्षन्ति । अचलगर्भभूमिदेवता रत्नाकराण्युपदर्शयन्ति । समन्तावभासश्रीगगनदेवता गगनतलमलकुर्वन्ति । श्रीसभवा सागरदेवता महामणिरत्नैरभ्यवकिरन्ति । विमलगर्भा सुमेरुदेवता

१ B om. पट्टनव्यवचारेषु

कृताञ्जलिपुटा नमस्यन्ति। असङ्गबला वायुदेवता गन्धधूपपुष्पाकुलं मारुतं प्रमुञ्चन्ति। वासन्तीरात्रिदेवताः स्वलंकृतशरीराः प्रणताङ्गा नमस्यन्ति। सदाविबोधनमण्डला दिवसदेवता दिग्मोचनमणिरत्नध्वजगृहीता गगनतले तिष्ठन्ति आलोकसंजननार्थाय॥

अथ खलु सुधनः श्रेष्ठिदारको येन सुदर्शनो भिक्षुस्तेनोपसंक्रम्य सुदर्शनस्य भिक्षोः ५ क्रमतलाभ्यां निपत्य सुदर्शनस्य भिक्षोः क्रमतलं परिचुम्ब्य परिलिह्य पुरतः प्राञ्जलि स्थित्वा एवमाह—अहमार्य अनुत्तरायां सम्यक्संबोधौ संप्रस्थितो बोधिसत्त्वचर्यां परिमार्गामि। श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददाति, अनुशासनीमनुप्रयच्छति। तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। स आह—अहं कुलपुत्र दहरो जात्या, नवकस्तु प्रव्रज्यया। तेन मे कुलपुत्र एकजन्मना १० अष्टत्रिंशद्गङ्गानदीवालुकासमानां तथागतानामन्तिके ब्रह्मचर्यं चीर्णम्। क्वचिन्मे तथा रात्रिंदिवं ब्रह्मचर्यं चीर्णम्, क्वचित्सप्त रात्रिंदिवानि, क्वचिदर्धमासम्, क्वचिन्मासम्, क्वचिद्वर्षम्, क्वचिद्वर्षशतम्, क्वचिद्वर्षसहस्रम्, क्वचिद्वर्षशतसहस्रम्, क्वचिद्वर्षकोटीम्, क्वचिद्वर्षकोटीनियुतम्, क्वचिद् यावदनभिलाप्यानभिलाप्यानि वर्षाणि, क्वचिदन्तरकल्पम्, क्वचिदर्धकल्पम्, क्वचित्कल्पम्, क्वचिन्मे तथागते यावदनभिलाप्यानभिलाप्यान् कल्पान् १५ ब्रह्मचर्यं चीर्णमनयैव कल्पसंख्यया। सर्वेषामेव तथागतानामन्तिकाद्धर्मदेशना श्रुता। अववादानुशासनी संप्रतीच्छिता। प्रणिधानव्यूहाः परिशोधिताः। समुदागमविषयावतीर्णचर्यामण्डलं परिशोधितम्। पारमितासागराः परिपूरिताः। अभिसंबोधिविकुर्वितानि आज्ञातानि। धर्मचक्रप्रवर्तनानि चैषामन्योन्यासंभिन्नानि संधारितानि। बलसमता चैषामवतीर्णा। शासनं चैषां संधारितं यावत्सद्धर्मनिष्ठापर्यन्तम्। सर्वेषां च मे तेषां तथागतानां २० पूर्वप्रणिधानानि स्वबुद्धक्षेत्रपरिशुद्धयेऽभिनिर्हृतानि प्रणिधिमण्डलसमाप्त्यभिनिर्हारबलेन। सर्वेषां च मे तेषां पूर्वबोधिसत्त्वचर्याः स्वचर्यापरिशुद्धयेऽभिनिर्हृताः सर्वचर्यासागरसमाधिप्रतिलम्भबलेन। सर्वेषां च मे तेषां तथागतानां पारमिताविशुद्धिरभिनिर्हृता समन्तभद्रचर्यानिर्याणबलेन। अपि तु खलु पुनर्मे कुलपुत्र एवं चंक्रम्यमाणस्य सर्वदिक्स्रोतोमुखान्यावर्तन्ते सुविलोकितज्ञानमुखतया। सर्वलोकधातुस्रोतोमुखानि व्यावर्तन्ते एकचित्तोत्पादेन अनभिलाप्यानभि- २५ लाप्यलोकधात्वतिक्रमणपरिशोधनतायै यदुत महाप्रणिधानाभिनिर्हारबलेन। एकचित्तक्षणेन अनभिलाप्यानभिलाप्यसत्त्वचर्यानयमुखान्यभिमुखमावर्तन्ते दशबलज्ञानपरिपूरये। समन्तभद्रबोधिसत्त्वचर्याप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यबुद्धक्षेत्रदर्शनविशुद्धयोऽभिमुखीभवन्ति अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमतथागतपूजोपस्थानपरिचारणतायै। पूर्वोत्तरतथागतपूजाप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभि- ३० लाप्यानभिलाप्यतथागतधर्ममेघा आशयेऽभिपतन्ति। असदृशोपधर्मगतिनिर्देश्यनुगमधर्मचक्रसंधारणधारणीप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यबोधिसत्त्वचर्या-

१ ll धर्मविधिता.

समुद्रा अभिमुखा आवर्तन्ते सर्वचर्यामण्डलपरिशोधनतायै । इन्द्रजालोपमबोधिसत्त्वचर्यापरिपूरिप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यसमाधिसागरा अभिमुखा आवर्तन्ते सर्वसमाधिमण्डलपरिशोधनतायै । एकसमाधिमुखैः सर्वसमाधिमुखसमवसरणप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्येन्द्रियसमुद्रा अभिमुखमावर्तन्ते सर्वेन्द्रियचक्रकालचक्रानुवर्तनतायै । स्मृतिकोटीन्द्रियप्रतिलाभप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यकालचक्राण्यभिमुखमावर्तन्ते सर्वकालधर्मचक्रप्रवर्तनतायै । अनिष्टसत्त्वनिष्ठाप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यसर्वत्र्यध्वसागरा अभिमुखमावर्तन्ते सर्वलोकधातुषु त्र्यध्वव्यवस्थानतया अनुगमज्ञानालोकप्रणिध्यभिनिर्हारबलेन । एतमहं कुलपुत्र अनिशान्तज्ञानप्रदीपं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यं वज्रकल्पाशयानां बोधिसत्त्वानां सर्वतथागतकुलकुलीनताभिजातानामनुपरुद्धजीवितेन्द्रियाणामनिशान्तज्ञानप्रदीपानामनाच्छेद्यामेघकायानां मायागतरूपाभिनिर्वृत्तानां प्रत्ययधर्मसमाप्तप्रलग्नशरीराणां यथाशयजगद्विज्ञप्तिकायानां सर्वजगदुपमरूपकायवर्णसंस्थानारोहपरिणाहसंदर्शकायानामग्निज्वालाविषशस्त्रानुपघातशरीराणां वज्रदृढचक्रवालानवमृद्यात्मभावानां सर्वमारपरप्रवादिबलाबलकरणानां जाम्बूनदकनकपर्वतसंनिभानां सर्वजगदभ्युद्गतशरीराणां सर्वजगद्वित्तस्याश्रयाणां समन्तमुखविज्ञप्तिश्रवणानां सर्वजगदुल्लोकितमुखानां सर्वधर्मजलधराकारभूतानां समन्तदिग्विरोचनानां सर्वावरणपर्वतविकिरणत्वादप्रतिकूलदर्शनानां सर्वाकुशलमूलात्यन्तसमुद्घाटितत्वात्परमशूरदर्शनानां विपुलकुशलमूलनिष्यन्दसंभूतत्वादभिलपितदर्शनानां परमदुर्लभप्रादुर्भावत्वादुदुम्बरपुष्पसदृशानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इदमिहैव दक्षिणापथे श्रमणमण्डले जनपदे सुमुखं नाम नगरम् । तत्र इन्द्रियेश्वरो नाम दारकः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको बोधिसत्त्वविक्रमप्रतिपद्विशुद्धिपरमः बोधिसत्त्वबलालोकावभासितचित्तोऽपराजितबोधिसत्त्ववीर्यपर्यादत्तहृदयः बोधिसत्त्वदृढप्रणिधिसंनाहासंकुचितचित्तो बोधिसत्त्वाशयदृढसंस्थानपरिणाहपरमो बोधिसत्त्वचर्यामेघसंधारणसंप्रस्थानाशयो बोधिसत्त्वधर्ममेघापरितृप्तसंतानः सर्वबोधिसत्त्वगुणानन्ताभिमुखप्रणिधानः सर्वजगत्सारथिसंग्राहकभूतमात्मानमुपनामयितुकामः सर्वजगन्महासंसाराटवीकान्तारादतिक्रामयितुकामः[1] कल्याणमित्रदर्शनश्रवणपर्युपासनापरितृप्त एव अप्रमाणधर्मगौरवसंजातः सुदर्शनस्य भिक्षोः पादौ शिरसाभिवन्द्य सुदर्शनं भिक्षुमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सुदर्शनस्य भिक्षोरन्तिकात्प्रक्रान्तः ॥ १२ ॥

---

१ II °निर्मोचानां. २ B °मनुप्रैषिस्य.



कृताञ्जलिपुटा नमस्यन्ति । असङ्गबला वायुदेवता गन्धधूपपुष्पाकुलं मारुतं प्रमुञ्चन्ति ।
वासन्तीरात्रिदेवताः स्वलंकृतशरीराः प्रणताङ्गा नमस्यन्ति । सदाविबोधनमण्डला दिवसदेवता
दिग्मोचनमणिरत्नध्वजगृहीता गगनतले तिष्ठन्ति आलोकसंजननार्थाय ॥

अथ खलु सुधनः श्रेष्ठिदारको येन सुदर्शनो भिक्षुस्तेनोपसंक्रम्य सुदर्शनस्य भिक्षोः
5 क्रमतलाभ्यां निपत्य सुदर्शनस्य भिक्षोः क्रमतलं परिचुम्ब्य परिलिह्य पुरतः प्राञ्जलिः
स्थित्वा एवमाह–अहमार्य अनुत्तरायां सम्यक्संबोधौ संप्रस्थितो बोधिसत्त्वचर्यां परिमार्गामि।
श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददाति, अनुशासनीमनुप्रयच्छति । तद्वदतु
मे आर्यः–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । स
आह–अहं कुलपुत्र दहरो जात्या, नवकस्तु प्रव्रज्यया । तेन मे कुलपुत्र एकजन्मना
10 अष्टत्रिंशद्गङ्गानदीवालुकासमानां तथागतानामन्तिके ब्रह्मचर्यं चीर्णम् । कचिन्मे तथा रात्रिं-
दिवं ब्रह्मचर्यं चीर्णम्, कचित्सप्त रात्रिंदिवानि, कचिदर्धमासम्, कचिन्मासम्, कचि-
द्वर्षम्, कचिद्वर्षशतम्, कचिद्वर्षसहस्रम्, कचिद्वर्षशतसहस्रम्, कचिद्वर्षकोटीम्, कचि-
द्वर्षकोटीनियुतम्, कचिद् यावदनभिलाप्यानभिलाप्यानि वर्षाणि, कचिदन्तरकल्पम्,
कचिदर्धकल्पम्, कचित्कल्पम्, कचिन्मे तथागते यावदनभिलाप्यानभिलाप्यान् कल्पान्
15 ब्रह्मचर्यं चीर्णमनयैव कल्पसंख्यया । सर्वेषामेव तथागतानामन्तिकाद्धर्मदेशना श्रुता ।
अववादानुशासनी संप्रतीच्छिता । प्रणिधानव्यूहाः परिशोधिताः । समुदागमविषया-
वतीर्णचर्यामण्डलं परिशोधितम् । पारमितासागराः परिपूरिताः । अभिसंबोधिविकुर्वितानि
आज्ञातानि । धर्मचक्रप्रवर्तनानि चैषामन्योन्यासंभिन्नानि संधारितानि । बलसमता चैषा-
मवतीर्णा । शासनं चैषां संधारितं यावत्सद्धर्मनिष्ठापर्यन्तम् । सर्वेषां च मे तेषां तथागतानां
20 पूर्वप्रणिधानानि स्वबुद्धक्षेत्रपरिशुद्धयेऽभिनिर्हृतानि प्रणिधिमण्डलसमाध्यभिनिर्हारबलेन ।
सर्वेषां च मे तेषां पूर्वबोधिसत्त्वचर्या स्वचर्यापरिशुद्धयेऽभिनिर्हृता सर्वचर्याप्रस्तारसमाधिप्रति-
लम्भबलेन । सर्वेषां च मे तेषां तथागतानां पारमिताविशुद्धिरभिनिर्हृता समन्तभद्रचर्यानिर्याण-
बलेन । अपि तु खलु पुनर्मे कुलपुत्र एवं चङ्क्रम्यमाणस्य सर्वदिक्स्रोतोमुखान्यावर्तन्ते सुविलोकि-
तज्ञानमुखतया । सर्वलोकधातुस्रोतोमुखानि व्यावर्तन्ते एकचित्तोत्पादेन अनभिलाप्यानभि-
25 लाप्यलोकधात्वतिक्रमणपरिशोधनतायै यदुत महाप्रणिधानाभिनिर्हारबलेन । एकचित्तक्षणेन
अनभिलाप्यानभिलाप्यसत्त्वचर्यानयमुखान्यभिमुखमावर्तन्ते दशबलज्ञानपरिपूरये । समन्तभद्र-
बोधिसत्त्वचर्याप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यबुद्धक्षेत्रदर्शन-
विशुद्धयोऽभिमुखीभवन्ति अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमतथागतपूजोपस्थान-
परिचारणतायै । पूर्वोत्तरतथागतपूजाप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभि-
30 लाप्यानभिलाप्यतथागतधर्ममेघा आशयेऽभिपतन्ति । असंख्येयधर्मगतिविघ्नानुगमधर्मचक्र-
संधारणधारणीप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यबोधिसत्त्वचर्या-

---

1 B परिशोधिता.

समुद्रा अभिमुखा आवर्तन्ते सर्वचर्यामण्डलपरिशोधनतायै। इन्द्रवलोपमबोधिसत्त्वचर्यापरिपूरिप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यसमाधिसागरा अभिमुखा आवर्तन्ते सर्वसमाधिमण्डलपरिशोधनतायै। एकसमाधिमुखे सर्वसमाधिमुखसमवसरणप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्येन्द्रियसमुद्रा अभिमुखमावर्तन्ते सर्वे- 5 न्द्रियचक्रकालचक्रानुवर्तनतायै। स्मृतिकोटीन्द्रियप्रतिलाभप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यकालचक्राण्यभिमुखमावर्तन्ते सर्वकालधर्मचक्रप्रवर्तनतायै। अनिष्टसत्त्वनिष्ठाप्रणिध्यभिनिर्हारबलेन एकचित्तोत्पादेन अनभिलाप्यानभिलाप्यसर्वत्र्यध्वसागरा अभिमुखमावर्तन्ते सर्वलोकधातुषु त्र्यध्वव्यवस्थानतया अनुगमज्ञानालोकप्रणिध्यभिनिर्हारबलेन। एतमहं कुलपुत्र अनिशान्तज्ञानप्रदीपं बोधिसत्त्वविमोक्षं जानामि। किं मया शक्यं वज्रकल्पाशयानां बोधिसत्त्वानां सर्वतथागतकुलकुलीनताभिजातानामनुपरतजीविते- 10 न्द्रियाणामनिशान्तज्ञानप्रदीपानामनाच्छेद्याभेद्यकायानां मायागतरूपाभिनिर्वृत्तानां प्रत्ययधर्मसमाङ्गप्रत्यङ्गशरीराणां यथाशयजगद्विज्ञप्तिकायानां सर्वजगदुपमरूपकायवर्णसंस्थानारोहपरिणाहसदर्शकायानामग्निज्वालानिपाताशस्त्रानुपघातशरीराणां वज्रदृढचक्रनारायणवपुःसुखसंभानानां सर्वमारपरप्रवादिबलाबलकरणानां जाम्बूनदकनकपर्वतसंनिभानां सर्वजगदभ्युद्गतशरीराणां सर्वजगद्विज्ञप्त्याश्रयाणां समन्तमुखविज्ञप्तिश्रवणानां सर्वजगदुल्लोकितमुखानां सर्वधर्म- 15 जलधराकारभूतानां समन्तदिग्विरोचनानां सर्वावरणपर्वतविकिरणत्वादप्रतिकूलदर्शनानां सर्वकुशलमूलात्यन्तसमुद्घोटितत्वात्परमसुदर्शनानां विपुलकुशलमूलनिष्यन्दसंभूतत्वादभिलपितदर्शनानां परमदुर्लभप्रादुर्भावत्वादुदुम्बरपुष्पसदृशानां चर्यां ज्ञातुं गुणान् वा वक्तुम्॥

गच्छ कुलपुत्र, इदमिहैव दक्षिणापथे श्रमणमण्डले जनपदे सुमुखं नाम नगरम्। तत्र इन्द्रियेश्वरो नाम दारकः प्रतिवसति। तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधि- 20 सत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारको बोधिसत्त्वविमोक्षनिपद्विशुद्धिपरमः बोधिसत्त्वबलालोकावभासितचित्तोऽपराजितबोधिसत्त्ववैर्यपर्यादत्तहृदयः बोधिसत्त्वदृढप्रणिधिसंनाहसंकुचितचित्तो बोधिसत्त्वाशयदृढसंस्थानपरिणाहपरमो बोधिसत्त्वचर्यामेघसंधारणसंप्रस्थानाशयो बोधिसत्त्वधर्ममेघापरितृप्तसंतानः सर्वबोधिसत्त्वगुणाकाराभिमुखप्रणिधानः सर्वजगत्सारथि- 25 समाहकभूतमात्मानमुपधानयितुकामः सर्वजगन्महासंसाराटवीकान्तारादतिक्रामयितुकामः कल्याणमित्रदर्शनश्रवणपर्युपासनापरितृप्त एव अप्रमाणधर्मगौरवसंजातः सुदर्शनस्य भिक्षोः पादौ शिरसाभिवन्द्य सुदर्शनं भिक्षुमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सुदर्शनस्य भिक्षोरन्तिकात्प्रक्रान्तः॥ १२॥

---

१ B °भिर्भानां २ B °न्मुखेभ्य°

# १५ इन्द्रियेश्वरः ।

अथ खलु सुधनः श्रेष्ठिदारकस्तां सुदर्शनस्य भिक्षोरनुशासनीमनुमन्त्रयन्, प्रवर्तयन्
अनुप्रयच्छन् प्रविचिन्वन् प्रमापयमाणः प्रतिभावयन् उदीरयन् दर्शयन् अनुविचिन्तयन्
अभ्यवचरन्, नयं विगमयन्, तद्धर्मनयमनुविचारयन् अवभावयन् समवसरन् आवर्तयन्
5 संभिन्दन् प्रदर्शयन् अवभासयन् अनुविलोकयन् देवनागयक्षगन्धर्वपरिवारोऽनुपूर्वेण येन
श्रमणमण्डले जनपदे सुमुखं नगरं तेनोपसंक्रान्तः इन्द्रियेश्वरं दारकं परिमार्गमाणः ।
तस्योपर्यन्तरिक्षे गता देवनागयक्षगन्धर्वा आरोचयन्ति-एष कुलपुत्र इन्द्रियेश्वरो दारको
नदीसंभेदाभ्याशे दशदारकसहस्रपरिवृतः पांशुक्रीडया क्रीडतीति ॥

अथ खलु सुधनः श्रेष्ठिदारको येन सुमुखं नगरं नदीसंभेदाभ्याशस्तेनोपसंक्रान्तः ।
10 सोऽद्राक्षीत् इन्द्रियेश्वरं दारकं दशदारकसहस्रपरिवृतं पांशुक्रीडया क्रीडन्तम् । दृष्ट्वा च
पुनर्येनेन्द्रियेश्वरो दारकस्तेनोपसंक्रम्य इन्द्रियेश्वरस्य दारकस्य पादौ शिरसाभिवन्द्य
इन्द्रियेश्वरं दारकमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य इन्द्रियेश्वरस्य दारकस्य पुरतः प्राञ्जलिः
स्थित्वा एवमाह-मया आर्य, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि
कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो
15 बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः-कथं बोधिसत्त्वेन बोधिसत्त्व-
चर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । आह-अहं कुलपुत्र मञ्जुश्रिया कुमारभूतेन
लिपिसंख्यामुद्रागणनानयं शिक्षयता सर्वशिल्पाभिज्ञावभासज्ञानमुखमवतारितः । सोऽहं कुल-
पुत्र, यानि इमानि लोके लिपिसंज्ञागतानि संख्यागणनामुद्रानिक्षेपज्ञानविविधशिल्पज्ञानानि
धातुतन्त्राणि विषयप्रयोगप्रतिमानकानि शोषापस्मारभूतप्रेतग्रहप्रतिषेधकानि ग्रामनगर-
निगमपत्तनोद्यानतपोवनाश्रमनिवेशनज्ञानानि अभिप्रायप्रकारप्रासादगवाक्षकूटागारपरिणाह-
20 ज्ञानानि विविधयन्त्रयन्त्रोपचारज्ञानानि क्षेमाक्षेमभयाभयनिमित्तज्ञानानि कृषिवाणिज्य-
व्यवहारक्रियाप्रयोगज्ञानानि सर्वाङ्गप्रत्यङ्गलक्षणचारोपचारविचारज्ञानानि सुगतिदुर्गतिकर्म-
पथविशुद्ध्यनुगमज्ञानानि कुशलाकुशलधर्मगणपूजाज्ञानानि सुगतिदुर्गतिसंभारज्ञानानि श्रावक-
प्रत्येकबुद्धयानसंभारज्ञानानि तथागतभूमिसंभारज्ञानानि हेतुक्रियाप्रयोगोपचारज्ञानानि,
तानि सर्वाणि प्रजानामि । तेषु च सत्त्वानवतारयामि, निवेशयामि प्रतिष्ठापयामि
25 शिक्षयामि दीपयामि दृढीकरोमि सारीकरोमि संतरामि समादापयामि संवर्तयामि उत्तापयामि
विवर्धयामि विमिश्रीकरोमि कोटीकरोमि[1] विशोधयामि विमलीकरोमि उत्तापयामि प्रभास्वरी-
करोमि विपुलीकरोमि । सोऽहं कुलपुत्र बोधिसत्त्वानां गणनानयं जानामि । स पुनः कतमः ?
शतं शतसहस्राणां कोटिः, कोटिः कोटीनामयुतम्, अयुतमयुतानां नियुतम्, नियुतं नियुतानां
बिम्बरम्, बिम्बरं बिम्बराणां कंकरम्, कंकरं कंकराणामगरम्, अगरमगराणां प्रवरम्,
30 प्रवरं प्रवराणां मवरम्, मवरं मवराणां तवरम्, तवरं तवराणां सीमम्, सीमं सीमानां यामम्,
यामं यामानां नेमम्, नेमं नेमानामवगम्, अवगमवगानां मृगवम्, मृगवं मृगवानां विरागम्,

---

[1] B om कोटीकरोमि

विरागं विरागानां विगवम्, विगवं विगवानां संक्रमम्, संक्रमं संक्रमाणां विसरम्, विसरं विसराणां विभजम्, विभजं विभजानां विजङ्घम्, विजङ्घं विजङ्घानां विशोधम्, विशोधं विशोधानां विवाहम्, विवाहं विवाहानां विभक्तम्, विभक्तं विभक्तानां विखतम्, विखतं विखतानां डर्लनम्, डलनं डलनानां अवनम्, अवनं अवनानां थवनम्, थवनं थवनानां विपर्यम्; विपर्यं विपर्याणां समयम्, समयं समयानां वितूर्णम्, वितूर्णं वितूर्णानां हेतुरम्, हेतुरं हेतुराणां विचारम्, विचारं विचाराणां व्यस्तम्, व्यस्तं व्यस्तानामभ्युद्गतम्, अभ्युद्गतमभ्युद्गतानां विशिष्टम्, विशिष्टं विशिष्टानां निलम्बम्, निलम्बं निलम्बानां हरितम्, हरितं हरितानां विक्षोभम्, विक्षोभं विक्षोभाणां हलितम्, हलितं हलितानां हरिः, हरिः हरीणामालोकः, आलोकः आलोकानां दृष्टान्तः, दृष्टान्तः दृष्टान्तानां हेतुनम्, हेतुनं हेतुनानां एलम्, एलमेलानां दुमेलम्, दुमेलं दुमेलानां क्षेमुः, क्षेमुः क्षेमूनां एलुदम्, एलुदमेलुदानां मालुदम्, मालुदं मालुदानां समता, समता समतानां विसदम्, विसदं विसदानां प्रमात्रम्, प्रमात्रं प्रमात्राणां अमत्रम्, अमत्रममत्राणां भ्रमत्रम्, भ्रमत्रं भ्रमत्राणां गमत्रम्, गमत्रं गमत्राणां नमत्रम्, नमत्रं नमत्राणां नहिमत्रम्, नहिमत्रं नहिमत्राणां विमत्रम्, विमत्रं विमत्राणां परमत्रम्, परमत्रं परमत्राणां शिवमत्रम्, शिवमत्रं शिवमत्राणां देलु, देलु देलूनां वेलु, वेलु वेलूनां गेलुः, गेलुः गेलूनां खेलुः, खेलुः खेलूनां नेलुः, नेलुः नेलूनां भेलुः, भेलुः भेलूनां केलुः, केलुः केलूनां सेलुः, सेलुः सेलूनां पेलुः, पेलुः पेलूनां मेलुः, मेलुः मेलूनां सरडः, सरडः सरडानां भेरुदुः, भेरुदुः भेरुदूनां खेलुदुः, खेलुदुः खेलुदूनां मालुदुः, मालुदुः मालुदूनां समुलः, समुलः समुलानामथवम्, अथवमथवानां कमलम्, कमलं कमलानामगवम्, अगवमगवानामतरुम्, अतरुमतरूणां हेलुवः, हेलुवः हेलुवानां मिरहुः, मिरहुः मिरहूणां चरणम्, चरणं चरणानां धमनम्, धमनं धमनानां प्रमदम्, प्रमदं प्रमदानां निगमम्, निगमं निगमानामुपवर्तम्, उपवर्तम्, पवर्तानां निर्देशम्, निर्देशं निर्देशानामक्षयम्, अक्षयमक्षयाणां संभूतम्, संभूतं संभूतानां ममम्, ममं ममानांमवदम्, अवदमवदानामुत्पलम्, उत्पलमुत्पलानां पद्मम्, पद्मं पद्मानां संख्या, संख्या संख्यानां गति, गतिः गतीनामुपगम्, उपगमुपगानामौपम्यम्, औपम्यमौपम्यानामसंख्येयम्, असंख्येयमसंख्येयानामसंख्येयपरिवर्तम्, असंख्येयपरिवर्तमसंख्येयपरिवर्तानामप्रमाणम्, अप्रमाणमप्रमाणानामपरिमाणम्, अपरिमाणमपरिमाणानामपरिमाणपरिवर्तम्, अपरिमाणपरिवर्तमपरिमाणपरिवर्तानामपर्यन्तम्, अपर्यन्तमपर्यन्तानामपर्यन्तपरिवर्तम्, अपर्यन्तपरिवर्तमपर्यन्तपरिवर्तानामसमन्तम्, असमन्तमसमन्तानामसमन्तपरिवर्तम्, असमन्तपरिवर्तमसमन्तपरिवर्तानामगणनीयम्, अगणनीयमगणनीयानामगणनीयपरिवर्तम्, अगणनीयपरिवर्तमगणनीयपरिवर्तानामतुल्यम्, अतुल्यमतुल्यानामतुल्यपरिवर्तम्, अतुल्यपरिवर्तमतुल्यपरिवर्तानामचिन्त्यम्, अचिन्त्यमचिन्त्यानामचिन्त्यपरिवर्तम्, अचिन्त्यपरिवर्तमचिन्त्यपरिवर्तानाममाप्यम्, अमाप्यममाप्यानाममाप्यपरिवर्तम्, अमाप्यपरिवर्तममाप्यपरिवर्ता-

---

1 B डोर्लनं.

नामनभिलाप्यम्, अनभिलाप्यमनभिलाप्यानामनभिलाप्यपरिवर्तम्, अनभिलाप्यपरिवर्तमनभि-
लाप्यपरिवर्तानामनभिलाप्यानभिलाप्यम्, अनभिलाप्यानभिलाप्यमनभिलाप्यानभिलाप्या-
नामनभिलाप्यानभिलाप्यपरिवर्तम्, तस्य पुरतो महान् वालिकाराशिरभूदनेकयोजन-
प्रमाणः। स तं वालिकाराशिं गणयंस्तुलयन् प्रसिध्यन् संख्यामकार्षीत्—इयन्तीमानि वालिका-
5 फल्कानि, यावदियन्त्येतानि वालिकाफल्कान्यनभिलाप्यपरिवर्तानीति। स तं वालिका-
राशिं गणनासंकेतनिर्देशेन निर्दिश्य एवमाह—एष कुलपुत्र गणनायोगो लोकधातु-
परंपरया सुप्रवर्तते बोधिसत्त्वानाम्। अनेन गणनानयेन बोधिसत्त्वाः पूर्वस्यां दिशि लोकधातु-
प्रसरान् गणयन्ति। एवं दक्षिणायां पश्चिमायामुत्तरायामुत्तरपूर्वायां पूर्वदक्षिणायां दक्षिण-
पश्चिमायां पश्चिमोत्तरायामध ऊर्ध्वायां दिशि। अनेन गणनानयेन बोधिसत्त्वा लोकधातु-
10 प्रसरान् गणयन्ति। एष कुलपुत्र गणनानयो दशसु दिक्षु लोकधातुनामपरंपरानिर्देशेषु
प्रवर्तते बोधिसत्त्वानाम्। अनेन गणनानयेन बोधिसत्त्वा दशसु दिक्षु लोकधातुनामपरंपरां
गणयन्ति। यथा लोकधातुनामपरंपरानिर्देशेषु, एवं दशसु दिक्षु कल्पनामपरंपरानिर्देशेषु
बुद्धनामपरंपरानिर्देशेषु धर्मनामपरंपरानिर्देशेषु सत्त्वनामपरंपरानिर्देशेषु कर्मनामपरंपरा-
निर्देशेषु। एष एव गणनानयो यावद्दशसु दिक्षु सर्वनामपरंपरानिर्देशेषु प्रवर्तते
15 बोधिसत्त्वानाम्। अनेन गणनानयेन बोधिसत्त्वा दशसु दिक्षु सर्वनामपरंपरां गणयन्ति।
एतमहं कुलपुत्र, सर्वधर्मज्ञानशिल्पाभिज्ञावन्तं बोधिसत्त्वज्ञानालोकं जानामि। किं मया
शक्यं सर्वजगत्संख्यानुप्रविष्टानां बोधिसत्त्वानां सर्वधर्मविधिसंख्यानुप्रविष्टानां सर्वप्रमाण-
संख्यानुप्रविष्टानां सर्वसत्त्वसंख्यानुप्रविष्टानां सर्वधर्मस्कन्धसंख्यानुप्रविष्टानां सर्वबुद्धबोधि-
संख्यानुप्रविष्टानां सर्वधर्मनामचक्रवशवर्तिनां बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुम्,
20 गोचरो वा सूचयितुम्, विषयो वा प्रभावयितुम्, बलं वा संवर्णयितुम्, आशयो वा
निदर्शयितुम्, संभारो वा परिदीपयितुम्, प्रणिधानं वा निर्देष्टुम्, चर्यां वा संदर्शयितुम्,
पारमितापरिशुद्धिर्वा अभिद्योतयितुम्, समुदागमपरिशुद्धिर्वा संप्रकाशयितुम्, समाधिविषयो
वा वक्तुम्, ज्ञानालोको वा अनुगन्तुम्॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे समुद्रप्रतिष्ठानं नाम नगरम्। तत्र प्रभूता
25 नामोपासिका प्रतिवसति। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां
शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारकः कल्याणमित्रवचनं श्रुत्वा संहर्षिततनुरुहो महाप्रीतिवेग-
संजातः प्रमुदितमानसः सुदुर्लभाश्चर्याशयरत्नप्रतिलब्धो विपुलजगद्धितचित्तचेष्टानिर्यातो बुद्धो-
त्पादपरंपरावतारवशवर्ती धर्ममण्डलविशुद्धिमतिपरमः सर्वत्रानुगतविमुक्तिनिर्याणनिदर्शन-
30 परमः त्र्यध्वतलासंभिन्नबुद्धविषयः अक्षयपुण्यसागरसंभूतचेताः महाज्ञानावभासवशवर्ती त्रिभु-
वनपुरबन्धनकपाटनिर्भेदः इन्द्रियेश्वरस्य दारकस्य पादौ शिरसाभिवन्द्य इन्द्रियेश्वरं दारकमनेक-
शतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य इन्द्रियेश्वरस्य दारकस्यान्तिकात्प्रक्रान्तः॥१३॥

---

1 B om. कर्मनामपरंपरानिर्देशेषु.

## १६ प्रभूता ।

अथ खलु सुधन श्रेष्ठिदारक कल्याणमित्रानुशासनीमेघ सप्रतीच्छन्, अतृप्तो जलनिधिरिव महामेघवर्षे, कल्याणमित्रभास्करज्ञानांशुपरिपाचनशुभवरुणीतलेन्द्रियाङ्कुरप्ररोह-सजात कल्याणमित्रपूर्णचन्द्रानुशासन्यंशुजालप्रह्लादितकायचित्त, कल्याणमित्रानुशासनी-सलिलपिपासु ग्रीष्मदिनकरकिरणप्रतप्त इव मृगगण, हिमवत्प्रस्रवणसलिलकल्याणमित्रानु- 5
शासनीप्रबोधितचित्तपौण्डरीको भ्रमरगणोद्घाटनोन्मिषितकमल इव कमलाकर, कल्याण-मित्रानुशासनीरत्नचरितावभासितसतान, रत्नद्वीप इव विविधरत्नाकीर्ण, कल्याणमित्रानुशासनी-पुण्यज्ञानोपचयसपन्न महाजम्बुवृक्ष इव पुष्पफलविनद्ध, कल्याणमित्रानुशासनीश्रुतसभार-प्रवृद्ध, महाभुजगेन्द्रभवनक्रीडासमन इव गगनमहाघन, कल्याणमित्रानुशासनीमनुस्मृताम-विचित्रधर्मकूट त्रिदशगेकोपशोभित इव चित्रकूट, कल्याणमित्रानुशासन्युद्भूतविमलगुण- 10
गणपरिवृत, अभिभू, अनभिभूत, त्रिदशगणपरिवृत शक्र इव असुरेन्द्रगणप्रमर्दन अनुपूर्वेण येन समुद्रप्रतिष्ठान नगर तेनोपसक्रान्त प्रभूतामुपासिका परिमार्गमाण । तस्य महाजनकाय उपदर्शयन्ति—एषा कुलपुत्र प्रभूतोपासिका मध्ये नगरस्य स्वगृहे तिष्ठतीति ॥

नगरमभिधूपयति । ये च सत्त्वास्तं गन्धं जिघ्रन्ति, ते सर्वेऽव्यापन्नचित्ता भवन्ति अवैरचित्ता अविहिंसाचित्ता ईर्ष्यामात्सर्यविगतचित्ता अमायाशाठ्यचित्ता अनुनीता अप्रतिहतचित्ता अनवलीनानुन्नतचित्ता समचित्ता मैत्रचित्ता हितचित्ता संवरस्थचित्ता परपरिग्रहानभिलाषचित्ता भवन्ति । ये च तासां स्वरं शृण्वन्ति, ते सर्वे प्रहर्षितप्रमुदितप्रणतचित्ता भवन्ति ।
5 ये च तां पश्यन्ति, ते विगतरागमात्मानं संजानन्ति ॥

अथ खलु सुधनः श्रेष्ठिदारकः प्रभूतायाः उपासिकायाः पादौ शिरसाभिवन्द्य प्रभूतामुपासिकामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुरतः प्राञ्जलीस्थित्वा एवमाह—मया आर्ये, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । शृणोमि च मे आर्या बोधिसत्त्वानामववादानु-
10 शासनीं ददातीति । तद्वदतु मे आर्या—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । आह—अहं कुलपुत्र अक्षयव्यूहपुण्यकोशस्य बोधिसत्त्वविमोक्षस्य लाभिनी । इतोऽहं कुलपुत्र, एकपिठरिकाया नानाधिमुक्तान् सत्त्वान् यथाभिप्रेतभोजनैः संतर्पयामि नानासूपैर्नानारसैर्नानावर्णैर्नानागन्धैः । अतोऽहं कुलपुत्र एकपिठरिकायाः सत्त्वशतमपि संतर्पयामि यथाभिप्रायैर्भोजनैः, सत्त्वसहस्रमपि, सत्त्वशतसहस्रमपि, सत्त्व-
15 कोटीमपि, सत्त्वकोटीशतमपि, सत्त्वकोटीशतसहस्रमपि, सत्त्वकोटीनियुतशतसहस्रमपि, यावदनभिलाप्यानभिलाप्यानपि सत्त्वान्नानानाधिमुक्तान् यथाभिप्रेतैर्भोजनैः संतर्पयामि, संप्रवारयामि, संतोषयामि, संप्रहर्षयामि, संप्रमोदयामि, परिप्रीणयामि, आत्तमनस्कान् करोमि । न चैषा पिठरिका क्षीयते, न परिहीयते, नोनीभवति, न क्षीयते, न पर्यादानं गच्छति, न सीमामुपैति, न निष्ठां गच्छति । अनेन कुलपुत्र पर्यायेण जम्बुद्वीपपरमाणुरजःसमानपि
20 सत्त्वान्, एवं चातुर्द्वीपकलोकधातुपरमाणुरजःसमानपि, साहस्रलोकधातुपरमाणुरजःसमानपि, द्विसाहस्रलोकधातुपरमाणुरजःसमानपि, त्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमानपि, यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानपि सत्त्वानुपसंक्रान्तान् नानाधिमुक्तान् यथाभिप्रेतैर्भोजनैर्नानासूपैर्नानारसैर्नानावर्णैर्नानागन्धैः संतर्पयामि, संप्रवारयामि, संतोषयामि, संप्रहर्षयामि, संप्रमोदयामि, परिप्रीणयामि, आत्तमनस्कान् करोमि । न च एषा पिठरिका
25 क्षीयते, न परिहीयते, नोनीभवति, न क्षीयते, न पर्यादानं गच्छति, न सीमामुपैति, न निष्ठां न पर्यन्तं न परिनिष्ठां गच्छति । सचेत् कुलपुत्र दशदिक्सर्वलोकधातुपर्यापन्नाः सर्वसत्त्वा मदन्तिकमुपसंक्रमेयुर्नानाधिमुक्ता नानाभिप्राया, तानपि सर्वान् यथाभिप्रेतैर्भोजनैः संतर्पयेयम्, यावदात्तमनस्कान् कुर्याम् । यथा नानाभोजनैः एवं नानापानविधिभिः नानारसाग्रैः नानाशयनैर्नानासनैः नानापुष्पैर्नानामाल्यैर्नानागन्धैर्नानाधूपैर्नानाविलेपनैर्नानाचूर्णैर्नानावस्त्रै-
30 र्नानाभरणैर्नानारत्नयानैर्नानाछत्रैर्नानाध्वजैर्नानापताकाभिर्नानाविधोपकरणविशेषैः संतर्पयेयम्,
यावदात्तमनस्कान् कुर्याम् । अपि तु खलु पुनः कुलपुत्र ये केचित् पूर्वस्यां दिशि[1]

1 B अभिपूर्यन्ति

एकस्मिन् लोकधातौ श्रावकप्रत्येकबुद्धा अन्तिमदेहधारिणः श्रावकप्रत्येकबोधिफलमनुप्राप्नुवन्ति, सर्वे ते ममाहारं परिभुज्य । यथा पूर्वस्यां दिशि एकस्मिन् लोकधातौ, एवं ये लोकधातुशते, लोकधातुसहस्रे, लोकधातुशतसहस्रे, लोकधातुकोट्याम्, लोकधातुकोटीशते, लोकधातुकोटीसहस्रे, लोकधातुकोटीशतसहस्रे, लोकधातुकोटीनियुतशतसहस्रेषु, ये जम्बुद्वीपपरमाणुरजःसमेषु लोकधातुषु चातुर्द्वीपकलोकधातुपरमाणुरजःसमेषु साहस्रलोकधातुपरमाणुरजःसमेषु द्विसाहस्रलोकधातुपरमाणुरजःसमेषु त्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमेषु ये केचित् कुलपुत्र, पूर्वस्यां दिशि यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमेषु लोकधातुषु श्रावकप्रत्येकबुद्धा अन्तिमदेहधारिणः श्रावकप्रत्येकबोधिफलमनुप्राप्नुवन्ति, सर्वे ते ममाहारं परिभुज्य । यथा पूर्वस्यां दिशि, एवं दक्षिणायां पश्चिमायामुत्तरायामुत्तरपूर्वस्यां पूर्वदक्षिणायां दक्षिणपश्चिमायां पश्चिमोत्तरायां अध ऊर्ध्वायां दिशि ॥

ये केचित् कुलपुत्र, पूर्वस्यां दिशि एकस्मिन् लोकधातौ एकजातिप्रतिबद्धा बोधिसत्त्वाः, सर्वे ते ममाहारं परिभुज्य बोधिमण्डे निषद्य ससैन्यं मारं पराजित्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते । यथा पूर्वस्यां दिशि एकस्मिन् लोकधातौ, एवं ये लोकधातुशते, लोकधातुसहस्रे, लोकधातुशतसहस्रे लोकधातुकोट्यां लोकधातुकोटीशते लोकधातुकोटीसहस्रे लोकधातुकोटीशतसहस्रे लोकधातुकोटीनियुतशतसहस्रे, ये जम्बुद्वीपपरमाणुरजःसमेषु लोकधातुषु चातुर्द्वीपकलोकधातुपरमाणुरजःसमेषु साहस्रलोकधातुपरमाणुरजःसमेषु द्विसाहस्रलोकधातुपरमाणुरजःसमेषु त्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमेषु, ये केचित् कुलपुत्र पूर्वस्यां दिशि यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमेषु लोकधातुष्वेकजातिप्रतिबद्धा बोधिसत्त्वाः, सर्वे ते ममाहारं परिभुज्य बोधिमण्डे निषद्य ससैन्यं मारं पराजित्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते । यथा पूर्वस्यां दिशि, एवं दक्षिणायां पश्चिमायामुत्तरायामुत्तरपूर्वायां पूर्वदक्षिणायां दक्षिणपश्चिमायां पश्चिमोत्तरायामधो दिशि, ये[1] केचित् कुलपुत्र, ऊर्ध्वायां दिशि एकस्मिन् लोकधातावेकजातिप्रतिबद्धा बोधिसत्त्वाः, सर्वे ते ममाहारं परिभुज्य बोधिमण्डे निषद्य ससैन्यं मारं पराजित्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते । यथोर्ध्वायां दिशि एकस्मिन् लोकधातौ, एवं ये लोकधातुशते लोकधातुसहस्रे लोकधातुशतसहस्रे लोकधातुकोट्यां लोकधातुकोटीशते लोकधातुकोटीसहस्रे लोकधातुकोटीशतसहस्रे लोकधातुकोटीनियुतशतसहस्रे ये जम्बुद्वीपपरमाणुरजःसमेषु लोकधातुषु चातुर्द्वीपकलोकधातुपरमाणुरजःसमेषु साहस्रलोकधातुपरमाणुरजःसमेषु द्विसाहस्रलोकधातुपरमाणुरजःसमेषु त्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमेषु ये केचित्कुलपुत्र ऊर्ध्वायां दिशि यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमेषु लोकधातुषु एकजातिप्रतिबद्धा बोधिसत्त्वाः, सर्वे ते ममाहारं परिभुज्य बोधिमण्डे निषद्य ससैन्यं मारं पराजित्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥

पश्यसि त्वं कुलपुत्र इमानि दशशीलसहस्राणि मम परिवारम्? आह–पश्यामि

---

1 Tl om. from ये केचित्... upto एकस्मिन्.

आर्ये। आह--एतत्प्रमुखानि कुलपुत्र क्षीणा दशासंख्येयशतसहस्राणि मम सभागचरितानि एकप्रणिधानानि एककुशलमूलानि एकनिर्याणव्यूहानि एकाधिमुक्तिपथविशुद्धानि मम सभागस्मृतिविशुद्धानि सभागगतिविशुद्धानि सभागबुद्ध्यप्रमाणानि सभागेन्द्रियप्रतिलब्धानि सभागचित्तस्फरणानि सभागगोचरविषयाणि सभागधर्मनयावतीर्णानि सभागार्थविनिश्चितानि सभागधर्मार्थोद्योतनानि सभागरूपविशुद्धानि सभागबलप्रमाणानि, सभागवैशारद्यपराजितानि सभागधर्मरुतघोषाणि, सभागस्वरविशुद्धानि, सर्वव्यवहारेषु सभागगुणविशुद्धानि, अप्रमाणगुणवर्णतया सभागकर्मविशुद्धानि, अनवद्यकर्मविपाकविशुद्ध्या सभागमहामैत्रीस्फरणानि, सर्वजगत्परित्राणतया सभागमहाकरुणास्फरणानि, सर्वजगत्परिपाचनाखेदतया सभागकायकर्मविशुद्धानि, यथाशयसर्वसत्त्वसंतोषणकायसंदर्शनतया सभागवाक्कर्मविशुद्धानि धर्मधातुनिरुक्तिव्यवहारेषु, सभागोपसंक्रमणानि सर्वबुद्धपर्षन्मण्डलेषु, सभागनिर्जवनानि सर्वबुद्धक्षेत्रेषु, सर्वबुद्धपूजोपस्थानतायै सभागप्रत्यक्षज्ञानानि सर्वधर्मनयानुगमेषु, सभागचर्याविशुद्धानि सर्वबोधिसत्त्वभूमिप्रतिलाभेषु। एतानि कुलपुत्र दशस्त्रीसहस्राणि एकक्षणेन दश दिशः स्फरन्ति, यदुतैकजातिप्रतिबद्धान् बोधिसत्त्वान् भोजनेन प्रतिपादनतायै अस्या एव पिठरिकाया भोजनमादाय। दश दिशः स्फरन्ति अस्या एव पिठरिकाया भोजनमादाय। दश दिशः स्फरन्ति चरमभविकान् सर्वश्रावकप्रत्येकबुद्धयानिकान् पिण्डपातेन प्रतिपादनतायै। स्फरित्वा सर्वप्रेतगणान् भोजनेन संतर्पयन्ति। सा अहं कुलपुत्र अस्या एव पिठरिकाया देवान् देवभोजनेन संतर्पयामि। नागान्नागभोजनेन, यक्षान् यक्षभोजनेन, गन्धर्वान् गन्धर्वभोजनेन, असुरानसुरभोजनेन, गरुडान् गरुडभोजनेन, किन्नरान् किन्नरभोजनेन, महोरगान् महोरगभोजनेन, मनुष्यान् मनुष्यभोजनेन, अमनुष्यानमनुष्यभोजनेन संतर्पयामि। आगमयस्व कुलपुत्र मुहूर्तं यावत्प्रत्यक्षो भविष्यसि। समनन्तरभाषिता चेयं वाक् प्रभूतयोपासिकया, अथ तावदेव अपरिमाणाः सत्त्वाः पूर्वेण गृहद्वारेण प्रविशन्ति स्म यदुत प्रभूतयोपासिकया पूर्वप्रणिधाननिमन्त्रिताः। एवं दक्षिणेन पश्चिमेनोत्तरेण गृहद्वारेण अपरिमाणाः सत्त्वाः प्रविशन्ति स्म यदुत प्रभूतयोपासिकया पूर्वप्रणिधाननिमन्त्रिताः। तान् प्रभूतोपासिका तेष्वासनेषु निषद्य यथाभिप्रेतैर्भोजनैर्नानासूपैर्नानारसैर्नानावर्णैर्नानागन्धैः संतर्पयति, संप्रवारयति, संतोषयति, संप्रहर्षयति, संप्रमोदयति परिप्रीणयति, आत्तमनस्कान् करोति। यथा नानाभोजनैः, एवं नानापानविधिभिः, नानारसाग्रैः, नानासनैः, नानाशयनैः, नानायानैर्नानावस्त्रैः नानापुष्पैर्नानामाल्यैः नानागन्धैर्नानाधूपैः नानाविलेपनैर्नानाचूर्णैः नानाभरणैः नानारत्नैः नानाछत्रैर्नानाध्वजैर्नानापताकाभिः नानाविधोपकरणविशेषैः संतर्पयति, यावदात्तमनस्कान् करोति। देवान् देवभोजनेन संतर्पयति। नागान् यक्षान् गन्धर्वानसुरान् गरुडान् किन्नरान् महोरगान् मनुष्यानमनुष्यान् तत्तदेव भोजनेन संतर्पयति यावदात्तमनस्कान् करोति। न च सा पिठरिका हीयते, न परिहीयते, नोनीभवति, न क्षीयते, न पर्यादानं गच्छति, न सीमामुपैति, न निष्ठां न पर्यन्तं न परिनिष्ठां गच्छति॥

अथ खलु प्रभूतोपासिका सुधनं श्रेष्ठिदारकमेवमाह—एतमहं कुलपुत्र अक्षयव्यूह-पुण्यकोशं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यमक्षयपुण्यानां बोधिसत्त्वानां महा-पुण्यसागराक्षयतया, गगनकल्पानां सुसंभूतविपुलपुण्योपचयतया, चिन्ताराजमणिरत्न-कल्पानां सर्वजगत्प्रणिधिपूरणतया, महापुण्यचक्रवालानां सर्वजगत्कुशलमूलारक्षणतया, महापुण्यमेघानां सर्वजगद्दत्तपाण्यभिप्रवर्षणतया, महापुण्यकोशाध्यक्षाणां धर्मनगरद्वारविव- 5 रणतया, महापुण्यप्रदीपानां सर्वजगद्दारिद्र्यान्धकारविधमनतया चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे महासंभवं नाम नगरम् । तत्र विद्वान्नाम गृह-पतिः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥ 10

अथ खलु सुधनः श्रेष्ठिदारकः प्रभूताया उपासिकायाः पादौ शिरसाभिवन्द्य प्रभूतामुपासिकामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य प्रभूताया उपासि-कायाः दर्शनावितृप्तोऽन्तिकात्प्रक्रान्तः ॥ १४ ॥



## १७ विद्वान्।

अथ खलु सुधनः श्रेष्ठिदारकोऽक्षयव्यूहपुण्यकोशविमोक्षावभासप्रतिलब्धः तं पुण्यसागरमनुविचिन्तयन्, तत्पुण्यगगनमवलोकयन्, तं पुण्यराशिमाददन्, तं पुण्यपर्वतमभिरोहन्, तं पुण्यनिचयं संगृह्णन्, तं पुण्यौघमवगाह्यमानः, तत्पुण्यतीर्थमवतरन्, तं पुण्यमण्डलं परिशोधयन्, तं पुण्यनिधिं संपश्यन्, तं पुण्यनयमनुस्मरन्, तां पुण्यनेत्रीं समन्वाहरन्, तं पुण्यवंशं परिशोधयन्, अनुपूर्वेण येन महासंभवं नगरं तेनोपसंक्रम्य विद्वांसं गृहपतिं परिमार्गति, परिगवेषति, व्यवलोकयति कल्याणमित्राण्यभिलषन्। कल्याणमित्रदर्शनवासितया संतत्या, कल्याणमित्राधिष्ठानेन आशयेन, कल्याणमित्रानुगतेन प्रयोगेन, कल्याणमित्रोपचारापरिखिन्नेन वीर्येण, कल्याणमित्राधीनैः सर्वकुशलमूलैः, कल्याणमित्रनिपतैः सर्वपुण्यसंभारैः, कल्याणमित्रविवर्धितैरुपायकौशल्यचरितैः, अपरप्रत्ययेन कल्याणमित्रोपचारकौशल्येन, विवर्धमानैः सर्वकुशलमूलैः, विशुध्यता बोधिसत्त्वाध्याशयेन, संवर्धमानैर्बोधिसत्त्वेन्द्रियैः, परिपाच्यमानैः सर्वकुशलमूलैः, संवर्धमानैर्महाप्रणिधानाभिनिर्हारैः, विपुलीभवन्त्या महाकरुणया, सर्वज्ञतया आसन्नीभूतमात्मानं संपश्यन् समन्तभद्रबोधिसत्त्वचर्यायां सर्वबुद्धेभ्यो धर्मावभासं संप्रतीच्छन्, विवर्धमानेन दशतथागतबलावभासेन विद्वांसं गृहपतिं परिगवेषमाणो अद्राक्षीन्मध्ये नगरस्य शृङ्गाटके सप्तरत्नव्योमकोपर्यसंख्येयरत्नमये विविधवज्रेन्द्रनीलखचितमणिरत्नपादे काञ्चनसूत्रज्वालश्वेते विमलगर्भमणिरत्नगर्भे पद्मरत्नशतसमलंकृतबिम्बे विचित्रदिव्यदूष्यप्रज्ञप्ते उच्छ्रितदिव्यपट्टध्वजपताके अनेकरत्नजालसंछन्ने महारत्नवितानवितते महासुवर्णरत्नपुष्पदामाभिप्रलम्बिते भद्रासने निषण्णम्, विमलवैडूर्यदण्डेन जाम्बूनदकनकच्छत्रेण ध्रियता हंसराजनिर्मलचामरसंवीज्यमानम्, विविधगन्धोपचारप्रधूपितं वामदक्षिणेन पञ्चभिस्तूर्यशतैः प्रवाद्यद्भिः दिव्यातिरेकमधुरनिर्घोषैर्महासंभवं नगरं पर्यापिवैः सत्त्वप्रीतिसंजननार्थं दिव्यकुसुममेघैः प्रवर्षद्भिर्दिव्यमानुष्यरूपसमतिक्रान्तैः परिनिष्पन्नबोधिसत्त्वाशयैः दिव्यातिरेकविभूषणसमलंकृतैः किंकरोपचरणप्रतिकारिभिः पूर्वकुशलमूलसभागचरितैर्दशभिः प्राणिसहस्रैः परिवृतम्। दृष्ट्वा च सुधनः श्रेष्ठिदारको येन विद्वान् गृहपतिस्तेनोपजगाम। उपेत्य विदुषो गृहपतेः पादौ शिरसाभिवन्द्य विद्वांसं गृहपतिमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—अहं आर्य सर्वसत्त्वानामर्थाय अनुत्तरां सम्यक्संबोधिं संप्रस्थितो यदुत सर्वसत्त्वदुःखव्युपशमाय सर्वसत्त्वात्यन्तसुखप्रतिष्ठापनाय सर्वसत्त्वसंसारसागराभ्युद्धारणतायै सर्वसत्त्वधर्मरत्नद्वीपसंप्रापणतायै सर्वसत्त्वतृष्णास्नेहोच्छोषणतायै सर्वसत्त्वानां महाकरुणास्नेहसंजननतायै सर्वसत्त्वानां कामरतितृष्णाविनिवर्तनतायै सर्वसत्त्वानां बुद्धज्ञानतृष्णोत्पादनतायै सर्वसत्त्वानां संसाराटवीकान्तारसमतिक्रमणतायै सर्वसत्त्वानां बुद्धगुणधर्मारामरतिसंजननतायै सर्वसत्त्वानां त्रैधातुकपुरान्निष्क्रमणतायै सर्वसत्त्वानां सर्वज्ञतापुरोपनयतायै। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्,

---

1 B सर्वरत्न.

कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं शिक्षमाणा बोधिसत्त्वाः प्रतिशरणभूता भवन्ति सर्वसत्त्वानाम्॥

एवमुक्ते विद्वान् गृहपतिः सुधनं श्रेष्ठिदारकमेवमाह—साधु साधु कुलपुत्र, येन ते अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। दुर्लभाः कुलपुत्र ते सत्त्वाः, येऽनुत्तरायां 5 सम्यक्संबोधौ चित्तमुत्पाद्य बोधिसत्त्वचर्यायां परिमार्गयमाणा न तृप्यन्ते कल्याणमित्रदर्शनेन। न खिद्यन्ते कल्याणमित्रोपसंक्रमणेषु। न परितप्यन्ते कल्याणमित्रोपचारेषु। न दौर्मनस्यमुत्पादयन्ति कल्याणमित्रदुरासदतया। न निवर्तन्ते कल्याणमित्रगवेषणतया। न व्यावर्तन्ते कल्याणमित्रतृष्णालालसहृदयत्वात्। न प्रत्युदावर्तन्ते कल्याणमित्रमुखावलोकेन। न संसीदन्ति कल्याणमित्रानुशासनीपथेषु। न खिद्यन्ते कल्याणमित्रोपस्थानपरिचर्यासु। 10 पश्यसि त्वं कुलपुत्र, इमं मम परिवारम्? आह—पश्यामि आर्य। आह—सर्वे एते कुलपुत्र मया अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादिताः। मयैते जनितास्तथागतकुले। मयैते पोषिताः पारमितोपसंहारैः। मयैते संचरिताः सर्वशुक्लधर्मैः। मयैते विवर्धिता दशसु तथागतबलेषु। मयैते उच्चालिता लोकपथात्। मयैते प्रतिष्ठापितास्तथागतवशे। मयैते विवर्तिता लोके गतिचक्रात्। मयैते आवर्तिता धर्मचक्रप्रवर्तनतायाम्। मयैते सत्त्वाः तारितास्त्र्यध्वापायगतिप्रपातात्। मयैते प्रतिष्ठापिता धर्मसमतानुगमेन। एवं हि कुलपुत्र बोधिसत्त्वास्त्रातारो भवन्ति सर्वसत्त्वानाम्। अहं कुलपुत्र मनःकोशसंभवाना पुण्याना लाभी। 15 सोऽहमन्नार्थिभ्योऽन्नं ददामि, पानार्थिभ्यः पानम्, रसाग्रार्थिभ्यो रसाग्रम्, खाद्यार्थिभ्यः खाद्यम्, भोज्यार्थिभ्यो भोज्यम्, लेह्यार्थिभ्यो लेह्यम्, चोष्यार्थिभ्यश्चोष्यम्, वस्त्रार्थिभ्यो वस्त्रम्, पुष्पार्थिभ्य पुष्पम्, माल्यार्थिभ्यो माल्यम्, गन्धार्थिभ्यो गन्धम्, धूपार्थिकेभ्यो धूपम्, 20 विलेपनार्थिभ्यो विलेपनम्, चूर्णार्थिभ्यश्चूर्णम्, आभरणविभूषणार्थिभ्य आभरणविभूषणानि, रत्नार्थिभ्यो रत्नानि, सुवर्णार्थिभ्यः सुवर्णम्, रूप्यार्थिभ्यो रूप्यम्, मुक्तार्थिभ्यो मुक्ताम्, प्रतिश्रयार्थिभ्यः प्रतिश्रयम्, आसनार्थिभ्य आसनम्, शयनार्थिभ्यः शयनम्, ग्लानप्रत्ययभैषज्यपरिष्कारार्थिभ्यो ग्लानप्रत्ययभैषज्यपरिष्कारान्, यानार्थिभ्यो यानम्, वाहनार्थिभ्यो वाहनम्, हस्त्यश्वरथगोगर्दभमहिषैडकार्थिभ्यो हस्त्यश्वरथगोगर्दभमहिषैडकान्, छत्रध्वजपताकार्थिभ्यश्छत्रध्वजपताकाः, दासीदासार्थिभ्यो दासीदासान्, माणवपरिवारार्थिभ्यो माणवपरिवारम्, 25 स्त्र्यर्थिभ्यः स्त्रियः, कुमार्यर्थिभ्यः कुमारीम्, मकुटचूडामण्यर्थिभ्यो मकुटचूडामणीन्, सचर्मचूडामण्यर्थिभ्यो सचर्मचूडामणीन्, *नीलविमलकेशमण्डलार्थिभ्यो नीलविमलकेशमण्डलम्*, यावद्विविधसर्वोपकरणार्थिभ्यो विविधसर्वोपकरणानि प्रयच्छामि। आगमय कुलपुत्र मुहूर्तं यावत्प्रत्यक्षो भविष्यसि। समनन्तरभाषितायां चास्यां वाचि विदुषा गृहपतिना, अथ तावदेव 30 अपरिमाणाः सत्त्वा विदुषा गृहपतिना पूर्वप्रणिधानाभिनिमन्त्रिताः संनिपतिताः। नानादिग्भ्यो नानाजनपदप्रदेशेभ्यो नानानगरेभ्यो नानानिगमेभ्यो नानापट्टनेभ्यो नानाकर्वटेभ्यो नाना-

सत्त्वजातिभ्यो नानासत्त्वकुलेभ्यो नानासत्त्वकुलविमात्रताभ्यो नानागतिपरिवर्तेभ्यो नाना
प्रतिष्ठानसंज्ञानगतिभ्यो नानायतनविशुद्धा नानाहारार्थिनो नानाहाराभिलाषिणो नानाशय्या
शुल्कन्नपानकामा मांसार्थिनो विविधभोजनविमात्रताभिकाङ्क्षिणो विविधगतिविशेषोपपत्त्या
यतननिश्रिता यदुत मनुष्येष्वोदनकुल्माषसूपमत्स्यमांसादिविविधकवलीकाराहारार्थिन । यथा
5 मनुष्येषु, एवं सर्वगतिविनिचयेषु नानाभोजनपानार्थिन उपसंक्रान्ता, यदुत बोधिसत्त्वानु
भावेन असङ्ख्यागदुन्दुभिनिर्घोषेण बोधिसत्त्वप्रणिधिनिमन्त्रिता । तमुपसंक्रम्य विद्वांसं
गृहपतिं याचन्तेऽवलोकयन्ति निरीक्षन्ते विज्ञापयन्ति ॥

अथ खलु विद्वान् गृहपतिस्तान् याचनकान् संनिपतितान् विदित्वा मुहूर्तमनु
विचिन्त्य गगनतलमवलोकयति स्म । तस्य ततो गगनतलाद्विविधा भोजनपानविधयो
10 नानारसा नानावर्णा नानागन्धा अवलम्ब्य हस्ततले प्रत्यतिष्ठन् । स तान्यादाय तान्
यथासंनिपतितान् याचनकान् नानाधिमुक्तान् यथाभिप्रेतैर्भोजनपानविधिभिः सर्वोपकरण
विशेषैः संतर्पयति संप्रवारयति संतोषयति संप्रहर्षयति संप्रमोदयति परिप्रीणयति,
आत्तमनस्कान् करोति । उत्तरे वै नानामिषेण संतर्प्य तेभ्यो धर्मं देशयेद् । यदुत
विपुलज्ञानसंभारोपचयहेतु परिदीपयन्, सर्वदारिद्र्यासंभवहेतु परिदीपयन्, महाभोगता
15 समुदागमसंभवहेतु परिदीपयन्, धर्मज्ञानन्यप्रतिलाभसंभवहेतु परिदीपयन्, विपुलपुण्य
समारोपचयहेतु परिदीपयन्, प्रीतिभक्षभोजनप्रतिलाभसंभवहेतु परिदीपयन्, लक्षणानु
व्यञ्जनोपचितशरीरप्रतिलाभसंभवहेतु परिदीपयन्, अनवमृद्यबलपरिशुद्धिप्रतिलाभसंभवहेतु
परिदीपयन्, अनन्तराहारपरिज्ञाप्रतिलाभसंभवहेतु परिदीपयन्, सर्वमारबलप्रमर्दनापर्या
दत्तपुण्यबलप्रतिलाभसंभवहेतु परिदीपयन् धर्मं देशयेत् । सोऽन्नार्थिन उपसंक्रान्तान्
20 गगनतलान्नानान्नविधीन् गृहीत्वा संतर्प्य तेभ्य आयुर्वर्णबलसुखप्रतिभानं संपश्यन् प्रति
लाभाय धर्मं देशयेत् । स पानार्थिन उपसंक्रान्तान्नानाविधैः पानैरुदारैः कल्याणैरनवद्यैर्मन
संप्रहर्षकैः संतर्प्य तेभ्य संसारतृष्णारतिविनिवर्तनतायै बुद्धधर्मरतितृष्णासंजननतायै धर्मं
देशयेत् । रसरसाग्रार्थिन उपसंक्रान्तान्नानाविधरसरसाग्रैर्मधुराम्ललवणकटुतिक्तकषायै
संतर्पयामास । उत्तरे चैषां रसरसाग्रतामहापुरुषलक्षणप्रतिलाभाय धर्मं देशयेत् । स
25 यानार्थिनो नानादिक्स्रोतोभ्यागतान्नानाविधयानदानैः संगृह्य तेभ्यो महायानाधिरोहणतायै
धर्मं देशयेत् ॥[1] नानादिगागतान् वस्त्रार्थिन उपसंक्रान्तान् विदित्वा मुहूर्तं विचिन्त्य
गगनतलमुल्लोकयति स्म । तस्य ततो गगनतलान्नानारङ्गान्यनेकवर्णानि विशुद्धानि
नीलपीतलोहितावदातमाञ्जिष्ठस्फटिकवर्णानि विविधानि वस्त्राण्यवलम्ब्य हस्ततले प्रत्यतिष्ठन् ।
स तैस्तान् याचनकान् प्रतिपाद्य तेभ्योऽनुत्तरतथागतह्रीव्यपत्राप्यसुवर्णवर्णच्छविताप्रतिलाभ
30 विशुद्धये धर्मं देशयेत् । प्रत्येकमेव सर्वोपकरणविधिभिर्यथागतान् याचनकान् प्रतिपाद्य
तेभ्यो यथार्हं धर्मं देशयेत् ॥

---

१ B संतर्प्य

अथ खलु विद्वान् गृहपतिः सुधनस्य श्रेष्ठिदारकस्य तमचिन्त्य बोधिसत्त्वविमोक्ष-विषयमुपदर्श्य एवमाह—एतमहं कुलपुत्र मनःकोशसम्भवविमोक्षं जानामि। किं मया शक्यं परिष्कारवशिताप्राप्तानां बोधिसत्त्वानां रत्नपाणिनां प्रतिलब्धानां चर्यां ज्ञातुं गुणान् वा वक्तुम्, विकुर्वितं वा निदर्शयितुम्, ये ते सर्वलोकधातूननवशेषं पाणिना सञ्छाद्य बुद्धपूजाविधानताय सर्वतथागतपर्षन्मण्डलेषु नानावर्णरत्नमेघान् प्रवर्षन्ति। एवं नानावर्णा- 5 भरणमेघान् नानावर्णकूटागारमेघान् नानावर्णविचित्रवस्त्रमेघान् नानादिव्यतूर्यतालोपचारसंगी-तिमनोज्ञमधुरनिर्घोषान् नानावर्णगन्धमेघान् नानावर्णधूपमाल्यविलेपनचूर्णचीवरच्छत्रध्वज-पताकासर्वोपकरणमेघान् सर्वाकारसर्वबुद्धपूजामेघान् प्रवर्षयन्ति। सर्वतथागतपर्षन्मण्डलेषु सर्वसत्त्वभवनेषु यदुत सर्वबुद्धपूजोपस्थानतायै सर्वसत्त्वधातुपरिपाकविनयाय च॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे सिंहपोतं नाम नगरम्। तत्र रत्नचूडो नाम 10 धर्मश्रेष्ठी[1] प्रतिवसति। तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारकस्तुष्ट उदग्र आत्तमना प्रमुदितः प्रीतिसौमनस्यजातो विदुषि गृहपतौ धर्मगौरवाच्छिष्यभावमुपदर्श्य तदधिष्ठानात्सर्वबुद्धधर्मान् संपश्यन्, तदधीनां सर्वज्ञतां संपश्यन्, कल्याणमित्रानाच्छेद्यप्रेमतामुपदर्शयन्, कल्याणमित्रेष्वलब्धाज्ञाचिन्तता 15 संदर्शयन्, कल्याणमित्रवशवर्तितामनुवर्तयन्, कल्याणमित्रानुशासनीवचनं शुश्रूषमाणः, कल्याणमित्रप्रभवं श्रद्धेन्द्रियं निध्यायन्, कल्याणमित्रानुशासन्यनुप्रेषितः, कल्याणमित्राभि-राधनानुवर्तनचित्तो विदुषो गृहपतेः पादौ शिरसाभिवन्द्य विद्वांसं गृहपतिमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य विदुषो गृहपतेरन्तिकात्प्रक्रान्तः॥ १५॥

---

१ B श्रेष्ठी for धर्मश्रेष्ठी

## १८ रत्नचूडः।

अथ खलु सुधनः श्रेष्ठिदारकः तत्पुण्यतोयं समानयन्, तत्पुण्यक्षेत्रं संपश्यन्, तत्पुण्यसुमेरुं परिशोधयन्, तत्पुण्यतीर्थमवगाह्यमानः, तत्पुण्यकोशं विवृण्वन्, तत्पुण्यनिधिमवलोकयन्, तत्पुण्यमण्डलं परिशोधयन्, तत्पुण्यस्कन्धं समाददत्, तत्पुण्यबलं संजनयन्, तत्पुण्यवेगं विवर्धयन्, अनुपूर्वेण येन सिंहपोतं नगरं तेनोपसंक्रम्य रत्नचूडं धर्मश्रेष्ठिनं परिमार्गमाणोऽद्राक्षीदन्तरापणमध्यगतम्। तस्य पादौ शिरसाभिवन्द्य प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह-मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। तत्साधु मे आर्यो बोधिसत्त्वमार्गमुपदिशतु, येनाहं मार्गेण सर्वज्ञताया निर्यायाम्॥

अथ खलु रत्नचूडो धर्मश्रेष्ठी सुधनं श्रेष्ठिदारकं पाणौ गृहीत्वा येन स्वं निवेशनं तेनोपसंक्रम्य तद्गृहमुपदर्श्य एवमाह-प्रेक्षस्व कुलपुत्र मम निवेशनम्। सोऽनुविलोकयन् अद्राक्षीत्तद्गृहं शुद्धं प्रभास्वरं जाम्बूनदसुवर्णमयं विपुलमुद्विद्धं रूप्यप्राकारपरिक्षिप्तं स्फटिकप्रासादसुकृतोपशोभितं वैडूर्यकूटशतसहस्रप्रतिमण्डितं मुसारगल्वसमुच्छ्रितस्तम्भं सुप्रज्ञप्तलोहितमुक्तामयसिंहासनं ज्योतीरसमणिरत्नसिंहध्वजसमुच्छ्रितं वैरोचनमणिरत्नवितानविततं चिन्तामणिविचित्रहेमजालसंछन्नमसंख्येयमणिरत्नप्रतिमण्डितव्यूहं शीतजलाश्मगर्भमयपुष्करिणीसमुपेतं सर्वरत्नद्रुमपरिवृतं विपुलं विस्तीर्णं दशपुरमुद्विद्धमष्टद्वारम्। स तद्गृहं प्रविश्य समन्तादनुविलोकयति स्म। स प्रथमे पुरेऽन्नपाननिधिपरित्यागमद्राक्षीत्। द्वितीये पुरे सर्ववस्त्रनिधिपरित्यागम्। तृतीये पुरे सर्वरत्नाभरणालंकारपरित्यागम्। चतुर्थे पुरेऽन्तःपुरपरिभोगरतिमहापृथिवीकल्याणकन्यारत्नपरित्यागमद्राक्षीत्। पञ्चमे पुरे पञ्चमीभूमिप्रतिष्ठितानां बोधिसत्त्वानां धर्मसंगीतिरतिप्रयुक्तानां लोकहितसुखचित्तचेष्टानां सर्वशास्त्राण्यभिनिर्हरतां धारणीनयं च समाधिसमुद्रं च समाधिव्युत्थानं च समाधिव्यवचारं च ज्ञानालोकं च अभिनिर्हरतां संनिपातमद्राक्षीत्। षष्ठे पुरे प्रज्ञापारमिताविहारप्रतिलब्धानां गम्भीरप्रज्ञानां सर्वधर्मप्रज्ञाताभिज्ञानां भूमिसमाधिधारणीमुखगर्भसमन्तमुखनिर्यातानाम् अनावरणगोचराणाम् अद्वयसमुदाचाराणां धर्मसंगीतिं कुर्वतां प्रज्ञापारमितापरिवर्तनमनुसरतां विभजतामुत्तानीकुर्वतां बोधिसत्त्वानां संनिपातमद्राक्षीत् इमानि प्रज्ञापारमितामुखानि संगायताम्-यदुत शान्तिगर्भं नाम प्रज्ञापारमितामुखम्, सर्वजगज्ज्ञानमुनिमतं च नाम प्रज्ञापारमितामुखम्, अचलावर्तं च नाम प्रज्ञापारमितामुखम्, विरजःप्रभासं च नाम प्रज्ञापारमितामुखम्, दुर्योधनगर्भं च नाम प्रज्ञापारमितामुखम्, जगद्रोचनामण्डलं च नाम प्रज्ञापारमितामुखम्, अनुगमनयमण्डलं च नाम प्रज्ञापारमितामुखम्, सागरगर्भं च नाम प्रज्ञापारमितामुखम्, समन्तचक्षुरुपेक्षाप्रतिलम्भं च नाम प्रज्ञापारमितामुखम्, अक्षयकोशानुगमं च नाम प्रज्ञापारमितामुखम्, सर्वधर्मनयसागरं च नाम प्रज्ञापारमितामुखम्, सर्वजगत्सागरानुगमं च नाम प्रज्ञापारमितामुखम्, असङ्गप्रतिभानं च नाम प्रज्ञापारमितामुखम्, धर्ममेघाव-

त्म्यानुपूर्वाभिलम्भनिलय च नाम प्रज्ञापारमितामुखम् । इतीमानि प्रज्ञापारमितामुखानि प्रमुख कृत्वा परिपूर्णानि दश प्रज्ञापारमितासख्येयशतसहस्राणि, यानि तान् बोधिसत्त्वाननभिलाप्यव्यूहसुविभक्तपर्षन्मण्डलस्थितान् सगायतोऽद्राक्षीत् । सप्तमे पुरे प्रतिश्रुत्कोपमक्षान्तिप्रतिलब्धानामुपायज्ञानविनिश्चयनिर्यातानां सर्वतथागतधर्ममेघसप्रत्येषकाणां बोधिसत्त्वानां सनिपातमद्राक्षीत् । अष्टमे पुरेऽच्युतगामिन्यभिज्ञाप्रतिलब्धानां सर्वलोकधात्वनुविचरणानां 5 सर्वपर्षन्मण्डलप्रतिभासप्राप्तानां सर्वधर्मधातुसुविभक्तशरीराणां सर्वतथागतपादमूलासभिन्न विषयाणां सर्वबुद्धकायसमवसरणानां सर्वतथागतपर्षन्मण्डलपूर्वंगमकथापुरुषाणां बोधिसत्त्वानां सनिपातमद्राक्षीत् । नवमे पुरे एकजातिप्रतिबद्धानां बोधिसत्त्वानां सनिपातमद्राक्षीत् । दशमे पुरे सर्वतथागतानां सप्रथमोपचित्तोत्पादचर्यानिर्याणप्रणिधानसागरान् सर्वबुद्धधर्मविकुर्वितविषयान् सर्वबुद्धक्षेत्रपर्षन्मण्डलान् सर्वबुद्धधर्मचक्रनिर्घोषान् सर्वसत्त्व 10 विनयाधिष्ठानव्यूहानद्राक्षीत् ॥

दृष्ट्वा च रत्नचूड धर्मश्रेष्ठिनमेतदवोचत्—आर्य, कुतस्ते इयमेवरूपा सपद्विशोधिता ? कुत्र ते कुशलमूलान्यवरोपितानि यस्य तव इयमीदृशी विपाकसपत् ? स आह—स्मरामि कुलपुत्र अतीतेऽध्वनि बुद्धक्षेत्रपरमाणुरज समाना कल्पानां परेण परतरेण चक्रविचित्रे लोकधातावनन्तरश्मिधर्मधातुसमलंकृतधर्मराजो नाम तथागतो लोके उदपादि, विद्याचरण 15 सपन्न सुगतो लोकविदनुत्तर पुरुषदम्यसारथि शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । स खलु पुनस्तथागतो ज्ञानवैरोचनप्रमुखेन श्रावककोटीशतेन ज्ञानसूर्यतेज-प्रमुखेन च बोधिसत्त्वकोटीशतसहस्रेण सार्धं मणिध्वजव्यूहराजमहोद्यानधरणिप्रतिष्ठो राज्ञा धर्मेश्वरराजेन अभिनिमन्त्रित । तस्य मे तथागतस्य नगरप्रविष्टस्यान्तरापणमध्यगतस्य तूर्यनादनिर्नादित कारितम् । एका च गन्धगुलिका निधूपिता तस्य भगवत सबोधिसत्त्वश्रावक 20 सघस्य पूजाकर्मणे । तया च गन्धगुलिकया निधूपितया सप्ताह सर्वजम्बुद्वीपोऽनन्तवर्णै सर्वसत्त्वकायसदृशैर्धूपपटलमेघै सछन्नोऽभूत् । तेभ्यश्च धूपपटलमेघेभ्य एवरूप शब्दो निश्चरति स्म—अचिन्त्यस्तथागतत्र्यध्वविपुलेन स्कन्धेन समन्वागत, सर्वज्ञ सर्वावरणविगत सर्वक्लेशवासनाप्रहीण, सर्वतथागतावरोपिता दक्षिणा, अप्रमाणसर्वज्ञताफलदायिका सर्वज्ञता समवसरणा इति—यदुत असत्कुशलमूलपरिपाकार्थमचिन्त्यसत्त्वकुशलमूलवेगसजननार्थं च । 25 तेभ्यो धूपपटलमेघेभ्यो बुद्धाधिष्ठानेन अयमेवरूप शब्दो निश्चचार । तच्च मे कुलपुत्र तथागताधिष्ठान सदर्शनप्रातिहार्यकुशलमूल त्रिषु स्थानेषु परिणामितम् । कतमेषु त्रिषु ? यदुत अत्यन्तसर्वदारिद्र्यसमुच्छेदाय सद्धर्मश्रवणाविरहितताये सर्वबुद्धबोधिसत्त्वकल्याणमित्रदर्शनपरिपूरये च । एतमह कुलपुत्र, अप्रतिहतप्रणिधिमण्डलव्यूहबोधिसत्त्वविमोक्ष जानामि । किं मया शक्यमचिन्त्याप्रमाणगुणरत्नाकराणां बोधिसत्त्वानां चर्यां ज्ञातु गुणान् 30 वा वक्तुम्, ये ते असभिन्नबुद्धशरीरसागरावतीर्णा, ये ते असभिन्नधर्ममेघसप्रतीच्छका, ये ते असभिन्नगुणसागरप्रतिपन्ना, ये ते समन्तभद्रचर्याभिनिसृता, ये ते असभिन्नसमाधिविषया

वतीर्णाः, ये ते असंभिन्नसर्वबोधिसत्त्वैकघनकुशलमूलाः, ये ते असंभिन्नतथागतानिकल्पविहारिणः, ये ते असंभिन्नत्र्यध्वसमतावतीर्णाः, ये ते असंभिन्नसर्वकल्पसंवासापरिखिन्नाः, ये ते असंभिन्नसमन्तचक्षुर्विषयभूमिप्रतिष्ठिताः ॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे वेत्रमूलको नाम जनपदः । तत्र समन्तमुखे ५ नगरे समन्तनेत्रो नाम गान्धिकः श्रेष्ठी प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको रत्नचूडस्य धर्मश्रेष्ठिनः पादौ शिरसाभिवन्द्य रत्नचूडं धर्मश्रेष्ठिनमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य रत्नचूडस्य धर्मश्रेष्ठिनो ऽन्तिकात्प्रक्रान्तः ॥ १६ ॥

## १९ समन्तनेत्रः ।

अथ खलु सुधनः श्रेष्ठिदारकोऽनन्तबुद्धदर्शनावतीर्णोऽनन्तबोधिसत्त्वसमवधानप्राप्तोऽनन्तबोधिसत्त्वमार्गनयावभासितोऽनन्तबोधिसत्त्वधर्मनयाभिष्यन्दितनिश्चितचित्तोऽनन्तबोधिसत्त्वाधिमुक्तिपथविशुद्धिरनन्तबोधिसत्त्वेन्द्रियावभासप्रतिलब्धोऽनन्तबोधिसत्त्वाशयबलप्रतिष्ठितोऽनन्तबोधिसत्त्वचर्यानुगतचेताः अनन्तबोधिसत्त्वप्रणिधानबलसंजातोऽनन्तबोधिसत्त्वापराजितध्वजोऽनन्तबोधिसत्त्वज्ञानालोकपरिवर्ती अनन्तबोधिसत्त्वाधर्मावभासप्रतिलब्धः अनुपूर्वेण येन वेत्रमूलको नाम जनपदस्तेनोपसंक्रम्य समन्तमुखं नगरं परिमार्गन् समन्तदिग्विदिक्षु देशप्रदेशोपचारेषु निम्नोन्नतसमविषमेषु अपरिखिन्नाशयोऽविश्रमन् समानचित्तोऽनिवर्त्यवीर्योऽपर्यादत्तचेतनोऽविस्मृतकल्याणमित्रानुशासनः सदाकल्याणमित्रसमुदाचारहृदयाशयः समन्तमुखनिश्रितेन्द्रियः सर्वप्रमादविगतो विस्फारितकर्णचक्षुः सर्वतः परिगवेषमाणोऽद्राक्षीत्समन्तमुखं नगरम्, मध्ये वेत्रमूलस्य जनपदस्य दशानां पट्टनसहस्राणां निगमं सुपरिनिष्ठितं दृढप्राकारमुद्विद्धमट्टचत्वरोपशोभितम् । तस्य मध्ये समन्तनेत्रं गान्धिकमद्राक्षीत् गान्धिकवीथ्यामुपविष्टम् । दृष्ट्वा च येन समन्तनेत्रो गान्धिकस्तेनोपसंक्रम्य समन्तनेत्रस्य गान्धिकस्य पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । आह—साधु साधु कुलपुत्र, येन ते अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । अहं कुलपुत्र सर्वसत्त्वानां व्याधीन् प्रजानामि वातसमुत्थानपि, पित्तसमुत्थानपि, श्लेष्मसमुत्थानपि, सभागक्षुभितानपि, परोपक्रमितानपि, अमनुष्यवैकारिकानपि, विषमपरोपक्रमिकानपि, विविधमन्त्रशस्त्रवेतालप्रयोगाग्निसमुत्थानपि, उदकसंक्षोभसमुत्थानपि, त्रिविधभयसंत्राससंभवानपि । तेषां च सर्वव्याधीनां प्रशमं प्रजानामि—यदुत स्नेहनं प्रजानामि, वमनं विरेचनमास्थापनं रक्तावसेचनं नासाकर्म कर्षुपरिणाहं परिस्वेदनमनुलेपनं विषप्रतिघातं भूतग्रहप्रतिषेधं बृंहणं स्नपनं संत्रासनं संवर्धनं वर्णपरिशोधनं बलसंजननं प्रजानामि । ये कुलपुत्र सत्त्वा ममान्तिकमुपसंक्रामन्ति दशभ्यो दिग्भ्यः, तेषामहं सर्वेषां व्याधीन् प्रशमयामि । व्याधिप्रशान्तांश्च सुस्नातानुलिप्तगात्रान् कृत्वा यथार्हाभरणविभूषिताङ्गान् यथार्हवस्त्रसंछादितशरीरान् विविधभोजनरसाग्रैः संतर्प्य अपरिमितधनसमृद्धान् करोमि । उत्तरे चैषां रागप्रहाणाय धर्मं देशयामि अशुभोपसंहारेण । दोषप्रहाणाय धर्मं देशयामि महामैत्रीसंवर्णनतया । मोहप्रहाणाय धर्मं देशयामि धर्मप्रविचयप्रभेदप्रदर्शनतया । समभागचर्याक्लेशप्रहाणाय धर्मं देशयामि । विशेषपरिज्ञानयमुखसंप्रकाशनतया बोधिचित्तसंभवहेतुं परिदीपयामि । सर्वबुद्धगुणधर्मसंप्रयुक्तकथासंप्रकाशनतया महाकरुणासंभवहेतुं परिदीपयामि । अपरिमाणसंसारदुःखसंप्रकाशनतया अपरिमितगुणप्रतिलाभसंभवहेतुं परिदीपयामि । विपुलपुण्यज्ञानसंभारोपचयसंवर्णनतया महायानप्रणिधानसंभवहेतुं परिदीपयामि । सर्वसत्त्वपरिपाकविनयसंदर्शनतया समन्तभद्रबोधिसत्त्वचर्याप्रतिलम्भसंभवहेतुं परिदीपयामि । सर्वक्षेत्र-

सर्वकल्पसत्त्वासचर्याजालप्रविस्तरणतया लक्षणानुव्यञ्जनोपचितबुद्धशरीरप्रतिलाभसंभवहेतु परिदीपयामि । दानपारमितासंवर्णनतया सर्वत्रगामिनीतथागतपरिशुद्धिप्रतिलाभसंभवहेतु परिदीपयामि । शीलपारमितासंप्रकाशनतया अचिन्त्यतथागतरूपवर्णविशुद्धिसंभवहेतु परिदीपयामि । क्षान्तिपारमितासंप्रकाशनतया दुर्योधनतथागतशरीरसंभवहेतु परिदीपयामि ।
5 वीर्यपारमितासंप्रकाशनतया अभिभूतानभिभूततथागतात्मभावविशुद्धिं परिदीपयामि । ध्यानपारमितासंप्रकाशनतया धर्मशरीरविशुद्धिं परिदीपयामि । प्रज्ञापारमितासंप्रकाशनतया सर्वजगदभिमुखबुद्धात्मभावविशुद्धिं परिदीपयामि । उपायकौशल्यपारमितासंप्रकाशनतया सर्वकल्पकालजगच्चित्तसंतोषणशरीरविशुद्धिं परिदीपयामि । प्रणिधानपारमितासंप्रकाशनतया सर्वबुद्धक्षेत्राभ्युद्गतात्मभावविशुद्धिं परिदीपयामि । बलपारमितासंप्रकाशनतया सर्वजगद्यथा-
10 शयसंतोषणकायपरिशुद्धिं परिदीपयामि । ज्ञानपारमितासंप्रकाशनतया परमशुभदर्शनकायपरिशुद्धिं परिदीपयामि, यदुत सर्वाकुशलधर्मविनिवर्तनसंप्रकाशनतया । एवं चैतान् धर्मदानेन संगृह्य अनन्तधनरत्नोपचयोपस्तब्धान् कृत्वा विसर्जयामि । अपि तु खलु पुनरहं कुलपुत्र सर्वगन्धधूपवासनानुलेपनयुक्तीः प्रजानामि यदुत अतुल्यगन्धराजप्रमुखा । सिन्धुवारितगन्धराजप्रमुखा अजितावतिगन्धराजप्रमुखा विबोधनगन्धराजप्रमुखा अरुणवतिगन्धराज-
15 प्रमुखा कालानुसारिगन्धराजप्रमुखा उरगसारचन्दनगन्धराजप्रमुखा मेघागरुगन्धराजप्रमुखा अक्षोभ्येन्द्रियगन्धराजप्रमुखा सर्वगन्धयुक्तीः प्रजानामि । अपि तु खलु पुनरहं कुलपुत्र सर्वसत्त्वसंतोषणसमन्तमुखबुद्धदर्शनपूजोपस्थानगन्धविम्बं प्रजानामि ॥

इतश्च मे कुलपुत्र, सर्वसत्त्वसंतोषणात्समन्तमुखबुद्धदर्शनपूजोपस्थानगन्धविम्बात्सर्वाभिप्राया परिपूर्यन्ते, येन सर्वसत्त्वपरित्राणालंकारमेघानधितिष्ठामि । यदुत गन्धविमानालं-
20 कारमेघान् यावत्सर्वाकारतथागतपूजोपस्थानालंकारमेघानधितिष्ठामि । यदाहं कुलपुत्र तथागतान् पूजयितुकामो भवामि, तदाहमितः सर्वसत्त्वसंतोषणात् समन्तमुखबुद्धदर्शनपूजोपस्थानगन्धविम्बादपरिमाणान् गन्धकोशकूटागारमेघानधिष्ठाय दशदिक्सर्वधर्मधातुगतेषु सर्वतथागतपर्षन्मण्डलेषु सर्वगन्धकोशकूटागारमेघालंकारं सर्वधर्मधातुमधितिष्ठामि । सर्वबुद्धक्षेत्रपरिशोधनमेघालंकारं गन्धभवनमेघालंकारं गन्धप्राकारमेघालंकारं गन्धनिर्यूहव्यूहमेघा-
25 लंकारं गन्धतोरणमेघालंकारं गन्धगवाक्षमेघालंकारं गन्धहर्म्यकमेघालंकारं गन्धार्धचन्द्रमेघालंकारं गन्धच्छत्रमेघालंकारं समुच्छ्रितगन्धध्वजमेघालंकारं गन्धपताकामेघालंकारं गन्धवितानमेघालंकारं गन्धविग्रहजालमेघालंकारं गन्धप्रभामेघालंकारं गन्धावभासविमलव्यूहमेघालंकारं सर्वगन्धमेघप्रवर्षणालंकारं सर्वधर्मधातुमधितिष्ठामि । एतमहं कुलपुत्र सर्वसत्त्वसंतोषणसमन्तमुखबुद्धदर्शनपूजोपस्थानगन्धविम्बं धर्ममुखं जानामि । किं मया शक्यं
30 भैषज्यराजकल्पानां बोधिसत्त्वानाममोघदर्शनानाममोघश्रवणानाममोघसंवासानाममोघानुस्मृतीनाममोघानुगमनानाममोघनामधेयग्रहणानां चर्यां ज्ञातुं गुणान् वा वक्तुम्, येषां सहदर्शनेन च सर्वसत्त्वानां सर्वक्लेशाः प्रशाम्यन्ति, येषां सहदर्शनेन सत्त्वा विनिवर्तन्ते सर्वापायगतिभ्यः,

येषां सहदर्शनेन सत्त्वा अवकाशं लभन्ते बुद्धधर्मेषु, येषां सहदर्शनेन सत्त्वानामुपशमन्ति सर्वदुःखस्कन्धाः, येषां सहदर्शनेन सत्त्वा विगतभया भवन्ति सर्वसंसारगतिभ्यः, येषां सहदर्शनेन सत्त्वा अभयप्राप्ता भवन्ति सर्वज्ञतादिगुपनयतया, येषां सहदर्शनेन सत्त्वा न प्रतिपतन्ति जरामरणश्वभ्रप्रपातेषु, येषां सहदर्शनेन सत्त्वा निर्वृतिसुखं प्रतिलभन्ते धर्मधातुसमतास्थानेन ॥ 5

गच्छ कुलपुत्र, इदमिहैव दक्षिणापथे ताल्ध्वजं नाम नगरम्। तत्र अनलो नाम राजा प्रतिवसति। तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारकः समन्तनेत्रस्य गान्धिकश्रेष्ठिनः पादौ शिरसाभिवन्द्य समन्तनेत्रं गान्धिकं श्रेष्ठिनमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य समन्तनेत्रस्य 10 गान्धिकश्रेष्ठिनोऽन्तिकात् प्रक्रान्तः ॥ १७ ॥



## २० अनलः ।

अथ खलु सुधन श्रेष्ठिदारकस्तां कल्याणमित्रपरंपरामनुस्मरन्, तानि कल्याणमित्रानुशासनीमुखानि मनसिकुर्वन्, परिगृहीतोऽस्मि कल्याणमित्रैरिति स्वचित्तं संतोषयन्, कल्याणमित्रारक्षितोऽस्मि न भूयो विनिवर्तिष्यामि अनुत्तरायाः सम्यक्संबोधेरित्यनुविचिन्तयन् प्रत्यलभत चित्तप्रीतिम् । चित्तप्रसादं चित्तप्रामोद्यं चित्ततुष्टिं चित्तप्रहर्षं चित्तनन्दीं चित्तव्युपशमं चित्तविपुलतां चित्तालंकारतां चित्तासङ्गतां चित्तानावरणतां चित्तविविक्ततां चित्तसमवसरणतां चित्तवशितां चित्तैश्वर्यं चित्तधर्मानुगमं चित्तक्षेत्रस्फरणतां बुद्धदर्शनालंकारचित्ततां दशबलमनसिकाराविप्रवासचित्ततां प्रत्यलभत । सोऽनुपूर्वेण जनपदेन जनपदं ग्रामेण ग्रामं देशेन देशं परिमार्गन् येन तालध्वजं नगरं तेनोपसंक्रम्य परिपृच्छति स्म–क्वुत्रानलो राजेति । तमन्यो जनकाय एतदवोचत्–एष कुलपुत्र अनलो राजा अर्थकरणे सिंहासनोपविष्टो राजकार्यं करोति । जनपदान् प्रशास्ति । निग्रहीतव्यान्निगृह्णाति, प्रग्रहीतव्यान् प्रगृह्णाति, अपराधितान् दण्डं प्रणयति । विवदतां विवादं छिनत्ति । दीनानाश्वासयति । दृप्तान् दमयति । प्राणिवधाद्विनिवर्तयति । अदत्तादानाद्विच्छन्दयति । परपरिगृहीताभिलाषाद् व्युपशमयति । मृषावादाद्विनिवारयति । पिशुनवचनाद्विवेचयति । परुषवचनाद्विरमयति । संभिन्नप्रलापाद् व्यावर्तयति । अभिध्याया निर्वेष्टयति । व्यापादं दूरीकरोति । मिथ्यादृष्टेर्वियोजयति ॥

अथ खलु सुधन श्रेष्ठिदारको येन अनलो राजा तेनोपजगाम । सोऽद्राक्षीदनलं राजानं नारायणवज्रमणिविचित्रे असंख्येयनानाविधप्रभास्वररत्नपादे अनेकरत्नसुरचितालंकाररुचिरबिम्बे, काञ्चनसूत्रजालवितानपरिनिष्ठिते, अनेकमणिरत्नदीपप्रद्योतिते, वशिराजमणिरत्नमयपद्मगर्भे अनेकदिव्यरत्नवस्त्रसुप्रज्ञप्ते, विविधदिव्यगन्धधूपितोपचारे उच्छ्रितरत्नध्वजच्छत्रशतसहस्रविराजिते रत्नपताकाशतसहस्रोच्छ्रितोपशोभिते विचित्ररत्नपुष्पदामकलापाभिप्रलम्बितोज्ज्वलिते विविधदिव्यरत्नवितानविलते महारत्नसिंहासने निषण्णं नवं दहरं तरुणमभिरूपं प्रासादिकं दर्शनीयमभिनीलप्रदक्षिणावर्तकेशं छत्राकारमूर्धानमुष्णीषशिरसं पृथुललाटमभिनीलविशालगोपक्ष्मनयनं मधुरोन्नतचारुतुङ्गनासावंशं हिङ्गुलकसुवर्णसुश्लिष्टोष्ठं समरहितशुक्लपूर्णचत्वारिंशद्दन्तं सिंहहनुं परिपूर्णोपचितकपोलं सुरुचिरचापायतभ्रुवं शशाङ्कवर्णोर्णयाऽऽवृततिलकमायतप्रमुक्तप्रलम्बकर्णं पूर्णचन्द्रसौम्यवदनं कम्बुरुचिरवृत्तग्रीवं श्रीवत्सालंकृतहृदयं सिंहपूर्वार्धकायं चितान्तरांसं सुसंवृत्तोदस्कन्धं प्रलम्बबाहुं जालावनद्धाङ्गुलिचक्राङ्कितहस्तपादं मृदुतरुणोपचितपाणिपादं सप्तोत्सदं वज्रसदृशमध्यं वृत्तदलगात्रं सुवर्तितोरुं कोशगतवस्तिगुह्यं ऐणेयजङ्घं दीर्घाङ्गुलिमायतपादपार्ष्णिं व्यामप्रभं सुवर्णच्छविमेकैकप्रदक्षिणोर्ध्वाग्ररोमं न्यग्रोधराजपरिमण्डलं लक्षणानुव्यञ्जनोपचितशरीरं चिन्ताराजमणिरत्नमुकुटावबद्धशिरसं जाम्बूनदकनकार्धचन्द्ररचितललाटालंकारमिन्द्रनीलमणिविमलनीलकुण्डलप्रलम्बितकर्णमनर्घ्य-

1 S विनयथा

मणिरत्नहारप्रभावभासितविमलविपुलोपचितवक्षस दिव्योत्तममणिकेयूरवलयविदष्टविभ्रीडित-
बाहु दशरत्नशलाकाशतसुविभक्तेन जाम्बूनदकनकच्छदनेन ज्योतीरसमहामणिरत्नसुविशुद्ध-
गर्भेण रत्नघण्टामालानिश्चरितमनोज्ञमधुरघोषेण समन्तदिव्यमहामणिरत्नावभासप्राप्तेन विमल
वैडूर्यमणिरत्नदण्डेन महता रत्नच्छत्रेण धार्यता महाराजाधिपत्यप्राप्तमप्रतिहतपरचक्रशासन
विगतपरचक्रभयैश्वर्यम् । तस्य समन्ताद्दशामात्यसहस्राणि सनिपतितानि सनिषण्णानि
राजकार्यप्रयुक्तान्यपश्यत् ॥

दश चास्य कारणापुरुषसहस्राणि सनिपतितानि पुरत उपस्थापितानि नरकपाल-
सदृशानि यमपुरुषकल्पानि विकृतपदधारीणि रौद्रविकृतभयसजननानि रक्तनयनानि सदष्टौ-
ष्ठत्रिवलीभृकुटीकृतवदनानि असिपरशुशक्तितोमरभुशुण्डिशूलप्रहरणगृहीतानि विषमविष्ठित
दु सस्थितवदनशरीराणि मेघवर्णानि भीमरूपचण्डस्वरनिर्घोषाणि दुर्निरीक्ष्यतेजासि महा-
भयकराणि प्राणिशतसहस्रहृदयसत्रासजननानि निगृहीतव्यसत्त्वनिग्रहप्रयुक्तानि अपश्यत् ।
तत्र बहूनि प्राणिशतसहस्राणि चोराणा परस्वापहारिणा परसत्त्वभोगविप्रलोपिना पन्थमोषकाणा
ग्रामनगरनिगमघोषदाहकाना कुड्यघातकाना सधिच्छेदकाना किल्बिषकारिणा गरदायकाना
डामरिकाना मनुष्यघातकाना परदारसेविना मिथ्याप्रतिपन्नाना दुष्टचेतसामभिध्यालूना
विविधपापक्रूरकर्मकारिणा गाढपञ्चबन्धनबद्धानि अनलस्य राज्ञोऽन्तिकमुपनीयमानान्यपश्यत् ।
तेभ्योऽनल राजान यथार्हदण्ड प्रणयन्तमद्राक्षीत् । स तत्र राज्ञोऽनलस्याज्ञया केषाचिद्धस्त-
पादच्छेद केषाञ्चित् कर्णनासाच्छेद केषाचिच्चक्षुरुत्पाटन केषाचिदङ्गप्रत्यङ्गशीर्षच्छेदन
केषाञ्चित् सर्वशरीरमग्निना प्रदीप्यमान काश्चिच्छिन्नविकृततत्क्षारोदकपरिषिच्यमानशरीरान्,
एवमनेकविधास्तीव्रा खरा कटुका अमनापा प्राणहारिणी कारणा कार्यमाणा अपश्यत् ।
तस्मिश्च आघातने पर्वतप्रमाणान् करचरणनयनकर्णनासाशिरोङ्गप्रत्यङ्गराशीनपश्यत् । त्रि-
योजनगम्भीर च अनेकयोजनायामविस्तीर्ण शोणितसरोऽद्राक्षीत् । तत्र च अङ्गप्रत्यङ्गशिरोनिक-
लानि मृतकलेवरशतसहस्राणि वृकशृगालश्वकाकगृध्रश्येनकुररभैरवाकीर्णानि भक्ष्यमाणानि
अपश्यत् । कानिचिन्नीलानि च नीलवर्णानि विपूयकानि व्याध्मातकानि विपडुमकानि
परमविकृतबीभत्सान्यपश्यत् । तेषा च वध्याना हन्यमानाना विविधा कारणा कार्यमाणाना
घोरमार्तस्वर क्रन्दता महान्त निर्नादनिर्घोषमश्रौषीत् महासनेगोद्वेगमजनन तद्यथा सघाते
महानरके ॥

तस्य तदतिदारुणभैरवकर परमवैशस दृष्ट्वैनमेतदभवत्—अह च सर्वसत्त्वहितसुख
हेतोरनुत्तरा सम्यक्सबोधिमभिसप्रस्थितो बोधिसत्त्वचर्यापरिमार्गणतत्पर कल्याणमित्राणि
परिपृच्छामि—कि बोधिसत्त्वेन कुशल कर्तव्यम्, किमकुशल परिवर्जयितव्यमिति । अय च
अनलो राजा कुशलधर्मपरिहीणो महासावद्यकर्मकारी प्रदुष्टमन सकल्प परसत्त्वजीवितोप-
रोधाय प्रतिपन्न परसत्त्वोत्पीडनतत्पर परलोकनिरपेक्षो दुर्गतिप्रपाताभिमुख । तत्कुतोऽ-
स्माद्बोधिसत्त्वचर्याश्रवो भविष्यतीति ? तस्यैव चिन्तामनसिकारप्रयुक्तस्य सर्वसत्त्वधातु

परित्राणाभिमुखस्य विपुलकरुणासंभूतचेतस उपरि गगनतले देवता इत्येवमारोचयामास –न स्मरसि कुलपुत्र जयोष्मायतनस्यर्षेः कल्याणमित्रानुशासनीमिति[1] स ऊर्ध्वमुखो गगनतलमवलोक्य एवमाह–स्मरामीति । देवता प्राह–मा त्वं कुलपुत्र, कल्याणमित्रानुशासनीषु विचिकित्सामुत्पादय । सम्यक् समेन कल्याणमित्राणि प्रणयन्ति न विषमेण ।
5 अचिन्त्यं हि कुलपुत्र बोधिसत्त्वानामुपायकौशल्यचर्याज्ञानम् । अचिन्त्यं सर्वसत्त्वसंग्रहज्ञानम् । अचिन्त्यं सत्त्वानुग्रहज्ञानम् । अचिन्त्यं सत्त्वनिग्रहज्ञानम् । अचिन्त्यं सत्त्वप्रग्रहज्ञानम् । अचिन्त्यं सत्त्वसंग्रहज्ञानम् । अचिन्त्यं सत्त्वपरिशोधनज्ञानम् । अचिन्त्यं सत्त्वपरिपालनज्ञानम् । अचिन्त्यं सत्त्वावतरणज्ञानम् । अचिन्त्यं सत्त्वपरिपाचनज्ञानम् । अचिन्त्यं सत्त्वविनयज्ञानम् । गच्छ कुलपुत्र, परिपृच्छ एवं बोधिसत्त्वचर्यामिति ॥

10 अथ सुधनः श्रेष्ठिदारको देवतावचनमुपश्रुत्य येन अनलो राजा तेनोपजगाम । उपेत्य अनलस्य राज्ञः पादौ शिरसाभिवन्द्य अनलं राजानमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्य–
15 कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खल्वनलो राजा राजकार्याणि कृत्वा उत्थाय सिंहासनात् सुधनं श्रेष्ठिदारकं दक्षिणेन पाणिना गृहीत्वा तालध्वजं राजधानीं प्राविशत् । सोऽनुपूर्वेण स्वं गृहमनुप्रविश्य सुधनं श्रेष्ठिदारकमन्तःपुरं प्रवेश्य भद्रासने निषद्य एवमाह–व्यवलोकयस्व कुलपुत्र इमं मम गृहपरिभोगमिति । स व्यवलोकयन्नद्राक्षीत्तद्गृहं विपुलं विस्तीर्णं सप्तरत्नप्राकारपरिक्षिप्तं विविधमणि-
20 रत्नप्रासादोपशोभितमनेकरत्नकूटागारशतसहस्रालंकृतमचिन्त्यमणिरत्नप्रभाज्वालोज्ज्वलिततेजसं नानामणिरत्ननिर्भासविचित्रनिराजितलोहितमुक्तामयसमुच्छ्रितस्तम्भं सुप्रज्ञप्तमुसारगल्वमयानेकरत्नशतसहस्रविचित्रोपशोभितसिंहासनं ज्योतीरसमणिरत्नसिंहध्वजसमुच्छ्रितं वैरोचनमणिरत्नवितानवितत चिन्तामणिविचित्रमहाजालसंछन्नमसंख्येयविचित्रमणिरत्नप्रतिमण्डितनिर्यूहव्यूहं शीतजलाढ्यमधुर्मधुपुष्करिणीसमुपेतं सर्वरत्नद्रुमपङ्क्तिपरिवृतम् । दश चास्य
25 स्त्रीकोटीपरिवारमद्राक्षीत् अभिरूपाणां प्रासादिकानां दर्शनीयानां परमशुभवर्णपुष्कलतया समन्वागतानां सर्वकलाविधिज्ञानां पूर्वोत्थायिनीनां पश्चान्निपातिनीनां मैत्रचित्तानां किंकरणीयप्रत्यारवचनप्रतिकारिणीनाम् ॥

अथ खल्वनलो राजा सुधनं श्रेष्ठिदारकमेवमाह–तत्किं मन्यसे कुलपुत्र, अपि नु पापकारिणामेवंरूपः कर्मविपाकोऽभिनिर्वर्तते[2] एवंरूपा आत्मभावसंपत्, एवंरूपा परिवार
30 संपत्, एवंरूपा महाभोगसंपत्, एवंरूपा महैश्वर्याधिपत्यसंपत्[2] आह–नो हीदमार्य । सोऽवोचत्–अहं कुलपुत्र मायागतस्य बोधिसत्त्वविमोक्षस्य लाभी । इमे च कुलपुत्र

1 B मधुदत्तयेन for समेन

मद्विषयवासिनः सत्त्वा यद्भूयसा प्राणातिपातिनोऽदत्तादायिनः काममिथ्याचारिणो मृषावादिनः पैशुनिकाः पारुषिकाः संभिन्नप्रलापिनोऽभिध्यालव्धा व्यापन्नचित्ता मिथ्यादृष्टयः पापकर्माणो रौद्राश्चण्डाः साहसिका विविधाकुशलकर्मक्रियापरिगताः । ते न शक्यन्तेऽन्यथा पापचर्याया निवारयितुं विनिवर्तयितुमनुशासितुम् । सोऽहं कुलपुत्र एषां सत्त्वानां दमनाय परिपाचनाय विनयेन हिते संनियोजनार्थं महाकरुणां पुरस्कृत्य निर्मितैर्वध्यघातकैर्निर्मितान् 5 वध्यपुरुषान् घातयामि । निर्मितैः कारणापुरुषैर्निर्मितानकुशलकर्मपथकारिणो विविधाः कारणाः कारयामि । हस्तपादकर्णनासाङ्गप्रत्यङ्गशीर्षच्छेदाधिकारिकाश्च दुःखास्तीव्रा वेदनाः प्रत्यनुभवमानान् संदर्शयामि । तच्च दृष्ट्वा एते मद्विजितवासिनः सत्त्वा लभन्ते संवेगम्, जायते भयम्, जायते संत्रासः, भवति चैषां छम्भितत्वम्, यदुत पापकर्मव्यापत्तिविनिवृत्तये । सोऽहं कुलपुत्र इमान् सत्त्वाननेनोपायेनोद्विग्नोत्त्रस्तचित्तात्मविविग्नमनसो विदित्वा दशभ्यो- 10 ऽकुशलेभ्यः कर्मपथेभ्यो विनिवर्त्य दशकुशलकर्मपथसमन्वागतान् कृत्वा अत्यन्तनिष्ठे योगक्षेमे सर्वदुःखोपच्छेदे सर्वज्ञतासुखे प्रतिष्ठापयामि । नाहं कुलपुत्र कस्यचित् सत्त्वस्य विहेठं करोमि कायेन वाचा मनसा वा । आपरान्तिकावीचिकदुःखे संक्रामयेयम् । अहं कुलपुत्र तिर्यग्योनिगतस्य संमूढस्य अन्तशः कुन्तपिपीलिकस्य एकचित्तोत्पादेनापि दुःखोपरोधं नेच्छेयम्, प्रागेव क्षेत्रभूतस्य कुशलकर्मपथविरोहणसमर्थस्य मनुष्यभूतस्य । स्वप्नान्तर- 15 गतस्यापि मे कुलपुत्र अकुशलधर्मसमुदाचारो नोत्पद्यते, कः पुनर्वादः समन्वागतः । एतस्याहं कुलपुत्र, मायागतस्य बोधिसत्त्वविमोक्षस्य लाभी । किं मया शक्यं अनुत्पत्तिकधर्मक्षान्तिप्रतिलब्धानां बोधिसत्त्वानां मायागतधर्मसर्वभवगत्यनुबद्धानां निर्मितोपमबोधिसत्त्वचर्यानिर्यातानां प्रतिभासोपमसर्वलोकविज्ञप्तानां स्वप्नोपमधर्मताप्रतिविद्धानाम् असङ्गमुखधर्मधातुनयानुसृतानामिन्द्रजालोपमचर्याजालानुगतानामनावरणज्ञानगोचरविषयाणां समन्त- 20 समवसरणसमाधिपथनिर्यातानाम् अनन्तावर्तधारणीवशवर्तिनां बुद्धगोचरविषयानुबद्धानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे सुप्रभं नाम नगरम् । तत्र महाप्रभो नाम राजा प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥ 25

अथ खलु सुधनः श्रेष्ठिदारकः अनलस्य राज्ञः पादौ शिरसाभिवन्द्य अनलं राजानमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य अनलस्य राज्ञोऽन्तिकात् प्रक्रान्तः ॥ १८ ॥

---

## २१ महाप्रभः ।

अथ खलु सुधनः श्रेष्ठिदारकस्तां ज्ञानमायामनुस्मरन्, तं मायागतं बोधिसत्त्वविमोक्ष
मुपनिध्यायन्, तां मायागतधर्मतां प्रत्यवेक्षमाणः, तां धर्ममायासमतां प्रतिविध्यन्, तां धर्म
मायासमतामनुविचिन्तयन्, तां धर्मपरिणामनिर्माणसमतामनुगच्छन्, तमचिन्त्यं ज्ञानसंभा
5 रौघमनुस्मरन्, तमनन्तप्रणिधिमायागतनिर्हारमभिनिर्हरन्, तामसङ्गचर्यानिर्माणधर्मतां
विशोधयन्, तं त्र्यध्वमायागतलक्षणं प्रविचिन्वन्, अनुपूर्वेण जनपदेन जनपदं परिपृच्छन्
परिगवेषमाणोऽनुविगाहयन् सर्वदिग्विदिक्पथनिम्नस्थलसमविषमजङ्गलपथपर्वतगिरिकन्दर
ग्रामनगरनिगमजनपदराष्ट्रराजधानीष्वपरिखिन्नचित्तोऽविश्रान्तशरीरो निखिलगवेषी येन
सुप्रभस्य महानगरस्योपविचारस्तेनोपसंक्रम्य पर्यपृच्छत्–क्व स महाप्रभो राजेति । तस्य
10 महाजनकाय उपदर्शयति–एतत्कुलपुत्र सुप्रभं महानगरं यत्र महाप्रभो राजा प्रतिवसति ॥

अथ खलु सुधनः श्रेष्ठिदारको येन सुप्रभं महानगरं तेनोपसंक्रम्याद्राक्षीत् सुप्रभं
महानगरम् । दृष्ट्वा च पुनस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजात एवमनु
चिन्तयामास–इह कल्याणमित्रं प्रतिवसति । अद्य तं द्रक्ष्यामि कल्याणमित्रम् । तत
श्रोष्यामि बोधिसत्त्वचर्यां बोधिसत्त्वनिर्याणमुखमचिन्त्यां बोधिसत्त्वधर्मताम् अचिन्त्यान्
15 बोधिसत्त्वगुणगोचरान् अचिन्त्यां बोधिसत्त्वसमताम् अचिन्त्यां बोधिसत्त्वसमाधिविहारिताम्
अचिन्त्यं बोधिसत्त्वविमोक्षविक्रीडितम् अचिन्त्यां बोधिसत्त्वमहारम्भविस्तारणविशुद्धिम् । एवं
चिन्तागमनविचारप्रयुक्तो येन सुप्रभं महानगरं तेनोपजगाम । उपेत्य सुप्रभं महानगरमनुविलोक
यामास विचित्रदर्शनीयं सप्तानां रत्नानां सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तेः
अश्मगर्भस्य मुसारगल्वस्य च, सप्तभी रत्नपरिखाभिः समन्तादनुपरिक्षिप्तं गम्भीराभिर्जातोदकाभिः
20 सुवर्णवालिकासंस्तीर्णतलाभिर्दिव्योत्पलपद्मकुमुदपुण्डरीकसंछन्नाभिः कालानुसारिचन्दन
कर्दमकलुषोदकाभिः, सप्तरत्नमयतालपङ्क्तिभिः समन्तादनुपरिक्षिप्तम्, सप्तभिर्वज्ररत्नप्राकारैः
समन्ततोऽनुपरिक्षिप्तम्, यदुत सिंहकान्तवज्रप्राकारेण अपराजितवज्रप्राकारेण निर्वेधवीर्य
वज्रप्राकारेण दुर्योधनवीर्यवज्रप्राकारेण असङ्गवज्रदृढप्राकारेण वज्रांशुगर्भप्राकारेण
विरजोरश्मिव्यूहप्राकारेण अनुपरिक्षिप्तम् । सर्वे च वज्ररत्नमहाप्राकारा असंख्येयमणिरत्नप्रत्यर्पिता
25 जाम्बूनदकनककोष्ठकरुचिरदन्तमालारचिता रजतमणिरुचिरदन्तमालारचिता वैडूर्यमणि
रुचिरदन्तमालारचिता स्फटिकमणिरुचिरदन्तमालारचिता विद्रुममणिरुचिरदन्तमालारचिता
लोहितमुक्तारुचिरदन्तमालारचिता सागरगर्भमुक्तामणिरुचिरदन्तमालारचिताः । तस्य च
महानगरस्य दशयोजनान्तराण्यष्टौ द्वाराणि विचित्राणि दर्शनीयानि सप्तानां रत्नानाम् ।
तच्च महानगरं विपुलं विस्तीर्णं नानाष्टापदसुविभक्तं नीलवैडूर्यमय्या पृथिव्या प्रतिष्ठापितम् ।
30 तस्मिंश्च महानगरे दश रथ्याकोट्यः । एकैकस्याश्च रथ्याया उभयपार्श्वसंनिविष्टानि नाना
रत्नमयानि अनेकानि रत्नव्यूहप्रतिमण्डितानि उच्छ्रितरत्नच्छत्रध्वजपताकानि अभ्युद्गतानि सर्वो
पकरणसमृद्धानि अनेकनरनारीनियुताध्युषितानि महागृहशतसहस्राणि ॥

तच्च महानगरमसंख्येयसुवर्णमणिरत्नप्रासादोपशोभितं वैडूर्यमणिजालसंछादिताचिन्त्य-रत्नव्यूहासंख्येयजाम्बूनदकनककूटागारं लोहितमुक्ताजालसंछादिताचिन्त्यरत्नव्यूहासंख्येय-रूप्यकूटागारं विचित्ररत्नकोशमणिजालसंछादिताचिन्त्यरत्नव्यूहासंख्येयवैडूर्यकूटागारं विपुल-गर्भमणिराजसंछादिताचिन्त्यरत्नव्यूहासंख्येयस्फटिककूटागारम् आदित्यगर्भमणिराजसंछादिता-चिन्त्यरत्नव्यूहासंख्येयजगद्रोचनामणिरत्नकूटागारं श्रीरश्मिमणिराजसंछादिताचिन्त्यरत्नव्यूहा- 5 संख्येयेन्द्रनीलरत्नकूटागारं ज्योतीरश्मिमणिराजसंछादिताचिन्त्यरत्नव्यूहासंख्येयजगत्सागरमणि-राजकूटागारं अपराजितध्वजमणिराजजालसंछादिताचिन्त्यरत्नव्यूहासंख्येयवज्रकूटागारं दिव्य-मान्दारवकुसुमजालसंछादिताचिन्त्यव्यूहासंख्येयकालानुसारिचन्दनकूटागारं विविधदिव्य-कुसुमजालसंछादिताचिन्त्यरत्नव्यूहासंख्येयातुलगन्धराजकूटागारमनेकरत्नखोटकप्रतिमण्डितं सप्तरत्नवेदिकापरिवृतं रत्नतालपङ्क्तिपरिक्षिप्तम् । सर्वे च ते रत्नखोटका रत्नजालाश्चान्योन्यरत्नसूत्र- 10 विनिबद्धाः । सर्वाणि तानि रत्नसूत्राणि सुवर्णघण्टामालोपशोभितानि । सर्वाश्च ताः सुवर्ण-घण्टामाला विचित्ररत्नदामकलापोपनिबद्धाः । सर्वे च ते रत्नसूत्रदामकलापा रत्नकिङ्किणीजाला-भिप्रलम्बिताः । सर्वं च तं महानगरमसंख्येयमणिरत्नजालसंछन्नमसंख्येयरत्नकिङ्किणीजाल-संछन्नमसंख्येयदिव्यगन्धजालसंछन्नमसंख्येयदिव्यविचित्रपुष्पजालसंछन्नमसंख्येयरत्नबिम्ब-जालसंछन्नमसंख्येयवज्रवितानसंछन्नमसंख्येयरत्नवितानसंछन्नमसंख्येयरत्नच्छत्रवितानसंछन्नम् 15 असंख्येयरत्नकूटागारवितानसंछन्नम् असंख्येयरत्नवस्त्रवितानसंछन्नम् असंख्येयरत्नपुष्पमाला-वितानसंछन्नमुत्सृजननानारत्नध्वजपताकम् ॥

तस्य च सुप्रभस्य महानगरस्य मध्ये राज्ञो महाप्रभस्य गृहं मापितमभूत् । समन्ता-च्चतुर्योजनं परिक्षेपेण सप्तरत्नमयं सप्तभिर्नानारत्नमयीभिर्वेदिकाभिः परिवृतं सप्तभी रत्नकिङ्किणी-जालैः मनोज्ञमधुरनिर्घोषैः समन्तादनुरचितं सप्तरत्नमयीभिः सप्ततालपङ्क्तिभिरनुपरिक्षिप्त- 20 मचिन्त्यनानारत्नमयकूटागारव्यूहशतसहस्रसमलंकृतं दिव्योत्पलपद्मकुमुदपुण्डरीकसंछादित-सलिलाभिरष्टाङ्गोपेतवारिपरिपूर्णाभिः सुवर्णवालिकासंस्तीर्णतलाभिः सर्वरत्नपुष्पफलवृक्षप्रति-मण्डिताभिः चतुर्दिक्षु सुविभक्तरत्नेष्टकानिचितसोपानाभिरनेकरत्नमयीभिः पुष्करिणीभिरुप-शोभितं दिव्यमधुरमनोज्ञनानाशकुनिगणकूजितममरपतिभवनप्रतिरूपार्थे । मध्ये चास्य जगद्रोचनमणिरत्नकूटागारः संस्थितः, चित्रो दर्शनीयोऽसंख्येयमणिरत्नाचिन्त्यव्यूहविराजितो 25 राज्ञा महाप्रभेण सद्धर्मगञ्जः स्थापितः ॥

अथ खलु सुधनः श्रेष्ठिदारको रत्नपरिखास्वनुनीतचित्तो रत्नप्राकारेष्वविस्मयमानो रत्नतालपङ्क्तिष्वरज्यमानो रत्नघण्टाकिङ्किणीजालघोषमनास्वादयन् दिव्यवाद्यनृत्तसंगीतिमधुर-निर्घोषेष्वसक्तचित्तः नानाविचित्ररत्नविमानकूटागारपरिभोगानमनसिकुर्वन् प्रमुदितेषु नरनारी-गणेषु धर्मारामरतिरतो रूपशब्दगन्धरसस्पर्शरतिविविक्तचेता धर्मनिष्पत्तिपरमो यथाभिगत- 30 सरनकल्याणमित्रनिरन्तरपरिपृच्छनतया अनुपूर्वेण येन नगरशृङ्गाटकं तेनोपजगाम । उपेत्य समन्तादनुविलोकयन् अद्राक्षीन्महाप्रभं राजानं मध्ये नगरशृङ्गाटकस्य नैलगृहस्य नातिदूरे

महाव्यूहे महासने नीलवैडूर्यमणिरत्नपादे श्वेतवैडूर्यमये सिंहप्रतिष्ठिते जाम्बूनदसुवर्णसूत्र श्वेतजाले दिव्यातिरेकविचित्ररत्नवस्त्रसुप्रज्ञप्तोपचारे असंख्येयरत्नबिम्बरचितालंकारे अचिन्त्य मणिरत्नव्यूहजालसंछादिते दिव्यरत्ननानाभक्तिविचित्रजाम्बूनदकनकपट्टवितानवितते चिन्ता राजमणिरत्नपद्मगर्भे महाधर्मासने पर्यङ्केन निषण्णम्। द्वात्रिंशन्महापुरुषलक्षणालंकृतशरीरम्।
5 विचित्राशीत्यनुव्यञ्जनोपशोभितगात्रम्। कनकपर्वतमिव नानारत्नविन्यासविराजितम्। आदित्यमण्डलमिव दीप्ततेजसम्। पूर्णचन्द्रमण्डलमिव सौम्यदर्शनम्। ब्रह्माणमिव ब्रह्मपर्षदि विरोचमानम्। सागरमिव गम्भीरधर्मानन्तगुणरत्ननिचयम्। महामेघमिव वर्षस्तभाननिर्घोषम्। गगनमिव धर्मनयज्योतिर्गणप्रतिमण्डितम्। सुमेरुमिव चातुर्वर्णसत्त्वसागरचित्तप्रतिभास प्राप्तम्। रत्नद्वीपमिव विविधज्ञानरत्नाकीर्णतलम्। पुरतश्चास्य अनेकान् सुवर्णमणिमुक्ता-
10 वैडूर्यशङ्खशिलाप्रवालजातरूपरजतरत्नराशीन्, नानारत्नदिव्यवस्त्ररत्नराशीन्, विविधदिव्य रत्नाभरणराशीन्, नानाभक्ष्यभोज्यराशीन्, विविधरसाग्रविशेषनिचयान्, नानाव्यूहनिचय स्थापितानपश्यत्। अनेकानि च दिव्यरथरत्नकोटीशतसहस्राणि, अनेकानि दिव्यतूर्यकोटी शतसहस्राणि, अनेकानि दिव्यगन्धप्राकारकोटीशतसहस्राणि, अनेकान् ग्लानप्रत्ययभैषज्य परिष्कारान्, अनेकान् सर्वोपकरणविशेषराशीन्, कल्पिकाननवद्यान् यथाभिप्रायसत्त्व
15 परिभोगाय। अनेकानि च गोशतसहस्राणि सुवर्णशृङ्गखुराणि कांसदोहानि दरिद्राणां सत्त्वानां संग्रहाय स्थापितान्यपश्यत्। अनेकानि च कन्याकोटीनियुतशतसहस्राणि अभिरूपाणि प्रासादिकानि दर्शनीयानि सर्वाभरणविभूषितानि दिव्याम्बरधराणि दिव्यो रगसारचन्दनानुलिप्तगात्राणि चतुःषष्टिकलाविधिज्ञानि सर्वकामचर्योपचारकुशलानि स्थापि तान्यपश्यत्। यथा चास्य पुरतस्तथा सर्वरथ्याचत्वरशृङ्गाटकद्वारवीथिमुखेषु एकैकस्या रथ्याया
20 मुभयोर्वर्तयोर्विंशतिव्योमककोटी सर्वोपकरणपरिपूर्णं स्थापिता यदुत सत्त्वसंग्रहाय सत्त्वपरि ग्रहाय सत्त्वप्रीतिसंजननाय सत्त्वप्रामोद्योत्पादनाय सत्त्वमनःसंप्रसादनाय सत्त्वचित्तप्रह्लाद नाय सत्त्वक्लेशव्युपशमाय सर्वधर्मस्वभावार्थसंनियोजनाय सत्त्वसर्वज्ञतासमानार्थीकरणाय सत्त्वपरद्रोहचित्तविनिवर्तनाय सर्वकायवाग्दुश्चरितविनिवर्तनाय सत्त्वदृष्टिशल्यसमुद्धरणाय सत्त्वकर्मपथपरिशुद्धये॥

2 अथ खलु सुधनः श्रेष्ठिदारको महाप्रभस्य राज्ञः सर्वशरीरेण प्रणिपत्य महाप्रभं राजानमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो बोधिसत्त्वानामव वादानुशासनीं ददातीति। तद्वदतु मे आर्य—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षि
30 तव्यम्, कथं प्रतिपत्तव्यम्। आह—अहं कुलपुत्र महामैत्रीध्वजां बोधिसत्त्वचर्यां परिशोध यामि, परिपूरयामि। एषा च मे कुलपुत्र महामैत्रीध्वजा बोधिसत्त्वचर्या अनेकेषां बुद्ध शतानामनेकेषां बुद्धसहस्राणामनेकेषां बुद्धकोटीनियुतशतसहस्राणां यावदनभिलाप्यानभि

लप्यानां बुद्धानां भगवतामन्तिकात् परिपृष्टा परिप्रश्नीकृता विशोधिता व्यूहिता विलोकिता विचारिता अनुगवेषिता पर्येषिता विचित्रिता विपुलीकृता। सोऽहं कुलपुत्र अस्यां महामैत्रीध्वजायां बोधिसत्त्वचर्यायां स्थित्वा धर्मेण राज्यमनुशासामि। धर्मेण लोकमनुगृह्णामि। धर्मेण लोकमनुविचरामि। धर्मेण सत्त्वान् प्रणयामि। धर्मेण सत्त्वेषु प्रतिपद्ये। धर्ममण्डले सत्त्वानावर्तयामि। धर्मनयं सत्त्वानामुपसंहरामि। धर्मेण सत्त्वान् परिभावयामि। धर्मप्रतिपत्तौ सत्त्वान् नियोजयामि। धर्मस्वभावनिष्पत्तौ सत्त्वान् प्रतिष्ठापयामि। मैत्रचित्ततायां महामैत्र्याधिपत्ये मैत्रीबले हितचित्ततायां सुखचित्ततायां दयाचित्ततायामनुग्रहचित्ततायां सत्त्वानुग्रहचित्ततायां सत्त्वपरिग्रहानुत्सर्गचित्ततायां सर्वदुःखविनिवर्तनप्रणिध्यनुपच्छेदचित्ततायामत्यन्तसुखप्रतिष्ठापनसमुदाचारान् प्रतिप्रस्रब्धये सत्त्वान् प्रतिष्ठापयामि। आश्रयं चैषां प्रह्लादयामि। प्रस्रब्धिसुखसंजननतया चित्तचलतां चैषां व्यावर्तयामि। संसाररतिप्रसक्तां चित्तसंततिं चैषां परिणामयामि। धर्मारामरत्या विशोधयामि। सर्वानुशयधर्मेभ्यः परिशोधयामि। सर्वाकुशलधर्मेभ्यो विनिवर्तयामि। संसारस्रोतस आवर्तयामि। धर्मधातुनयसमुद्रेषु चित्तनिधां चैषां निर्दहामि सर्वभवगत्युपपत्तिव्यवच्छेदाय। चित्तार्चिपाशयं चैषां संजनयामि सर्वज्ञताफलप्रतिलाभाय। चित्तसागरं चैषां प्रसादयामि असंहार्यश्रद्धाबलसंजननाय। एवमहं कुलपुत्र मैत्रीध्वजायां बोधिसत्त्वचर्यायां स्थित्वा धर्मेण लोकमनुशासामि। न खलु कुलपुत्र मद्विजितवासिनः सत्त्वा ममान्तिकाद्भयं त्रासं छम्भितत्वं रोमहर्षणं वा निर्गच्छन्ति। ये च कुलपुत्र दरिद्राः सत्त्वा विविधोपकरणविकला मामुपसंक्रामन्ति अन्नार्थिनो वा पानार्थिनो वा वस्त्रार्थिनो वा यावत् सर्वार्थिनो वा, तानहं पूर्वपरिचितानेव विवृतान् राजकोशान् गृह्णीध्वमित्यभ्यनुजानामि यस्यार्थे यूयं पापकं कर्म आरभेथ प्राणिवधं वा अदत्तादानं वा काममिथ्याचारं वा मृषावादं वा पैशुन्यं वा पारुष्यं वा संभिन्नप्रलापं वा अभिध्यां वा व्यापादं वा मिथ्यादृष्टिं वा तदन्यानि वा विविधानि दृष्टिकृतान्यभिनिविशेथ। अतः तस्मात् सुप्रभान्महानगरान्नगरद्वारेभ्यो वीथिरथ्यामुखचत्वरशृङ्गाटकेभ्यो यो येनार्थी स तं गृह्णातु, पूर्वदत्तमेव यत्तन्ममेति। ये खलु पुनः कुलपुत्र सुप्रभमहानगराभ्यन्तरनिवासिनः सत्त्वाः, सर्वे ते बोधिसत्त्वा महायानसंप्रस्थिताः। तेषां यथाशयपरिशुद्ध्या इदं सुप्रभं महानगरमाभासमागच्छति, यदुत केषांचित् परीत्तं केषांचिद्विपुलं केषांचिन्मृत्तिकातलं केषांचिद्वैडूर्यमणिरत्नसंस्तृततलं केषांचिन्मृत्तिकाप्राकारं केषांचिदपराजितवज्रध्वजवररत्नमहाप्राकारपरिक्षिप्तं केषांचिदाकीर्णशर्करकठल्लमुत्कूलनिकूलश्वभ्रप्रपातबहुलम्, केषांचिदनेकमहामणिरत्नसंस्तृततलं कृतोपचारं समपाणितलजातम्, केषांचिदसंख्येयरत्नभवनविमानप्रासादकूटागारहर्म्यतलनिर्यूहगवाक्षजालार्धचन्द्रसिंहपञ्जरमणिविचित्रदर्शनीयमाभासमागच्छति। बहिर्नगरनिवासिनामपि शुद्धाशयानां कृतकुशलमूलानां पर्युपासितबहुबुद्धोत्पादानां सर्वज्ञताभिमुखानां सर्वज्ञताप्रतिशरणानां रत्नमयमाभासमागच्छति। ये मया पूर्वं बोधिसत्त्वचर्यायां चरता चतुर्भिः संग्रहवस्तुभिः संगृहीताः, मदन्येषां पुण्यपा-

भासमागच्छति । यदा च कुलपुत्र भद्रिजितवासिन सत्त्वा देशप्रदेशेषु ग्रामनगरनिगमराष्ट्रराजधानीषु पञ्चकषाये लोके कालस्वभावसंक्षोभितान् दशाकुशलान् कर्मपथान् प्रवर्तयितुमिच्छन्ति, तदाहं तेषामनुग्रहाय महामैत्रीपूर्वंगमं लोकेन्द्रियावर्तं नाम बोधिसत्त्वसमाधिं समापद्ये । समनन्तरसमापन्नस्य च मे कुलपुत्र इमं समाधिम्, अथ तेषां सत्त्वानां तानि भयानि ते उपसर्गा तानि वैराणि ते विग्रहविवादा ते चित्तसंक्षोभा तानि विहिंसाचित्तानि प्रशाम्यन्ति व्युपशाम्यन्ति निवर्तन्ते निरुध्यन्ते तद्यथापि तदस्यैव महामैत्रीपूर्वंगमस्य लोकेन्द्रियावर्तस्य बोधिसत्त्वसमाधिधर्मताप्रतिलम्भेन । अपि तु कुलपुत्र, आगमय मुहूर्तं यावत् प्रत्यक्षीभविष्यसि ॥

अथ खलु महाप्रभो राजा तस्यां वेलायां महामैत्रीपूर्वंगमं लोकेन्द्रियावर्तं बोधिसत्त्वसमाधिं समापन्नः । समनन्तरसमापन्नस्य च राज्ञो महाप्रभस्य इमं महामैत्रीपूर्वंगमं लोकेन्द्रियावर्तं बोधिसत्त्वसमाधिम्, अथ तावदेव सुप्रभं महानगरं सदेशप्रदेशं सग्रामनगरनिगमजनपदराष्ट्रराजधानीपरिवारं षड्विकारं प्रकम्पितम् । तस्य प्रचलतस्तेऽपि रत्नप्राकारा रत्नप्रासादा रत्नहर्म्याणि रत्नगृहाणि रत्नभवनानि रत्नविमानानि रत्नकूटागाराणि रत्ननिर्यूहा रत्नहर्म्याणि रत्नगवाक्षा रत्नवेदिका रत्नतोरणानि रत्नार्धचन्द्रा रत्नसिंहपञ्जराणि रत्नखोटकानि रत्नबिम्बानि रत्नवितानानि रत्नसूत्रकिङ्किणीजालानि रत्नघण्टा रत्नध्वजा रत्नपताकाः रत्नतालाः संप्रचलिता संप्रगर्जिता संघट्टिता । ते च संघट्टमाना वल्गुं मनोज्ञं श्रवणीयं शब्दमनुरवन्तो येन राजा महाप्रभ, तेनावनमन्ति स्म, प्रणमन्ति स्म । ये च ते सुप्रभस्य महानगरस्याभ्यन्तरवासिन, सर्वे ते प्रीतिप्रामोद्यपरिस्फुटचेतसो येन महाप्रभो राजा तेनाभिमुखा सर्वशरीरेण प्रणमन्ति स्म । ये चास्य विजितवासिन सत्त्वा सर्वग्रामनगरनिगमजनपदराष्ट्रराजधानीषु, तेऽपि सर्वे प्रह्लादितकायचित्ता प्रीतिप्रामोद्यजाता येन राजा महाप्रभस्तेनाभिमुखा प्रणेमु । ये च तिर्यग्योनिगता सत्त्वा, तेऽपि सर्वे अन्योन्यमैत्रचित्ता हितचित्ता येन राजा महाप्रभस्तेनाभिप्रणता । यानि च पर्वतशिखराणि तदन्ये चाप्युन्नता पृथिवीप्रदेशा, तेऽपि सर्वे येन राजा महाप्रभस्तेनाभिनता । ये च पुष्पवृक्षा फलवृक्षा पत्रवृक्षा बीजग्रामभूतग्रामशस्यतृणगुल्मौषधिवनस्पतयो वा, तेऽपि सर्वे येन महाप्रभो राजा तेनाभिनता । यानि चास्य विजिते सर्वोत्ससरोह्रदतडागप्रस्रवणनदीपुष्करिण्युदपानानि, तान्यपि सर्वाणि येन राजा महाप्रभस्तेनाभिमुखं वेगं प्रामुञ्चन् ॥

दश च नागराजसहस्राणि महाकालागरुधूपपटलगन्धोदकमेघैर्विचित्रविद्युल्लताज्वालावभासितैरभिगर्जद्भिः सूक्ष्माभिर्गन्धोदकधाराभिश्चतुर्दिशमभिप्रावर्षन् । दश च देवपुत्रसहस्राणि शक्रसुयामसंतुषितसुनिर्मितवशवर्तिदेवराजप्रमुखानि अन्तरिक्षे गतानि, दिव्यतूर्यमेघकोटीनियुतशतसहस्रसंप्रवादितोदारमनोज्ञनिर्घोषालंकारम्, असंख्येयाप्सरोगणदिव्यसंगीतिमेघनिर्नादमनोज्ञमधुरनिर्घोषालंकारम्, असंख्येयदिव्यविचित्ररत्नपुष्पमेघप्रवर्षणालंकारम्,

---

१ B om. रत्नहर्म्याणि. २ B बहुमनाज्ञ

असंख्येयनानावर्णदिव्यगन्धप्रवर्षणालंकारम्, असंख्येयदिव्यरत्नविचित्रमाल्यमेघप्रवर्षणालं-
कारम्, असंख्येयनानावर्णदिव्यचूर्णमेघप्रवर्षणालंकारम्, असंख्येयदिव्यरत्नविचित्राभरणमेघ-
प्रवर्षणालंकारम्, असंख्येयदिव्यरत्नरत्नविचित्रविमलसूक्ष्मनानावर्णमेघप्रवर्षणालंकारम्,
असंख्येयदिव्यरत्ननानाविचित्रच्छत्रमेघप्रवर्षणालंकारम्, असंख्येयदिव्यसिंहकान्तरत्नध्वजमेघ-
प्रवर्षणालंकारम्, असंख्येयदिव्यरत्नप्रभाज्वालोज्ज्वलितरत्नपताकामेघप्रवर्षणालंकारं गगनतल- 5
मध्यतिष्ठन् महाप्रभस्य राज्ञः पूजाकर्मणे। ऐरावणश्च महानागराजा सर्वं गगनतलमसंख्येय-
दिव्यनानारत्नपद्ममेघसंछन्नमध्यतिष्ठदसंख्येयदिव्यमणिरत्नहाराभिप्रलम्बितम्, असंख्येयदिव्य-
रत्नपट्टदामकलापाभिप्रलम्बितम्, असंख्येयदिव्यरत्नविचित्रमालागुणाभिप्रलम्बितालंकारम्,
असंख्येयदिव्यरत्नविचित्राभरणमालाभिप्रलम्बितालंकारम्, असंख्येयदिव्यविचित्ररत्नकुसुम-
दामाभिप्रलम्बितालंकारम्, असंख्येयनानावर्णदिव्यगन्धराजसर्वदिक्स्फरणगन्धमेघसंछादिता- 10
लंकारम्, असंख्येयदिव्यरत्नवस्त्रनानावर्णमेघप्रवर्षणालंकारम्, असंख्येयदिव्यधूपबिम्बपटल-
मेघप्रवर्षणालंकारम्, असंख्येयदिव्यनानावर्णचूर्णमेघसूक्ष्मप्रवर्षणालंकारम्, असंख्येयाप्सरो-
गणदिव्यतूर्यसंगीतिमधुरमनोज्ञनिर्घोषसंप्रयुक्तस्तुतिमेघसंछादिताभिप्रवर्षणालंकारं सर्वगगन-
तलमध्यतिष्ठत् अचिन्त्यनागेन्द्रवृषभिताविकुर्वितप्रभावेन। असंख्येयानि च राक्षसेन्द्रशत-
सहस्राणि जलधरनिवासीनि चातुर्द्वीपिकलोकधात्वधिष्ठानधरणितलनिवासीनि च मांसरुधिर- 15
भक्षाणि जलचरमृगपशुपक्षिगवाश्वगजगर्दभनरनारीगणौजोहारीणि प्रदुष्टमनःसंकल्पानि नित्यं
जगद्विहेठाविहिंसाप्रतिपन्नानि सर्वाणि परममैत्रहितचित्तानि सुप्रसन्नमुखवर्णानि सर्वजगदवि-
हिंसाविहेठापरमाणि परलोकसापेक्षाणि कृताञ्जलिपुटानि परमप्रीतिचित्तानि येन राजा महा-
प्रभस्तेनाभिप्रणतान्यभूवन्, अतुल्यं च कायिकचैतसिकमुदारं सुखं प्रत्यनुभवन्ति स्म। अने-
कानि च यक्षकुम्भाण्डपिशाचभूताधिपतिशतसहस्राणि परममैत्रहितचित्तानि सुप्रसन्नमुख- 20
वर्णानि सर्वजगदविहिंसाविहेठापरमाणि परलोकसापेक्षाणि कृताञ्जलिपुटानि परमप्रीतिचित्तानि
येन राजा महाप्रभः, तेनाभिप्रणतान्यभूवन्, अतुल्यं च कायिकचैतसिकमुदारं सुखं प्रत्यनु-
भवन्ति स्म। एवं सर्वस्यां चातुर्द्वीपिकायां लोकधातौ सर्वसत्त्वानां सर्वभयोपद्रवोपसर्ग-
वैरविग्रहविवादाधिचित्तसंक्षोभाविहिंसाचित्तानि प्रशाम्यन्ति व्युपशाम्यन्ति विनिवर्तन्ते निरु-
ध्यन्ते प्रत्युदावर्तन्ते। यथा चातुर्द्वीपिकायां लोकधातौ, एवं सर्वस्यां त्रिसाहस्रमहासाहस्रायां 25
लोकधातौ यावद्दशसु दिक्षु दशलोकधातुकोटीनियुतशतसहस्रेषु सर्वसत्त्वानां सर्वभयोपद्रवो-
पसर्गवैरविग्रहविवादाधिचित्तसंक्षोभाः पापविहिंसाचित्तानि प्रशान्तान्यभूवन्। व्युपशान्तानि
विनिवृत्तानि निरुद्धानि प्रत्युदावर्तान्यभूवन्, यदुत महामैत्रीव्यूहस्य सर्वेन्द्रियावर्तस्य
बोधिसत्त्वसमाधेर्धर्मतानिष्यन्देन॥

ममित्रपरिवारतया, सर्वजगत्परित्राणप्रसृतानां हीनोत्कृष्टमध्यमसमप्रयोगनतया, धरणितल-मैत्रचित्तानां सर्वजगत्संधारणप्रतिपन्नतया, पूर्णचन्द्रमण्डलसमानानां सर्वजगत्समप्रसृतपुण्य-ज्ञानरश्मीनामादित्यमण्डलसमानानां सर्वज्ञेयज्ञानालोकावभासनतया, महाप्रदीपकल्पानां सर्व-सत्त्वचित्तगहनान्धकारविधमनतया, उदकप्रसादकमणिरत्नसदृशानां सर्वसत्त्वचित्तमाया-
5 शाठ्यकालुष्यापनयनतया, चिन्ताराजमणिरत्नसदृशानां सर्वजगदभिप्रायप्रणिधिपरिपूरणतया, महामारुतसदृशानां सर्वजगत्समाधिसमापत्तिभवनसर्वज्ञतामहापुरपरिसंस्थापनतया चर्यां शक्यं गुणान् वा वक्तुम्, पुण्यपर्वतो वा तुलयितुम्, गुणज्योतिर्गणगगनं वा अवलोकयितुम्, महाप्रणिधिवायुमण्डलं वा परिच्छेत्तुम्, धर्मसमन्तावलं वा प्रमातुम्, महायानव्यूहवर्णान् परिदीपयितुम्, समन्तभद्रचर्यानयविशेषान् वा वक्तुम्, महाबोधिसत्त्वसमाधिभवनद्वारं वा
10 विवरितुम्, महाकरुणामेघान् वा संवर्णयितुम्॥

गच्छ कुलपुत्र, इयमिहैव दक्षिणापथे स्थिरा नाम राजधानी। तत्र अचला नामो-पासिका प्रतिवसति। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षि-तव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारको महाप्रभस्य राज्ञः पादौ शिरसाभिवन्द्य महाप्रभं
15 राजानमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य महाप्रभस्य राज्ञोऽन्तिकात् प्रक्रान्तः॥ १९॥

## २२ अचला ।

अथ खलु सुधनः श्रेष्ठिदारकः सुप्रभान्महानगरान्निष्क्रम्य मुहूर्तं मार्गमनुसृत्य महाप्रभस्य राज्ञोऽनुशासनीमनुविचिन्तयन्, तं महामैत्रीध्वजं बोधिसत्त्वचर्यानयमनुस्मरन्, तं लोकेन्द्रियावर्तमहासमाधिमुखालोकं परिभावयन्, तामचिन्त्यां बोधिसत्त्वकायविशुद्ध्यलंकारसिंहासनव्यूहविमात्रतामभिनिर्हरमाणः, तामचिन्त्यां बोधिसत्त्वप्रणिधिपुण्याधिपतेयबलतामनुबृंहयन्, तमचिन्त्यं बोधिसत्त्वानां सत्त्वपरिपाकज्ञाननयं दृढीकुर्वाणः, तामचिन्त्यामसाधारणां बोधिसत्त्वपरिभोगमाहात्म्यतामनुविचिन्तयन्, तामचिन्त्यां बोधिसत्त्वाधिमात्रतां निमित्तीकुर्वन्, तामचिन्त्यां बोधिसत्त्वानां सत्त्वपरिपाकविशुद्धिमनुस्मरन्, तामचिन्त्यां बोधिसत्त्वपरिवारसंपत्परिशुद्धिमवकल्पयन्, तमचिन्त्यं बोधिसत्त्वानां सत्त्वकार्यनिध्यानालोकनयमधिमुच्यमानः प्रतिलेभे चित्तप्रीतिप्रसादवेगं चित्तप्रहर्षं चित्तोत्प्लवं चित्तनन्दीं चित्तानाविलतां चित्तप्रभास्वरतां चित्तदृढतां चित्तविपुलतां चित्तापर्यादनताम् । स एवं कल्याणमित्रानुस्मृतिमनसिकारप्रयुक्तोऽश्रूणि प्रवर्तयन् अनुविचिन्तयामास—अहो बतेदं कल्याणमित्रदर्शनं सर्वगुणरत्नाकरभूतं सर्वबोधिसत्त्वचर्यापरिशोधनपरिपूरणं सर्वबोधिसत्त्वस्मृतिविशुद्धिकरं सर्वबोधिसत्त्वधारणीमण्डलपरिशोधनं सर्वबोधिसत्त्वसमाध्यालोकसंजननं सर्वबुद्धदर्शनप्रतिलाभसंभावनं सर्वबुद्धधर्ममेघसंप्रवर्षणं सर्वबोधिसत्त्वप्रणिधिनयसूचनमचिन्त्यप्रज्ञाज्ञानालोकसंजननं दृढबोधिसत्त्वेन्द्रियाङ्कुरविवर्धनम् । परित्रायका मम कल्याणमित्राः सर्वदुर्गतिप्रपातगतिभ्यः । प्रणेतारो मम कल्याणमित्रा धर्मसमतानयानुगमेन । दर्शयितारो मम कल्याणमित्रा मार्गसमविषमतायाः । परिदीपकानि मम कल्याणमित्राणि महायानस्य । अववादकानि मम कल्याणमित्राणि समन्तभद्रबोधिसत्त्वचर्यायाम् । देशयितॄणि मम कल्याणमित्राणि सर्वज्ञतानगरमार्गस्य । प्रवेशयितॄणि मम कल्याणमित्राणि सर्वज्ञतापुरम् । अवतारकाणि मम कल्याणमित्राणि धर्मधातुनयसागरे । आलोककराणि मम कल्याणमित्राणि त्र्यध्वज्ञेयसागरनयस्य । दर्शयितॄणि मम कल्याणमित्राणि सर्वार्यमण्डलगणस्य । विवर्धयितारो मम कल्याणमित्राः सर्वशुक्लधर्माणाम् ॥

तस्यैवं रुदतः क्रन्दतः परिदेवमानस्य गगनतलगता देवगणाः सदानुबद्धाश्च संचोदका बुद्धदूता बोधिसत्त्वदेवता एवमाहुः—कल्याणमित्रानुशासनीप्रतिपन्नस्य कुलपुत्र बोधिसत्त्वस्य बुद्धा भगवन्तोऽभिराधितचित्ता भवन्ति । कल्याणमित्रवचनाविलोमस्थायिनो बोधिसत्त्वस्य सर्वज्ञता आसन्नीभवति । कल्याणमित्रवचनाविचिकित्सकस्य बोधिसत्त्वस्य आसन्नीभवन्ति कल्याणमित्राणि । कल्याणमित्रमनसिकाराविरहितस्य बोधिसत्त्वस्य सर्वार्था अभिमुखीभवन्ति । गच्छ कुलपुत्र, येन स्थिरायां राजधान्यामचलोपासिका । ततः श्रोष्यसि बोधिसत्त्वचर्याम् । अथ खलु सुधनः श्रेष्ठिदारकस्ततः समाधिज्ञानालोकाद् व्युत्थाय अनुपूर्वेण येन स्थिरा राजधानी तेनोपसंक्रम्य अचलामुपासिकां परिमार्गति परिगवेषते । तस्य

महाजनकाय उपदर्शयति–एषा कुलपुत्र अचलोपासिका स्वनिवेशने मातापितृसंमानिनी
कुमारभूता स्वज्ञातिगणपरिवृता महतो जनकायस्य धर्मं देशयति ॥

अथ खलु सुधन श्रेष्ठिदारको महाप्रीतिप्रसादप्रामोद्यपरिस्फुटचेता येन अचलाया
उपासिकाया निवेशनं तेनोपजगाम । उपेत्य अचलाया उपासिकाया निवेशनद्वारे स्थितो
ऽपश्यत् सर्वं तं निवेशनं सुवर्णवर्णया आभया स्फुटमवभासितं कायचित्तप्रह्लादिन्या ।
समनन्तरस्पृष्टस्य च सुधनस्य श्रेष्ठिदारकस्य तया प्रभया, सर्वेन्द्रियपितैश्वर्यध्वजसमाधि
प्रमुखानि शान्तिप्रदेशसमाधिप्रमुखानि सर्वजगद्धितसमाधिप्रमुखानि समन्तचक्षुरुपेक्षावती
समाधिप्रमुखानि तथागतकोशसमाधिप्रमुखानि पञ्चमात्राणि समाधिमुखशतान्यवक्रान्तानि
सम्भूतानि सूक्ष्माणि मृदूनि । तद्यथापि नाम तद्दिवसार्धक्रान्तस्य गर्भस्य निह्वानम्, एवं तानि
10 समाधिमुखानि सूक्ष्माणि मृदून्याजातानि । तथारूपं च गन्धमजिघ्रत् यो न देवानां न
देवकन्यानां न नागानां न नागकन्यानां न यक्षाणां न यक्षकन्यानां न गन्धर्वाणां न
गन्धर्वकन्यानां नासुराणां नासुरकन्यानां न गरुडानां न गरुडकन्यानां न किन्नराणां न
किन्नरकन्यानां न महोरगाणां न महोरगकन्यानां न मनुष्याणां न मनुष्यकन्यानाम् ।
न सा स्त्री दशदिशि लोके संविद्यते, या तस्या रूपेण समा, कुतः पुनरुत्तरि । न ■
15 वर्णावभासोऽस्ति दशदिशि लोके स्थापयित्वा तथागतवर्णावभासम्, अभिषेकप्राप्तबोधि
सत्त्ववर्णावभासं च, यस्तस्या वर्णावभासेन समः, कुतः पुनरुत्तरि । नास्ति तदात्मभावा
रोहपरिणाहसंस्थानं दशदिशि लोके स्थापयित्वा तथागतात्मभावारोहपरिणाहसंस्थानम्, अभि
षेकप्राप्तबोधिसत्त्वात्मभावारोहपरिणाहसंस्थानं च, यत्तस्या आत्मभावारोहपरिणाहसंस्थानेन
समम्, कुतः पुनरुत्तरि । नास्ति स प्रभाव्यूहो दशदिशि लोके स्थापयित्वा तथागत
20 प्रभाव्यूहम्, अभिषेकप्राप्तबोधिसत्त्वचर्याप्रभाव्यूहं च, यस्तस्या प्रभाव्यूहेन समः, कुतः
पुनरुत्तरि । नास्ति स गन्धो दशदिशि लोके देवभवनेषु वा नागयक्षगन्धर्वासुरगरुड-
किन्नरमहोरगमनुष्यामनुष्यभवनेषु वा यस्तस्या मुखकोशनिसृतगन्धेन समः, कुतः पुनरुत्तरि ।
नास्ति ■ भवनव्यूहपरिभोगो दशदिशि लोके स्थापयित्वा तथागतपरिभोगम्, अभिषेकप्राप्त
बोधिसत्त्वपरिभोगं च, यस्तस्या भवनव्यूहपरिभोगेन समः, कुतः पुनरुत्तरि । नास्ति सा
25 परिवारसंपत् दशदिशि लोके स्थापयित्वा तथागतपरिवारसंपदम्, अभिषेकप्राप्तबोधिसत्त्वपरि-
वारसंपदं च, या तस्याः परिवारसंपदा समा, कुतः पुनरुत्तरि । न स सत्त्वः सत्त्वनिकाये
संविद्यते दशदिशि लोके यः समर्थोऽचलामुपासिकां रागचित्तेन प्रेक्षितुम् । न ■ सत्त्व
सत्त्वनिकाये संविद्यते दशदिशि लोके यः अचलाया उपासिकायाः सद्दर्शनेन क्लेशो ■
व्युपशमं गच्छेत् । तद्यथापि नाम दश शतसहस्रवशवर्तिनो महाब्रह्माणः कामावचरा
30 क्लेशान् समुदाचरन्ति, एवमेव सद्दर्शनेन अचलाया उपासिकायाः सत्त्वानां क्लेशा न समुदा

---

१ S °वर्तिनी

चरन्ति। न स सत्त्वः सत्त्वनिकाये संविद्यते दशदिशि लोके यो अचलाया उपासिकायाः सहदर्शनेन तृप्तिमापद्येत स्थापयित्वा प्रज्ञातृप्तान्॥

अथ खलु सुधनः श्रेष्ठिदारकः कृताञ्जलिपुटोऽचलाया उपासिकाया अचिन्त्यां कायाधिपतेयताम्, अचिन्त्यं रूपवर्णसंस्थानारोहपरिणाहम्, अचिन्त्यं च सर्वक्षितितलनगरमहापर्वताप्रतिहतं रश्मिजालव्यूहं दृष्ट्वा अचिन्त्यं सत्त्वार्थकरणं च सर्वरोमकूपविसृतं गन्धमाघ्राय अपर्यन्तां च परिवारसंपदमवलोक्य असंहार्यं च भवनविमानव्यूहसंपदमुद्वीक्ष्य अपरिमाणांश्च गुणसमुद्रानवगाह्य अचलामुपासिकामनया गाथया अभ्यष्टौषीत्— 5

शीलं सदा यदमलं परिरक्षितं ते
क्षान्तिर्यतः सुविपुला परिभाविता च।
वीर्यं च वज्रमिव यद्दृढमास्थितं ते 10
तेनोद्गता जगति भास्यचलेन्द्रकल्पा॥ १॥

अथ खलु सुधनः श्रेष्ठिदारकोऽचलामुपासिकामनया गाथया अभिष्टुत्य एवमाह— मया आर्ये अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्या बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्या—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षि- 15 तव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खल्वचलोपासिका स्निग्धया बोधिसत्त्ववाचा मनोज्ञया प्रेमणीयया सुधनं श्रेष्ठिदारकं प्रतिसंमोद्य[1] एवमाह—साधु साधु कुलपुत्र, येन तेऽनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। अहं कुलपुत्र दुर्योधनज्ञानगर्भस्य बोधिसत्त्वविमोक्षस्य लाभिनी, दृढसमादानबोधिसत्त्वचर्यामुखे च अनुशिक्षामि। सर्वधर्मसमताभूमिधारणीमुखस्य च लाभिनी, दृढ- 20 समादानबोधिसत्त्वचर्यामुखे च अनुशिक्षामि। सर्वधर्मसमताभूमिधारणीमुखस्य च लाभिनी, सर्वधर्मतत्त्वोद्योतनं च मे प्रतिभानज्ञानालोकमुखमवक्रान्तम्, धर्मपर्येष्ट्यपरिखेदव्यूहं च मे समाधिमुखं प्रतिलब्धम्। आह—क एतस्य आर्ये दुर्योधनज्ञानगर्भस्य बोधिसत्त्वविमोक्षमुखस्य विषयः, दृढसमादानबोधिसत्त्वचर्यामुखस्य च सर्वधर्मसमताभूमिधारणमुखस्य च सर्वधर्मतत्त्वोद्योतनप्रतिभानालोकमुखस्य च धर्मपर्येष्ट्यपरिखेदव्यूहसमाधिमुखस्य च विषयः? आह— 25 दुरधिमोक्षं कुलपुत्र इदं स्थानम्। आह—वद आर्ये, बुद्धानुभावेन कल्याणमित्रपरिग्रहेण च अधिमोक्ष्ये अवतरिष्यामि विज्ञास्यामि विचारयिष्यामि अनुसरिष्यामि निध्यास्यामि उपनिध्यास्यामि प्रत्यवेक्षिष्ये विभावयिष्यामि, न विरोधयिष्यामि, न विकल्पयिष्यामि, न समारोपयिष्यामि, समीकरिष्यामि॥

अथ खलु अचलोपासिका सुधनं श्रेष्ठिदारकमेवमाह—भूतपूर्वं कुलपुत्र, अतीतेऽ- 30 ध्वनि विमलप्रभे कल्पे प्रलम्बबाहुर्नाम तथागतो लोके उदपादि। अहं च राज्ञो विद्युद्दत्त-

[1] B प्रतिसंमोद्य.

सैवं दुहिता अभूवम्। तया मे रात्र्यां प्रशान्तायां पिहितेषु राजपुरद्वारेषु, सुप्तयोर्माता-
पित्रोः, संप्रसुप्तेषु नरनारीगणेषु, व्युपशान्तेषु तूर्यतालावचरनिर्घोषेषु, शयितेषु सभागचरितेषु
पञ्चसु कन्याशतेषु, शयनतलगतया गगनतलगतां ज्योतिर्गणवतीं रजनीं प्रेक्षन्त्या उपर्यन्तरीक्षे
स भगवान् प्रलम्बबाहुस्तथागतोऽर्हन् सम्यक्संबुद्धः सुमेरुरिव अचलेन्द्रोऽनेकदेवनागयक्षगन्धर्वा-
5 सुरगरुडकिंनरमहोरगपरिवारोऽचिन्त्यासंख्येयबोधिसत्त्वगणपरिवृतः सर्वदिगप्रतिहतरश्मिजाल-
स्फरणकायो दृष्टः। तस्य च तथागतस्य सर्वरोमविवरेभ्यस्तथारूपो गन्धः प्रवाति, येनास्मि
प्रह्लादितकायचित्ता प्रहर्षितमानसा। शयनतलादुत्थाय दशनखकृतकरपुटाञ्जलिर्धरणितलप्रति-
ष्ठिता तं भगवन्तं प्रलम्बबाहुं तथागतमर्हन्तं सम्यक्संबुद्धं नमस्कृत्य मूर्ध्ना नमस्य अवलोकयमाना
पर्यन्तं नाधिगच्छामि। वामदक्षिणतः प्रमाणं नोपैमि। लक्षणानुव्यञ्जनसंपदमनुविचिन्तयमाना
10 तृप्तिं नाप्नोमि। तस्या मम कुलपुत्र एतदभवत्–कीदृशं कर्म कृत्वा इयमीदृशी कायसंपत्
प्रतिलभ्यते? लक्षणानुव्यञ्जनसंपदा जायते? प्रभाव्यूहसंपत्संभवति? परिवारसंपदभिनिर्वर्तते?
मनोमयभवनपरिभोगसंपत्प्रादुर्भवति? पुण्यसंपदुपपद्यते? ज्ञानसंपद्विशुध्यते? अचिन्त्यसमाधि-
निर्वृतिसंपत्समुदागच्छति? धारणीसंपत्परिनिष्पद्यते? प्रतिभानसंपद्वशीभवति?

अथ खलु कुलपुत्र स भगवान् प्रलम्बबाहुस्तथागतो ममाध्याशयं विदित्वा एवमाह–
15 दुर्योधनचित्तं ते दारिके उत्पादयितव्यं सर्वक्लेशनिर्घातनाय। अपराजितचित्तं सर्वाभिनिवेश-
निर्वेधनाय। असंकुचितचित्तं गम्भीरधर्मनयानुगमाय। अक्षोभ्यचित्तं विषमाशयसत्त्वसागरा-
वर्तप्रपातेषु। असंमूढचित्तं सर्वभवगत्युपपत्त्यायतनेषु। अवितृप्तचित्तं सर्वबुद्धदर्शनाभि-
लाषाप्रतिप्रस्रब्धये। असंतुष्टिचित्तं सर्वतथागतधर्ममेघसंप्रत्येषणाय। निष्पत्तिचित्तं सर्व-
बुद्धधर्मनयालोकानुगमाय। संधारणचित्तं सर्वतथागतधर्मचक्राणाम्। असंप्रमोषचित्तमतश्च
20 सर्वतः श्रुते, किमुत तथागतवदनविनिर्गतज्ञाने। विभाजनचित्तं च ते दारिके उत्पादयि-
तव्यं यथाशयसर्वसत्त्वधर्मरत्नसंविभजनाय॥

साहं कुलपुत्र तस्य भगवतः प्रलम्बबाहोस्तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिका-
दिमान्येवंरूपाणि धर्मनयानुशासनीमुखानि श्रुत्वा सर्वज्ञज्ञानमभिकाङ्क्षमाणा दशबल-
ज्ञानमभिप्रार्थयमाना बुद्धसरस्वतीमभिलषन्ती बुद्धप्रभाव्यूहं परिशोधयितुकामा बुद्धशरीर-
25 संपदं परिनिष्पादयितुकामा बुद्धलक्षणानुव्यञ्जनविशुद्धिमभिकाङ्क्षमाणा बुद्धपर्षन्मण्डल-
संपदमभिप्रार्थयमाना बुद्धक्षेत्रविशुद्धिमभिलषन्ती बुद्धेर्यापथसंपदमभिकाङ्क्षमाणा बुद्धायुः-
प्रमाणसंपदमभिनन्दन्ती सर्वक्लेशसंस्थानकप्रत्येकबुद्धामेयचित्तमुत्पादितवती दुर्योधनवज्र-
मिव सर्वपर्वताभ्युद्गतम्। नाभिजानामि कुलपुत्र तत उपादाय एतेन चित्तोत्पादेन जम्बुद्वीप-
परमाणुरजःसमैः कल्पैरपि कामान् परिभोक्तुम्, कः पुनर्वादो द्वयद्वयसमापत्त्या[1]। नाभि-
30 जानामि कुलपुत्र तत उपादाय एकप्रतिघचित्तमुत्पादयितुं सर्वसत्त्वेषु, प्रागेवान्य-
गामिषु तदन्येषु सत्त्वेषु। नाभिजानामि तत उपादाय एकचित्तोत्पादमप्यात्मदृष्टिसंग्रा-

1 B द्वीन्द्रियसमापत्त्या

मुत्पादयितुम्, प्रागेव तदन्येषूपकरणेषु ममकाराभिनिवेशम् । नाभिजानामि चित्तसंमोहं नान्यत्वसंज्ञामव्याकृतचित्ततां वा च्युत्युपपत्तिगर्भसंवासेष्वपि, प्रागेव समन्वाहरमाणा। नाभिजानामि तावद्भिः कल्पैरेकबुद्धदर्शनमपि विस्मर्तुम्। अन्तशः स्वप्नदर्शनविज्ञप्तिमपि, प्रागेव दशबोधिसत्त्वचक्षुःप्रतिभासप्राप्तेषु । नाभिजानामि तत उपादाय सर्वतथागतधर्ममेघान् संप्रतीच्छमाना एकधर्मपदव्यञ्जनमपि मनसा विस्मर्तुम्, अन्तशः संज्ञाकृतमपि, प्रागेव तथा- 5 गतवेदनकोशविनिःसृतम् । नाभिजानामि तत उपादाय तावतो धर्मसागरान् पिबन्ती एकपदमप्यनिध्यातमविलोकितम्, अन्तशो लौकिकेषु धर्मेषु। नाभिजानामि तत उपादाय तावतां धर्मनयसागराणामेकधर्मनयद्वारमपि यत्र मया न समाधिरभिनिर्हृतः, अन्तशो लौकिकशिल्पज्ञाननयेष्वपि । नाभिजानामि तत उपादाय तावतां तथागतानां धर्मचक्रं संधारयमाणा यथासंधारितादेकपदव्यञ्जनमप्यनुत्सृष्टम्, अन्तशोऽन्वयज्ञानानुगमनेनापि 10 अन्यत्र सत्त्वविनयवशात् । नाभिजानामि तत उपादाय तावतां बुद्धदर्शनसमुद्राणामेकप्रणिधानमपि यन्मया न सर्वसत्त्वसागरविशुद्धयेऽभिनिर्हृतम्, अन्तशो निर्माणबुद्धप्रणिधिविचारेष्वपि। नाभिजानामि तत उपादाय तावतां बुद्धसमुद्राणां पूर्वबोधिसत्त्वचर्यासमुद्रादेकबोधिसत्त्वचर्यामपि, या मया न स्वचर्यापरिशुद्धयेऽभिनिर्हृता । नाभिजानामि तत उपादाय एकसत्त्वमपि चक्षुरवभासमागतं यो मयानुत्तरायां सम्यक्संबोधौ न समादापितः। 15 नाभिजानामि तत उपादाय एकचित्तोत्पादमपि श्रावकप्रत्येकबुद्धमनसिकारप्रतिसंयुक्तमभिनिर्हर्तुम्। नाभिजानामि कुलपुत्र तत उपादाय जम्बुद्वीपपरमाणुरजःसमैः कल्पैरेकपदव्यञ्जनेऽपि संशयमुत्पादयितुं द्वयसंज्ञां वा विकल्पसंज्ञां वा नानात्वसंज्ञां वा अग्रहसंज्ञां वा हीनप्रणीतसंज्ञां या अनुनयप्रतिघसंज्ञां वा उत्पादयितुम्॥

साहं कुलपुत्र ततः पश्चादविरहिता अभूवं बुद्धोत्पादैः। अविरहिता बुद्धैर्भगवद्भिः। 20 अविरहिता बोधिसत्त्वैः। अविरहिता भूतकल्याणमित्रैः। अविरहिता बुद्धप्रणिधानश्रवेण। अविरहिता बोधिसत्त्वचर्याश्रवेण। अविरहिता बोधिसत्त्वपारमितानयश्रवेण। अविरहिता बोधिसत्त्वभूमिज्ञानालोकनयश्रवेण । अविरहिता बोधिसत्त्वधारणीसमाध्यक्षयकोपनिधानश्रवणप्रतिलाभेन। अविरहिता अनन्तमध्यलोकधातुजालप्रवेशावतारनयश्रवेण। अविरहिता अनन्तमध्यसत्त्वधातुसंभवहेतुश्रवणप्रतिलाभेन । अविरहिता सर्वजगत्क्लेशजालमण्डलपर्या- 25 दानज्ञानालोकेन। अविरहिता सर्वसत्त्वकुशलमूलसंभवहेतुज्ञानप्रतिलाभेन। अविरहिता सर्वसत्त्वयथाशयकायसंदर्शनेन। अविरहिता सर्वसत्त्वाज्ञापनस्वरमण्डलविशुद्ध्या । एतं च मे कुलपुत्र दुर्योधनज्ञानगर्भं बोधिसत्त्वविमोक्षमुखम्, एतच्च सर्वधर्मपर्येष्टयपरिखेदव्यूहं समाधिमुखं समापन्नायाः, एतच्च दृढसमादानबोधिचर्यामुखं प्रविचिन्वन्त्याः। एतच्च सर्वधर्मसमताभूमिधारणीमुखम्। एतच्च सर्वधर्मनयोद्योतनप्रतिभावज्ञानालोकमुखं व्यवचारयन्त्या अचि- 30 न्त्यानि प्रातिहार्याणि भवन्ति। इच्छसि त्वं कुलपुत्र, प्रत्यक्षो भवितुम्? आह—इच्छाम्यार्ये॥

१ S °वचन° for °वदन°.

अथ खलु अचलोपासिका यथानिषण्णैव दुर्योधनज्ञानगर्भबोधिसत्त्वविमोक्षमुखपूर्वं-
गमानि सर्वधर्मपर्येष्ट्यपरिखेदव्यूहसमाधिमुखपूर्वंगमानि अमोघमण्डलव्यूहसमाधिमुखपूर्वंगमानि
दशबलज्ञानमण्डलाभिमुखसमाधिमुखपूर्वंगमानि बुद्धरत्नाक्षयकोशसमाधिविमोक्षमुखपूर्वंगमानि
च दश समाधिमुखशतसहस्राणि व्यवलोकयति अनुविचारयति अनुसरति निध्यपयति ।
5 समनन्तरसमापन्नायां च अचलायामुपासिकायाम्, अपश्यत् सुधन श्रेष्ठिदारको दशसु दिक्षु
दशबुद्धक्षेत्रानभिलाप्यपरमाणुरज समान् लोकधातून् षड्विकार प्रकम्पमानान्, परिशुद्ध
वैडूर्यमयान् संस्थितान् । एकैकस्मिंश्च लोकधातौ कोटीशते चातुर्महाद्वीपकाना लोकधातूना
कोटीशत तथागतानामपश्यत् । कांश्चित्तुषितवरभवनगतान्, कांश्चिद् यावत्परिनिर्वा-
माणानपश्यत् यदुत अनावरणत्वात्परिशुद्धवैडूर्यमयलोकधातूनाम् । एकैक च तथागत
10 सर्वधर्मधातुस्फरणरश्मिजालप्रभामण्डलम्, एकैक च तथागत सुविभक्तपर्षन्मण्डलसमुद्रम
पश्यत् । एकैकस्य च तथागतस्य सर्वधर्मचक्रोद्योतन सर्वसत्त्वश्रोत्रविज्ञापन स्वरमण्डलमश्रौषीत् ॥

अथ खल्वचलोपासिका तत समाधेर्व्युत्थाय सुधन श्रेष्ठिदारकमेवमाह—दृष्ट ते
कुलपुत्र, श्रुत विज्ञातम्[?] आह—दृष्टमार्ये, श्रुत विज्ञातम् । आह—एवमह कुलपुत्र,
दृढसमादानाया बोधिसत्त्वचर्यायामनुशिक्षमाणा सर्वधर्मपर्येष्ट्यपरिखेदव्यूहसमाधिसमापन्ना
15 दुर्योधनज्ञानगर्भबोधिसत्त्वविमोक्षमुखप्रतिष्ठिता सर्वधर्मसमताभूमिधारण्यनुगमेन सर्वधर्म-
तलोद्योतनप्रतिभानज्ञानालोककौशल्येन सर्वसत्त्वान् सुभाषितेन सतोषयामि । किं मया
शक्यमचिन्त्याप्रमेयगुणसमन्वागताना बोधिसत्त्वाना चर्यां ज्ञातु गुणान् वा वक्तुम्[?] ये ते
द्विजर्षभा इव गगनतलेऽनिकेतचारिण । ये ते महागरुडेन्द्रा इव सत्त्वसागरमवगाहन्ते
परिपक्वबोधिसत्त्वोद्धरणतायै । ये ते वणिज इव सर्वज्ञतारत्नद्वीपेऽनुविचरन्ति दशबलज्ञानरत्ना-
20 भिकाङ्क्षिण । ये ते बलवत्कैवर्ता इव ससारसागरेऽनुविचरन्ति रुचिरधर्मचक्रमण्डलजालहस्ता
तृष्णोद्भवसत्त्वपरिपाचनाभ्युद्धरणतायै । ये तेऽसुरेन्द्रा इव त्रिभुवनपुर स्फरित्वा विचरन्ति
क्लेशासुरसक्षोभोद्वृत्तसशमनतायै । ये ते दिनकरमण्डलमिव धर्मधातुगगनतले समुदागच्छन्ति
सत्त्वतृष्णासलिलक्लेशपङ्कोच्छोषणतायै । ये ते पूर्णचन्द्रमण्डलमिव ज्ञाननभस्युदागच्छन्ति
विनेयमन कुमुदविबोधनतायै । ये ते धरणितलमिवानुनयप्रतिघोत्कामावनामविषमे समा लोके
25 सतिष्ठन्ते सर्वजगत्कुशलेन्द्रियाङ्कुरप्ररोहणविवर्धनतायै । ये ते मारुत इवासङ्गसर्वदिग्विचारिण
सर्वसत्त्वक्लेशदृष्टिद्रुमलतावनारामोन्मूलनतायै । ये ते चक्रवर्तिन इव लोके विचरन्ति चतु-
सग्रहवस्तुपरिष्कारोपकरणसर्वजगत्सग्रहणतायै । गच्छ कुलपुत्र, इहैव दक्षिणापथेऽमिततोसले
जनपदे तोसल नाम नगरम् । तत्र सर्वगामी नाम परिव्राजक प्रतिवसति । तमुपसक्रम्य
परिपृच्छ—कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया शिक्षितव्यम्, कथ प्रतिपत्तव्यम् ॥
30 अथ खलु सुधन श्रेष्ठिदारकोऽचलाया उपासिकाया पादौ शिरसाभिवन्द्य
अचलामुपासिकामनेकशतसहस्रकृत्व प्रदक्षिणीकृत्य पुन पुनरवलोक्य अचलाया उपा-
सिकाया अन्तिकात्प्रक्रान्त ॥ २० ॥

## २३ सर्वगामी।

अथ खलु सुधनः श्रेष्ठिदारकोऽचलामुपासिकामामुखीकृत्य अचलाया उपासिकाया अनुशासनीमनुस्मरन्, यदचलयोपासिकया दर्शितं श्रावितं देशितं संवर्णितं योजितं विभक्तं प्रभावितं विसृतं तत्संभावयन्, अनुसरन् अनुविचिन्तयन् अवतरन् भावयन् निगमयन् निध्यायन् अवभासयन् समीकुर्वन् अनुपूर्वेण देशेन देशं जनपदेन जनपदमनुचंक्रमन् 5 अनुविचरन् येनामिततोसलो जनपदस्तेनोपजगाम। उपेत्य तोसलं नगरं परिमार्गन् परिगवेषमाणोऽनुपूर्वेण तोसलं नगरमनुप्राप्तः। सूर्यास्तंगमनकाले स तोसलं नगरमनुप्रविश्य मध्ये नगरशृङ्गाटकस्य स्थित्वा वीथीमुखेन वीथीमुखं चत्वरेण चत्वरं रथ्यया रथ्यां सर्वगामिनं परिव्राजकं परिगवेषमाणो व्यवचारयन् अद्राक्षीद्रात्र्यां प्रशान्तायां तोसलस्य नगरस्योत्तरे दिग्भागे सुलभं नाम पर्वतम्[1]। तस्य शिखरे विविधतृणगुल्मौषधिवनारामरचिते महावभासप्राप्तं 10 भास्करमिवोदितम्। तस्य तमवभासं दृष्ट्वा उदारप्रीतिवेगसंजातस्य एतदभवत्—असंशयमहमत्र पर्वतशिखरे कल्याणमित्रं द्रक्ष्यामीति। स तस्मान्नगरादभिनिष्क्रम्य येन सुलभः पर्वतः, तेनोपेत्य सुलभं पर्वतमभिरुह्य येन तन्महावभासं पर्वतशिखरं तेनोपसंक्रामन्नद्राक्षीदूरत एव सर्वगामिनं परिव्राजकं महाब्रह्मातिरेकवर्णं श्रिया देदीप्यमानं दशभिर्ब्रह्मसहस्रैः परिवृतं चंक्रमे चंक्रम्यमाणम्। स तस्य पादौ शिरसाभिवन्द्य तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य 15 पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। आह—साधु साधु कुलपुत्र, यस्त्वमनुत्तरां सम्यक्संबोधिमभिसंप्रस्थितः। अहं कुलपुत्र सर्वगामी सर्वत्रानुगतायां बोधि- 20 सत्त्वचर्यायां स्थितः समन्तमुखव्यवचारणालोकेन समाधिमुखेन अभावप्रतिष्ठितया आयानभिसंस्कारिकया समन्तधर्मधातुतलभेदेन च प्रज्ञापारमिताज्ञानालोकमुखेन समन्वागतः। सोऽहं कुलपुत्र सर्वसत्त्वभाजनलोकव्यवचारेषु सर्वसत्त्वगतिव्यवचारेषु सर्वसत्त्वच्युतिमुखेषु सर्वसत्त्वोपपत्तिमुखेषु सर्वभवगतिसंभेदेषु विविधोपपत्त्यायतनविचित्रे लोकसंनिवेशे विचित्रवर्णसंस्थानारोहपरिणाहानां सत्त्वानां नानाविधोपपत्तिसंयोजनानां नानाप्रयोगाणां 25 विचित्राधिमुक्तानां यदुत देवगतिपर्यापन्नानां नागगतिपर्यापन्नानां यक्षगतिपर्यापन्नानां गन्धर्वगतिपर्यापन्नानामसुरगतिपर्यापन्नानां गरुडगतिपर्यापन्नानां किंनरगतिपर्यापन्नानां महोरगगतिपर्यापन्नानां नरकगतिपर्यापन्नानां तिर्यग्योनिगतिपर्यापन्नानां यमलोकगतिपर्यापन्नानां मनुष्यगतिपर्यापन्नानाममनुष्यगतिपर्यापन्नानां विविधदृष्टिगतिनिश्रितानां श्रावकयानाधिमुक्तानां प्रत्येकबुद्धयानाधिमुक्तानां महायानाधिमुक्तानां सत्त्वानामर्थं करोमि विविधैरुपायैर्विविधैर्ज्ञान- 30 नयप्रयोगैः। यदुत केषांचित्सत्त्वानां विविधलौकिकशिल्पशिक्षणतया अर्थं करोमि सर्व-

[1] B सुरभ.

शिल्पज्ञानभेदवतीधारण्यालोकेन। केषांचित् सत्त्वानां चतुःसंग्रहवस्तुप्रयोगेण अर्थं करोमि यदुत सर्वज्ञज्ञानोपनयनाय। केषांचित् सत्त्वानां पारमितासंवर्णनतया अर्थं करोमि यदुत सर्वज्ञतापरिणामज्ञाननयालोकसंजननतया। केषांचित् सत्त्वानां बोधिचित्तसंवर्णनतया अर्थं करोमि यदुत बोधिबीजाविप्रणाशोपस्तम्भसंजननतया। केषांचित् सत्त्वानां सर्वाकारबोधिसत्त्वचर्यासंवर्णनतया अर्थं करोमि यदुत सर्वबुद्धक्षेत्रपरिशोधनसर्वसत्त्वपरिपाकप्रणिधिसंजननतायै। केषांचित् सत्त्वानामुद्वेगसंजननतया अर्थं करोमि यदुत दुश्चरितविपाकनिष्यन्दनरकगतिदुःखवेदनानुभवसंदर्शनतया। केषांचित् सत्त्वानां महाप्रीतिसंजननतया अर्थं करोमि यदुत सर्वतथागतावरोपितदक्षिणानियतसर्वज्ञताफलपर्यवसानेऽभ्युदीरणतया। केषांचित् सत्त्वानां सर्वतथागतगुणवर्णसंप्रकाशनतया अर्थं करोमि यदुत बुद्धगुणशरीराभिलापसर्वज्ञताप्रणिधिसंजननतायै। केषांचित् सत्त्वानां बुद्धमाहात्म्यसूचनया अर्थं करोमि यदुत अविवर्त्यानाभोगाप्रतिप्रस्रब्धबुद्धकार्यानुष्ठानसक्तबुद्धकायप्रतिलम्भाभिलापसंजननतायै। केषांचित् सत्त्वानां बुद्धाधिपतेयतासंदर्शनतया अर्थं करोमि यदुत अनभिभूतबुद्धात्मभावसंपत्प्रतिलाभाभिलापसंजननतायै॥

अपि तु खलु पुनरहं कुलपुत्र, इह नगरे तोसले सर्वरथ्यासु सर्वचत्वरेषु सर्वशृङ्गाटकेषु सर्ववीथीमुखेषु सर्वगृहेषु सर्वश्रेणिषु सर्वकुलेषु सर्वकुलपरिवर्तेषु यथासंनिपतितानां स्त्रीपुरुषदारकदारिकाणां यथाशयानां यथाप्रयोगाणां यथाधिपतेयानां यथाव्यवचाराणां तत्सभागानि आत्मभावारोहपरिणाहसंस्थानानि अभिनिर्हृत्य धर्मं देशयामि। न च ते सत्त्वा अवबुध्यन्ते केनेदं देशितम्, कुतो वायमिति। अन्यत्र श्रुत्वा तथत्वाय प्रतिपद्यन्ते। येऽपीमे कुलपुत्र जम्बुद्वीपे षण्णवतियो पाषण्डा विविधदृष्टिगताभिनिविष्टाः, तत्राप्यहं सर्वत्रानुगच्छामि विविधदृष्टिगतसक्तानां सत्त्वानां परिपाचनतायै। यथा च कुलपुत्र अहमिह तोसले नगरे सत्त्वानामर्थं करोमि, एवं जम्बुद्वीपे सर्वग्रामनगरनिगमजनपदराष्ट्रराजधानीषु सत्त्वानामर्थं करोमि। यथा जम्बुद्वीपे, तथा सर्वत्र चातुर्द्वीपके लोकधातौ, एवं साहस्रे द्विसाहस्रे त्रिसाहस्रे महासाहस्रे लोकधातौ, एवं दशसु दिक्षु, अपरिमाणेषु लोकधातुषु, सर्वसत्त्वपथेषु सर्वसत्त्वप्रतिष्ठानेषु सर्वसत्त्वनिकेतेषु सर्वसत्त्वनिलयसंज्ञागतेषु सर्वसत्त्वपरिवर्तेषु सर्वसत्त्वसमवसरणेषु सर्वसत्त्वसमुद्रेषु सर्वसत्त्ववंशेषु सर्वसत्त्वदिक्षु सर्वसत्त्वविदिक्षु सर्वसत्त्वनिधिषु यथाशयाधिमुक्तानां सत्त्वानामर्थं करोमि। विविधैरुपायैर्विविधैर्मैत्रीविविधैर्द्वारैर्विविधाभिर्युक्तिभिर्विविधैः संप्रयोगैः विविधैरुपायनयैर्विविधाभिः क्रियाभिर्विविधरूपवर्णसंदर्शनसंप्रसादनतया विविधवाक्पथोदीरणतया सत्त्वानामर्थं करोमि। एतामहं कुलपुत्र सर्वगामिनीं सर्वत्रानुगतां बोधिसत्त्वचर्यां प्रजानामि। किं मया शक्यं बोधिसत्त्वानां सर्वजगत्समशरीराणां स्वकायसर्वकायासंभेदसमाधिप्रतिलब्धानां सर्वभवगत्युपपत्तिविपुलनिर्माणचक्राणां सर्वलोकोपपत्तिसशरीरानुविचारिणां सर्वजगद्भयनरोचनरुचिर-

१ S 'जगत्सम°.

निर्माणचक्रपरमाणां सर्वजगज्जातिकुलजन्मोपपत्तिप्रदर्शकानां सर्वकल्पसंवासाप्रतिहत-प्रणिधिचक्राणामिन्द्रजालतलोपमचर्याव्यूहावभासप्रतिलब्धानां सर्वजगदर्थक्रियानुपलेपसंत्रास-परमाणां प्रपञ्चजगत्तलसमतानुगतानां नैरात्म्यव्रतीज्ञानधातुप्रतिभासितापर्यन्तमहाकरुणा-गर्भाणां सर्वजगत्कुशलाधानाभिमुखानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे पृथुराष्ट्रं नाम जनपदः । तत्रोत्पलभूतिर्नाम गान्धिकश्रेष्ठी प्रतिवसति । तमुपसंक्रम्य परिपृच्छ-कथं बोधिसत्त्वानां बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥ 5

अथ खलु सुधनः श्रेष्ठिदारकः सर्वगामिनः परिव्राजकस्य पादौ शिरसाभिवन्द्य सर्वगामिनं परिव्राजकमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सर्वगामिनः परिव्राजकस्यान्तिकात् प्रक्रान्तः ॥ २१ ॥ 10

अथ खलु सुधनः श्रेष्ठिदारकोऽनपेक्षः काये जीविते च, अनपेक्षः सर्वभवभोग-
परिग्रहोपादानाभिनिवेशनापत्तिषु, अनपेक्षः सर्वसत्त्वदेशरतिषु, अनपेक्षः सर्वरूपशब्दगन्ध-
रसस्प्रष्टव्येषु, अनपेक्षः सर्वपरिवारोपभोगपरिभोगेषु, अनपेक्षः सर्वराज्यैश्वर्याधिपत्यसुखेषु,
5 सापेक्षः सर्वसत्त्वपरिपाचनविनयपरिशुद्धिषु अनुत्तरबुद्धक्षेत्रपरिशुद्ध्यभिनिर्हरणतया, सापेक्षः
सर्वतथागतपूजोपस्थानपरिचर्यावितृप्ततया, सापेक्षः सर्वधर्मेषु स्वभावपरिज्ञानानुगमाय, सापेक्षः
सर्वबोधिसत्त्वगुणेषु सर्वगुणसागरेषु प्रतिपत्त्यच्यवनतायै, सापेक्षः सर्वबोधिसत्त्वमहाप्रणि-
धानेषु सर्वकल्पानवशेषबोधिसत्त्वचर्यासंवासनतायै, सापेक्षः सर्वतथागतपर्षन्मण्डलसमुद्रा-
वतारेषु, सापेक्षः सर्वबोधिसत्त्वसमाधिमुखेषु एकैकसमाधिमुखसर्वबोधिसत्त्वसमाध्यसंख्येया-
10 वतरणविकुर्वणतायै, सापेक्षः सर्वधर्मज्ञानालोकचक्रेषु सर्वतथागतधर्मचक्रसंप्रतीच्छनातृप्त-
तायै सर्वकल्याणमित्राकरान् सर्वकल्याणमित्रसंभवने, तांश्च अन्यांश्च सर्वबोधिसत्त्वगुणान्
संपश्यन् अनुपूर्वेण येन पृथुराष्ट्रं जनपदस्तेनोपसंक्रम्य उत्पलभूतिं गान्धिकश्रेष्ठिनं परिमार्गन्
परिगवेषमाणोऽद्राक्षीत् । दृष्ट्वा च पुनर्येनोत्पलभूतिर्गान्धिकश्रेष्ठी तेनोपजगाम । उपेत्य
उत्पलभूतेर्गान्धिकश्रेष्ठिनः पादौ शिरसाभिवन्द्य उत्पलभूतिं गान्धिकश्रेष्ठिनमनेकशतसहस्रकृत्वः
15 प्रदक्षिणीकृत्य उत्पलभूतेर्गान्धिकश्रेष्ठिनः पुरतः प्राञ्जलिः स्थित्वा एवमाह—अहमार्य अनु-
त्तरायां सम्यक्संबोधौ संप्रस्थितः सर्वबुद्धसमज्ञानमाकाङ्क्षमाणः सर्वबुद्धपूर्वप्रणिधानमण्डलं
परिपूरयितुकामः सर्वबुद्धरूपकायं द्रष्टुकामः सर्वबुद्धधर्मकायं परिनिष्पादयितुकामः सर्वबुद्ध-
धर्मज्ञानकायं परिज्ञातुकामः सर्वबोधिसत्त्वचर्यामण्डलं परिशोधयितुकामः सर्वबोधिसत्त्व-
समाधिमण्डलमवभासयितुकामः सर्वबोधिसत्त्वधारणीमण्डलं संस्थापयितुकामः सर्वावरण-
20 मण्डलं विकरितुकामः सर्वक्षेत्रमण्डलमनुविचरितुकामः । न च जानामि कथं बोधिसत्त्वेन
बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । कथं प्रतिपद्यमानो बोधिसत्त्वो निर्याति
सर्वज्ञतायाम् ? आह—साधु साधु कुलपुत्र, येन तेऽनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादि-
तम् । अहं कुलपुत्र सर्वगन्धान् प्रजानामि । सर्वगन्धयोगान् सर्वधूपान् सर्वधूपयोगान्
प्रजानामि । सर्वानुलेपनानि सर्वानुलेपनयोगान् सर्वचूर्णान् सर्वचूर्णयोगान् सर्वगन्धानु-
25 लेपनचूर्णाकरान् प्रजानामि । देवगन्धानपि प्रजानामि । नागयक्षगन्धर्वासुरगरुडकिन्नर-
महोरगमनुष्यामनुष्यगन्धानपि प्रजानामि । विविधानपि गन्धान् प्रजानामि । व्याधिप्रशमन-
गन्धानपि, दौर्मनस्यापहारगन्धानपि, लौकिकप्रीतिसंजननगन्धानपि, क्लेशोज्ज्वालनगन्धा-
नपि, क्लेशप्रशमनगन्धानपि, विविधसंस्कृतरतिसुखसंजननगन्धानपि, सर्वसंस्कृतोद्वेगसंजनन-
गन्धानपि, मदप्रमादापहारगन्धानपि, बुद्धमनसिकारसमुदाचारसंभवगन्धानपि, धर्मनया-
30 नुगमगन्धानपि, आर्योपभोग्यगन्धानपि, सर्वबोधिसत्त्वगन्धविमात्रतामपि, सर्वबोधिसत्त्वभूमि-

---

1 S om. सर्वसंस्कृत...गन्धानपि.

व्यवस्थानगन्धानपि प्रजानामि । सर्वांश्च तानहं गन्धानाकारतोऽपि प्रजानामि । संभवतोऽपि उत्पादतोऽपि प्रादुर्भावतोऽपि परिनिष्पत्तितोऽपि परिशुद्धितोऽपि परिहारतोऽपि प्रयोगतोऽपि परिभोगतोऽपि विषयतोऽपि प्रभावतोऽपि धर्मतोऽपि मूलतोऽपि प्रजानामि ॥

अस्ति कुलपुत्र मनुष्यलोके नागसंक्षोभसंभवहस्तिगर्भो नाम गन्धः, यस्य तिलमात्रा गुलिका सकलं पृथुराष्ट्रं जनपदं महागन्धघनाभ्रजालसंछन्नं कृत्वा सप्ताहं सूक्ष्मगन्धोदकधारावर्षमभिप्रवर्षति । तत्र येषां सत्त्वानां शरीरे वा चीवरे वा गन्धोदकधारा निपतन्ति, ते सर्वे सुवर्णवर्णकुसुमविचित्रिता भवन्ति । येषु च भवनविमानकूटागारेषु निपतन्ति, ते सर्वे सुवर्णवर्णकुसुमविचित्रिता भवन्ति । येऽपि सत्त्वास्तेषां गन्धमेघजालानां मारुतसमीरितानामन्तर्भवनगता गन्धं जिघ्रन्ति, ते सर्वे सप्ताहमुदारप्रीतिप्रामोद्यपरिस्फुटा भवन्ति, अनेकविधानि च कायिकचैतसिकानि सुखसौमनस्यानि प्रत्यनुभवन्ति । न चैषां शरीरे व्याधिरुत्पद्यते धातुसंक्षोभजो वा अपरपरिक्रमिको वा । नापि चैतसिकं दुःखदौर्मनस्यमुत्पद्यते, न समुदाचरति भयं वा त्रासं वा छम्भितत्वं वा मनःसंक्षोभो वा व्यापादो वा । सर्वे च ते सत्त्वा अन्योन्यं मैत्रचित्ता भवन्ति हर्षप्रीतिसंजाताः । तेषामहं कुलपुत्र हर्षप्रीतिसंजातानामाशयविशुद्धिमारभ्य तथा धर्मं देशयामि, यथा नियता भवन्ति अनुत्तरायां सम्यक्संबोधौ ॥

अस्ति कुलपुत्र मलयपर्वतसंभवं गोशीर्षं नाम चन्दनम्, येनानुलिप्तगात्रो अग्निखदायामपि प्रपतितो न दह्यते । अस्ति कुलपुत्र सागरकच्छसंभवो अपराजितो नाम गन्धः, येनानुलिप्ताया भेर्याः शङ्खस्य वा निर्घोषेण सर्वपरचक्रं पराजयं गच्छति । अस्ति कुलपुत्र अनवतप्तह्रदतीरसंभवं पद्मगर्भं नाम कालागरु, यस्य तिलमात्रा गुलिका सकलं जम्बुद्वीपं गन्धेन स्फरति । ये च सत्त्वास्तं गन्धं जिघ्रन्ति, ते सर्वे पापविजुगुप्सनसंवरचित्तं प्रतिलभन्ते । अस्ति कुलपुत्र हिमवत्पर्वतराजसंभवा अरुणवती नाम गन्धजातिः, यस्या गन्धमाघ्राय सत्त्वा विरक्तचित्ता भवन्ति । तेषामहं तथा धर्मं देशयामि, यद्विरजोमण्डलं नाम समाधिं प्रतिलभन्ते । अस्ति कुलपुत्र राक्षसलोकसंभवा सागरगर्भा नाम गन्धजातिः, या राज्ञश्चक्रवर्तिनः परिभोगायोत्पद्यते, यया धूपितमात्रया चतुरङ्गो बलकायो राज्ञश्चक्रवर्तिनो गगनतले प्रतिष्ठते । अस्ति कुलपुत्र, सुधर्मदेवसभासंभवा शोभनव्यूहा नाम गन्धजातिः, यया धूपितमात्रया देवा बुद्धगन्धस्मृतिं प्रतिलभन्ते । अस्ति कुलपुत्र सुयामदेवराजभवने शुद्धकोशानां गन्धजातिः, यया धूपितया सर्वे सुयामदेवपुत्राः सुयामदेवराजसकाशमुपसंक्रामन्ति । तेषामुपसंक्रान्तानां सुयामो देवराजो धार्मीं कथां कथयति । अस्ति कुलपुत्र तुषितभवने सिन्धुवारिता नाम गन्धजातिः, या धर्मासननिषण्णस्य एकजातिप्रतिबद्धस्य बोधिसत्त्वस्य पुरतो धूपिता महागन्धमेघेन सकलं धर्मधातुं स्फरित्वा सर्वतथागतपर्षन्मण्डलेष्वनेकाकारव्यूहं महाधर्ममेघवर्षं प्रवर्षति । अस्ति कुलपुत्र सुनिर्मितदेवराजभवने मनोहरा नाम गन्धजातिः, या सुनिर्मितदेवराजभवने प्रधूपिता सप्ताहमचिन्त्यधर्ममेघवर्षं प्रवर्षति । एतामहं

कुलपुत्र गन्धयुक्तिं प्रजानामि । किं मया शक्यं निरामगन्धानां बोधिसत्त्वानां सर्वकामोपलिप्तानां क्लेशमारपाशविप्रमुक्तानां सर्वभवगतिव्यतिवृत्तानां ज्ञानमायागतरूपविचारिणां सर्वलोकानुपलिप्तानामसङ्गशीलानामनावरणज्ञानमण्डलविशुद्धानामप्रतिहतज्ञानगोचरविषयाणां सर्वालयनिकेतानिश्रितानां सर्वभवालयनिकेतचारिणां चर्यां ज्ञातुं गुणान् वा वक्तुम्, 5 शीलचर्याविशुद्धिमुखं वा परिदीपयितुम्, अनवद्यचरणं वा प्रभावयितुम्, अव्यापादकायवाङ्मनःसमुदाचारो वा देशयितुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे कूटागारं नाम नगरम् । तत्र वैरो नाम दाशः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

10 अथ खलु सुधनः श्रेष्ठिदारक उत्पलभूतेर्गान्धिकश्रेष्ठिनः पादौ शिरसाभिवन्द्य उत्पलभूतिं गान्धिकश्रेष्ठिनमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य उत्पलभूतेर्गान्धिकश्रेष्ठिनोऽन्तिकात् प्रक्रान्तः ॥ २२ ॥



## २५ वैरः ।

अथ खलु सुधनः श्रेष्ठिदारकः कूटागारनगराभिमुखं मार्गं प्रतिपद्यमानोऽनुविचरन् मार्गनिम्नतां मार्गोन्नततां मार्गसमतां मार्गविषमतां मार्गसरजस्कतां मार्गविरजस्कतां मार्गक्षेमतां मार्गगहनतां मार्गानावरणतां मार्गकुटिलतां मार्गर्जुकतामनुविलोक्य एवं चित्तमुत्पादयामास–इदं खलु मे तस्य कल्याणमित्रस्योपसंक्रमणं बोधिसत्त्वमार्गप्रतिपत्तिहेतुभूतं सत्त्वानुग्रहज्ञानमार्गप्रतिपत्तिहेतुभूतं भविष्यति । पारमितामार्गप्रतिपत्तिहेतुभूतं सर्वसत्त्वानुग्रहज्ञानमार्गप्रतिपत्तिहेतुभूतं भविष्यति । सर्वसत्त्वानुनयप्रतिघोन्नामावनामप्रपातविनिवृत्तये सर्वसत्त्वविषममतिप्रतिनिवारणतायै सर्वसत्त्वक्लेशरजःप्रशमनाय, सर्वसत्त्वविविधाकुशलदृष्टिस्थाणुकण्टकशर्करकठल्लापनयनाय, अनावरणधर्मधातुपरमतायै, अक्षुण्णसर्वज्ञतापुरोपनयनाय हेतुभूतं भविष्यति । तत्कस्य हेतोः ? कल्याणमित्राकराः सर्वकुशलधर्माः । कल्याणमित्राधीना सर्वज्ञता । स एवं चिन्तामनसिकारप्रयुक्तो दुरासदसमुदाचारोऽनुपूर्वेण येन कूटागारं नगरं तेनोपसंक्रम्य वैरं दाशं परिमार्गन् परिगवेषमाणोऽद्राक्षीन्महानगरमुखे सागरावतारतीरे वैरं दाशं वणिक्शतसहस्रैरनेकैश्च प्राणिशतसहस्रैर्विचित्रां कथां श्रोतुकामैः परिवृतं समुद्रकथासंप्रकाशनतया बुद्धगुणसमुद्रान् सत्त्वानामारोचयमानम् । दृष्ट्वा च येन वैरो दाशः, तेनोपजगाम । उपेत्य वैरस्य दाशस्य पादौ शिरसाभिवन्द्य वैरं दाशमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य वैरस्य दाशस्य पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामेववादानुशासनीं ददातीति । तद्वदतु मे आर्यः–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । आह–साधु साधु कुलपुत्र, यस्त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य महाज्ञानप्रतिलम्भसंभवहेतुं परिपृच्छसि । विविधसंसारदुःखसमुदाचारसंभवहेतुं सर्वज्ञताद्वीपाधिष्ठानगमनसंभवहेतुम् अभेद्यमहायानसंभवहेतुं श्रावकप्रत्येकबुद्धभूमिपातभयविगममार्गप्रतिपत्तिसंभवहेतुं विविधशान्तसमाधिसुखावर्तनयाधिगमज्ञानमार्गसंभवहेतुं सर्वत्रगामिनीबोधिसत्त्वचर्याविचारप्रणिधिरथचक्रापराहतमार्गसंभवहेतुं सर्वतेजऊर्मिव्यूहबोधिसत्त्वचर्यास्वभावनयमार्गसंभवविशुद्धिहेतुं सर्वधर्मदिग्मुखापरान्तमार्गसंभवविशुद्धिहेतुं सर्वज्ञतासागरावतारमार्गसंभवविशुद्धिहेतुं परिपृच्छसि । अहं कुलपुत्र इह महासागरतीरकूटागारे महानगरे प्रतिवसामि महाकरुणाध्वजां बोधिसत्त्वचर्यां परिशोधयन् । सोऽहं कुलपुत्र जम्बुद्वीपे दरिद्रान् सत्त्वानवलोक्य एषामर्थाय तथा तपस्तप्यामि, यदुत अभिप्रायमेषां परिपूरयिष्यामि । लोकामिषसंग्रहं करिष्यामि । धर्मसंभोगेन चैनान् संतोषयिष्यामि । पुण्यसंभारमार्गमेषामुपदेक्ष्यामि । ज्ञानसंभारं संजनयिष्यामि । कुशलमूलबलं संवर्धयिष्यामि । बोधिचित्तमुत्पादयिष्यामि । बोध्याशयं विशोधयिष्यामि । महाकरुणाबलमुपस्तम्भयिष्यामि । संसारदुःखं व्युपशमयिष्यामि । संसारचर्यापरिखेदबलमुपस्तम्भयिष्यामि । सत्त्वसागरसंग्रहणे चैनान्नियोजयिष्यामि । गुणसागरप्रतिपत्तिमुखे च प्रतिष्ठापयिष्यामि ।

धर्मसागरज्ञानालोकं चैषामुपसंहरिष्यामि । सर्वबुद्धसागरं चैषामभिमुखमावर्तयिष्यामि । सर्वज्ञतासागरे चैनानवतारयिष्यामि ॥

एवं चिन्तामनसिकारप्रयुक्तोऽहं कुलपुत्र इह सागरतीरकूटागारनगरे प्रविचरामि । एवं जगद्धितसुखप्रयुक्तोऽहं कुलपुत्र सर्वमहासागररत्नद्वीपान् प्रजानामि । सर्वरत्नाकरान् सर्वरत्नगोत्राणि सर्वरत्नमूलं प्रजानामि । सर्वनागभवनानि सर्वनागसंक्षोभान् सर्वयक्षभवनानि सर्वयक्षसंक्षोभान् सर्वराक्षसभवनानि सर्वराक्षसभयप्रशमनानि सर्वभूतभवनानि सर्वभूतान्तरायव्युपशमनानि प्रजानामि । सर्वावर्तं संभयावर्तपरिवर्जनं महोर्मिवेगपरिहारमुदकवर्णविमात्रतां प्रजानामि । चन्द्रादित्यज्योतिर्ग्रहगणपरिवर्तनं रात्रिंदिवक्षणलवमुहूर्तं प्रजानामि । गमनागमनविशेषतां क्षेमाक्षेमतां यानपात्रयन्त्रक्रियादृढतां यानपरिहारं यानवाहनं मारुतसंग्रहणं मारुतोत्पादनं यानावर्तनं यानपरिवर्तनं यानसंस्थापनं यानसंप्रेषणं प्रजानामि । सोऽहं कुलपुत्र एवंज्ञानसमन्वागतः सततं सत्त्वार्थकार्यप्रयुक्तो वणिग्गणं दृढेन यानेन क्षेमेण शिवेनाभयेन यथाप्रहर्षं प्रमोदयन् धार्म्या कथया यथाभिप्रायेण रत्नद्वीपमुपनयामि । सर्वरत्नसमृद्धिं चैषां कृत्वा पुनर्जम्बूद्वीपमुपनयामि । न च मम कुलपुत्र कदाचित् किंचिद् यानपात्रं विपन्नपूर्वम् । येषां च सत्त्वानामहं कुलपुत्र चक्षुषामाभासमागच्छामि, ये च सत्त्वा मम धर्मदेशनां शृण्वन्ति, तेषां सर्वसंसारसागरसंसीदनभयानि विगच्छन्ति, सर्वज्ञतासागरावतारज्ञानं चाभिमुखीभवति । तृष्णासागरोच्छोषणतायै च प्रतिपद्यन्ते, त्र्यध्वसागरज्ञानालोकं च प्रतिलभन्ते । सर्वसत्त्वदुःखसागरक्षयाय चाभ्युत्सहन्ते । सर्वसत्त्वचित्तसागरकालुष्यप्रसादनतायै च प्रयुज्यन्ते । सर्वक्षेत्रसागरविशुद्धये वीर्यमारभन्ते । सर्वदिक्सागरस्फरणतायै च न विनिवर्तन्ते । सर्वजगदिन्द्रियसागरसंभेदं च प्रतिविध्यन्ति । सर्वसत्त्वचर्यासागरं चानुवर्तन्ते । यथाशयजगत्सागरप्रतिभासप्राप्ताश्च भवन्ति ॥

एतस्य अहं कुलपुत्र महाकरुणाध्वजस्य अमोघदर्शनश्रवणं संवासानुस्मृतिनाम नदीनिर्घोषस्य बोधिसत्त्वविमोक्षस्य लाभी । किं मया शक्यं बोधिसत्त्वानां सर्वसंसारसागरविचारिणां सर्वक्लेशसागरानुपलिप्तानां सर्वदृष्टिगतसागरसंग्रहग्राहभयविगतानां सर्वधर्मसागरस्वभावजलविचारिणां सर्वजगत्सागरस्वभावतलविचारिणां सर्वजगत्सागरसंग्रहवस्तुसंग्रहजालानां सर्वज्ञतासागरसंवासिनां सर्वसत्त्वाभिनिवेशसागरनिर्मथनानां सर्वकालसागरसंभिन्नविहारिणां सर्वजगत्सागरपरिपाकतत्त्वाभिज्ञानां सर्वजगत्सागरविनयकालानतिक्रान्तानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे नन्दिहारं नाम नगरम् । तत्र जयोत्तमो नाम श्रेष्ठी प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको वैरस्य दाशस्य पादौ शिरसाभिवन्द्य वैरं दाशमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य अश्रुमुखो रुदन् कल्याणमित्रदर्शनाभिलाषानितृप्तो वैरस्य दाशस्यान्तिकात्प्रक्रान्तः ॥ २३ ॥

## २६ जयोत्तमः ।

अथ खलु सुधनः श्रेष्ठिदारको महामैत्र्यप्रमाणसत्त्वधातुस्फरणचित्तो महाकरुणा-स्नेहाभिष्यन्दितसंतानो विपुलपुण्यज्ञानसंभारव्यूहोपचितः सर्वक्लेशरजस्तमोमलपङ्कापगतो धर्मसमतानुगमो निम्नोन्नतसर्वज्ञतामार्गप्रसृतः अपरिमाणाकुशलधर्मावतारमुखोद्धृतः सर्वाकुशला-भेद्यदृढवीर्यबलपराक्रमः अचिन्त्यबोधिसत्त्वसमाधिविपुलप्रस्रब्धिमुखसमर्पितः प्रज्ञाभास्कर- 5 तेजोवभासविधूतनिरवशेषाविद्यान्धकारः सुखशीतलोपायमारुतेरितज्ञानकुसुमावकीर्णो महा-प्रणिधानसमुद्रनिर्याणज्ञाननयानुकूलः अप्रतिहतधर्मधातुस्फरणज्ञानः अक्षुण्णसर्वज्ञतापुर-प्रवेशाभिमुखः बोधिसत्त्वमार्गमभिकाङ्क्षमाणो येन नन्दिहारं नगरं तेनोपसंक्रम्य जयोत्तमं श्रेष्ठिनं परिमार्गन् परिगवेषमाणोऽद्राक्षीत् पूर्वेण नन्दिहारस्य नगरस्य पर्यन्ते विचित्रध्वजाया-मशोकवनिकायामनेकगृहपतिसहस्रपरिवृतं विविधानि नगरकार्याणि परिनिष्ठापयन्तं 10 तदागम्य च धार्मीं कथां कथयन्तम्, सर्वाहंकारसमुद्घाताय, सर्वममकारोत्सर्गाय, सर्वपरि-ग्रहपरित्यागाय, सर्ववस्तुग्रहणप्रतिनिसर्गाय, सर्वाभिनिवेशनिर्दारणाय, सर्वतृष्णाबन्धन-च्छेदनाय, सर्वदृष्टिगतकपाटनिर्भेदनाय, सर्वसंशयविमतिविचिकित्सातिमिरविधमनाय, मायाशाठ्यकालुष्यापनयनाय, ईर्ष्यामात्सर्यमलसंशोधनाय, चित्तसरःप्रसादनाय, अनाविल-चित्ततायां सत्त्वप्रतिष्ठापनतायै, अनाविलश्रद्धाबलोत्पादनतया बुद्धदर्शनाभिरोचनतायै, 15 बोधिसत्त्वबलोद्भावनतया बुद्धधर्मसंप्रतीच्छनतायै, बोधिसत्त्वचर्यासूचनतया बोधिसत्त्वसमाधि-बलजननतायै, बोधिसत्त्वप्रज्ञाबलसंदर्शनतया बोधिसत्त्वस्मृतिबलविशुद्ध्युत्तारणतायै धर्मं देशयमानं यदुत बोधिचित्तोत्पादाभिरोचनाय ॥

अथ खलु सुधनः श्रेष्ठिदारकस्तत्कथापर्यवसानमागमयित्वा जयोत्तमस्य श्रेष्ठिनः पादयोः प्रणिपत्य सुचिरमभिनाम्य धर्मगौरवप्रतिलब्धेनाशयेन एवं वाचमुदीरयामास— 20 सुधनोऽस्मि, सुधनोऽस्मि आर्य, बोधिसत्त्वचर्यां परिमार्गामि । तद्वदतु मे आर्यो यथाहं बोधिसत्त्वचर्यायां शिक्षेयम् । यथा शिक्षमाणः सर्वसत्त्वपरिपाकविनयकार्येष्वभिमुखो भवेयम् । सर्वबुद्धदर्शनं न विजह्याम् । सर्वबुद्धधर्मं शृणुयाम् । सर्वबुद्धधर्ममेघान् संधारयेयम् । सर्वबुद्धधर्मनयेषु प्रतिपद्येयम् । सर्वलोकधातुषु बोधिसत्त्वचर्यायां चरेयम् । सर्वकल्पसंवासेषु बोधिसत्त्वचर्यया न परिखिद्येयम् । सर्वतथागतविकुर्वितान्याजानीयाम् । 25 सर्वबुद्धाधिष्ठानानि संप्रतीच्छेयम् । सर्वतथागतबलेषु च अवभासं प्रतिलब्धो भवेयम् ॥

अथ खलु जयोत्तमः श्रेष्ठी सुधनं श्रेष्ठिदारकमेवमाह—साधु साधु कुलपुत्र, येन ते अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । अहं कुलपुत्र सर्वगामिनीबोधिसत्त्वचर्यामुखं परिशोधयामि यदुत अभावप्रतिष्ठितानभिसंस्कारविप्रतिलाभबलेन । सोऽहमिह सर्वगामिनी-बोधिसत्त्वचर्यापरिशुद्धिमुखे स्थित्वा सर्वत्रिसाहस्रमहासाहस्रे लोकधातौ सर्वत्रिदशदेवलोकेषु 30 सर्वयामभवनेषु सर्वतुषितदेवलोकेषु सर्वनिर्माणरतिदेवलोकेषु सर्वपरनिर्मितवशवर्तिदेवलोकेषु

सर्वमारभवनेषु सर्वकामधातुषु देवनिकायान्तर्गतेषु सर्वदेवभवनेषु सर्वनागलोकेषु सर्वनागभवनेषु, सर्वयक्षलोकेषु सर्वयक्षभवनेषु, सर्वराक्षसलोकेषु सर्वराक्षसभवनेषु, सर्वकुम्भाण्डलोकेषु सर्वकुम्भाण्डभवनेषु, सर्वप्रेतलोकेषु सर्वप्रेतभवनेषु, सर्वगन्धर्वलोकेषु सर्वगन्धर्वभवनेषु, सर्वासुरलोकेषु सर्वासुरभवनेषु, सर्वगरुडलोकेषु सर्वगरुडभवनेषु, सर्वकिन्नरलोकेषु सर्वकिन्नरभवनेषु, सर्वमहोरगलोकेषु सर्वमहोरगभवनेषु, सर्वमनुष्यलोकेषु सर्वमनुष्यभवनेषु, सर्वग्रामनगरनिगमजनपदराष्ट्रराजधानीषु सर्वकामधात्वन्तर्गतासु सर्वसत्त्वगतिषु धर्मं देशयामि। अधर्मं प्रतिजहामि। विवादं प्रशमयामि। विग्रहं व्यावर्तयामि। कलहं व्युपशमयामि। युद्धं निवारयामि। रणमुपशमयामि। वैरमुपरमयामि। बन्धनानि छिनद्मि। चारकाणि भिनद्मि। भयानि विनिवर्तयामि। अकुशलकर्माभिसंस्कारान् समुच्छिनद्मि। प्राणिवधात् सत्त्वान् विनिवारयामि। अदत्तादानात् काममिथ्याचारात् मृषावादात् पैशुन्यात् पारुष्यात् संभिन्नप्रलापादभिध्याया व्यापादात् मिथ्यादृष्टेः सत्त्वान्निवारयामि। सर्वकार्येभ्यः सत्त्वान् विनिवारयामि। सर्वधर्मकुशलधर्मक्रियास्वनुवर्तयामि। सर्वसत्त्वान् सर्वशिल्पानि शिक्षयामि। लोकहितावहानि सर्वशास्त्राणि द्योतयामि, प्रकल्पयामि, प्रकाशयामि, प्रभावयामि लोकप्रहर्षणतायै। सत्त्वपरिपाकाय सर्वपापण्डाननुवर्तयामि। उत्तरिज्ञानविशेषसूचनतायै सर्वदृष्टिगतविनिवर्तनतायै सर्वबुद्धधर्मरोचनतायै यावद्ब्रह्मलोकेऽपि सर्वरूपधातुकान् देवानभिभूय धर्मं देशयामि। यथा चेह त्रिसाहस्रमहासाहस्रे लोकधातौ, तथा दशसु दिक्षु दशानभिलाप्यबुद्धक्षेत्रकोटीनियुतशतसहस्रपरमाणुरजःसमेषु लोकधातुषु धर्मं देशयामि। बुद्धधर्मान् देशयामि। बोधिसत्त्वधर्मान् श्रावकधर्मान् प्रत्येकबुद्धधर्मान् देशयामि। नरकान् देशयामि। नरकगामिनीं प्रतिपदं देशयामि। नैरयिकसत्त्वकारणा देशयामि। तिर्यग्योनिं देशयामि। तिर्यग्योनिगतिसभेदं तिर्यग्योनिगतिगामिनीं प्रतिपदं तिर्यग्योन्युपपत्तिदुःखं देशयामि। यमलोकं देशयामि, यमलोकगामिनीं प्रतिपदं यमलोकदुःखं देशयामि। स्वर्गलोकं देशयामि, स्वर्गलोकगामिनीं प्रतिपदं स्वर्गलोकारत्युपचारपरिभोगं देशयामि। मनुष्यलोकं देशयामि, मनुष्यलोकगतिगामिनीं प्रतिपदं मनुष्यलोकसुखदुःखानुभववैचित्र्यं देशयामि। इति हि कुलपुत्र लोकधर्मं देशयामि। लोकसमुदयं लोकास्तगमनं लोकादीनवं लोकनिःसरणमपि देशयामि, यदुत बोधिसत्त्वमार्गसंप्रकाशनतायै संसारदोषविनिवर्तनतायै सर्वज्ञतागुणसंदर्शनतायै भवगतिसंमोहदुःखसंप्रशमनतायै अनावरणधर्मतारोचनतायै लोकप्रवृत्तिक्रियापरिदीपनतायै सर्वलोकप्रवृत्तिसुखदुःखसंसूचनतायै सर्वजगत्प्रतिशरणमहाभिभावनतायै अनालयतथागतधर्माभिद्योतनतायै सर्वकर्मक्लेशचक्रव्यावर्तनतायै तथागतधर्मचक्रप्रवर्तनसूचनतायै धर्मं देशयामि। एतमहं कुलपुत्र सर्वगामिनीबोधिसत्त्वचर्याविशुद्धिमुखमण्डलप्रतिष्ठितानभिसंस्काररश्मिव्यूहं प्रजानामि। किं मया शक्यं सर्वाभिज्ञानां बोधिसत्त्वानां सर्वक्षेत्रतत्समायागतज्ञानशरीरस्फरणानां समन्तचक्षुर्ज्ञानभूमिप्रतिलब्धानां सर्ववाक्पथरुतविज्ञप्तिपरमश्रोत्राणां अप्रमाणस्फरणधर्ममुखालोकवशिताप्राप्तानां सर्वधर्मसमवसरणज्ञानवशिताधिपतिवीर्यपुरुषाणामचिन्त्य-

प्रमाणयथाशयसत्त्वविज्ञपनासंभिन्नस्वरमण्डलप्रभूतरुचिरतनुजिह्वानां नानाभिप्रायसत्त्वसमुद्र-रुचिरवर्णसंस्थानसर्वबोधिसत्त्वसममायोपमशरीराणां सर्वतथागताद्वयाकल्पाचिन्त्यशरीरपरमाणां सर्वत्र्यध्वानुसृतज्ञानकायानां गगनतलविपुलाप्रमाणगोचरविषयाणां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे श्रोणापरान्तेषु जनपदेषु कलिङ्गवनं नाम नगरम्। 5 तत्र सिंहविजृम्भिता नाम भिक्षुणी प्रतिवसति। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको जयोत्तमस्य श्रेष्ठिनः पादौ शिरसाभिवन्द्य जयोत्तमं श्रेष्ठिनमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य जयोत्तमस्य श्रेष्ठिनोऽन्तिकात् प्रक्रान्तः ॥ २४ ॥ 10

---

## २७ सिंहविजृम्भिता ।

अथ खलु सुधनः श्रेष्ठिदारकोऽनुपूर्वेण येन श्रोणापरान्ते जनपदे कलिङ्गवनं नाम
नगरम्, तेनोपजगाम । उपेत्य सिंहविजृम्भितां नाम भिक्षुणीं पर्येषमाणः प्रतिसंस्तर[1]
परिपृच्छन् यतो यतः पर्यटति, तेन तेनैव अनेकानि कुमारशतानि अनेकानि
5 कुमारिकाशतानि रथ्याचत्वरशृङ्गाटकेभ्यः सभूय अनुबध्नन्ति स्म । अनेकानि च
पुरुषशतानि अनेकानि च स्त्रीशतान्यारोचयामासुः—एषा कुलपुत्र सिंहविजृम्भिता भिक्षुणी
इहैव कलिङ्गवने नगरे जयप्रभानुप्रदत्ते सूर्यप्रभे महोद्याने प्रतिवसति अपरिमाणानां
सत्त्वानामर्थाय धर्मं प्रकाशयमाना ॥

अथ खलु सुधनः श्रेष्ठिदारको येन तत्सूर्यप्रभं महोद्यानं तेनोपसंक्रम्य समन्तादनु
10 विचरन् अनुविलोकयन् अद्राक्षीत्तस्मिन् महोद्याने चन्द्रोद्गतान् नाम वृक्षान् कूटागारस-
छन्नानर्चिर्निर्णीर्चिनिर्भासान् समन्ताद्योजनमाभया स्फरमाणान्, सप्रच्छदनामांश्च पत्रवृक्षान्
छत्राकारान् संस्थानपर्णच्छदनान् नीलवैडूर्यवर्णपयोदावभासान्, कुसुमकोशनामांश्च पुष्प-
वृक्षान् हिमवत्पर्वतराजरमणीयविचित्रसंस्थानान् नानावर्णाक्षयकुसुमौघप्रवर्षणान् त्रिदश-
पुरोपशोभनपारिजातककोविदारसदृशान्, सदापक्वाननुपमस्वादुफलनिचितनामांश्च सुफल-
15 वृक्षान् सुवर्णमेरुशिखरसंस्थानान् सदाफलसंपन्नान्, वैरोचनकोशनामांश्च मणिराजवृक्षाननु-
पममणिरत्नराजसंस्थानान् दिव्यरत्नस्रग्मालाभरणचिन्ताराजमणिरत्नप्रमुक्तकोशसमृद्धिधरान्
असंख्येयवर्णमणिरत्नाकारान्, प्रसादननामांश्च वस्त्रवृक्षान् नानावर्णदिव्यरत्नवस्त्रकोशप्रमुक्त-
प्रलम्बोपशोभितान्, । प्रमोदननामांश्च वाद्यवृक्षान् दिव्यातिरेकतूर्यमनोज्ञमधुरनिर्घोषान्,
समन्तकुसुमव्यूहनामांश्च गन्धवृक्षान् सर्वदिगप्रतिहतसर्वाकारमनोज्ञगन्धाभिप्रमोदनानद्राक्षीत् ।
20 उत्ससरस्तडागपुष्करिणीश्च सप्तरत्नेष्टकानिचिताश्चतुर्दिक्षु विभक्तरत्नसोपाना कालानुसारि-
चन्दनपरिदिग्धविविधरत्नवेदिकापरिवृता, नीलवैडूर्यमणिराजवृत्ततलसंस्थाना, जाम्बूनद-
कनकवालिकास्तीर्णतला, मनोज्ञदिव्यगन्धाष्टाङ्गोपेतवारिपरिपूर्णा, विचित्रवर्णदिव्यगन्ध-
स्पर्शोत्पलपद्मकुमुदपुण्डरीकसंछादितसलिला, दिव्यातिरेकमनोज्ञरूपनानाशकुनिगणमधुर-
निर्घोषनिकूजिता, विविधदिव्यरत्नसुरुचिरद्रुमपङ्क्तिपरिक्षेपोपशोभिता । सर्वेषु च तेषु
25 नानारत्नवृक्षमूलेषु विचित्रमनोज्ञरूपाणि रत्नसिंहासनानि प्रज्ञप्तानि अचिन्त्यानेकविविधरत्न-
व्यूहानि, नानादिव्यरत्नवस्त्रप्रज्ञप्तोपचाराणि, सर्वाकारदिव्यगन्धधूपनिर्धूपितानि, दिव्याति-
क्रान्तरत्नपट्टाभिप्रलम्बितविचित्ररत्नवितानविततानि, नानारत्नविचित्रजाम्बूनदकनकजाल-
संछन्नानि, रत्नकिङ्किणीजालमनोज्ञमधुरनिर्घोषाणि, अनेकदिव्यरत्नासनशतसहस्रपरिवाराण्य-
पश्यत् । स क्वचिद्वनवृक्षमूले रत्नपद्मगर्भसिंहासनं प्रज्ञप्तमपश्यत् । क्वचिद्गन्धराजमणि-
30 रत्नपद्मगर्भसिंहासनम्, क्वचिन्नागव्यूहमणिराजपद्मगर्भसिंहासनम्, क्वचिद्रत्नसिंहरूप-
मणिराजपद्मगर्भसिंहासनम्, क्वचिद्वैरोचनमणिराजपद्मगर्भसिंहासनम्, क्वचिद्दिग्विरोचन-

---

1 B om. प्रतिसंस्तर

मणिराजपद्मगर्भसिंहासनम्, क्वचिदिन्द्रवज्रमणिराजपद्मगर्भसिंहासनम्, क्वचिज्जगद्रोचनमणिराजपद्मगर्भसिंहासनम्, क्वचिद्रत्नवृक्षमूले सिताभमणिराजपद्मगर्भसिंहासन प्रज्ञप्तमपश्यत् । सर्वावच्च तन्महोद्यान नानारत्नाकीर्णतल महासागरमिव रत्नद्वीपाकीर्णमपश्यत् नीलवैडूर्यराजखचितसर्वरत्नप्रत्यर्पितकाचिलिन्दिकसुखसस्पर्शभूमिभाग चरणनिक्षेपोत्क्षेपोन्नामावनामविगत वज्ररत्नराजमयसुखसस्पर्शमनोज्ञगन्धनलिनसस्तीर्णतल हसक्रौञ्चमयूरकुणालकलविङ्ककोकिलजीवजीवकरुतनिर्नादमधुरनिर्घोष दिव्यरत्नचन्दनद्रुमवनसुरचितप्रविष्टव्यूहोपशोभित विचित्ररत्नपुष्पमेघरत्नकुसुमाक्षयधाराभिप्रवर्षित मिश्रकावनप्रतिविशिष्ट सुरचितनानारत्नकूटागारातुलगन्धराजसततप्रधूपितोपचार सुधर्मदेवसभाप्रतिविशिष्टव्यूह उपरिष्टाद्दिव्यातिरेकविचित्ररत्नजालसछन्न मुक्तामणिपुष्पहारकलापप्रलम्बितोपशोभितदेश समन्ताद्रत्नकिङ्किणीविचित्रविन्यासोज्ज्वलितसुवर्णजालपरिष्कृत विविधनाधवृक्षरत्नतालकिङ्किणीजालमारुतसमीरितमधुरमनोज्ञशब्दनिर्घोष वशवर्तिदेवराजप्रमुखाप्सर सगीतिरुतपरमरमणीयनिर्घोष विचित्रवर्णदिव्यकल्पदूष्यमेघाभिप्रवर्षणविराजित महासागरमिवानन्तवर्णावभाससेचनकदर्शनमचिन्त्यासस्थेयरत्नव्यूहकूटागारशतसहस्रप्रतिमण्डित त्रिदशेन्द्रपुरमिव सुदर्शन सर्वाकारनानारत्नभक्तिप्रतिमण्डित सुपरिणतच्छत्रविन्याससमन्तशुभदर्शन महेन्द्रलोकमिव चित्रकूटोपशोभित सदाप्रमुक्तमनोज्ञमहाप्रभावभास जगद्रोचनमणिरत्नराजप्रभाज्वलितमिव महाब्रह्मविहारमसह्यमेमलोकधात्वधिष्ठानाकाशकोशविपुलाप्रमाणावकाश तत्सूर्यप्रभ महोद्यानमपश्यत्, सिंहविजृम्भिताया भिक्षुण्या महता अचिन्त्यर्द्धिप्रभावबलाधानेन ॥

अथ खलु सुधन श्रेष्ठिदारक इमानेवमप्रमाणाचिन्त्यगुणसमुदितान् महोद्यानव्यूहान् बोधिसत्त्वकर्मविपाकपरिनिष्पन्नान् लोकोत्तरविपुलकुशलमूलनिर्जातानचिन्त्यबुद्धपूजोपस्थाननिष्यन्दसभवान् सर्वलोकगतानवशेषकुशलमूलासहार्यान् मायागतधर्मस्वभावनिर्वृत्तान् विमलविपुलशुभपुण्यविपाकसभूतान् सिंहविजृम्भिताया भिक्षुण्या पूर्वसुकृतसुचरितनिष्यन्दबलाधानसभूतानसाधारणान् सश्रावकप्रत्येकबुद्धैरसहार्यान् सर्वतीर्थ्यपरप्रवादिभिरनवमर्द्यान् सर्वमारपथसमुदाचारैरनवलोक्यान् सर्वबालपृथग्जनै समन्तादनुविलोकयन्नद्राक्षीत् । सर्वेषु च तेषु नानारत्नवृक्षमूलगतेषु महासिंहासनेषु सिंहविजृम्भिता भिक्षुणीं सनिषण्णा महापरिवारपरिवृता प्रासादिकेनात्मभावेन प्रशान्तेर्यापथा शान्तेन्द्रिया शान्तमनस सुगुप्ता जितेन्द्रिया नागमिव सुदान्ता हृदमिव अच्छानाविलविप्रसन्नचित्ता चिन्तामणिराजमिव सर्वकामप्रदां पद्ममिव वारिणानुपलिप्ता लोकधर्मै, सिंह इव विगतभयरोमहर्षां वैशारद्यविशुद्धा, महाचलेन्द्रराजमिवाप्रकम्प्या शीलविशुद्धा, मनोहरगन्धराजमिव जगच्चित्तप्रह्लादनकरीं हिमचन्दनमिव क्लेशपरिदाहप्रशमनकरीं सुदर्शनभैषज्यराजमिव सर्वजगद्दुःखव्युपशमनकरीं वरुणपाशमिवामोघदर्शनां तथागतप्रभामिव कायचित्तप्रस्रब्धिसुखसजननीं महाब्रह्माणमिव विगतरागदोषमोहपर्युत्थानाम् उदकप्रसादकमणिरत्नराजमिव क्लेशाविलसत्त्वचित्तप्रह्लादनकरीं सुक्षेत्रमिव कुशलमूलविवर्धनीम् । तेषु चासनपरिवारेषु विचित्रा पर्षद सनिषण्णामद्राक्षीत् ॥

स क्वचिदासनपरिवारे महेश्वरदेवपुत्रप्रमुखानां शुद्धावासकायिकानां देवपुत्राणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीमक्षयविमोक्षसंभेदं नाम धर्ममुखं प्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे रुचिरब्रह्मप्रमुखानां ब्रह्मकायिकानां देवपुत्राणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं समन्ततलभेदं नाम स्वरमण्डलविशुद्धिं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे
5 वशवर्तिदेवराजप्रमुखानां परनिर्मितवशवर्तिदेवराजप्रमुखानां परनिर्मितवशवर्तिनां देवपुत्राणां सदेवकन्यापरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं बोधिसत्त्वाशयविशुद्धिवशिताव्यूहं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे सुनिर्मितदेवराजप्रमुखानां निर्माणरतीनां देवपुत्राणां सदेवकन्यापरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं सर्वधर्मशुभव्यूहं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे संतुषित
10 देवराजप्रमुखानां तुषितकायिकानां देवपुत्राणां सदेवकन्यापरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं स्वचित्तकोशावर्तं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे सुयामदेवराजप्रमुखानां देवपुत्राणां सदेवकन्यापरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीमनन्तव्यूहं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासन परिवारे शक्रदेवराजप्रमुखानां त्रायस्त्रिंशकायिकानां देवपुत्राणां सदेवकन्यापरिवाराणां
15 संनिषण्णानां सिंहविजृम्भितां भिक्षुणीमुद्वेगमुखं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे सागरनागराजप्रमुखानां शतरश्मिनन्दोपनन्दमनस्वैरावतानवतप्तप्रभृतीनां नागराज्ञां सनागकन्यानां नागकुमारपरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं बुद्धविषयप्रभाव्यूहं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे वैश्रवणमहाराजप्रमुखानां यक्षेन्द्राणां सयक्षकन्यायक्षकुमारपरिवाराणां संनिषण्णानां सिंहविजृम्भितां
20 भिक्षुणीं जगत्परित्राणकोशं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे धृतराष्ट्रगन्धर्वराजप्रमुखानां गन्धर्वाणां सगन्धर्वकन्यागन्धर्वकुमारपरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीमक्षयप्रहर्षणं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासन-परिवारे राहुरसुरेन्द्रप्रमुखानामसुरेन्द्राणां सासुरकन्यासुरकुमारपरिवाराणां संनिषण्णानां सिंह-विजृम्भितां भिक्षुणीं धर्मधातुज्ञाननययोगव्यूहं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचि
25 दासनपरिवारे महावेगधारिगरुडेन्द्रप्रमुखानां गरुडेन्द्राणां सगरुडकन्यागरुडकुमारपरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं भवसागरसंत्रासविषयं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे द्रुमकिन्नरराजप्रमुखानां किन्नरेन्द्राणां सकिन्नरकन्या-किन्नरकुमारपरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं बुद्धचर्यारभासं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारे भ्रुकुटीमुखमहोरगेन्द्रप्रमुखानां महोरगे-
30 न्द्राणां समहोरगकन्यामहोरगकुमारपरिवाराणां संनिषण्णानां सिंहविजृम्भितां भिक्षुणीं बुद्ध-प्रीतिसंभवं नाम धर्ममुखं संप्रकाशयमानामपश्यत्। क्वचिदासनपरिवारेऽनेकेषां स्त्रीपुरुषदारक-

---

१ S om क्वचि ...मपश्यत्. २ B वशवर्ति°

दारिकाशतसहस्राणा संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं ज्ञानविशेषगमन नाम धर्म-मुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे निरौजोहरद्रुमराजराक्षसेन्द्रप्रमुखानां राक्षसेन्द्राणा सराक्षसकन्याराक्षसकुमारपरिवाराणा संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं कृपासभव नाम धर्ममुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे श्रावकयानाधिमुक्ताना सत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं ज्ञानविशेषप्रभाव नाम धर्ममुख संप्रकाशय-मानामपश्यत् । क्वचिदासनपरिवारे प्रत्येकबुद्धयानाधिमुक्ताना सत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीमुदारबुद्धगुणावभास नाम धर्ममुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे महायानाधिमुक्ताना सत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं समन्तमुख नाम समाधिज्ञानालोकमुखं संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे प्रथम-चित्तोत्पादिकाना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं सर्वबुद्धप्रणिधिकूट नाम समाधिमुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे द्वितीयभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं निरजोमण्डल नाम समाधिमुख संप्र-काशयमानामपश्यत् । क्वचिदासनपरिवारे तृतीयभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनि-षण्णाना सिंहविजृम्भिता भिक्षुणीं प्रशान्तव्यूह नाम समाधिमुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे चतुर्थीभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं सर्वज्ञतावेगविषयसभव नाम समाधिमुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे पञ्चमीभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं चित्तलता-कुसुमगर्भं नाम समाधिमुख संप्रकाशयमानमपश्यत् । क्वचिदासनपरिवारे षष्ठीभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं वैरोचनगर्भं नाम समाधिमुख संप्रकाश-यमानामपश्यत् । क्वचिदासनपरिवारे सप्तमीभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं समन्तभूम्यलकार नाम समाधिमुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे अष्टमीभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीं धर्मधातुपञ्जरसुविभक्तशरीरविषय नाम समाधिमुख संप्रकाशयमानामपश्यत् । क्वचि-दासनपरिवारे नवमीभूमिप्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीमनि-लम्भबलनिलयव्यूह नाम धर्ममुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे दशमीभूमि-प्रतिष्ठिताना बोधिसत्त्वाना संनिषण्णाना सिंहविजृम्भिता भिक्षुणीमनावरणमण्डल नाम समाधिमुख संप्रकाशयमानामपश्यत् । क्वचिदासनपरिवारे संनिषण्णस्य वज्रपाणिपर्षन्मण्डलस्य सिंहविजृम्भिता भिक्षुणीं ज्ञानवज्रनारायणव्यूह नाम धर्ममुख संप्रकाशयमानामपश्यत् । इति हि यावन्त्य सर्वोपपत्त्यायतनसभेदेषु सत्त्वप्रज्ञप्तय सत्त्वगतय, तासु ये सत्त्वा परिपक्वा वैनयिका भाजनीभूता, तेषा तस्मिन् महोद्याने समवसृत्य प्रत्येकमासनपरिवारसंनिषण्णाना नानाशयानां नानाधिमुक्तानां नियताशयाना घनरसश्रद्धाना सिंहविजृम्भिता भिक्षुणीं

१ B अनन्तमुख

तथा तथा धर्मं देशयमानामपश्यद्, यत्सर्वे नियता भवन्त्यनुत्तरायां सम्यक्संबोधौ। तत्कस्य हेतोः? यथापि तत्सिंहविजृम्भिताया भिक्षुण्याः समन्तचक्षुरुपेक्षावतीप्रमुखानि सर्वबुद्धधर्मनिर्देशप्रमुखानि धर्मधातुतलप्रभेदप्रमुखानि सर्वावरणमण्डलविकिरणप्रमुखानि सर्वजगत्कुशलचित्तसंभवप्रमुखानि विशेषप्रतिव्यूहप्रमुखानि असङ्गनयगर्भप्रमुखानि धर्मधातु-
5 मण्डलप्रमुखानि चित्तकोशप्रमुखानि समन्तरुचिताभिनिर्हारगर्भप्रमुखानि दशप्रज्ञापारमिता-मुखासंख्येयशतसहस्राण्यवक्रान्तानि। ये च तत्सूर्यप्रभे महोद्याने बोधिसत्त्वास्तदन्ये वा सत्त्वाः प्रविशन्ति सिंहविजृम्भिताया भिक्षुण्या दर्शनाय धर्मश्रवणाय, सर्वे ते सिंह-विजृम्भिताया भिक्षुण्याः प्रथमं कुशलमूलधर्मसमुदानेषु नियोजिता यावदनुत्तरायाः सम्यक्संबोधेरविवर्त्याः कृताः॥

10 अथ खलु सुधनः श्रेष्ठिदारकः सिंहविजृम्भिताया भिक्षुण्या इमामेवंरूपामुद्यानसंपदं विहारसंपदं चङ्क्रमसंपदं परिभोगसंपदं शय्यासनसंपदं पर्षन्मण्डलसंपदमाधिपतेयसंपदं बुद्धिविकुर्वितसंपदं सरस्वतीव्यूहसंपदं दृष्ट्वा अचिन्त्यं च धर्मनयं श्रुत्वा विपुलधर्माभिष्यन्दितचित्तः सिंहविजृम्भिताया भिक्षुण्या अभिमुखमाशयविशुद्धिसंपदं संप्रणीतोऽनेकशतसहस्रकृत्वः प्रदक्षिणीकरिष्यामीति। अथ सिंहविजृम्भिताया भिक्षुण्याः सर्वं तन्महोद्यानं
15 सपर्षन्मण्डलव्यूहमुदारेणावभासेन स्फुटमवभासितम्। अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य एवं संजानाति-प्रदक्षिणीकुर्वंश्च समन्तादभिमुखं सिंहविजृम्भितां भिक्षुणीमद्राक्षीत्। स पुरतः प्राञ्जलिः स्थित्वा एवमाह-मया आर्ये, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्या बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे
20 आर्या-कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

सा अवोचत्-अहं कुलपुत्र सर्वमन्यनासमुद्घातितस्य बोधिसत्त्वविमोक्षस्य लाभिनी। आह-क एतस्य आर्ये सर्वमन्यनासमुद्घातितस्य बोधिसत्त्वविमोक्षस्य विषयः? आह-एष कुलपुत्र त्र्यध्वगतव्यूहैकचित्तक्षणकोटिविज्ञप्तिस्वभावो ज्ञानालोकः। आह-क एतस्य आर्ये ज्ञानालोकस्य विषयः? आह-एतन्मम कुलपुत्र ज्ञानालोकमुखमवगृह्णती निर्यूहती सर्वधर्म-
25 पद्मो नाम समाधिराजायते, यस्य समाधेः सहप्रतिलाभेन मनोमयैः कायैः सर्वासु दशसु दिक्षु सर्वलोकधातुष्वेकजातिप्रतिबद्धानां तुषितभवनगतानां सर्वबोधिसत्त्वानामेकैकस्य बोधिसत्त्वस्य अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैरात्मभावैरनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाभिः पूजाविमात्राभिः पूजाप्रयोगायोपसंक्रमामि, यदुत देवेन्द्रकायैर्नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्येन्द्रकायैः पुष्पमेघपरिगृहीतैर्गन्धमेघपरिगृहीतैर्धूपमेघपरिगृहीतैर्माल्य-
30 मेघपरिगृहीतैर्विलेपनमेघपरिगृहीतैश्चूर्णमेघपरिगृहीतैर्वस्त्रमेघपरिगृहीतैश्छत्रमेघपरिगृहीतैर्ध्वज-मेघपरिगृहीतैः पताकामेघपरिगृहीतै रत्नाभरणमेघपरिगृहीतै रत्नजालव्यूहमेघपरिगृहीतै रत्न-वितानव्यूहमेघपरिगृहीतै रत्नप्रदीपव्यूहमेघपरिगृहीतै रत्नासनव्यूहमेघपरिगृहीतैः पूजाप्रयोगाय

उपसंक्रमामि। यथा तुषितभवनगतानामेकजातिप्रतिबद्धानां बोधिसत्त्वानां पूजाप्रयोगायोपसंक्रमामि, एवं कुक्षिगतानां जायमानानामन्तःपुरमध्यगतानामभिनिष्क्रमतां बोधिमण्डमुपसंक्रमतां बोधिमण्डवरगतानामनुत्तरां सम्यक्संबोधिमभिसंबुद्धानां सर्वतथागतानां सर्वधर्मचक्रं प्रवर्तयतामेवं देवभवनगतानां नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यभवनगतानां यावत्सर्वजगच्चित्ताशयान् संतोषयित्वा परिनिर्वायमाणामेवंरूपैर्मनोमयैरात्मभावैरेवंरूपां पूजां कुर्वाणानां सर्वतथागतानामुपसंक्रमामि। ये च सत्त्वा ममेदं बुद्धपूजोपस्थानकर्म प्रजानन्ति, ते सर्वे नियता भवन्ति अनुत्तरायां सम्यक्संबोधौ। ये च सत्त्वा मामुपसंक्रामन्ति, तेषामहं सर्वेषामेतामेव प्रज्ञापारमितावबादानुशासनीं ददामि। अहं कुलपुत्र ज्ञानचक्षुषा सर्वसत्त्वान्[1] पश्यामि। न च सत्त्वसंज्ञामुत्पादयामि, न मन्ये। सर्वजगन्मन्त्रसंज्ञामुद्रां शृणोमि, न च मन्ये सर्ववाक्पथानभिनिविष्टत्वात्। सर्वतथागतान् पश्यामि, न च मन्ये धर्मशरीरपरिज्ञानत्वात्। सर्वतथागतधर्मचक्राणि च संधारयामि, न च मन्ये धर्मस्वभावानुबुद्धत्वात्। प्रतिचित्तक्षणं सर्वधर्मधातुं स्फरामि, न च मन्ये मायागतधर्मतावबुद्धत्वात्। एतमहं कुलपुत्र सर्वमन्यनासमुद्घातितं बोधिसत्त्वविमोक्षं प्रजानामि। किं मया शक्यं बोधिसत्त्वानामनन्तमध्यधर्मधात्ववतीर्णानां चर्यां ज्ञातुं गुणान् वा वक्तुम्, ये ते सर्वधर्ममन्यनाविहारिणश्च एकपर्यङ्केन च सर्वधर्मधातुं स्फरन्ति। ये ते स्वकायान्तर्गतानि सर्वबुद्धक्षेत्राणि संदर्शयन्ति, एकक्षणेन च सर्वतथागतानुपसंक्रामन्ति। येषामात्मभावे सर्वबुद्धविकुर्वितानि प्रवर्तन्ते। ये एकरोम्ना बहूनभिलाप्यानभिलाप्यानि बुद्धक्षेत्राण्यभ्युत्क्षिपन्ति। ये ते स्वरोमविवरेऽनभिलाप्यानभिलाप्यलोकधातुसंवर्तविवर्तकल्पानादर्शयन्ति। ये एकक्षणेनानभिलाप्यानभिलाप्यकल्पसंवाससमतां समवसरन्ति। ये एकक्षणेन अनभिलाप्यानभिलाप्यान् कल्पान् संसरन्ति॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे दुर्गे जनपदे रत्नव्यूहं नाम नगरम्। तत्र वसुमित्रा नाम भागवती प्रतिवसति। तामुपसंक्रम्य परिपृच्छ–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारकः सिंहविजृम्भिताया भिक्षुण्याः पादौ शिरसाभिवन्द्य सिंहविजृम्भितां भिक्षुणीमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सिंहविजृम्भिताया भिक्षुण्या अन्तिकात् प्रक्रान्तः॥ २५॥

---

[1] E सत्वस्थानम्.
गण्ड. २०

## २८ वसुमित्रा।

अथ खलु सुधनः श्रेष्ठिदारकस्तया महाप्रज्ञाविधुताभासितचित्तः, तं सर्वज्ञज्ञानालोकं
निध्यायन्, तं धर्मतास्वभावबलावभासं समनुपश्यमानः, सर्वसत्त्वरुतविज्ञप्तिकोशं धारणीनयं
दृढीकुर्वन्, तं सर्वतथागतधर्मचक्रसंधारणं धारणीनयं विपुलीकुर्वन्, तं सर्वजगच्छरणं
5 महाकरुणाबलमुपस्तम्भयन्, तं सर्वधर्मनयालोकसुखरसमुत्थानं सर्वज्ञतावेगं प्रत्यवेक्षमाणः,
तां विपुलधर्मधातुमण्डलस्फरणप्रणिधिपरिशुद्धिमनुवर्तमानः, तं सर्वधर्मदिगवभासज्ञानालोक-
मुत्तापयमानः, तत्सर्वधर्मदशदिग्लोकधातुव्यूहस्फरणमभिज्ञानबलं निर्हरन्, तं सर्वबोधिसत्त्व-
कर्मस्मृत्युपादानारम्भनिस्तीरणप्रणिधिं परिपूरयन् अनुपूर्वेण येन दुर्गे जनपदे रत्नव्यूहं
नगरं तेनोपसंक्रान्तो वसुमित्रां भागवतीं परिमार्गन्। तत्र ये पुरुषा वसुमित्राया भागवत्या
10 गुणानभिज्ञा ज्ञानगोचराविधिज्ञाश्च, तेषामेतदभवत्—किमस्य एवं शान्तदान्तेन्द्रियस्य एवं
संप्रजानस्य एवमभ्रान्तस्य एवमविक्षिप्तमानसस्य एवं युगमात्रप्रेक्षिणः एवं वेदनाभिरपर्या-
दत्तचित्तस्य एवमनिमित्तग्राहिणः सर्वरूपगतेषु उत्क्षिप्तचक्षुषः एवमव्यग्रमानसस्य गम्भीर-
चेष्टस्याभिरूपस्य सागरकल्पस्य अक्षोभ्यानवलीनचित्तस्य वसुमित्रया भागवत्या कार्यम्? न
हीदृशा रागरता भवन्ति, न विपर्यस्तचित्ताः। नेदृशानामशुभसंज्ञा समुदाचरति। नेदृशाः
15 कामदासा भवन्ति। नेदृशाः स्त्रीवशगा भवन्ति। नेदृशा मारगोचरे चरन्ति। नेदृशा
मारविषयं निषेवन्ते। नेदृशाः कामपङ्के संसीदन्ति। नेदृशा मारपाशैर्बध्यन्ते। नाकार्यकारिणो
भवन्ति। ये पुनर्वसुमित्राया भागवत्या गुणविशेषाभिज्ञा ज्ञानगोचरप्रत्यक्षा वा, ते एवमाहुः—
साधु साधु कुलपुत्र, सुलब्धास्ते लाभाः, यस्त्वं वसुमित्रां भागवतीं परिप्रष्टव्यां मन्यसे।
नियमेन त्वं बुद्धत्वं प्रार्थयसे। नियमेन त्वं सर्वसत्त्वप्रतिशरणमात्मानं कर्तुकामः। नियमेन
20 त्वं सर्वसत्त्वानां रागशल्यमुद्धर्तुकामः। नियमेन त्वं शुभसंज्ञां विकरितुकामः। एषा कुलपुत्र
वसुमित्रा भागवती नगरशृङ्गाटकस्योत्तरेण स्वगृहे तिष्ठति॥

अथ खलु सुधनः श्रेष्ठिदारक इदं वचनमुपश्रुत्य तुष्ट उदग्र आत्तमनाः प्रमुदितः
प्रीतिसौमनस्यजातो येन वसुमित्राया भागवत्या निवेशनम्, तेनोपसंक्रम्य तद्गृहमद्राक्षीद्विपुलं
च विस्तीर्णं च दशरत्नप्राकारपरिक्षिप्तं दशरत्नतालपङ्क्तिपरिवृतम्। दशभिः परिखाभिर्गन्धो-
25 दकाभिर्दिव्यरत्नोत्पलपद्मकुमुदपुण्डरीकसंछादितसलिलाभिः अष्टाङ्गोपेतवारिपरिपूर्णाभिः
कनकवालिकासंस्तीर्णतलाभिः मनोहरगन्धघुटितसुगन्धीकृतोदकाभिः अनेकरत्नप्राकारो-
पशोभिताभिः समन्तादनुपरिक्षिप्तम्, सर्वरत्नमयभवनविमानकूटागारसुविभक्तोद्विद्धनिर्यूहतोरण-
गवाक्षजालार्धचन्द्रसिंहपञ्जरविचित्रज्योतिर्ध्वजमणिरत्नोज्ज्वलिततेजसम्, असंख्येयविविधरत्न-
प्राकारोपशोभितं वैडूर्यखचितरत्नहारसंस्कृततलं सर्वदिव्यशुभगन्धवासितोपचारं महाकालागरु-
30 धूपधूपितसुगन्धं सर्वानुलेपनविलिप्तोपचारं सर्वरत्नघोटकरचितप्राकारं विविधरत्नप्रत्यर्पित-

१ H भगवती throughout. २ B ˚प्सरां.

जाम्बूनदजालसंछादितकूटं कनकघण्टाजालशतसहस्रघातेरितप्रमुक्तमधुरमनोज्ञनिर्घोषं सर्वरत्नपुष्पमेघप्रसृतप्रकीर्णरत्नकुसुमालंकारं सर्वरत्नविचित्रध्वजोपशोभितद्वारं नानामणिरत्नप्रभाज्वालालोकापर्यन्तनिर्देशं प्रभूतमणिविचित्रद्रुमशाखावज्रशिलाप्रकारं निधिशतसहस्रनिचयाक्षयकोशं दशमहोद्यानप्रतिमण्डितम्। स तत्रापश्यद्वसुमित्रां भागवतीमभिरूपां प्रासादिकां दर्शनीयां परमया शुभवर्णपुष्कलतया समन्वागतां सुवर्णवर्णच्छविमभिनीलकेशीं सुविभक्त- 5
समाङ्गप्रत्यङ्गशरीरां सर्वकामधातुकदेवमनुष्यातिक्रान्तवर्णरूपसंस्थानशोभां ब्रह्मातिरेकस्वरां सर्वसत्त्वरुतमन्त्रविधिज्ञां सर्वस्वरव्यूहोपेतकान्तस्वरां चक्राक्षरव्यूहविमोक्षकौशल्यानुगतां सर्वशिल्पशास्त्रकोशलनिर्याताम् धर्मज्ञानमायाकौशलसुशिक्षितां सर्वाकारबोधिसत्त्वोपायनयप्रतिलब्धां विचित्ररत्नाभरणविभूषितां मनोज्ञकायां सर्वरत्नमयप्रभास्वरजालसंछादितशरीराम् असंख्येयदिव्यमणिरत्नाभरणव्यूहप्रतिमण्डितोज्ज्वलदेहां चिन्तराजमहामणिरत्नाबद्धमकुटां 10
वज्ररत्नविचित्रविहरान्तमणिरत्नोपशोभितमध्यवैडूर्यमणिहारासक्तकण्ठामभिन्नवशवर्तिचर्यांसभागेकप्रणिधानमनुपमहापरिवारामक्षयपुण्यज्ञानमहानिधानकोशाम्। तया च सर्वं तद्गृहं सर्वरत्नमनविमानव्यूहं स्वशरीरनिर्यातया प्रेमणीयया कायप्रह्लादसुखसमजनन्या चित्तौद्बिल्यप्रीतिकरण्या उदारया प्रभया स्फुटमवभासितमपश्यत्॥

अथ खलु सुधनः श्रेष्ठिदारको वसुमित्राया भागवत्याः पादौ शिरसाभिवन्द्य पुरतः 15
प्राञ्जलिः स्थित्वा एवमाह—मया आर्ये, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्या बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्या—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। सा अवोचत्—मया कुलपुत्र विरागकोटीगतो नाम बोधिसत्त्वविमोक्षः प्रतिलब्धः। साहं कुलपुत्र देवानामप्सरोरूपवर्ण- 20
संस्थानारोहपरिणाहातिरेकप्रभास्वरविशुद्धा यथाशयाधिमुक्तानामाभासमागच्छामि। एवं नागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्याणां कन्यारूपवर्णसंस्थानारोहपरिणाहाति- रेकप्रभास्वरविशुद्धा यथाशयाधिमुक्तानामाभासमागच्छामि। ये च सत्त्वा मामुपसंक्रामन्ति रागपर्यवस्थितचेतसः, तेषामहं कुलपुत्र सर्वेषां रागविरागतायै धर्मं देशयामि। ते च तं धर्मं श्रुत्वा रागविरागतामनुप्राप्नुवन्ति, असङ्गविषयं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते। 25
केचिन्मम सहदर्शनेन रागविरागतामनुप्राप्नुवन्ति, प्रामोद्यरतिं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते। केचिदालपनमात्रेण रागविरागतामनुप्राप्नुवन्ति, असङ्गस्वरकोशं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते। केचित्पाणिग्रहमात्रेण रागविरागतामनुप्राप्नुवन्ति, सर्वबुद्धक्षेत्रानुगमनप्रतिष्ठानं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते। केचिदेकासनसमात्रकेण रागविरागतामनुप्राप्नुवन्ति, विसयोगालोकं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते। केचित्प्रेक्षितमात्रेण राग- 30
विरागतामनुप्राप्नुवन्ति, प्रशान्ताकारव्यूहं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते। केचिद्विजृम्भितमात्रेण रागविरागतामनुप्राप्नुवन्ति, परप्रवादिविक्षोभणं च नाम बोधिसत्त्वसमाधिं प्रति-

लभन्ते । केचिन्निमीलनमात्रेण रागविरागतामनुप्राप्नुवन्ति, बुद्धविषयालोकं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते । केचिदालिङ्गनमात्रेण रागविरागतामनुप्राप्नुवन्ति, सर्वजगत्संग्रहापरित्यागगर्भं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते । केचित्परिचुम्बनमात्रेण रागविरागतामनुप्राप्नुवन्ति, सर्वजगत्पुण्यकोशसंस्पर्शनं च नाम बोधिसत्त्वसमाधिं प्रतिलभन्ते । ये केचित्सत्त्वा
5 ममान्तिकमुपसंक्रामन्ति, सर्वांस्तानहमत्रैव विरागकोटीगते असङ्गसर्वज्ञताभूम्यभिमुखे बोधिसत्त्वविमोक्षे प्रतिष्ठापयामि ॥

आह—कुत्र त्वया आर्ये कुशलमूलमवरोपितम्, कीदृशं च कर्मोपचितम्, यस्यास्तवेयमीदृशी संपत्? आह—स्मरामि कुलपुत्र, अतीतेऽध्वनि अत्युच्चगामी नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः
10 शास्ता देवमनुष्याणां बुद्धो भगवान् । तस्य कुलपुत्र अत्युच्चगामिनस्तथागतस्य सत्त्वानामनुकम्पार्थं सुमुखां नाम राजधानीं प्रविशतः इन्द्रकीलमाक्रामतः सर्वं तन्नगरं प्राकम्पत । विपुलविस्तीर्णं च अनेकरत्नमयं संस्थितमभूत् अनेकरत्नप्रभाव्यूहं विविधरत्नपुष्पाभिकीर्णं नानादिव्यतूर्यप्रमुक्तनिर्घोषम् । उदाराप्रमेयदेवकायमेघप्रच्छन्नं च अन्तरीक्षं संस्थितमभूत् । अहं च कुलपुत्र तेन समयेन सुमतिर्नाम श्रेष्ठिभार्या अभूवम् । ततो मे बुद्ध-
15 प्रातिहार्यसंचोदितया स्वामिना सार्धं प्रधावित्वा तस्य तथागतस्य वीथीमुखमुपसंक्रान्तस्य उदारप्रसादजातया एका रत्नकाकणिः प्रतिपादिता । तदा च मञ्जुश्रीः कुमारभूतस्तस्य भगवतोऽत्युच्चगामिनस्तथागतस्योपस्थायकोऽभूत् । तेनाहमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादिता । एतमहं कुलपुत्र विरागकोटीगतं बोधिसत्त्वविमोक्षं प्रजानामि । किं मया शक्यमनन्तोपायज्ञानकौशलप्रतिष्ठितानां बोधिसत्त्वानां विपुलाक्षयपुण्यकोशानामपराजितज्ञान-
20 विषयाणां चर्यां ज्ञातुम्, गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे शुभपारंगमं नाम नगरम् । तत्र वेष्ठिलो नाम गृहपतिश्चन्दनपीठं तथागतचैत्यं पूजयति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको वसुमित्राया भागवत्याः पादौ शिरसाभिवन्द्य
25 वसुमित्रां भागवतीमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य वसुमित्राया भागवत्या अन्तिकात् प्रक्रान्तः ॥ २६ ॥

———

## २९ वेष्ठिलः ।

अथ खलु सुधनः श्रेष्ठिदारको येन शुभपारंगमे नगरे वेष्ठिलस्य गृहपतेर्निवेशनं तेनोपजगाम । उपेत्य वेष्ठिलस्य गृहपतेः पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । सोऽवोचत्–अहं कुलपुत्र अपर्यादत्तकोटीगतस्य बोधिसत्त्वविमोक्षस्य लाभी । न मम कुलपुत्र संतानात्तथागतः परिनिर्वृतो न परिनिर्वाति न परिनिर्वास्यति सर्वलोकधातुषु अत्यन्तपरिनिर्वाणेन अन्यत्र वैनयिकसत्त्ववशमुपादाय । सोऽहं कुलपुत्र चन्दनपीठस्य तथागतचैत्यस्य द्वारमुद्घाटयामि । तत्र मे चैत्यद्वारमुद्घाटयतोऽक्षयबुद्धवंशव्यूहो नाम बोधिसत्त्वसमाधिः प्रतिलब्धः । एतं चाहं कुलपुत्र समाधिं चित्तक्षणे चित्तक्षणे समापद्ये । सर्वत्र चित्तक्षणे अनेकाकारविशेषतामधिगच्छामि ॥

आह–क्व एतस्य आर्य समाधेर्विषयः? आह–एतं मम कुलपुत्र समाधिं समापन्नस्य अस्मिन् लोकधातुवंशे बुद्धपरंपरया काश्यपप्रमुखाः सर्वतथागताः कनकमुनिक्रकुच्छन्दविश्वभुक्शिखिविपश्यितिष्यपुष्ययशोत्तरपद्मोत्तरप्रमुखाः सर्वतथागता अभिमुखा भवन्ति । बुद्धदर्शनानुसंधौ बुद्धपरंपरानुपच्छेदेन चित्तक्षणे चित्तक्षणे बुद्धशतं पश्यामि । तदनन्तरेण चित्तेन बुद्धसहस्रमवतरामि । तदनन्तरेण चित्तेन बुद्धशतसहस्रमवतरामि । एवं बुद्धकोटीं बुद्धकोटीशतं बुद्धकोटीसहस्रं बुद्धकोटीशतसहस्रं बुद्धकोट्ययुतं बुद्धकोटीनियुतं बुद्धकोटीकङ्करं बुद्धकोटीविम्बरम् । तदनन्तरेण चित्तेन यावदनभिलाप्यानभिलाप्यबुद्धोत्पादपरंपरामवतरामि । तदनन्तरेण चित्तेन जम्बुद्वीपपरमाणुरजःसमांस्तथागतानवतरामि । तदनन्तरेण चित्तेन यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमांस्तथागतानवतरामि । तेषां च तथागतानां प्रथमचित्तोत्पादसंभारपरंपरामवतरामि । प्रथमचित्तोत्पादप्रतिलम्भविकुर्वितमवतरामि । प्रणिधानविमात्रताभिनिर्हारविशुद्धिमवतरामि । चर्याविशुद्धिमवतरामि ।[1] पारमितापरिपूरिमवतरामि । सर्वबोधिसत्त्वभूमिसमुदागममवतरामि । क्षान्तिप्रतिलम्भविशुद्धिमवतरामि । मारबलविकिरणविनर्दितमवतरामि । अभिसंबोधिविकुर्वितव्यूहमवतरामि । बुद्धक्षेत्रविशुद्धिविमात्रतामवतरामि । सत्त्वपरिपाकविमात्रतामवतरामि । पर्षत्संनिपातविमात्रतामवतरामि । प्रभामण्डलविमात्रतामवतरामि । धर्मचक्रप्रवर्तनवृषभितामवतरामि । बुद्धविकुर्वितप्रातिहार्यमवतरामि । सुविभक्तां संभिन्नां चैषां धर्मदेशनां स्मरामि, संधारयामि, स्मृत्या चोद्गृह्णामि । गत्या प्रविचिनोमि । मत्या प्रविभजामि । बुद्ध्यानुगच्छामि । प्रज्ञया प्रकाशयामि । अनागतबुद्धपरंपरां च मैत्रेयप्रमुखानवतरामि । एकचित्तक्षणे बुद्धशतमवतरामि । तदनन्तरेण चित्तेन बुद्धसहस्रमवतरामि । तदनन्तरेण चित्तेन यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमांस्तथागतानवतरामि । तेषां च तथागतानां प्रथमचित्तो-

---

1 B om. चर्याविशुद्धिमवतरामि.

त्पादसंभारपरंपरामवतरामि । यावत्सुविभक्तां सुभिन्नां चैषां धर्मदेशनां स्मरामि, संधारयामि, स्मृत्या चोद्गृह्णामि । गत्या प्रविचिनोमि । मत्या प्रविभजामि । बुद्ध्या अनुगच्छामि । प्रज्ञया प्रकाशयामि । यथा चेह लोकधातुवंशे पूर्वान्तापरान्तपर्यापन्नानां बुद्धपरंपरां पश्यामि, अवतरामि, तथा दशसु दिक्षु अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमेषु अतीतानागतेषु लोकधातुवंशेषु सर्वतथागतपरंपरामवतरामि । तेषां च तथागतानां प्रथमचित्तोत्पादसंभारपरंपरामवतरामि । तां च बुद्धपरंपरावतारमव्यवच्छिन्नां निश्चयमवतरामि । अतुलं श्रद्धागमनीयं बोधिसत्त्ववीर्यव्यवसायगम्यं बोधिसत्त्ववीर्यवेगनिर्घर्षणमसहायं सर्वलोकेन सर्वश्रावकप्रत्येकबुद्धैः स्वाद्वियानव्यक्रान्तैश्च बोधिसत्त्वैः प्रत्युत्पन्नानां च दशसु दिक्षु सर्वलोकधातुषु वैरोचनप्रमुखानां तथागतानां परंपरामवतरामि । एकचित्तक्षणे बुद्धशतं पश्यामि अवतरामि । तदनन्तरेण चित्तेन बुद्धसहस्रमवतरामि । तदनन्तरेण चित्तेन यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमांस्तथागतानवतरामि । यं च यदा तथागतं द्रष्टुमाकाङ्क्षामि, तं तदा पश्यामि । यच्च तैर्बुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते, तत्सर्वं शृणोमि । श्रुत्वा चोद्गृह्णामि । स्मृत्या संधारयामि । गत्या प्रविचिनोमि । मत्या प्रविभजामि । बुद्ध्या अनुगच्छामि । प्रज्ञया प्रकाशयामि । एतमहं कुलपुत्र अपरिनिर्वाणकोटीगतं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यं व्यवकीर्णक्षणज्ञानप्रतिलब्धानां बोधिसत्त्वानां क्षणकोटीसमाधिव्यूहविहारिणां तथागतदिवसानवरान्तानां सर्वकल्पविकल्पसमतानुगतानां सर्वबुद्धसमतासमाध्यनुबद्धानामात्मसत्त्वबुद्धद्वयविहारिणां प्रकृतिप्रभास्वरधर्मव्यूहमण्डलानां ज्ञानचक्षुर्लोकजालस्फरणानां सर्वतथागतधर्ममुद्राविकोपितविहारिणां सर्वधर्मधातुनिश्चयज्ञानविषयाणां सर्वतथागतधर्मदेशनाविज्ञप्तिज्ञानविषयाणां चर्यां ज्ञातुम्, गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे पोतलको नाम पर्वतः । तत्र अवलोकितेश्वरो नाम बोधिसत्त्वः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । तस्यां वेलायामिमे गाथे अभाषत—

गच्छो हि सुधन गिरीजलराजमध्ये
गिरिराजपोतलकि शोभनि शूरभागे ।
रत्नामय तरुवर कुसुमाभिकीर्णे-
सुवानपुष्करिणिप्रस्रवणोपपेतम् ॥ १ ॥
तस्मिंश्च पर्वतवरे विहराति धीरो
अवलोकितेश्वर विदू जगतो हिताय ।
तं गच्छ पृच्छ सुधना गुण नायकानां
देशिष्यते विपुलशोभि नयप्रवेशम् ॥ २ ॥

अथ खलु सुधनः श्रेष्ठिदारको वेष्ठिलस्य गृहपतेः पादौ शिरसाभिवन्द्य वेष्ठिलं गृहपतिमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य वेष्ठिलस्य गृहपतेरन्तिकात् प्रक्रान्तः ॥ २७ ॥

---

1 S °संभार°

## ३० अवलोकितेश्वरः ।

अथ खलु सुधनः श्रेष्ठिदारको वेष्ठिलस्य गृहपतेरनुशासनीमनुविचिन्तयन्, तं बोधिसत्त्वाधिमुक्तिकोशं निगमयन्, तद्बोधिसत्त्वानुस्मृतिबलमनुस्मरन्, तं बुद्धनेत्रपरंपराबलं संधारयन्, तं बुद्धानन्तर्यानुसंधिमनुगच्छन्, तं बुद्धनामश्रोत्रानुगममनुस्मरन्, तं बुद्धधर्मदेशनानयमनुलोमयन्, तं बुद्धधर्मसमुदागमव्यूहमवतरन्, तद्बुद्धाभिसंबोधिविनिर्दितमधिमुच्यमानः, 5 तदचिन्त्यं तथागतकर्माभिमुखीकुर्वन् अनुपूर्वेण येन पोतलकः पर्वतस्तेनोपसंक्रम्य पोतलकं पर्वतमभिरुह्य अवलोकितेश्वरं बोधिसत्त्वं परिमार्गन् परिगवेषमाणोऽद्राक्षीदवलोकितेश्वरं बोधिसत्त्वं पश्चिमदिक्पर्वतोत्सङ्गे उत्ससरःप्रस्रवणोपशोभिते नीलतरुणकुण्डलकजातमृदुशाद्वलतले महावनविवरे वज्रतलशिलायां पर्यङ्कं बद्ध्वा उपविष्टं नानारत्नशिलातलनिषण्णापरिमाणबोधिसत्त्वगणपरिवृतं धर्मं देशयमानं सर्वजगत्संग्रहविषयं महामैत्रीमहाकरुणामुखोद्योतं नाम धर्मपर्यायं संप्रकाशयन्तम् । दृष्ट्वा च पुनस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः प्रहर्षितविकसितानिमिषनयनः कृताञ्जलिपुटः कल्याणमित्रप्रसादवेगानुगताविक्षिप्तचेताः कल्याणमित्रेषु सकलबुद्धदर्शनसंज्ञी कल्याणमित्रप्रभवसर्वधर्ममेघसंप्रतीच्छनसंज्ञी कल्याणमित्राधीनसर्वगुणप्रतिपत्तिसंज्ञी कल्याणमित्रसमवधानदुर्लभसंज्ञी कल्याणमित्रोद्भवदशबलज्ञानरत्नप्रतिलाभसंज्ञी कल्याणमित्रसमुद्भवाक्षयज्ञानालोकसंज्ञी कल्याणमित्राश्रयसंवर्धितपुण्यप्रवालसंज्ञी कल्याणमित्रसंप्रकाशितसर्वज्ञताद्वारसंज्ञी कल्याणमित्रोद्देशितमहाज्ञानसागरावतारसंज्ञी कल्याणमित्रसंजनितसर्वज्ञतासंभारसमुदयसंज्ञी येन अवलोकितेश्वरो बोधिसत्त्वस्तेनाभिजगाम ॥

अथ खलु अवलोकितेश्वरो बोधिसत्त्वः सुधनं श्रेष्ठिदारकं दूरत एव आगच्छन्तमवलोक्य आमन्त्रयामास—एहि । स्वागतं ते अनुपमोदाराचिन्त्यमहायानसंप्रस्थित जातमूलकविविधदुःखोपद्रुताप्रतिशरणसर्वजगत्परित्राणाशय सर्वलोकातिक्रान्तानुपमाप्रमेय सर्वबुद्धधर्माध्यक्षताभिलापिन् महाकरुणावेगाविष्ट सर्वजगत्परित्राणमते समन्तभद्रदर्शनचर्याभिमुख महाप्रणिधानमण्डलपरिशोधनचित्त सर्वबुद्धधर्ममेघसंधारणाभिलषितकुशलमूलोपचयातृप्ताशयकल्याणमित्रानुशासनीसम्यक्प्रवृत्तमञ्जुश्रीज्ञानसागरसंभूत गुणकमलाकर बुद्धाधिष्ठानप्रतिलाभाभिमुख समाध्यालोकवेगप्रतिलब्ध सर्वबुद्धधर्ममेघसंधारणाभिलषितचित्त 25 बुद्धदर्शनप्रीतिप्रसादवेगप्रहर्षितमानस अचिन्त्याप्रमाणसुचरितवेगाभिष्यन्दितचेतः गुणप्रतिपत्तिवेगविशुद्धपुण्यज्ञानकोश स्वयमभिज्ञामुखसर्वज्ञज्ञानमात्रवेगपरसंदर्शाभिप्राय महाकरुणावेगविपन्नमूलतथागतज्ञानालोकवेग संधारणमते ॥

अथ खलु सुधनः श्रेष्ठिदारको येन अवलोकितेश्वरो बोधिसत्त्वस्तेनोपसंक्रम्य अवलोकितेश्वरस्य बोधिसत्त्वस्य पादौ शिरसाभिवन्द्य अवलोकितेश्वरं बोधिसत्त्वमनेकशतसहस्र- 30

---

1 S मृदुमार्दव°.

कृत्वः प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह-मया आर्य, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः-कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

५ अथ खलु अवलोकितेश्वरो बोधिसत्त्वो जाम्बूनदसुवर्णवर्णं विचित्राप्रमेयप्रभाजालवाहव्यूहमेघप्रमुञ्चनं दक्षिणं बाहुं प्रसार्य लक्षणानुव्यञ्जनविसृतविविधविमलामितकायचित्तप्रह्लादसंजननरश्मिप्रतानसंकुसुमितं पाणिं सुधनस्य श्रेष्ठिदारकस्य मूर्ध्नि प्रतिष्ठाप्य एवमाह-साधु साधु कुलपुत्र, येन ते अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । अहं कुलपुत्र महाकरुणामुखाविलम्बं नाम बोधिसत्त्वचर्यामुखं प्रजानामि । एतच्च कुलपुत्र

१० महाकरुणामुखाविलम्बं बोधिसत्त्वचर्यामुखं सर्वजगदसम्भिन्नसत्त्वपरिपाकविनयनप्रवृत्तं समन्तमुखस्रोतविश्रितसत्त्वसमूहविनयपर्युपस्थानम् । सोऽहं कुलपुत्र महाकरुणामुखाविलम्बबोधिसत्त्वचर्यामुखे प्रतिष्ठितः सर्वतथागतानां च पादमूलान्न विचलामि, सर्वसत्त्वकार्येषु च अभिमुखस्तिष्ठामि। दानेनापि सत्त्वान् संगृह्णामि। प्रियवादितया अर्थक्रियया समानार्थतयापि सत्त्वान् संगृह्णामि । रूपकायविदर्शनेनापि सत्त्वान् परिपाचयामि। अचिन्त्यवर्णसंस्थानरूप-

१५ दर्शनविशुद्ध्या रश्मिजालोत्सर्गेणापि सत्त्वान् प्रह्लाद्य परिपाचयामि। यथाशयघोषोदाहारेणापि यथाभिमतेर्यापथसंदर्शनेनापि विविधाधिमुक्तिसभागधर्मदेशनयापि नानारूपविकुर्वितेनापि कुशलधर्मोपचयप्रवृत्तसत्त्वचित्तसंचोदनयापि आशयानुरूपविचित्रापरिमाणनिर्माणसंदर्शनेनापि नानाजात्युपपन्नसत्त्वसभागरूपसंदर्शनेनापि एकावासनिवासेनापि सत्त्वान् संगृह्णामि परिपाचयामि। तेन मया कुलपुत्र इदं महाकरुणामुखाविलम्बं बोधिसत्त्वचर्यामुखं परिशोधयता

२० सर्वजगत्प्रतिशरणप्रणिधिरुत्पादितः, यदुत सर्वसत्त्वप्रपातभयविगमाय सर्वसत्त्वसंत्रासकभयप्रशमनाय सर्वसत्त्वसंमोहभयविनिवर्तनाय सर्वसत्त्वबन्धनभयसमुच्छेदाय सर्वसत्त्वजीवितोपरोधोपक्रमभयव्यावर्तनाय सर्वसत्त्वोपकरणवैकल्यभयापनयनाय सर्वसत्त्वजीविकाभयव्युपशमनाय । सर्वसत्त्वाश्लोकभयसमतिक्रमणाय सर्वसत्त्वसांसारिकभयोपशमनाय सर्वसत्त्वपर्षच्छारद्यभयविगमाय सर्वसत्त्वमरणभयव्यतिक्रमाय सर्वसत्त्वदुर्गतिभयविनिवर्तनाय सर्वसत्त्व-

२५ तमोन्धकारविषमगत्यप्रत्युदावर्त्यावभासकरणाय सर्वसत्त्वविषभागसमवधानभयात्यन्तविगमाय सर्वसत्त्वप्रियविप्रयोगभयनिरोधाय सर्वसत्त्वाप्रियसंवासभयापनयनाय सर्वसत्त्वकायपरिपीडाभयविसंयोगाय सर्वसत्त्वचित्तपरिपीडनभयनिर्मोक्षणाय सर्वसत्त्वदुःखदौर्मनस्योपायाससमतिक्रमाय सर्वजगत्प्रतिशरणप्रणिधानाभिनिर्हारः कृतः । अनुस्मृतिमुखं च मे सर्वलोकेऽधिष्ठितं सर्वसत्त्वभयव्युपशमनाय । स्वनामचक्रं मे सर्वलोकेऽभिविज्ञप्तं सर्वसत्त्वभय-

३० विगमाय । सर्वजगदनन्तावृतिभेदरामणो मे कायेऽधिष्ठितो यथाकालजगत्प्रतिविज्ञप्तये । सोऽहं कुलपुत्र, अनेनोपायेन सत्त्वान् सर्वभयेभ्यः परिमोच्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य अविवर्त्यान् करोमि बुद्धधर्मप्रतिलाभाय । एतमहं कुलपुत्र महाकरुणामुखा-

विलम्बस्य बोधिसत्त्वचर्यामुखस्य लाभी। किं मया शक्य समन्तभद्राणा बोधिसत्त्वानां सर्वबुद्धप्रणिधानमण्डलविशुद्धाना समन्तभद्रबोधिसत्त्वचर्यागतिंगताना कुशलधर्माभिसंस्कारा-व्यवच्छिन्नस्रोताना सर्वबोधिसत्त्वसमाधिस्रोत्रसदासमाहिताना सर्वकल्पसवासचर्यानिर्विस्रोताना सर्वत्र अध्वनयानुगतस्रोताना सर्वलोकधात्वावर्तपरिवर्तस्रोतकुशलाना सर्वसत्त्वाकुशलचित्तव्युपशमकरस्रोताना सर्वसत्त्वकुशलचित्तसवर्धनस्रोताना सर्वसत्त्वससारस्रोतोविनिवर्तिकरस्रोताना चर्यां ज्ञातु गुणान् वा वक्तुम्॥ 5

तत्रेदमुच्यते—

कृत्वा प्रदक्षिणु स्तवित्व च गौरवेण
प्रक्रान्त दक्षिणपथ सुधन. सुदान्त।
सो पश्यते रत्नपर्वतकन्दरस्य 10
अवलोकितेश्वरमृषिं करुणाविहारिम्॥ १॥
वज्रामये गिरितटे मणिरत्नचित्रे
सिंहासने पद्मगर्भि निषण्ण धीरो।
देवासुरैर्भुजगकिन्नरराक्षसैश्च
परिवारितो जिनसुतैर्वदि तेष धर्मम्॥ २॥ 15
दृष्ट्वोपजात अतुला सुधनस्य प्रीति
उपगम्य वन्दति क्रमौ गुणसागरस्य।
सोवाच देहि मम आर्य कृपा जनित्वा
शिक्षा तु अद्य लभे इम भद्रचर्याम्॥ ३॥
बाहु प्रणम्य विमल शतपुण्यचित्र 20
प्रभमेघजाल विपुल शुभ मुञ्चमानः।
मूर्ध्नि स्थिहित्व सुधनस्य विशुद्धसत्त्वो
अवलोकितेश्वर गिरू वचन भणाति॥ ४॥
एकं विमोक्षमुख जानमि बुद्धपुत्र
सर्वजिनान करुणाघनज्ञानगर्भम्। 25
सभूत सर्वजगत्रायणसप्रहाय
सर्वत्र वर्तति समाप्य य आत्मप्रेम॥ ५॥
त्रायामि सर्वजनतां व्यसनैरनेकै[1]
ये गाढबन्धनगतारिपु हस्तप्राप्ताः।
गात्रेषु विद्ध तथ चारकसनिरुद्धा 30
मुच्यन्ति बन्धनगता मम नाम श्रुत्वा॥ ६॥

1 B विपुलै
गन्ड २१

उत्सृष्ट वध्य नृपतीन कृतापराधाः
क्षिप्ता इषु न च क्रमन्ति शरीरि तेषाम् ।
छियन्ति शस्त्र परिवर्तति तीक्ष्ण धारा
ये नामधेयु मम तत्र अनुस्मरन्ति ॥ ७ ॥

राजान मध्यगत ये च विवादप्राप्ता
विजिनन्ति सर्वरिपवोऽथ शुभे लभन्ते ।
वर्धन्ति सर्वे यश मित्रकुले धनानि
मोन्ती अधर्षिय स्मरित्वन मह्य नाम ॥ ८ ॥

चोरंभया अरिभया अटवीप्रवेशाः
सिंहऋक्षद्वीपिपन्नगरीसृगव्यालकीर्णाः[१] ।
गच्छन्ति निर्भय जिनित्वन सर्वशत्रून्
ये नामधेयु मम केचिदनुस्मरन्ति ॥ ९ ॥

क्षिप्ता महागिरितटीतु प्रदुष्टचित्तै-
रङ्गारकर्षु ज्वलिता अपि चो वधार्थम् ।
पद्माङ्कुरा जलनिधि ज्वलना भवन्ति
ये नामधेयु मम केचिदनुस्मरन्ति ॥ १० ॥

प्रक्षिप्त सागरजले न मरेन्ति तत्र
नद्यां न चोह्यति न दह्यति चाग्निमध्ये ।
सर्वे अनर्थ न भवन्त्यपि चार्थसिद्धिः
नाम मम अनुस्मरित्व मुहूर्तकं पि ॥ ११ ॥

हडिनिगडबन्धनिगडाश्च तथा कुदण्डा
अवमानना तथ विमानन ढम्भनाश्च ।
आक्रोशताडनविभर्त्सनतर्जनाश्च
मम नामधेयु स्मरमाण लभन्ति मोक्षम् ॥ १२ ॥

ये वैरिणो विवरछिद्रगवेषिणश्च
नित्यप्रदुष्टमन ये च अवर्णवादी ।
सहदर्शनेन तद मैत्रमना भवन्ति
मेष्यन्ति घर्षि श्रुत मह्य स्मरित्व नाम ॥ १३ ॥

वेतालमन्त्र कखोर्द सदा प्रयुक्ता
घातार्थ तेष रिपवः स्तिमिता भवन्ति ।

---

१ S तिमिरा.

तेष शरीरि न क्रमन्ति विषा अशेषा
　ये नामधेयु मम केचिदनुस्मरन्ति ॥ १४ ॥
नागेन्द्राक्षसगणैर्गरुडैः पिशाचैः
　कुम्भाण्डपूतनविहेडकरौद्रचित्तैः ।
ओजोहरैर्भयकरैः सुपिनान्तरेऽपि　　5
　शाम्यन्ति सर्वि मम नाम अनुस्मरित्वा ॥ १५ ॥
मातापितासुहृदज्ञातिकबान्धवेहि
　नाविप्रयोगु न पि चाप्रियसंप्रयोगः ।
न धनक्षयो नापि उपैति दरिद्रभावं
　नामं ममा अनुसरित्व मुहूर्तकं पि ॥ १६ ॥　　10
न च गच्छति च्युत इतो नरकं अवीचिं
　न तिरश्चयोनि न च प्रेत न चाक्षणानि ।
देवे मनुष्य उपपद्यति शुद्धसत्त्वो
　यो नामधेयु मम केचिदनुस्मरन्ति ॥ १७ ॥
न च अन्धकाणबधिरा[1] न पि चर्चिगात्रा　　15
　न च रौद्र खञ्जा अथ चाटक प्रेक्षणीया ।
सर्वेन्द्रियैररिकला बहुकल्पकोट्यो
　भोन्ती नरा मम स्मरित्विन नामधेयम् ॥ १८ ॥
अवलोकितेति मम ते सुगतिं व्रजन्ति
　यो पुष्पमुष्टि मम ओकिरते शरीरे ।　　20
धूपांश्च धूपयति यश्च ददाति छत्रं
　विस्तारिकं पुज करोति प्रसन्नचित्तो
मम बुद्धक्षेत्रि स च भेष्यति दक्षिणीयः ॥ १९ ॥
उपपद्यते इतु च्यवित्वन शुद्धसत्त्वो
　बुद्धान संमुख दशादिशि लोकधातौ ।　　25
बुद्धांश्च पश्यति शृणोति च तेष धर्मं
　ये नामधेयु मम केचिदनुस्मरन्ति ॥ २० ॥
एते तदान्य क्षयितु निमितुं न शक्या
　यावद्युपायि अहु सत्त्व विनेमि लोके ।
एको निमोक्ष मम भाषितु बुद्धपुत्र　　30
　नाहं गुणान् गुणधराण विजानि सर्वान् ॥ २१ ॥

---

1 S अन्धकाणबधिरा.

अद्यापदाकृतु दशदिशि लोकधातौ
कल्याणमित्र समुपासित सूघनेन ।
न च तृप्तु धर्म श्रुणमाणु जिनौरसानां
कस्मान्न प्रीति भवति श्रुणमान धर्मम् ॥ २२ ॥

5 तेन खलु पुनः समयेन अनन्यगामी नाम बोधिसत्त्वः पूर्वस्यां दिशि गगनतलेनाऽऽगत्य सहाया लोकधातोश्चक्रवालशिखरे प्रत्यष्ठात् । समनन्तरप्रतिष्ठापितौ च अनन्यगामिना बोधिसत्त्वेन सहाया लोकधातोश्चक्रवालशिखरे पादौ, तत्क्षणादियं सहालोकधातुः षड्विकारं प्राकम्पत, अनेकरत्नमयी च संस्थिताभूत् । तथारूपा च अनन्यगामिना बोधिसत्त्वेन कायात् प्रभा प्रमुक्ता, यया प्रभया सर्वचन्द्रसूर्यप्रभा पर्यादत्ताः, सर्वदेवनागयक्षगन्धर्वा-
10 सुरगरुडकिंनरमहोरगशक्रब्रह्मलोकपालानामग्निमणिज्योतिषां च प्रभा जिह्मीकृताः, [1]सर्वमहानरकाश्चावभासिताः, सर्वतिर्यग्योनियमलोकगतिगहनं चावभासितम्, सर्वापायदुःखानि च तदनन्तरं प्रशान्तानि । सर्वसत्त्वानां च क्लेशा न बाधन्ते । विविधशोकशल्यदुःखानि च प्रस्रब्धानि । सर्वं चेदं बुद्धक्षेत्रं सर्वरत्नमेघैरभिप्रवर्षन् सर्वपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाव्यूहसर्वपूजामेघैरभिप्रवर्षन् भगवन्तमुपसंक्रान्तः । [2]स चास्याश्रयः सर्व-
15 सत्त्वभवनप्रतिभासप्राप्तो यथाशयसत्त्वसंतोषणाभिमुखः । तस्मिंश्च पोतलके पर्वतेऽवलोकितेश्वरस्य बोधिसत्त्वस्यान्तिकमुपसंक्रान्तः संदृश्यते स्म ॥

अथ खलु अवलोकितेश्वरो बोधिसत्त्वः सुधनं श्रेष्ठिदारकमेतदवोचत्—पश्यसि कुलपुत्र अनन्यगामिनं बोधिसत्त्वमिह पर्षन्मण्डले संप्राप्तम् ? आह—पश्यामि आर्य । आह—एतं कुलपुत्र अनन्यगामिनं बोधिसत्त्वमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधि-
20 सत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारकोऽवलोकितेश्वरस्य बोधिसत्त्वस्य पादौ शिरसाभिवन्द्य अवलोकितेश्वरं बोधिसत्त्वमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य अवलोकितेश्वरस्य बोधिसत्त्वस्यान्तिकात्प्रक्रान्तः ॥ २८ ॥



---

1 B om. सर्वमहानरकाश्चावभासिताः. २ B om. स चास्य...मुपसंक्रान्तः

## ३१ अनन्यगामी ।

अथ खलु सुधनः श्रेष्ठिदारकोऽवलोकितेश्वरस्य बोधिसत्त्वस्य ज्ञानगाथालब्धचित्तोऽवलोकितेश्वरस्य बोधिसत्त्वस्यावितृप्तो दर्शनेन वाणीमप्रतिवहन् येन अनन्यगामी बोधिसत्त्वस्तेनोपसंक्रम्य अनन्यगामिनो बोधिसत्त्वस्य पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं 5 बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

सोऽवोचत्—अहं कुलपुत्र समन्तमुखनिर्जवनस्य बोधिसत्त्वविमोक्षस्य लाभी । आह—कतमस्य त्वया आर्य तथागतस्य पादमूलादेष समन्तमुखनिर्जवनो नाम बोधिसत्त्वविमोक्षः 10 प्रतिलब्धः ? कियद्दूरे वा स इतो लोकधातुः ? कियच्चिरोच्चलितो वासि ततो लोकधातोः ? आह—दुर्विज्ञेयमेतत्कुलपुत्र स्थानं सदेवमानुषासुरेण लोकेन सश्रमणब्राह्मणिकया प्रजया—यदुत बोधिसत्त्वपराक्रमी बोधिसत्त्ववीर्यानिवर्त्यता बोधिसत्त्ववीर्यसंहार्यता । नेदं कुलपुत्र शक्यं कल्याणमित्रापरिगृहीतैर्बुद्धासमन्वाहृतैरनुपचितकुशलमूलैरपरिशुद्धाशयैरप्रतिलब्धबोधिसत्त्वेन्द्रियैः प्रज्ञाचक्षुर्विरहितैः श्रोतुं वा संधारयितुं वा अधिमोक्तुं वा अवतरितुं 15 वा । आह—वदतु मे आर्यः । अधिमोक्ष्यामि श्रद्धास्यामि बुद्धानुभावेन कल्याणमित्रपरिग्रहेण च । सोऽवोचत्—अहं कुलपुत्र पूर्वस्यां दिशि श्रीगर्भवत्या लोकधातोरागच्छामि समन्तश्रीसंभवस्य तथागतस्य बुद्धक्षेत्रात् । तस्य मे कुलपुत्र समन्तश्रीसंभवस्य तथागतस्य पादमूलादेष समन्तमुखनिर्जवनो नाम बोधिसत्त्वविमोक्षः प्रतिलब्धः । ततश्च मे कुलपुत्र श्रीगर्भवत्या लोकधातोरुच्चलितस्य अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाः कल्पाः क्षीणाः । 20 एकैकेन च चित्तोत्पादेन अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् पदव्यवहारान् व्यतिक्रमामि । एकैकेन च पदव्यवहारेण अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानि बुद्धक्षेत्राण्यतिक्रमामि । सर्वाणि च तानि बुद्धक्षेत्राणि अविरहितानि तथागतैः । अवतरामि सर्वांश्च तान् बुद्धान् भगवतः । अनुत्तरया मनोमय्या अनभिसंस्कारधर्मधातुमुद्रामुद्रितया तथागतानुज्ञातया सर्वबोधिसत्त्वप्रहर्षसंजनन्या तथागतं पूजयामि । यावतश्च 25 तासु लोकधातुषु सत्त्वसमुद्रान् पश्यामि, सर्वेषां च तेषां चित्तसागरानवतरामि, सर्वेषां च तेषामिन्द्रियचक्रं परिज्ञाय यथाशयाधिमुक्तितो रूपकायं संदर्शयामि । धर्मघोषमुदीरयामि । प्रभामण्डलमुत्सृजामि । विविधोपकरणसंपदमुपसंहरामि । सकायं चैषामधितिष्ठामि, यदुत परिपाकविनयप्रयोगाप्रतिप्रस्रब्धये । यथा च पूर्वस्या दिशो निर्यामि, एवं दक्षिणायाः पश्चिमायाः उत्तराया उत्तरपूर्वायाः पूर्वदक्षिणाया दक्षिणपश्चिमायाः पश्चिमोत्तराया अध 30

---

१ B om. बुद्धक्षेत्राणि.

ऊर्ध्वाया दिशो निर्यामि । एतमहं कुलपुत्र समन्तमुखनिर्जवनं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यं सर्वत्रानुगतानां बोधिसत्त्वानां समतादिगभिमुखानामसंभिन्नज्ञानविषयाणां सर्वधर्मधातुसुविभक्तशरीराणां यथाशयाधिमुक्तसर्वसत्त्वानुविचारिणां सर्वक्षेत्रस्फरणकायानां सर्वधर्मपथानुगतानां त्र्यध्वपथसमतानुप्राप्तानां सर्वदिक्पथसमतानुसरणानां सर्वजगत्पथ-5 विरोचनानां तथागतपथाविकल्पानामसङ्गसर्वपथानुगतानामनालयपथप्रतिष्ठितानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इहैव दक्षिणापथे द्वारवती नाम नगरी । तत्र महादेवो देवः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ कथं-बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

10 अथ खलु सुधनः श्रेष्ठिदारकोऽनन्यगामिनो बोधिसत्त्वस्य पादौ शिरसाभिवन्द्य अनन्यगामिनं बोधिसत्त्वमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य अनन्यगामिनो बोधिसत्त्वस्यान्तिकात् प्रक्रान्तः ॥ २९ ॥



## ३२ महादेवः ।

अथ खलु सुधनः श्रेष्ठिदारको विपुलबोधिसत्त्वचर्यानुगतचित्तोऽनन्यगामिनो बोधिसत्त्वस्य ज्ञानगोचरं स्पृहयमाणरूपो महाभिज्ञाभिनिर्हारविषयगुणविशेषदर्शी दृढवीर्यसंनाह[1]प्रहर्षप्राप्तोऽचिन्त्यविमोक्षविक्रीडितानुगताशयः बोधिसत्त्वगुणभूमौ प्रतिपद्यमानः समाधिभूमिं विचारयमाणो धारणीभूमौ प्रतितिष्ठमानः प्रणिधानभूमिमवतरन् प्रतिसंविद्भूमावनुशिक्षमाणो बलभूमिं निष्पादयमानोऽनुपूर्वेण येन द्वारवती नगरी तेनोपसंक्रम्य महादेवं पर्यपृच्छत् । तस्य महाजनकाय आरोचयामास—एष कुलपुत्र महादेवो नगरशृङ्गाटके देवागारे औदारिकेणात्मभावेन सत्त्वानां धर्मं देशयति । अथ खलु सुधनः श्रेष्ठिदारको येन महादेवस्तेनोपसंक्रम्य महादेवस्य पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु महादेवो देवश्चतुर्दिशं चतुरः पाणीन् प्रसार्य चतुर्भ्यो महासमुद्रेभ्यः परमशीघ्रजवेन वार्यानीय स्वमुखं प्रक्षाल्य सुधनं श्रेष्ठिदारकं सुवर्णपुष्पैरभ्यवकीर्य एवमाह—सुदुर्लभदर्शना हि कुलपुत्र बोधिसत्त्वाः, परमदुर्लभश्रवणा आश्चर्यप्रादुर्भावा लोकेऽसत्त्वाद् परमपुरुषपुण्डरीका जगत्त्रातारः, प्रतिशरणभूता लोकस्य, प्रतिष्ठानभूता जगतः, महावभासकराः सत्त्वानाम्, क्षेमपथदर्शकाः संमूढमार्गाणाम्, नायकभूता धर्मनयावतरणतायै, परिणायकभूताः सर्वज्ञतापुरोपनमनतायै । तस्य मम कुलपुत्र एवं भवति—दुर्दृष्टिघातनं नामधेयं बोधिसत्त्वानां येन निर्मलचित्तानां स्वकायप्रतिभासं दर्शयति । विशुद्धकायकर्मणाभिमुखा भवन्ति । वचनदोषविवर्जितानां सरस्वत्यालोकमवक्रामयन्ति । विशुद्धाशयानां सर्वकालमभिमुखास्तिष्ठन्ति । अहं कुलपुत्र मेघजालस्य बोधिसत्त्वविमोक्षस्य लाभी । आह—क एतस्य आर्य मेघजालस्य बोधिसत्त्वविमोक्षस्य विषयः ?

अथ खलु महादेवो देवः सुधनस्य श्रेष्ठिदारकस्य पुरतो महापर्वतमात्रं सुवर्णराशिमुपदर्श्य रूप्यराशिं वैडूर्यराशिं स्फटिकराशिं मुसारगल्वराशिं अश्मगर्भराशिं ज्योतिरसमणिरत्नराशिं विमलगर्भमणिरत्नराशिं वैरोचनमणिरत्नराशिं समन्तदिगभिमुखमणिरत्नराशिं चूडामणिरत्नमकुटराशिं विचित्रमणिरत्नराशिं केयूरराशिं कुण्डलविभूषणराशिं वलयराशिं मेखलराशिं नूपुरराशिं विविधमणिरत्नराशिं सर्वाङ्गप्रत्यङ्गविभूषणराशिं चिन्ताराजमणिरत्नराशिं सर्वपुष्पाणि सर्वगन्धान् सर्वधूपान् सर्वमाल्यानि सर्वविलेपनानि सर्वचूर्णानि सर्ववस्त्राणि सर्वच्छत्राणि सर्वध्वजान् सर्वपताकाः सर्वतूर्याणि सर्वतालावचरान् सर्वकामविषयान् ।

---

1 B °संनाहापर्याविशेषप्राप्तो.

असंख्येयानि च कन्याकोटीशतसहस्राण्युपदर्श्य सुधनं श्रेष्ठिदारकमेतदवोचत्—इत कुलपुत्र गृहीत्वा दानानि देहि, पुण्यानि कुरु, तथागतान् पूजय, सत्त्वान् दानेन संग्रहवस्तुना संगृह्य त्यागपारमितायां नियोजय, दानेन लोकं शिक्षय। दुष्करपरित्यागतां प्रदर्शय। यथैवाहं कुलपुत्र तथोपकरणविधिमुपसंहरामि, एवमपरिमाणानां सत्त्वानां दानचेतनानिरुद्धानां त्यागवासितां संततिं करोमि। बुद्धधर्मसंघेषु बोधिसत्त्वकल्याणमित्रेषु च कुशलमूलान्यवरोपयित्वा अनुत्तरायां सम्यक्संबोधौ समादापयामि। अपि तु खलु पुनरहं कुलपुत्र कामरतिप्रमत्तानां सत्त्वानां विषयपरिभोगपरिगृद्धानां तान् विषयानशुभानधितिष्ठामि। क्रोधाविष्टानां मानमदद्र्पगर्वितानां विग्रहवैनयिकानां रौद्रराक्षसनिकृतभयानन्तशरीरान् मांसरुधिरभक्षानात्मभावानुपदर्श्य तं सर्वं स्तम्भसंरम्भमुपदर्शयामि। कुसीदन्यस्तप्रयोगान् सत्त्वानभ्युदकराजचौरोपसर्गभयसंदर्शनेनोद्वेज्य वीर्यारम्भे नियोजयामि। एवं तैस्तैरुपायैः सर्वाकुशलचर्याभ्यो विनिवर्त्य सर्वकुशलधर्मप्रतिपत्तौ संनियोजयामि। सर्वपारमिताविपक्षनिर्घाताय सर्वपारमितासमारोपचयाय सर्वावरणपर्वतप्रपातपथसमतिक्रमणाय अनावरणधर्मावताराय च। एतमहं कुलपुत्र मेघजालं बोधिसत्त्वविमोक्षं प्रजानामि। किं मया शक्यं मिन्द्रकल्पानां बोधिसत्त्वानां क्लेशासुरप्रमर्दनानां वारिकल्पानां सर्वजगद्दुःखाग्निस्कन्धनिर्वापितॄणां तेजःस्कन्धकल्पानां सर्वजगत्तृष्णासलिलसंशोषणकराणां वायुकल्पानां सर्वग्राहाभिनिवेशपर्वतविकिरणानां वज्रकल्पानां दृढात्मसंज्ञाशैलनिर्दारणानां चर्यां ज्ञातुं गुणान् वा वक्तुम्॥

गच्छ कुलपुत्र, इयमिहैव जम्बुद्वीपे मगधविषये बोधिमण्डे स्थावरा नाम पृथ्वीदेवता प्रतिवसति। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारको महादेवस्य पादौ शिरसाभिवन्द्य महादेवं देवमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य महादेवस्य देवस्यान्तिकात्प्रक्रान्तः॥३०॥

---

१ S °परिगृद्धानां  २ S चरेस्य  ३ B कल्याणानां

अथ खलु सुधनः श्रेष्ठिदारकोऽनुपूर्वेण येन मगधविषये बोधिमण्डे स्थावरा पृथ्वीदेवता तेनोपसंक्रान्तः। दशपृथिवीदेवताशतसहस्राणि अन्योन्यमेवं वाचमुदीरयामासुः—अयं स आगच्छति, यः सर्वसत्त्वानां प्रतिशरणभूतो भविष्यति। अयं स तथागतगर्भ आगच्छति, यः सर्वसत्त्वानामविद्याण्डकोशं निर्भेत्स्यति। अयं स धर्मराजकुलोदित आगच्छति, योऽसङ्गवरं 5 विमलधर्मराजपट्टमाबन्धिष्यति। अयं स ज्ञाननारायणवज्रप्रहरणशूर आगच्छति, यः सर्वपरप्रवादिचक्रं प्रमर्दिष्यति। अथ तानि स्थावराप्रमुखानि दशपृथिवीदेवताशतसहस्राणि महापृथिवीचालं कृत्वा गम्भीरजलधरनिर्नादं जनयित्वा सर्वं त्रिसाहस्रं लोकधातुमुदारेणावभासेनावभास्य सर्वरत्नाभरणालंकारप्रतिमण्डितशरीराणि विद्युल्लताकलापा इव गगनतले लम्बमाना, प्ररोहद्भिः सर्ववृक्षाङ्कुरैः, प्रफुल्लद्भिः सर्वपुष्पवृक्षैः, प्रवर्षद्भिः सर्वनदीस्रोतोभिः, 10 उन्नमद्भिः सर्वोत्ससरोहृदतडागैः, प्रवर्षद्भिर्महागन्धोदकवर्षैः, प्रवायद्भिः कुसुमौघोत्करप्रवाहिभिर्महावातैः, प्रवादयद्भिः तूर्यकोटीनियुतशतसहस्रैः, प्रसरद्भिः दिव्यविमानाभरणमणैः, प्रणदद्भिः गोवृषगजव्याघ्रमृगेन्द्रैः, प्रगर्जद्भिः देवासुरोरगभूताधिपतिभिः, सधक्ष्मानर्मकाशैलेन्द्रैः उल्लपद्भिः, निधिचयकोटीशतसहस्रैः उन्नमद्भिः, धरणीतलादभ्युद्गतानि॥

अथ स्थावरा पृथिवीदेवता सुधनं श्रेष्ठिदारकमेवमाह—स्वागतं ते कुलपुत्र। अयं स 15 पृथिवीप्रदेशो यत्र ते स्थित्वा कुशलमूलान्यवरोपितानि यत्राह प्रत्यक्षा। किमिच्छसि तद्विपाकफलैकदेशं द्रष्टुम्[1] अथ खलु सुधनः श्रेष्ठिदारकः स्थावरायाः पृथिवीदेवतायाः पादौ शिरसाभिवन्द्य स्थावरां पृथिवीदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य स्थावरायाः पृथिवीदेवतायाः पुरतः प्राञ्जलिः स्थित्वा एवमाह—इच्छाम्यार्ये॥

अथ खलु स्थावरा पृथिवीदेवता पादतलाभ्यां महापृथिवीं पराहत्य असंख्येयमणि 20 रत्ननिधानकोटीशतसहस्रप्रतिमण्डितामुपदर्श्य एवमाह—इमानि कुलपुत्र मणिरत्ननिधानकोटीनियुतशतसहस्राणि तवानुगामीनि, तव पुरोजवानि, तव यथेच्छोपभोग्यानि, तव पुण्यविपाकनिर्जातानि, तव पुण्यबलरक्षितानि। तेभ्यस्त्वं गृहीत्वा यत्कार्यं तत्कुरुष्व। अपि त्वहं कुलपुत्र ज्ञानदुर्योधनगर्भस्य बोधिसत्त्वविमोक्षस्य लाभिनी। सा अहमेतेन बोधिसत्त्वविमोक्षेण समन्वागता दीपंकरतथागतमुपादाय बोधिसत्त्वस्य नित्यानुबद्धा सतत- 25 समारक्षाप्रतिपन्ना। ततः प्रभृति अहं कुलपुत्र बोधिसत्त्वस्य चित्तचरितं व्यवचारयामि, ज्ञानविषयमवगाहयामि, सर्वप्रणिधानमण्डलमवतरामि, बोधिसत्त्वचर्याविशुद्धिमनुगच्छामि, सर्वसमाधिनयमनुसरामि, सर्वबोधिसत्त्वाभिज्ञाविचारविपुलतां स्फरामि। सर्वबोधिसत्त्वबलाधिपतेयतां सर्वबोधिसत्त्वासहार्यतां सर्वक्षेत्रजालस्फरणतां सर्वतथागतव्याकरणसंप्रतीच्छनतां सर्वकायाभिसंबोधिसंदर्शनतां सर्वधर्मचक्रप्रवर्तननयं सर्वसूत्रान्तसंप्रभाषणधर्ममेघनयं महा- 30

---

[1] S om अथ
गण्ड २२

धर्मावलोकावभासनयं सर्वसत्त्वपरिपाचनविनयज्ञाननयं सर्वबुद्धविकुर्वितसंदर्शननयं च अनुगच्छामि संधारयामि संप्रतीच्छामि ॥

एष च मे कुलपुत्र ज्ञानदुर्योधनगर्भो बोधिसत्त्वविमोक्षः सुमेरुपरमाणुरजःसमानां कल्पानां परेण परतरेण चन्द्रध्वजायां लोकधातौ सुनेत्रस्य तथागतस्यान्तिकात्प्रतिलब्ध
5 अवभासव्यूहे कल्पे । सा अहं कुलपुत्र इमं ज्ञानदुर्योधनगर्भं बोधिसत्त्वविमोक्षमायूहन्ती निर्यूहन्ती संवर्धयन्ती विपुलीकुर्वाणा अविरहिताभूवं तथागतदर्शनेन यावद् भद्रकल्पात् । अत्र च मया अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमास्तथागता अर्हन्तः सम्यक्संबुद्धा आरागिताः । सर्वेषां च मे तेषां तथागतानां बोधिमण्डोपसंक्रमणविकुर्वितं दृष्टम् । सर्वेषां च अहं तेषां तथागतानां कुशलमूलेषु साक्षीभूता । एतमहं कुलपुत्र ज्ञान-
10 दुर्योधनगर्भं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यं सर्वतथागतानुबद्धानां बोधिसत्त्वानां सर्वबुद्धकथानुधारिणां सर्वतथागतज्ञानगहनप्रविष्टानां चित्तक्षणधर्मधातुस्फरणानुजवानां तथागतसमताशरीराणां सर्वबुद्धाशयविमलगर्भाणां सदाभिनिर्हृतसर्वबुद्धोत्पादानामसंभिन्नसर्वबुद्धकायदूतानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इदमिहैव जम्बुद्वीपे मगधविषये कपिलवस्तु नाम नगरम् । तत्र
15 वासन्ती नाम रात्रिदेवता प्रतिवसति । तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारकः स्थावरायाः पृथिवीदेवतायाः पादौ शिरसाभिवन्द्य स्थावरां पृथिवीदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य स्थावरायाः पृथिवीदेवताया अन्तिकात्प्रक्रान्तः ॥ ३१ ॥

# ३४ वासन्ती ।

अथ खलु सुधनः श्रेष्ठिदारको येन कपिलवस्तु महानगरं तेनोपसंक्रान्तः ता स्थावरायाः पृथिवीदेवताया अनुशासनीमनुस्मरन्, त दुर्योधनगर्भं बोधिसत्त्वविमोक्षमनुस्मरन्, ता बोधिसत्त्वसमाधिभावना विपुलीकुर्वन्, त बोधिसत्त्वधर्मनयमनुविचिन्तयन्, त बोधिसत्त्वविमोक्षविक्रीडित विचारयन्, ता बोधिसत्त्वविमोक्षज्ञानसूक्ष्मादि संव्यवलोकयन्, त बोधिसत्त्वविमोक्षज्ञानसागरमवतरन्, तं बोधिसत्त्वविमोक्षज्ञानसमेदमधिमुच्यमान, त बोधिसत्त्वविमोक्षानन्तज्ञानाभिसंस्कारमनुगच्छन्, तं बोधिसत्त्वविमोक्षज्ञानसमुद्रमवगाहमानः। स कपिलवस्तुमहानगर प्रदक्षिणीकृत्य पूर्वेण नगरद्वारेण प्रविश्य मध्ये नगरशृङ्गाटकस्य अस्थात्। अचिरास्तमिते सूर्ये सर्वबोधिसत्त्वानुशासनीषु प्रदक्षिणग्राही वासन्त्या रात्रिदेवताया दर्शनपरितृषितः कल्याणमित्रेषु बुद्धज्ञानप्रतिलम्भनिश्चितबुद्धिः समन्तज्ञानचक्षुर्विषयशरीराधिष्ठानः सर्वदिगभि- 10 मुखेन कल्याणमित्रदर्शनचित्तेन उदाराधिमुक्तिज्ञानगर्भसंज्ञागतचेता सर्वारम्बणप्रसृतज्ञानचक्षु सर्वधर्मनयज्ञानसागरप्रसरस्फरणानुगतेन समाधिचक्षुषा सर्वदिग्ज्ञेयसागर व्यवलोकयन्, महाज्ञानचक्षु प्रसृतानिहिताशयोऽद्राक्षीद्वासन्ती रात्रिदेवता कपिलवस्तुनो महानगरस्योर्ध्वं गगनतले विचित्रानुपममणिकूटागारे सर्वरत्नगन्धपद्मगर्भमहारत्नसिंहासने निषण्णाम्, सुवर्णवर्णेन कायेनाभिनीलमृदुबहुकेशीमभिनीलनेत्रामभिरूपां प्रासादिकां दर्शनीयां सर्वाभरणा- 15 लंकारविभूषितशरीरां रक्ताम्बरनिवसनां चन्द्रमण्डलालंकृतब्रह्मजटामुकुटधारिणीं सर्वतारा ग्रहनक्षत्रज्योतिर्गणप्रतिभासदर्शनशरीराम्। यावन्तश्च तया विपुले सत्त्वधातौ अक्षणापायदुर्गतिविनिपातेभ्य सत्त्वा परिमोचिता, तानपि तस्या रोमविवरगतानद्राक्षीत्। यावन्त स्वर्गलोके प्रतिष्ठापिता, यावन्त श्रावकप्रत्येकबोधौ सर्वज्ञताया च परिपाचिता, तानपि तस्या सर्वरोमविवरगतानपश्यत्। यैर्नानोपायैः परिपाचिता कायाभिनिर्हारे रूपाभिनिर्हारैर्वर्णाभि- 20 निर्हारे, तानपि तस्या रोमविवरगतानद्राक्षीत्। यैर्योपायाभिनिर्हारे स्वराङ्गाभिनिर्हारैर्विविधमन्त्रधर्मनयसप्रयोगे परिपाचिता, तानपि तस्या रोमसुखेभ्योऽनुरवमाणानश्रौषीत्। यैः कालाभिनिर्हारे, यैर्यथाशयाधिमुक्तसत्त्वानुवर्तनैः, याभिर्बोधिसत्त्वचर्याभिर्बोधिसत्त्वविक्रमैर्बोधिसत्त्वसमाधिविकुर्वितसुखैर्बोधिसत्त्ववृषभिताभिर्बोधिसत्त्वविहारैर्बोधिसत्त्वावलोकितैर्बोधिसत्त्वनिर्गमैर्बोधिसत्त्वविकुर्वितैर्बोधिसत्त्वमहापुरुषसिंहविजृम्भितैः, यैर्बोधिसत्त्वविमोक्षविक्री- 25 डितैस्तया सत्त्वाः परिपाचिता, तान्यपि तस्या रोमविवरगतानि प्रजानीते स्म ॥

तान् नानोपायसप्रयुक्तान् धर्मनयसागरान् दृष्ट्वा श्रुत्वा च तुष्ट उदग्र आत्तमना प्रमुदित प्रीतिसौमनस्यजातो वासन्त्या रात्रिदेवतायाः सर्वशरीरेण प्रणिपत्य उत्थाय वासन्तीं रात्रिदेवतामनेकशतसहस्रकृत्व प्रदक्षिणीकृत्य वासन्त्या रात्रिदेवताया पुरतः प्राञ्जलि स्थित्वा एवमाह—मया खलु देवते अनुत्तराया सम्यक्संबोधौ चित्तमुत्पादितम्। 30

---

1 B om. from यै upto तानपि

सोऽहं कल्याणमित्राधिष्ठानान् सर्वबुद्धगुणान् संपश्यन् कल्याणमित्राश्रितमात्मानं करोमि। दर्शय मे देवते सर्वज्ञतामार्गं यत्र प्रतिष्ठितो बोधिसत्त्वो निर्याति दशबलभूमौ ॥

एवमुक्ते वासन्ती रात्रिदेवता सुधनं श्रेष्ठिदारकमेतदवोचत्–साधु साधु कुलपुत्र, यस्त्वमेवं कल्याणमित्रनिश्रितः कल्याणमित्रवचनानि शुश्रूषु कल्याणमित्रानुशासन्या प्रतिपद्यसे । नियमेन त्वं कल्याणमित्रानुशासनीं प्रतिपद्यमानः आसन्नीभविष्यस्यनुत्तरायाः सम्यक्संबोधेः । अहं कुलपुत्र सर्वसत्त्वतमोविनिकिरणधर्मावभासव्यूहनिर्नयमुखस्य बोधिसत्त्वविमोक्षस्य लाभिनी । विषमगतेषु सत्त्वेषु मैत्रचित्ता, अकुशलकर्मपथप्रतिपन्नेषु करुणाचित्ता, कुशलकर्मपथप्रतिपन्नेषु मुदितचित्ता, समविषमगतेषु सत्त्वेषूपेक्षाचित्ता, संक्लिष्टेषु विशोधनचित्ता, विपथगतेषु सम्यक्प्रतिपन्नचित्ता, हीनाधिमुक्तिकेषु उदाराधिमुक्तिसंजननचित्ता, हीनेन्द्रियेषु महावीर्यवेगनिदर्शनचित्ता, संसाराभिरतेषु संसारगतिचक्रविनिवर्तनचित्ता, श्रावकप्रत्येकबुद्धयानाभिमुखेषु सत्त्वेषु सर्वज्ञतामार्गप्रतिष्ठापनचित्ता । एवं चित्तमनसिकारप्रयुक्ता खलु पुनरहं कुलपुत्र अनेन सर्वसत्त्वतमोविनिकिरणधर्मावभासव्यूहनिर्नयमुखेन बोधिसत्त्वविमोक्षेण समन्वागता ॥

ये सत्त्वा अन्धकारतमिस्रायां रात्रौ परिभ्रान्तेषु मनुष्येषु भूतसंघानुचरितायां तस्करगणसंकीर्णायां विषमचारिसत्त्वादिविचरितायां कालाभ्रमेघजालसंछन्नायां धूमरजोमलसमाकुलायां विषमवातवृष्टिसंक्षोभितायां चन्द्रादित्यज्योतिर्गणरहितायां चक्षुष्कार्यपराङ्मुखायां रात्रौ सागरगता भवन्ति, स्थलगता वा पर्वतगता वा अटवीकान्तारगता वा वनान्तरगता वा देशान्तरगता वा ग्रामान्तरगता वा दिगन्तरगता वा विदिगन्तरगता वा मार्गान्तरगता वा महासागरगता वा विपन्नयानपात्रा भवन्ति, स्थलगता वा विहन्यन्ते, पर्वतगता वा महाप्रपातेषु प्रपतन्ति, महाटवीकान्तारगता वा अन्नपानविरहिता भवन्ति, वनगहनेषु वा रक्षसा वा अनयव्यसनमापद्यन्ते, देशान्तरगता वा तस्करैर्हन्यन्ते, ग्रामान्तरगता वा विषमचारिभिर्निरस्यन्ति, दिगन्तरगता वा संमुह्यन्ति, विदिगन्तरगता वा विमुह्यन्ति, मार्गान्तरगता वा विनयमापद्यन्ते, तेषामहं कुलपुत्र सत्त्वानां नानोपायमुखैस्त्राणभूता भवामि–यदुत सागरगतानां सत्त्वानां कालिकावातमेघविकिरणतायै वज्ज्रपोद्धातविरमणतायै विषमवातमण्डलीविनिवर्तनतायै महोर्मिवेगव्युपशमनतायै आवर्तभयविमोचनतायै दिग्विद्योतनतायै सम्यगुदकपथप्रतिपादनतायै तीरदर्शनतायै । रत्नद्वीपोपनयनाय मार्गं संदर्शयामि संग्राहकरूपेण सार्थवाहकरूपेण । कस्यचिन्नागराजरूपेण मकरराजरूपेण कुम्भीरराजरूपेण[1] असुरराजरूपेण गरुडराजरूपेण किंनरराजरूपेण महोरगराजरूपेण सागरदेवतारूपेण कैवर्तरूपेण प्रतिशरणभूता भवामि । तच्च कुशलमूलमेवं परिणामयामि–सर्वसत्त्वानां प्रतिशरणभूता भवेयं सर्वदुःखस्कन्धविनिवर्तनतायै । स्थलगतानां सत्त्वानां मोहान्धकारतमिस्रायां रात्रौ वेणुकण्टकशर्करकठल्लाकीर्णायां घोरविषोरगसंकीर्णायां निम्नोन्नतविषमप्रचारायां रजोरेणुसमुद्धतायां विषमवातवृष्टिसंक्षोभितायां

1 S कुमारराजरूपेण

शीतोष्णदु खसस्पर्शायां व्यालमृगेन्द्रसाभिशङ्कायां वधकतस्करगणानुविचरितायां धरण्यां दिक्संमूढानां सत्त्वानामादित्यरूपेण उद्गतचन्द्ररूपेण महोल्कापातरूपेण विद्युन्मालानिश्चारणरूपेण रत्नाभारूपेण[1] ग्रहमण्डलरूपेण नक्षत्रज्योतिर्गणविमानप्रभारूपेण देवरूपेण बोधिसत्त्वरूपेण सत्त्वानां त्राणभूता भवामि। एवं च चित्तमुत्पादयामि–अनेन कुशलमूलेन सर्वसत्त्वानां त्राणं भवेयं सर्वक्लेशान्धकारविधमनतायै। पर्वतप्रपातगतानां सत्त्वानां 5 मरणभयभीतानां जीवितप्रतिलम्भाय यशस्कामतावशगतानां कीर्तिशब्दध्वजकामानां भोगार्थिकानां लोभाभिष्ठानामुपकरणपर्येष्ट्यभियुक्तानां लोकसपर्यभिलापपरमाणां पुत्रभार्यास्नेहनिबद्धानां दृष्टिगतगहनप्रनष्टानां विविधदु खभयोपद्रुतानां नानोपायमुखैः शरणभूता भवामि–यदुत गिरिगुहासंस्थानाभिनिर्हारेण फलमूलभोजनाभिनिर्हारेण जलपयोदपानाभिनिर्हारेण[2] शीतोष्णप्रतिपक्षाभिनिर्हारेण सम्यक्पथनिदर्शनेन कलविङ्करुत- 10 निर्घोषेण मयूरराजनिकूजघोषेण औषधिज्वलनावभासरूपेण पर्वतदेवताप्रभारूपेण। गिरिगुहादरीविवरगतानां विविधदु खोपद्रुतानां तिमिरान्धकारविनिवर्तनतायै समभूमिनीतलाभिनिर्हारेण शरणभूता भवामि। एवं च चित्तमुत्पादयामि–यथा अहमेषां पर्वतगतानां सत्त्वानामारक्षां करोमि, एवमहमेषां संसारपर्वतगिरिप्रपातपतितानां जरामरणग्रहाभिनिविष्टानां शरणभूता भवेयम्। वनगहनजालसंसक्तानामप्यहं सत्त्वानां तमोन्धकारायां रात्रौ 15 विपुलविषयवृक्षविविधोपस्थानां विविधतृणोदककण्टकद्रुमलतोपरुद्धमार्गाणां नानाद्रुमलतावनगहनप्राप्तानां शार्दूलनदितनिर्घोषसंत्रस्तहृदयानां कार्यापरिपूरिसमाकुलचित्तानां विविधभयोपद्रवोपसृष्टानां वनगहननिःसरणदिशमप्रजानतां सम्यग्गमनपथसंदर्शयित्री भवामि। एवं च चित्तमुत्पादयामि–अनेन कुशलमूलेन विविधदृष्टिगहनगतान् संसारतृष्णाजालसंसक्तान् विचित्रसंसारदु खभयोपद्रुतान् सर्वदु खेभ्य परिमोचयेयम्। अटवीकान्तारगतानामप्यहं 20 सत्त्वानामन्धकारप्राप्तानां नानोपायमुखे सुखं संजनय्य मार्गं संदर्श्य एतानभयक्षेमे प्रतिष्ठाप्य एवं चित्तमुत्पादयामि–अनेन कुशलमूलेन समाराटवीकान्तारप्राप्तान् सत्त्वान् दुर्गतिपथप्रतिपन्नान् सर्वदु खेभ्य परिमोच्य अत्यन्तयोगक्षेमे सर्वज्ञतामार्गे प्रतिष्ठापयेयम्। देशेजनपदाविष्टानप्यहं[3] कुलपुत्र सत्त्वानभिनिवेशाधिकारिकं दु ख प्रत्यनुभवमानान् विविधैरुद्वध्यमानोपायैस्ततो जनपदाभिनिवेशादुच्चाल्य एवं चित्तमुत्पादयामि–अनेन 25 कुशलमूलेन सर्वसत्त्वान् स्कन्धालयाभिनिवेशादुच्चाल्य अनालयसर्वज्ञज्ञाने प्रतिष्ठापयेयम्। ग्रामगतानप्यहं कुलपुत्र सत्त्वान् गृहनिकेतनघनबद्धानन्धकारतमिस्रायां रात्रौ विविधगृहापद्दु खितान् नानोद्वेगमुखैरुद्वध्य संजनितसंवेगचित्तान् धनदानेन संगृह्य सम्यक् प्रीणयित्वा अनिकेते धर्मे प्रतिष्ठाप्य एवं चित्तमुत्पादयामि–अनेन कुशलमूलेन सर्वसत्त्वान् स्वायतनग्रामसंनिश्रितान् संसारगतिविषयगोचरादुच्चाल्य सर्वज्ञतागोचरे प्रतिष्ठापयेयम्[3]॥ 30

---

१ S om रत्नाभारूपेण २ S जलपयदपानाभि° ३ S om from देशेज्न up to प्रतिष्ठापयेयम्

ये च कुलपुत्र अन्धकारतमिस्रायां रात्रावेकैकस्यां पूर्वादिदिग्विदिक्षु सर्वदिक्संमूढा भवन्ति, समेषु पृथिवीप्रदेशेषु विषमप्रपातसंज्ञिनः, उन्नतेष्ववनतसंज्ञिनः, अवनतेषून्नतसंज्ञिनः, तेषामहं दिग्मार्गदेशसंमूढानां नानाविधैरुपायैरवभासं कृत्वा निष्क्रमितुकामानां द्वारं संदर्शयामि। गन्तुकामानां मार्गं संदर्शयामि। तरितुकामानां तीर्थं संदर्शयामि। प्रवेष्टुकामानां

5 भवनं संदर्शयामि। विलोकयितुकामानां दिशः संदर्शयामि। निम्नोन्नते पृथिवीतलं संदर्शयामि। समविषमान् पृथिवीप्रदेशान् विविधानि च रूपगतानि संदर्शयामि। मार्गोत्क्रान्तानां ग्रामनगरनिगमराष्ट्रराजधानीं संदर्शयामि। धर्मतृषार्तानामुत्ससरोह्रदतडागपुष्करिणीनदीवनोद्यानारामरमणीयानि संदर्शयामि। प्रियविप्रयोगोत्कण्ठितानां मातापितृपुत्रदारमित्रामात्यज्ञातिसालोहितान् विविधानि च मनापानि रूपगतानि संदर्शयामि। एवं च चित्त-

10 मुत्पादयामि—यथाहमेषां सत्त्वानामन्धकारतमिस्रायां रात्रौ तिमिरोपहतनेत्राणां दिक्संमूढानामालोकं करोमि, अवभासं जनयामि विविधरूपगतविज्ञप्तये, एवमेवाहं दीर्घसंसारान्धकारतमिस्रायां संसाररात्रावुपपन्नानां सर्वदिक्संमूढानामविद्यान्धकारप्रावृतानामज्ञानपटलावनद्धज्ञानचक्षुषां संज्ञाचित्तदृष्टिविपर्यस्तानाम् अनित्ये नित्यसंज्ञिनां दुःखेऽसुखसंज्ञिनां अनात्मनि आत्मसंज्ञिनाम् अशुभे शुभसंज्ञिनां दृढात्मसत्त्वजीवपोषपुद्गलग्रहसंनिश्रितानां स्कन्धधात्वायतनसंनि-

15 श्रितानां हेतुफलसंमूढानामकुशलकर्मपथदिक्प्रतिपन्नानां प्राणातिपातिनामदत्तादायिनां काममिथ्याचारिणां मृषावादिनां पैशुन्यानां पारुषिकाणामसंभिन्नप्रलापिनामभिध्यालूनां व्यापन्नचित्तानां मिथ्यादृष्टिगतानाममातृज्ञानामपितृज्ञानामश्रामण्यानामब्राह्मण्यानामनिन्द्यज्ञानामपुरुषज्ञानानामधर्मरागरक्तानां विषमलाभाभिभूतानां मिथ्याधर्मपरीतानां तथागतानभ्याख्यायिकानां धर्मचक्रान्तरायप्रतिपन्नानां मारध्वजधराणां बोधिसत्त्वघातिनां महायान-

20 विद्वेषिकाणां बोधिचित्तविच्छिन्दकानां बोधिसत्त्वनिर्वर्णकानां मातृघातद्रोहिणामनपकारवैरिणामार्यापवादकानामसत्पुरुषाधर्मसमाचारगोचराणां स्तौपिकसांघिकवस्तुद्रोहिणां मातापितृविप्रतिपन्नानामानन्तर्यकर्मकारिणां महाप्रपाताभिमुखानां सत्त्वानां महाप्रज्ञालोकेन अविद्यान्धकारं विधूय अनुत्तरायां सम्यक्संबोधौ समादाप्य समन्तभद्रेण महायानेन दशबलज्ञानभूमिमार्गं संदर्शयेयम्। तथागतभूमिमपि तथागतविषयमपि सर्वज्ञज्ञाननयसागरमपि

25 बुद्धज्ञानगोचरमपि बुद्धविषयमपि दशबलपरिनिष्पत्तिमपि बुद्धधारणीबलमपि सर्वबुद्धैकशरीरतामपि संदर्शयेयम्। संदर्श्य चैनान् सर्वबुद्धसमताज्ञाने प्रतिष्ठापयेयम्॥

ग्लानानामप्यहं कुलपुत्र सत्त्वानां दीर्घव्याधिपरिखिन्नानां दुर्बलशरीराणां जीर्णानां वृद्धानां जराभिभूतानामनाथानां कृपणानां च दरिद्राणां विलयगतानां निर्देशप्राप्तानां विदिक्प्रतिपन्नानां च धनगतानां कारणाप्राप्तानाम् अपराधिनां राजभयोत्त्रस्तानां जीवितो-

30 परोधभयपरित्राणाय अवतिष्ठामि। सोऽहं कुलपुत्र ग्लानानां सत्त्वानां सर्वोपाधिव्याध्यपनयनाय प्रतिपद्यामि। जीर्णानां जराभिभूतानामुपस्थानपरिचर्योपकरणाविघातेन संग्रहं करोमि। अनाथानां सत्त्वानां सानाथ्यं करोमि। कृपणदरिद्राणां धनकनकरत्नदानेन संग्रहं करोमि

विनिपातगतानां समानार्थतया संग्रहं करोमि । विदेशप्राप्तानां स्वदेशमुपनयामि । विदिक्प्रतिपन्नानां सम्यग्दिशमुपनयामि । बन्धनगतान् बन्धनेभ्यो विप्रमोक्षयामि । कारणाप्राप्तानां कारणाद् खेभ्यो विप्रमोक्षयामि । अपराधिनो राजभयोत्सृष्टान् जीविताश्वासप्राप्तान् करोमि । एवं च चित्तमुत्पादयामि-यथाहमेषां सत्त्वानां विविधभयोपद्रवपरित्राणे प्रतिशरणं भवामि, एवमहमेताननुत्तरेण धर्मसंग्रहेण संगृह्य सर्वक्लेशेभ्यः 5 परिमोचयेयम् । जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः समतिक्रामयेयम् । सर्वदुर्गतिविनिपातभयेभ्यः परिमोचयेयम् । कल्याणमित्रपरिग्रहे प्रतिष्ठापयेयम् । धर्मरत्नदानसंग्रहेण संगृह्णीयाम् । अनवद्ये कर्मणि नियोजयेयम् । तथागतशरीरविशुद्धये समादापयेयम् । अत्यन्ताजरामरणधातुप्रतिवेधे प्रतिष्ठापयेयम् ॥

मिथ्यामार्गगतिपन्नानामप्यहं कुलपुत्र सत्त्वानां विविधदृष्टिगतगहनाभिनिविष्टानां 10 मिथ्यासंकल्पगोचराणां विषमकायवाङ्मनस्कर्मसमुदाचारिणामसंवृतचारिणां नानाव्रततपःसंनिश्रितानामसम्यक्संबुद्धे सम्यक्संबुद्धसंज्ञिनां सम्यक्संबुद्धे च असम्यक्संबुद्धसंज्ञिनां शरीरातापनपरितापनप्रयुक्तानाम् उत्ससरोहृदतडागनदीपर्वतप्रस्रवणदिग्विदिक्प्रणामपरायणानां पापमित्रवशगतानां नानोपायमुखैः प्रतिशरणभूता भवामि । तत एतान् पापकाद् दृष्टिगताद् सर्वदुर्गतिप्रपातपथाद्विनिवर्तयामि । लौकिकायां च सम्यग्दृष्टौ प्रतिष्ठाप्य दिव्यमानुषिकायां 15 संपत्तौ संनियोजयामि । एवं च चित्तमुत्पादयामि-यथाहमेतान् सत्त्वानेवंरूपाद्विषमप्रतिपत्तिदुःखात्परिमोचयामि, एवमहं सर्वसत्त्वानार्ये लोकोत्तरे पारमितामार्गे प्रतिष्ठाप्य सर्वज्ञतायामवैवर्त्यान् कृत्वा समन्तभद्रेण महाप्रणिधानेन सर्वज्ञतायामुपनयेयम् । न च बोधिसत्त्वभूमेश्चलेयमविनिवर्त्य सर्वसत्त्वधातुम् ॥

अथ खलु वासन्ती रात्रिदेवता तस्यां वेलायामेतमेव सर्वसत्त्वतमोविकिरणधर्मावभास- 20 जगद्विनयमुखं बोधिसत्त्वविमोक्षदिशं भूयस्या मात्रया संदर्शयमाना बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत-

मोहअवियतमोविगमार्थं
धर्मप्रभाविततसज्जनयाय ।
कालमवेक्ष्य जगत्सुखनेता 25
एष विमोक्षनयो मम शान्तः ॥ १ ॥
मैत्रि ममा विपुला सुविशुद्धा
कल्प अनन्त सुभावित पूर्वे ।
अपाय फरित्व प्रभासमि लोकं
एत नयोत्तर सुधन सुधीरा ॥ २ ॥ 30
करुणसमुद्र ममामित लोके
संभवु यत्र त्रियध्वजिनानाम् ।

1 B त्रियध्वगतानाम्

येन जगस्य दुखं प्रशमेमी
एत नयोत्तर सुधन सुधीरा ॥ ३ ॥
लोकसुखान्यभिनिर्हरमाणा
संस्कृत आर्य सुखानि च यानि ।
प्रीति उदग्र प्रमोदमि तेन
ओतर एत नयं जिनपुत्र ॥ ४ ॥
संस्कृतदोषपराङ्मुख नित्यं
श्रावकज्ञानविमुक्तिफले च ।
बुद्धवलं परिशोधयमाना
ओतर एत नयं जिनपुत्र ॥ ५ ॥
चक्षु ममा विपुल परिशुद्ध
येन दशद्दिशि पश्यमि क्षेत्रा ।
तेषु च क्षेत्रतलेषु स्वयंभून्
पश्यमि बोधिद्रुमेन्द्रनिषण्णान् ॥ ६ ॥
लक्षणमण्डित बुद्धशरीरान्
नानविचित्रप्रभोत्सृजमानान् ।
रश्मिसमुद्रप्रमुञ्चनरोमान्
पश्यमि बुद्धसहस्र पर्षाभिः ॥ ७ ॥
तेषु च क्षेत्रपथेषु य सत्त्वाः
सर्वच्युतीउपपत्तिमुखेषु ।
पश्यमि ते गतिसागरि बालाः
ससरमाण स्वकर्मनुभोन्ति ॥ ८ ॥
स्रोतसमुद्र ममातिविशुद्धो
यत्र समोसरि शब्द अशेषाः ।
सर्वजगस्य य मन्त्रसमुद्रा
सर्व श्रुणित्व धरेमि स्मृतीये ॥ ९ ॥
सर्वस्वराङ्गनिरुक्तिरुतेभि-
र्घोष अलङ्कृतु अप्रतिमानाम् ।
यो हि प्रवर्तति चक्रु जिनानां
त च श्रुणित्व धरेमि स्मृतीये ॥ १० ॥
घ्राणवलं विपुल सुविशुद्ध
धर्मसमुद्रनयेषु असङ्गम् ।

सर्वविमोक्षविहारप्रवेशं
ओतर एत नयं जिनपुत्र ॥ ११ ॥

जिह्व ममा विपुल सुप्रभूता
ताम्रतनू रतनाभ विशुद्धा ।
याय ज्ञपेमि यथाशय सत्त्वान्
ओतर एत नयं जिनपुत्र ॥ १२ ॥ 5

धर्मशरीरु ममातिविशुद्धं
सर्वत्रियध्वसमन्तस्थितानाम् ।
रूपशरीरु यथाशय सत्त्वाः
पश्यिषु तेष्वधिमुक्तिवशेन ॥ १३ ॥ 10

चित्तमसङ्गमनास्रव मह्यं
घोषरुतं यथ मेघनिनादः ।
तत्र समोसरि सर्वनरेन्द्रान्
नो च विकल्पन विद्यति मह्यम् ॥ १४ ॥

क्षेत्रतलेषु अचिन्तिय सत्त्वाः 15
तेष प्रजानमि चित्तसमुद्रान् ।
इन्द्रियआशय जानमि तेषां
नो च विकल्पन विद्यति मह्यम् ॥ १५ ॥

ऋद्धि ममो विपुला सुसमाप्ता
कम्पयि क्षेत्र अचिन्तियाय । 20
कायप्रभाय प्रभावतु येनो
सर्व सुदुर्दम सत्त्व दमेमि ॥ १६ ॥

पुण्य ममो विपुलं परिशुद्धं
अक्षयकोष समन्तवियूहम् ।
येन प्रवर्तयि पूज जिनानां 25
मोति च सर्वजगत्युपजीव्यम् ॥ १७ ॥

प्रज्ञ ममो विपुला सुविशुद्धा
याय प्रजानमि धर्मसमुद्रान् ।
संशय छिन्दमि सर्वजनाना
ओतर एत नयं जिनपुत्र ॥ १८ ॥ 30

बुद्धसमुद्र अहु अवतीर्णा
सर्वि त्रियध्वि नयोत्तरमाना।
तेषु च ओतरमी प्रणिधान
एष नयो अतुल सुसमाप्त ॥ १९ ॥

सर्वरजे अहु क्षेत्रसमुद्रान्
पश्यमि चैव त्रियध्वप्रवेशान्।
तत्र च पश्यमि बुद्धसमुद्रा
तेष समन्ततल नयभूमिम् ॥ २० ॥

पश्य विरोचन बोधिविबुद्ध
सर्वदिशासु स्फरित्व क्षेत्रा।
सर्वरज पथि बोधिद्रुमेन्द्रे
सान्तिम धर्म निसर्जयमानम् ॥ २१ ॥

अथ खलु सुधनः श्रेष्ठिदारको वासन्तीं रात्रिदेवतामेतदवोचत्—कियच्चिर सर स्थितासि देवते अनुत्तरायां सम्यक्संबोधौ? [2] कियच्चिर प्रतिलब्धस्ते ऽयं विमोक्षः, यस्य प्रतिलम्भादनयेवरूपया सत्त्वार्थक्रियया प्रत्युपस्थिता? [3] एवमुक्ते वासन्ती रात्रिदेवता सुधनं श्रेष्ठिदारकमेतदवोचत्—भूतपूर्वं जिनपुत्र अतीतेऽध्वनि सुमेरुपरमाणुरजःसमानान् कल्पान् परेण प्रशान्तप्रभो नाम कल्पोऽभूत्पञ्चबुद्धकोटीशतप्रभवः। तत्र रत्नश्रीसंभवा नाम लोकधातुरभूत्। तस्यां खलु पुनर्लोकधातौ रत्नचन्द्रप्रदीपप्रभा नाम मध्यमा चातुर्द्वीपिका। तस्यां पद्मप्रभा नाम राजधानी। तत्र राजधान्यां सुधर्मतीर्थो नाम राजाभूत् धार्मिको धर्मराजा चक्रवर्ती चतुर्द्वीपेश्वरः सप्तरत्नसमन्वागतः। स तामकण्टकां महापृथिवीं ससागरगिरिपर्यन्तां धर्मेणाभिनिर्जित्य अध्यावसति स्म॥

तस्य सुधर्मतीर्थस्य राज्ञो धर्ममतिचन्द्रा नाम भार्याभूत्। सा रात्र्याः पूर्वे यामे मदनमत्ता रतिक्रीडापरिश्रान्ता मध्यमे यामेऽन्तःपुरमध्यगता प्रसुप्ता। अथ तस्याः पद्मप्रभाया राजधान्याः पूर्वेण शमथश्रीसंभवे महोद्यानषण्डे सर्वधर्मनिगर्जितराजो नाम तथागतः सर्वव्यूहप्रभामणिराजशरीरे सर्वबुद्धनिर्मितप्रभवे महाबोधिवृक्षेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। तेनासौ सर्वो रत्नश्रीसंभवो लोकधातुरनेकवर्णया उदारया प्रभया स्फुटोऽवभासितोऽभूत्। तस्यां च पद्मप्रभायां राजधान्यां सुविशुद्धचन्द्राभा नाम रात्रिदेवता अभूत्। सा तां धर्ममतिचन्द्रां राजभार्यामुपसंक्रम्य आभरणसंघट्टनशब्देन प्रबोध्य एवमाह—यत्खलु राजपत्नि जानीयाः—शमथश्रीसंभवे महोद्यानषण्डे सर्वधर्मनिगर्जितराजो नाम तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। सा तस्या राजभार्यायाः पुरतो विस्तरेण बुद्धगुणवर्णं बुद्धनिर्मितं समन्तभद्रबोधिसत्त्वचर्याप्रणिधानं च संप्रका-

यामास । सा खलु पुनः कुलपुत्र राजभार्या तथागतप्रभावभासिनाव्याशयेनानुत्तरां सम्यक्संबोधिमभिसंप्रस्थिता । तस्य तथागतस्य सबोधिसत्त्वश्रावकसंघस्य महान्तं पूजासत्कारमकार्षीत् । तत्किं मन्यसे कुलपुत्र अन्या सा तेन कालेन तेन समयेन धर्ममतिचन्द्रा नाम राजभार्या अभूत् ? न खल्वेवं द्रष्टव्यम् । अहं सा तेन कालेन तेन समयेन धर्ममतिचन्द्रा नाम राजभार्या अभूवम् ॥ 5

सा अहं कुलपुत्र तेनाभिलापिकेण चित्तोत्पादेन तेन च तथागतावरोपितेन कुशलमूलेन सुमेरुपरमाणुरजःसमैः कल्पैर्न जातु दुर्गतिषूपपन्ना । न नरके, न तिर्यग्योनौ प्रेतेषु वा, न जातु हीनकुलेषूपपन्ना । न जात्विन्द्रियविकलाभूयम् । न जातु दुःखिताभूवम् । सदा अहं देवेषु देवमाहात्म्यं प्रतिलभ्य मनुष्येषु च मनुष्यमाहात्म्यं न जातु कल्याणमित्रविरहिता अभूवं यदुत बुद्धबोधिसत्त्वैः । न जातु विषमेषु कालेषूपपन्ना । 10 सा खल्वहं कुलपुत्र बुद्धानुबुद्धेषु कुशलमूलान्यवरोपयमाणा सुमेरुपरमाणुरजःसमान् कल्पान् सुखेन शमेन क्षेमेण मार्गेण आगता । न च तावन्मे बोधिसत्त्वेन्द्रियाणि परिनिष्पन्नानि ॥

तेषां सुमेरुपरमाणुरजःसमानां कल्पानामतिक्रान्तानामितो भद्रकल्पात्पूर्वं दशानां कल्पसहस्राणां प्रथमस्तेन कालेन अशोकविरजो नाम कल्पोऽभूत् रजोविमलतेजःश्रीनाम्नि लोकधातौ । स खलु पुनः कुलपुत्र रजोविमलतेजःश्रीर्लोकधातुः क्लिष्टविशुद्धोऽभूत् 15 पञ्चबुद्धोत्पादशतप्रभवः । तेषां खलु पुनः पञ्चानां बुद्धशतानां प्रथमः सुमेरुध्वजायतनशान्तनेत्रश्रीर्नाम तथागतो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां च बुद्धो भगवान् । अहं च प्रज्ञावभासश्रीर्नाम श्रेष्ठिदारिका अभूवं विघुष्टकीर्तेः श्रेष्ठिनो दुहिता अभिरूपा प्रासादिका दर्शनीया परमया शुभवर्णपुष्कलतया समन्वागता । सा च सुविशुद्धचन्द्राभा रात्रिदेवता प्रणिधानवशेन विरजोवत्यां 20 चातुर्द्वीपिकायां लोकधातौ विचित्रध्वजाया राजधान्यां विशुद्धनेत्राभा[१] नाम रात्रिदेवता अभूत् । तया मे रात्र्यां प्रशान्तायां शयितयोर्मातापित्रोस्तद्गृहं कम्पयित्वा उदारेणावभासेन स्वरूपं संदर्श्य बुद्धगुणवर्णं भाषित्वा स तथागतः प्रथमसप्ताहाभिसंबुद्धो बोधिमण्डनिषण्णः संदर्शितः । सा अहं सार्धं मातापितृभ्यां महता च ज्ञातिसंघेन तां सुविशुद्धचन्द्राभां रात्रिदेवतां पुरस्कृत्य तस्य तथागतस्यान्तिकमुपसंक्रान्ता । ततो मया तस्य तथागतस्य उदारां 25 पूजां कृत्वा सहदर्शनेन जगद्विनयबुद्धदर्शनप्रभवो नाम समाधिः प्रतिलब्धः । त्र्यध्वतलज्ञानावभासमण्डलश्च नाम समाधिः प्रतिलब्धः, यस्य प्रतिलम्भान्मया ते सुमेरुपरमाणुरजःसमाः कल्पा अनुस्मृताः । तच्च मे बोधिचित्तमामुखीभूतम् । तया मे तस्य तथागतस्यान्तिकाद्धर्मदेशनां श्रुत्वा एष सर्वसत्त्वतमोविकिरणधर्मावभासजगद्विनयमुखो नाम बोधिसत्त्वविमोक्षः प्रतिलब्धः, यस्य प्रतिलम्भाद्दशबुद्धक्षेत्रपरमाणुरजःसमांल्लोकधातून् कायेन स्फरामि । ये 30

---

१ B विचित्रनेत्रामा.

च तेषु लोकधातुषु तथागता, ते सर्वे मम चक्षुष आभासमागच्छन्ति । तेषां च पादमूलगत मात्मान संजानामि । ये च तेषु लोकधातुषु सत्त्वा उपपन्ना, तेऽपि सर्वे मम चक्षुष आभासमागच्छन्ति । तेषां च च्युतिमात्रतासंकेत प्रजानामि । चित्ताशयेन्द्रियाधिमुक्तीश्च प्रजानामि । पूर्वान्तकल्याणमित्रेषु च परिपाक प्रजानामि । यथाशयसंतोषण चैषां काय
5 मादर्शयामि ॥

स च मे विमोक्ष प्रतिचित्तक्षण विवर्धते । तद्विमोक्षचित्तानन्तरेण चित्तेन लोकधातुशतपरमाणुरज समानि बुद्धक्षेत्राणि कायेन स्फरामि । तदनन्तरेण चित्तेन लोकधातुसहस्रपरमाणुरज समानि बुद्धक्षेत्राणि कायेन स्फरामि । तदनन्तरेण चित्तेन लोकधातुशतसहस्रपरमाणुरज समानि बुद्धक्षेत्राणि कायेन स्फरामि । एव प्रतिचित्तक्षण
10 यावदनभिलाप्यानभिलाप्यलोकधातुपरमाणुरज समानि बुद्धक्षेत्राणि कायेन स्फरामि । ये च तेषु बुद्धक्षेत्रेषु तथागता, सर्वे ते मम चक्षुष आभासमागच्छन्ति । तेषां च पादमूलगतमात्मान संजानामि । या च तेषां बुद्धानां भगवतां धर्मदेशना, तां सर्वामुद्गृह्णामि, धारयामि संप्रधारयामि उपधारयामि । तेषां च तथागतानां पूर्वयोगसमुद्रान् प्रणिधानसमुद्रानवतरामि । या च तेषां तथागतानां बुद्धक्षेत्रपरिशुद्धि, तामपि च सर्वां बुद्धक्षेत्र
15 परिशुद्धयेऽभिनिर्हरामि । ये च सत्त्वास्तेषु लोकधातुसमुद्रेषूपपन्ना, तेऽपि सर्वे मम चक्षुष आभासमागच्छन्ति । यत्प्रमाणाश्च तेषां सत्त्वानामाशयेन्द्रियाधिमुक्तिभेदा, तत्प्रमाणमह कायमधितिष्ठामि यदुत एषां परिपाकविनयमुपादाय । एव प्रतिचित्तक्षणमेष विमोक्षो विवर्धते धर्मधातुप्रसरस्फरणविवर्धनयोगेन । एतमह कुलपुत्र सर्वसत्त्वतमोविकिरणधर्मावभास जगद्विनयमुखं बोधिसत्त्वविमोक्ष जानामि । किं मया शक्यमनन्तमध्यसमन्तभद्रबोधिसत्त्व
20 चर्याप्रणिधिनिर्यातानां बोधिसत्त्वानां धर्मधातुसागरनयप्रसरप्रवेशनसवर्तिनां सर्वबोधिसत्त्व समुदागमज्ञानवज्रकेतुसमाधिविक्रीडितानां सर्वलोकधातुषु सर्वतथागतवंशसंधारणमहाप्रणिधाननिर्यातानां सर्वलोकधातुप्रसरचित्तक्षणपरिशोधनमहापुण्यसागरपरिनिष्पन्नानां प्रतिचित्तक्षण सर्वधर्मधातुपरिपाकविनयज्ञानवशवर्तिनां सर्वलोकधातुषु सर्वसत्त्वसर्वावरणमहान्धकारविधमनज्ञानादित्यचक्षुषां सर्वसत्त्वधातुमहायानविज्ञपनविक्रमाणां सर्वजगत्काङ्क्षाविमति-
25 विचिकित्सातिमिरविधमनमतिचन्द्राणां सर्वभवसमुद्राभिनिवेशोच्चलनविशुद्धघोषस्वरमण्डलानां सर्वधर्मधातुरज पथि विकुर्वितसंदर्शनवशवर्तिनां व्यवभ्यज्ञानमण्डलासंभिन्नानां चर्यां ज्ञातुम्, गुणान् वा वक्तुम्, गोचरो वा अवतर्तुम्, विमोक्षविनीडित वा संदर्शयितुम् ॥

गच्छ कुलपुत्र, इयमिहैव मगधविषये बोधिमण्डे समन्तगम्भीरश्रीविमलप्रभा नाम रात्रिदेवता प्रतिवसति, यया अहमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादिता, पुन पुनश्च
30 संचोदिता । तामुपसंगम्य परिपृच्छ--कथ बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथ प्रतिपत्तव्यम् ॥

अथ खलु सुधन श्रेष्ठिदारको वासन्ती रात्रिदेवतामभिगाथाभिरभ्यष्टावीत्-

पश्यमि कायु तवाद्य विशुद्धं
  लक्षणचित्रितु मेरु यथैव ।
लोकअभ्युद्गत लोकविभासि
  मञ्जुशिरी यथ रूपशिरीये ॥ २२ ॥

धर्मशरीरु तवातिविशुद्धं  5
  सर्वत्रियध्वसमं अविकल्पम् ।
यत्र समोसरि लोक अशेषः
  संभवतेऽथ विभोति असङ्गम् ॥ २३ ॥

पश्यमि सर्वगतिप्रसरेषु
  कायु तव प्रतिभासविभक्तम् ।  10
रोममुखेषु च पश्यमि तुभ्यं
  तारकसंघ सज्योतिषचन्द्रान् ॥ २४ ॥

चित्तु तवा विपुलं सुविशुद्धं
  येन स्फुटं गगनं व दिशासु ।
यत्र समोसरि सर्वनरेन्द्रा  15
  ज्ञानमकल्पमलं वरु तुभ्यम् ॥ २५ ॥

क्षेत्ररजोपम मेघ विचित्रा
  निश्चरिषू तव रोमसुखेषु ।
ते च फरन्ति दशादिशि बुद्धान्
  सर्ववियूह प्रवर्षयमाणाः ॥ २६ ॥  20

सर्वजगोपम काय अनन्ता
  निश्चरिषू तव रोममुखेषु ।
ते च दशादिशि लोकु फरित्वा
  नानउपाय विशोधयि सत्वान् ॥ २७ ॥

रोममुखेषु अचिन्तिय क्षेत्रा  25
  पश्यमि नानवियूहविचित्रा ।
ये त्वय शोधित सत्वगतीषु
  तेष यथाशयसंभुत सर्वान् ॥ २८ ॥

लाभ सुलब्ध सुजीवितु तेषां
  ये तव नाम शृणोन्ति उदग्राः ।  30

येऽस्य च दर्शनमेपि नराणां
बोधिपथाभिमुखाश्च भवन्ति ॥ २९ ॥

कल्प अचिन्तिय वासु अपाये
दर्शनहेतु तवोत्सहितव्यः ।
5 यस्ति श्रवेण प्रहर्षितचित्ता
दर्शनमात्र शमेसि च क्लेशान् ॥ ३० ॥

क्षेत्रसहस्ररजोपम काया-
स्त्वादृश तान्तक कल्प भवेयुः ।
वर्ण भणेत्तव रोममुखस्य
10 वर्णक्षयोऽस्य भवेन्न कदाचित् ॥ ३१ ॥

अथ खलु सुधनः श्रेष्ठिदारको वासन्तीं रात्रिदेवतामाभिर्गाथाभिरभिष्टुत्य वासन्त्या रात्रिदेवतायाः पादौ शिरसाभिवन्द्य वासन्तीं रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य अवितृप्त एव कल्याणमित्रपर्युपासनेन वासन्त्या रात्रिदेवताया अन्तिकात् प्रक्रान्तः ॥ ३२ ॥



## ३५ समन्तगम्भीरश्रीविमलप्रभा।

अथ खलु सुधनः श्रेष्ठिदारको वासन्त्या रात्रिदेवतायाः प्रथमस्थानबोधिसत्त्वचित्त-मण्डलपरिशुद्धिमनुगच्छन्, बोधिगर्भसंभवमनुविचारयन्, बोधिसत्त्वप्रणिधानसागरमवतरन्, बोधिसत्त्वपारमितामार्गं परिशोधयन्, बोधिसत्त्वभूमिमण्डलमवक्रामयन्, बोधिसत्त्वचर्या-मण्डलं प्रविस्तरन्, बोधिसत्त्वनिर्याणसागरमनुस्मरन्, सर्वज्ञतावभासमहासागरमनुविलोकयन्, सर्वजगत्परित्राणप्रवणबोधिसत्त्वमहाकरुणामेघं विपुलीकुर्वन्, वासन्त्या रात्रिदेवतायाः समन्त-भद्रबोधिसत्त्वचर्याप्रणिधानमण्डलं सर्वक्षेत्रेष्वपरान्ताधिष्ठानमभिनिर्हरन्, येन समन्तगम्भीर-श्रीविमलप्रभा नाम रात्रिदेवता, तेनोपसंक्रम्य समन्तगम्भीरश्रीविमलप्रभाया रात्रिदेवतायाः पादौ शिरसाभिवन्द्य समन्तगम्भीरश्रीविमलप्रभां रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणी-कृत्य समन्तगम्भीरश्रीविमलप्रभाया रात्रिदेवतायाः पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया 10 आर्ये देवते, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वो बोधिसत्त्वचर्याभूमौ चरति, कथं निर्याति, कथं परिनिष्पद्यते? आह– साधु साधु कुलपुत्र, यस्त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य बोधिसत्त्वभूमिनिर्याणपरिनिष्पत्तिं पृच्छसि। दशभिः कुलपुत्र धर्मैः समन्वागता बोधिसत्त्वाः परिनिष्पन्ना भवन्ति बोधिसत्त्वचर्यायाम्। कतमैर्दशभिः? यदुत सर्वतथागतसंमुखीभावदर्शनसमाधिप्रतिलम्भविशुद्धया, सर्वबुद्धलक्षण- 15 विचित्रतानन्तकायव्यवलोकनचक्षुर्विशुद्धया, अनन्तमध्यतथागतवर्णसमुद्रविज्ञप्त्यवतारेण, अप्रमाणबुद्धधर्मावभासमण्डलसमुद्रसर्वधर्मधातुप्रमाणावतरणतया, सर्वतथागतरोमविवरसर्व-सत्त्वोपमरश्मिसमुद्रनानासत्त्वार्थनिश्चरितावतरणतया, एकैकरोमविवरसर्वरत्नवर्णार्चिःसमुद्र-दर्शनतया, प्रतिचित्तक्षणं बुद्धनिर्मितसमुद्रसर्वधर्मधातुप्रसरस्फरणसत्त्वविनयाधिष्ठानाव-तरणतया, सर्वसत्त्वस्वराङ्गसमुद्रसंप्रयुक्ततथागतनिर्घोषसर्वत्र्यध्वगतधर्मचक्रनिर्नादनिर्घोषसर्व- 20 सूत्रान्तमेघनिगर्जितनिर्घोषमण्डलावतरणतया, अनन्तमध्यबुद्धनामसमुद्रावतरणतया, अचिन्त्य-बुद्धविकुर्वितसंदर्शनसत्त्वविनयावतरणतया। एभिः कुलपुत्र दशभिर्धर्मैः समन्वागता बोधि-सत्त्वाः परिनिष्पन्ना भवन्ति बोधिसत्त्वचर्यायाम्॥

अहं खलु कुलपुत्र शान्तध्यानसुखसमन्तविक्रमस्य बोधिसत्त्वविमोक्षस्य लाभिनी। तस्या मम कुलपुत्र त्र्यध्वप्राप्ताः सर्वतथागताश्चक्षुष आभासमागच्छन्ति। तेषां च तथा- 25 गतानां बुद्धक्षेत्रपरिशुद्धिमवतरामि। पर्षन्मण्डलसमुद्रानपि, अनन्तमध्यसमाधिविकुर्वितसमु-द्रानपि, पूर्वयोगसमुद्रानपि, नामसमुद्रानप्यवतरामि। तेषां च तथागतानां धर्मचक्रप्रवर्तन-विमात्रतामवतरामि। तथागतायुष्प्रमाणनानात्वमपि, स्वराङ्गविमात्रतामपि। तेषां च तथागता-नामनन्तधर्मधातुशरीरतामवतरामि। न च तांस्तथागतान् भावतोऽभिनिविशामि। तत्कस्य हेतोः? अगतिका हि ते तथागताः, सर्वलोकगतिनिरुद्धत्वात्। अनागतिका हि ते तथागताः, 30

---

[1] B om. कथं निर्याति.

येऽप्य च दर्शनमेपि नराणां
बोधिपथाभिमुखाश्च भवन्ति ॥ २९ ॥

कल्प अचिन्तिय वासु अपाये
दर्शनहेतु तवोत्सहितव्यः।
यत्ति श्रवेण प्रहर्षितचित्ता
दर्शनमात्र शमेसि च क्लेशान् ॥ ३० ॥

क्षेत्रसहस्ररजोपम काया-
स्त्वादृश तान्तक कल्प भवेयुः।
वर्ण भणेत्तव रोममुखस्य
वर्णक्षयोऽस्य भवेन्न कदाचित् ॥ ३१ ॥

अथ खलु सुधनः श्रेष्ठिदारको वासन्तीं रात्रिदेवतामाभिर्गाथाभिरभिष्टुत्य वासन्त्या रात्रिदेवतायाः पादौ शिरसाभिवन्द्य वासन्तीं रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य अवितृप्त एव कल्याणमित्रपर्युपासनेन वासन्त्या रात्रिदेवताया अन्तिकात् प्रक्रान्तः ॥ ३२ ॥



## ३५ समन्तगम्भीरश्रीविमलप्रभा ।

अथ खलु सुधनः श्रेष्ठिदारको वासन्त्या रात्रिदेवतायाः प्रथमस्थानबोधिसत्त्वचित्तमण्डलपरिशुद्धिमनुगच्छन्, बोधिगर्भसंभवमनुविचारयन्, बोधिसत्त्वप्रणिधानसागरमवतरन्, बोधिसत्त्वपारमितामार्गं परिशोधयन्, बोधिसत्त्वभूमिमण्डलमवक्रामयन्, बोधिसत्त्वचर्यामण्डलं प्रविस्तरन्, बोधिसत्त्वनिर्याणसागरमनुस्मरन्, सर्वज्ञतावभासमहासागरमनुविलोकयन्, सर्वजगत्परित्राणप्रवणबोधिसत्त्वमहाकरुणामेघं विपुलीकुर्वन्, वासन्त्या रात्रिदेवतायाः समन्तभद्रबोधिसत्त्वचर्याप्रणिधानमण्डलं सर्वक्षेत्रेष्वपरान्ताधिष्ठानमभिनिर्हरन्, येन समन्तगम्भीरश्रीविमलप्रभा नाम रात्रिदेवता, तेनोपसंक्रम्य समन्तगम्भीरश्रीविमलप्रभाया रात्रिदेवतायाः पादौ शिरसाभिवन्द्य समन्तगम्भीरश्रीविमलप्रभां रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य समन्तगम्भीरश्रीविमलप्रभाया रात्रिदेवतायाः पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य देवते, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वो बोधिसत्त्वचर्याभूमौ चरति, कथं निर्याति, कथं परिनिष्पद्यते? आह– साधु साधु कुलपुत्र, यस्त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य बोधिसत्त्वभूमिनिर्याणपरिनिष्पत्तिं पृच्छसि । दशभिः कुलपुत्र धर्मैः समन्वागता बोधिसत्त्वाः परिनिष्पन्ना भवन्ति बोधिसत्त्वचर्यायाम् । कतमैर्दशभिः? यदुत सर्वतथागतसंमुखीभावदर्शनसमाधिप्रतिलम्भविशुद्ध्या, सर्वबुद्धलक्षणविचित्रतानन्तकायव्यवलोकनचक्षुर्विशुद्ध्या, अनन्तमध्यतथागतवर्णसमुद्रविज्ञप्त्यवतारेण, अप्रमाणबुद्धधर्मावभासमण्डलसमुद्रसर्वधर्मधातुप्रमाणावतरणतया, सर्वतथागतरोमविवरसर्वसत्त्वोपमरश्मिसमुद्रनानासत्त्वार्थनिश्चरितावतरणतया, एकैकरोमविवरसर्वरत्नवर्णार्चिःसमुद्रदर्शनतया, प्रतिचित्तक्षणं बुद्धनिर्मितसमुद्रसर्वधर्मधातुप्रसरस्फरणसत्त्वविनयाधिष्ठानावतरणतया, सर्वसत्त्वस्वराङ्गसमुद्रसंप्रयुक्तथागतनिर्घोषसर्वत्र्यध्वगतधर्मचक्रनिर्नादनिर्घोषसर्वसूत्रान्तमेघनिर्गर्जितनिर्घोषमण्डलावतरणतया, अनन्तमध्यबुद्धनामसमुद्रावतरणतया, अचिन्त्यबुद्धविकुर्वितसंदर्शनसत्त्वविनयावरणतया । एभिः कुलपुत्र दशभिर्धर्मैः समन्वागता बोधिसत्त्वाः परिनिष्पन्ना भवन्ति बोधिसत्त्वचर्यायाम् ॥

अहं खलु कुलपुत्र शान्तध्यानसुखसमन्तविक्रमस्य बोधिसत्त्वविमोक्षस्य लाभिनी । तस्या मम कुलपुत्र त्र्यध्वप्राप्ताः सर्वतथागताश्चक्षुष आभासमागच्छन्ति । तेषां च तथागतानां बुद्धक्षेत्रपरिशुद्धिमवतरामि । पर्षन्मण्डलसमुद्रानपि, अनन्तमध्यसमाधिविकुर्वितसमुद्रानपि, पूर्वयोगसमुद्रानपि, नामसमुद्रानप्यवतरामि । तेषां च तथागतानां धर्मचक्रप्रवर्तनविमात्रतामवतरामि । तथागतायुष्प्रमाणनानात्वमपि, स्वराङ्गविमात्रतामपि । तेषां च तथागतानामनन्तधर्मधातुशरीरतामवतरामि । न च तांस्तथागतान् भावतोऽभिनिविशामि । तत्कस्य हेतोः? अगतिका हि ते तथागताः, सर्वलोकगतिनिरुद्धत्वात् । अनागतिका हि ते तथागताः,

१ B om. कथं निर्याति.

स्वभावाविर्भूतत्वात् । अनुत्पन्ना हि ते तथागता, अनुत्पादधर्मतासमशरीरत्वात् । अनिरुद्धा हि ते तथागता, अनुत्पादलक्षणत्वात् । असत्या हि ते तथागता, मायागतधर्मदर्शनविज्ञप्त्या । अमृषा हि ते तथागता, सर्वजगदर्थसमुत्पन्नत्वात् । असंक्रान्ता हि ते तथागता, च्युत्युपपत्तिव्यतिवृत्तत्वात् । अविनष्टा हि ते तथागता, धर्मप्रकृत्यविनाशधर्मतया । एकलक्षणा ५ हि ते तथागता, सर्ववाक्पथसमतिक्रान्तत्वात् । अलक्षणा हि ते तथागता, धर्मलक्षणस्वभावपर्यवसानत्वात् ॥

सा खलु पुनरहं कुलपुत्र एवं सर्वतथागतानवतरमाणा एतं शान्तध्यानसुखसमन्तविक्रमं बोधिसत्त्वविमोक्षं तथागतध्यानमण्डलावभासेन विपुलीकरोमि, प्रविस्तरामि अवतरामि अनुगच्छामि समीकरोमि अभिनिर्हरामि समतलीकरोमि प्रवेशयामि विवर्धयामि निध्यायामि १० उपनिध्यायामि आकारयामि गोचरीकरोमि दृढीकरोमि अवभासयामि प्रभासयामि व्यूहयामि विभजामि संभारयामि संभावयामि। तत्र च सर्वसंकल्पासमुदाचाराया महाकरुणाया स्थित्वा सर्वसत्त्वपरित्राणसमुदाचारचित्तैकाग्रतायै प्रथमं ध्यानं भावयामि सर्वमनस्कर्मव्युपशमाय ज्ञानबलपराक्रमसर्वसत्त्वसंग्रहप्रीतिसुखचित्तैकाग्रतायै । द्वितीयध्यानं भावयामि संसारविपन्नोपेक्षासर्वसत्त्वस्वभावविशुद्ध्यायतनतायै । तृतीयं ध्यानं भावयामि सर्वसत्त्वक्लेशदुःखसंतापप्रशमनतायै । १५ चतुर्थं ध्यानं भावयामि सर्वज्ञताप्रणिधिमण्डलविपुलीकरणतायै सर्वसमाधिसागराभिनिर्हारकौशल्यतायै सर्वबोधिसत्त्वविमोक्षसागरनयावतरणतायै सर्वबोधिसत्त्वविक्रीडितज्ञानाभिज्ञतायै सर्वबोधिसत्त्वचर्याविकुर्विताभिनिर्हरणतायै समन्तमुखधर्मधातुप्रवेशज्ञाननयं परिशोधयमाना । एवं शान्तध्यानसुखसमन्तविक्रमं बोधिसत्त्वविमोक्षं भावयामि ॥

सा खलु पुनरहं कुलपुत्र एतं विमोक्षं भावयमाना नानोपायैः सत्त्वान् परिपाचयामि— २० यदुत रात्र्यां प्रशान्तायां रतिप्रमत्तानां सत्त्वानामशुभसंज्ञां संजनयामि । अरतिसंज्ञां परिखेदसंज्ञामुपरोधसंज्ञां बन्धनसंज्ञां राक्षसीसंज्ञामनित्यसंज्ञां दुःखसंज्ञामनात्मसंज्ञामस्वामिकसंज्ञामपराधीनसंज्ञां जरामरणसंज्ञाम् । सर्वकामविषयपरिभोगेष्वनभिरतिसंज्ञां संजनयामि । ते च सत्त्वास्तच्चित्तं परिभावयन्तः सर्वकामरतिष्वनभिरता धर्मारामरतिं प्रवारयमाणा अगारादनागारिकं निष्क्रामन्ति । तेषामहमरण्यगतानां धर्मेष्वानुलोमिकीं श्रद्धां जनयामि । आर्त- २५ भीषणोदारस्वरस्वरशब्दानन्तर्धापयामि । रात्र्यां प्रशान्तायां बुद्धधर्मगम्भीरतां संदर्शयामि । प्रदाणानुकूलं च प्रत्ययमुपसंहरामि । निष्क्रमतां च अगारद्वारं विवृणोमि । मार्गं संदर्शयामि । आलोकं करोमि । तमोन्धकारं विधमामि । भयमन्तर्धापयामि[1] । नैष्क्रम्यं संवर्णयामि । बुद्धवर्णं भाषयामि । धर्मवर्णं संघवर्णं कल्याणमित्रवर्णं भाषामि । कल्याणमित्रोपसंक्रमणं संवर्णयामि ॥

३० एतमहं कुलपुत्र विमोक्षं भावयमाना सत्त्वानामधर्मरागरक्तानामधर्मरागसंकल्पानन्तर्धापयामि । विषमलोभाभिभूतानां मिथ्यासंकल्पगोचराणां तान् संकल्पास्तान् मनसि-

---

१ S om भयमन्तर्धापयामि

कारानन्तर्धापयामि। अनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय उत्पन्नानां च पापकानां संकल्पानामन्तर्धानाय प्रत्ययमुपसंहरामि। अनुत्पन्नानां कुशलमूलानां संकल्पानां पारमितासंप्रयुक्तानां चर्यासंप्रयुक्तानां[1] सर्वज्ञताज्ञाननिर्याणप्रणिधानाभिनिर्हारसंप्रयुक्तानां मैत्रीनयसंप्रयुक्तानां सर्वसत्त्वमहाकरुणास्फरणसंप्रयुक्तानां विविधदिव्यमानुष्यसुखोपधानजननसंप्रयुक्तानां संकल्पानामुत्पादाय उत्पन्नानां च विविधनयप्रत्ययमुपसंहरामि। यावत्सर्वज्ञतानुलोमिकानां सर्वसंकल्पानां प्रत्ययमुपसंहरामि॥ 5

एतमहं कुलपुत्र शान्तध्यानसुखसमन्तविक्रमं बोधिसत्त्वविमोक्षं जानामि। किं मया शक्यं समन्तभद्रबोधिसत्त्वचर्याप्रणिधाननिर्यातानां बोधिसत्त्वानामनन्ताकारधर्मधातुज्ञानप्रतिलब्धानां सर्वकुशलमूलसंवर्धितचित्तानां सर्वतथागतज्ञानबलचित्तावभासप्रतिलब्धानां सर्वतथागतविषयसंवसितचित्तानां सर्वसंत्रासानावरणचित्तानां परिपूर्णसर्वज्ञताप्रणिधिचित्तानां 10 सर्वक्षेत्रसागरावतीर्णचित्तानां सर्वबुद्धसागरदर्शनप्रसृतचित्तानां सर्वतथागतधर्ममेघसंप्रतीच्छनचित्तानां सर्वाविद्यान्धकारविधमनकराणां संसाररतितृष्णाक्षयान्तकरणमार्गसर्वज्ञताभाससंजननचित्तानां चर्यां ज्ञातुम्, गुणान् वा वक्तुम्॥

गच्छ कुलपुत्र, इयमिहैव ममानन्तरं वैरोचनबोधिमण्डे प्रदक्षिणेन प्रमुदितनयनजगद्विरोचना नाम रात्रिदेवता प्रतिवसति। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन 15 बोधिसत्त्वकर्मसु प्रयोक्तव्यम्॥

अथ खलु समन्तगम्भीरश्रीविमलप्रभा रात्रिदेवता तस्यां वेलायामेतमेव शान्तध्यानसुखसमन्तविक्रमं बोधिसत्त्वविमोक्षं भूयस्या मात्रया संदर्शयमाना सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत—

सर्वअध्वपरमास्तथागता 20
आमुखाय अधिमुक्तिचेतसः।
तेषु चक्षु विपुलं विशुध्यते
येन ओतरिषु बुद्धसागरान्॥ १॥
पश्यही जिनशरीरु निर्मलं
लक्षणेहि समलंकृतं शुभम्। 25
तच पश्यहि जिने विकुर्वितं
धर्मधातुस्फरणं प्रतिक्षणम्॥ २॥
एष बोधिद्रुमबुद्धआसने
संप्रबुद्ध सुगतो विरोचनो।
धर्मधातु विपुलं स्फरित्वना 30
चक्र वर्तयि जगे यथाशयम्॥ ३॥

[1] B. om. चर्यासंप्रयुक्ताना.

बुद्धिया जिनु स्वभावधर्मतां
निःशरीर सुप्रशान्त अद्वयाम्।
रूपकायु शुभलक्षणैश्चितं
दर्शयी जगु फरित्व शेषतः ॥ ४ ॥

5 बुद्धकायु विपुलो अचिन्तियो
धर्मधातु फरि येनशेषतो।
सो च दृश्यति समन्ततः समं
सर्व दर्शयि समन्ततो जिनान् ॥ ५ ॥

सर्वक्षेत्रपरमाणुसादृशा
10 बुद्धकायप्रभमण्डलाश्रिताः।
अन्यमन्य शुभवर्णदर्शना
धर्मधातुफरणाः प्रतिक्षणम् ॥ ६ ॥

रश्मिमेघ विपुला अचिन्तिया
निश्चरन्ति जिनरोमतोऽक्षयाः।
15 ते स्फरित्व जग सर्वशेषतो
क्लेशताप शमयन्ति प्राणिनाम् ॥ ७ ॥

बुद्धनिर्मितसमुद्र अक्षया
निश्चरित्व जिनरोममण्डलात्।
धर्मधातु विपुलं स्फरित्वना
20 दुर्गतीदुख शमेन्ति प्राणिनाम् ॥ ८ ॥

बुद्धघोषु मधुरो निगर्जते
सुस्वराङ्गरुतसागरप्रभः।
धर्मवर्ष विपुल प्रवर्षणो
बोधिआशयु जनेति प्राणिनाम् ॥ ९ ॥

25 संगृहीत अनेन पूर्वतो
कल्पसागर चरित्व चारिकाम्।
ते विपश्यिपु विरोचनं जिनं
सर्वक्षेत्रप्रतिभासलक्षणम् ॥ १० ॥

सर्वलोक उदितस्तथागतः
　सत्त्व सर्वि सममामुखीस्थितः ।
अन्यमन्य अधिमुक्तिगोचर-
　स्ते न शक्यमपि सर्वि जानितुम् ॥ ११ ॥

बोधिसत्त्ववर शेषशेषतो
　एकरोमि सुगतस्य ओसरी ।
तद्विमोक्षनय ये अचिन्तिया-
　स्ते न शक्यमपि सर्वि जानितुम् ॥ १२ ॥

एष देवत ममा अनन्तरं
　लोकनाथभिमुखा प्रमोदते ।
ज्योतिरर्चिनयनेति नामतो
　एत पृच्छ कथ बोधिचारिकाम् ॥ १३ ॥

अथ खलु सुधनः श्रेष्ठिदारकः समन्तगम्भीरश्रीविमलप्रभाया रात्रिदेवतायाः पादौ शिरसाभिवन्द्य समन्तगम्भीरश्रीविमलप्रभां रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य समन्तगम्भीरश्रीविमलप्रभाया रात्रिदेवताया अन्तिकात् प्रक्रान्तः ॥ ३२ ॥



## ३६ प्रमुदितनयनजगद्विरोचना ।

अथ खलु सुधनः श्रेष्ठिदारकः कल्याणमित्रानुशासन्यावेशाविष्टः कल्याणमित्रवचनप्रतिपत्तिसंभूतचित्तः कल्याणमित्रैर्बेष्यातुरसद्मासमुदाचारचित्तः कल्याणमित्रदर्शनमनसिकाराविक्षिप्तचित्तः कल्याणमित्रदर्शनसर्वावरणपर्वतविकिरणावकाशप्रतिलब्धचित्तः कल्याण-
5 मित्रदर्शनेन सर्वसत्त्वधातुपरित्राणमहाकरुणानयसागरावतरणप्रतिलब्धचित्तः कल्याणमित्रदर्शनेन धर्मधातुनयसागरज्ञानावभासप्रतिलब्धचित्तो येन प्रमुदितनयनजगद्विरोचना नाम रात्रिदेवता तेनोपसंक्रान्तः ॥

अथ खलु प्रमुदितनयनजगद्विरोचना रात्रिदेवता सुधनस्य श्रेष्ठिदारकस्य भूयस्या मात्रया कल्याणमित्रोपसंक्रमणकुशलमूलसंभारसंभवपरिपाकमुपादाय महासंभारसंभवकल्याण-
10 मित्रोपसंक्रमणमध्यतिष्ठत् । महाविक्रमं कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । दुरवतरणवीर्यकर्मकल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । सुचिरविलम्ब कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । अनन्तमध्यदिक्प्रवेश कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । दीर्घाध्वसंवसनसंभव कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । अनन्तकार्यसंपूर्णविज्ञप्तिसंभव कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । अनन्तमध्यमार्गव्यूहसंभारक्रमण कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । समन्तमुखविक्रमसंभवं
15 कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् । अनुचलनागमनविक्रम कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् ॥

अथ खलु सुधनः श्रेष्ठिदारकः सर्वज्ञतासंभारवीर्यपराक्रमेण कल्याणमित्रोपसंक्रमणेन, महाप्रणिधानसागराभिनिर्हारविक्रमेण कल्याणमित्रोपसंक्रमणेन, एकसत्त्वार्थमपरान्तकल्पापर्यन्तदुःखानुभवव्यवसितेन कल्याणमित्रोपसंक्रमणेन, एकपरमाणुरजसि सर्वधर्मधात्वनुचरणविलम्बविक्रमेण महावीर्यकवचवर्मणा कल्याणमित्रोपसंक्रमणेन, सर्वदिक्समुद्रप्रसरानु-
20 जवनेन कल्याणमित्रोपसंक्रमणेन, एकवालपथे अपरान्तकल्पबोधिसत्त्वचर्यासंवसनेन कल्याणमित्रोपसंक्रमणेन, बोधिसत्त्वचर्याप्राप्तस्य प्रतिचित्तक्षण सकलसर्वज्ञताज्ञानप्रतिष्ठानेन कल्याणमित्रोपसंक्रमणेन, त्र्यध्वप्राप्तसर्वतथागतविकुर्वितव्यूहमार्गाक्रमणव्यवसितेन कल्याणमित्रोपसंक्रमणेन, सर्वधर्मधातुनयस्रोतःप्रसृतमार्गाक्रमेण कल्याणमित्रोपसंक्रमणेन, सर्वधर्मधातुनयारम्बणानुचरितेन सकलधर्मधातुस्फरणेन कल्याणमित्रोपसंक्रमणेन येन प्रमुदित-
25 नयनजगद्विरोचना रात्रिदेवता तेनोपसंक्रान्त ॥

सोऽपश्यत् प्रमुदितनयनजगद्विरोचनां रात्रिदेवतां भगवत पर्षन्मण्डले पुष्पगर्भसिंहासननिषण्णां समन्तभद्रप्रीतिविपुलविमलवेगध्वजं बोधिसत्त्वसमाधिं समापन्नाम् । तस्याश्चापश्यत् सर्वरोमविवरेभ्य सर्वसत्त्वाभिरोचनां सर्वसत्त्वाभिरुचितां सर्वसत्त्वदर्शनानुकूलां सर्वसत्त्वप्रियदर्शनविविधदानादिपारमिताचर्याभिद्योतनमेघान्निश्चरमाणान् यदुत सर्वसत्त्वयथा-
30 शयविज्ञप्तिसमवतदानचर्यासंदर्शनमेघान् सर्वसत्त्वानुग्रहाविग्रहाय सर्ववस्त्वनवेक्षणतायै सर्वसत्त्वसमप्रयोगापरित्यागितायै सर्वसत्त्वसमचित्ततायै सर्वसत्त्वाभिमाननापरित्यागितायै आध्या-

मिकबाह्यसर्ववस्तुपरित्यागितायै महादुष्करपरित्यागसंदर्शनतायै सर्वलोके यथाशयसत्त्वदान-चर्यासंदर्शनतायै त्र्यध्वप्राप्तबोधिसत्त्वाचिन्त्यदुष्करचर्यापरित्यागनिर्माणमेघान्निश्चरित्वा दशसु दिक्षु सर्वलोकधातुप्रसरपर्यापन्नानां सर्वसत्त्वानां विज्ञप्तिमागच्छतोऽपश्यत् यदुताचिन्त्य-बोधिसत्त्ववृषभिताविकुर्वितप्रतिलाभेन ॥

सर्वरोमविवरेभ्यः सर्वसत्त्वसमापन्नानौपपत्तिनिर्माणकायमेघान्निश्चरित्वा सर्वलोकधातु-पर्यापन्नान् सर्वसत्त्वान् स्फरित्वा अभिमुखं सर्वव्रतसमादानाकम्प्यतां संदर्शयमानान् सत्त्वधातुसमं नानातपोव्रतमण्डलमुद्योतयमानान् सर्वसर्वलोकनिश्रयतां सर्वविषयानवेक्षतां सर्वसंसारसंवासविमु-खतां दिव्यमानुषसंपत्तिविपत्तिसुखसमवसरणतां संदर्शयमानान् अशुभमण्डलमुद्योतयमानान्, शुभसंज्ञाविपर्यासं लोके विनिवर्तयमानान्, अनित्यचलव्ययपरिणामधर्मतां परिदीपयमानान्, दुःखानात्मसर्वसंस्कारधर्मतां संदर्शयमानान्, तथागतविषयसंवासाविप्रवासतां रोचयमानान्, अत्यन्ततथागतशीलपरिशुद्धये सत्त्वान् समादापयमानान्, सर्वसत्त्वयथाशयरुतशीलचर्यां संदर्शयमानान्, सर्वसत्त्वसंतोषणशीलसुगन्धिकतां संदर्शयमानान्, सर्वसत्त्वान् परिपाचय-मानानपश्यत् ॥

सर्वरोमविवरेभ्यश्च सर्वसत्त्वधातुसमापन्नान् नानावर्णात्मभावनिर्माणमेघान्निश्चरित्वा सर्वसत्त्वानां सर्वाङ्गप्रत्यङ्गच्छेदाधिवासनतां संदर्शयमानान्, सर्वसत्त्वकायोत्पीडनोपक्रमणाधि-वासनतां संदर्शयमानान्, सर्वसत्त्वासत्यवचनाक्रोशपरिभाषणकुत्सनपंसनताडनतर्जनाधि-वासनतां संदर्शयमानान्, सर्वसत्त्वाक्षोभ्यतां संदर्शयमानान्, सर्वसत्त्वसत्कारानुन्नामावनामतां संदर्शयमानान्, सर्वसत्त्वनिरभिमानतां संदर्शयमानान्, सर्वधर्मस्वभावक्षान्त्यक्षयताक्षयज्ञानतां संदर्शयमानान्, सर्वसत्त्वसर्वक्लेशप्रहाणाय क्षान्तिचर्यां संदर्शयमानान् सर्वसत्त्वानां, विसं-स्थितदुर्वर्णाश्रयशरीरतां व्यावर्तयमानान् सर्वसत्त्वानामनुत्तरां तथागतवर्णविशुद्धिं संवर्णय-मानान् सत्त्वान् परिपाचयमानानपश्यत् ॥

सर्वरोमविवरेभ्यश्च सर्वसत्त्वसमान्नानावर्णसंस्थानारोहपरिणाहान् नानोपपत्तिसत्त्व-कायनिर्माणमेघान्निश्चार्य यथाशयान् सत्त्वान् स्फरित्वा सर्वज्ञतामहासंभारवीर्यपराक्रमतां संदर्शयमानान्, सर्वमारकलिविकिरणवीर्यतां बोध्यारम्भाक्षोभ्यात्विवर्त्यवीर्यतां सर्वसत्त्वसंसार-सागरोत्तारणवीर्यतां सर्वाक्षणापायदुर्गतिविनिपातपथविनिवर्तनवीर्यतामज्ञानपर्वतविकिरणवीर्य-तां सर्वतथागतपूजोपस्थानापरिखेदवीर्यतां सर्वबुद्धधर्मचक्रसंप्रतीच्छनसंधारणवीर्यतां सर्वावरण-पर्वतनिर्भेदनविकिरणवीर्यतां सर्वसत्त्वपरिपाकविनयापरिखेदवीर्यतां सर्वबुद्धक्षेत्रपरिशोधन-वीर्यतामनुत्तरां तथागतवीर्यविशुद्धिं संदर्शयमानान् सत्त्वान् परिपाचयमानानपश्यत् ॥

सर्वरोमविवरेभ्यश्च नानावर्णसंस्थानान् विविधात्मभावनिर्माणमेघान्निश्चरित्वा नानो-पायैः सत्त्वानां प्रीतिं संजनयमानान्, दौर्मनस्यं विनिवर्तयमानान्, सर्वकामरतिं विजुगुप्स-मानान्, ह्रीधर्मतां लोके प्रभावयमानान्, गुप्तेन्द्रियतया सत्त्वान् प्रतिष्ठापयमानान्, अनु-

1 S om. 'विवर्त'.

त्वब्रह्मचर्यं संवर्णयमानान्, समय कामभोगाभरतिविषय संदर्शयमानान्, निगतकामरतीना मपि सर्वलोककामरतिविषय संदर्शयमानान्, धर्मारामरत्या सत्त्वान् प्रतिष्ठापयमानान्, अनुपूर्वध्यानसमाधिसमापत्तिसुखान्यभिनिर्हरमाणान्, सर्वसत्त्वसर्वक्लेशनिध्यप्तिचित्तता संवर्ण

315

यमानान्, सर्वबोधिसत्त्वसमाधिसमुद्रविकुर्वणतां संदर्शयमानान्, बोधिसत्त्वाभिज्ञाविकुर्वित

5 वृषभिता संदर्शयमानान्, सत्त्वानां प्रीतिं संजनयमानान्, प्रामोद्यमुत्पादयमानान्, दौर्मनस्य व्यावर्तयमानान्, चित्तकल्यतामावहयमानान्, चित्तकर्मण्यतां कुर्वाणान्, आशय विशोधय मानान्, इन्द्रियाण्युत्तापयमानान्, कायसुखं संजनयमानान्, धर्मप्रीतिवेग विवर्धयमानान् सत्त्वान् परिपाचयमानानपश्यत् ॥

सर्वरोमविवरेभ्यश्च सर्वोपपत्तिसदृशशरीरनानाकायमेघान्निश्चरित्वा सर्वक्षेत्रगतसर्व-

10 सत्त्वाभिमुखाभिरुचितदर्शनतायै सर्वकल्याणमित्रोपसङ्क्रमणापरिखेदता संदर्शयमानान्, सर्वाचार्यगुरुकल्याणमित्रोपस्थानपरिचर्यापरिखेदता संदर्शयमानान्, सर्वतथागतधर्मचक्र प्रवर्तनसंप्रतीच्छनसंधारणापरिखेदवीर्यता संदर्शयमानान्, सर्वधर्ममुखसमुद्रान् प्रविचिन्वा नान्, सर्वबुद्धसमुद्रावतारणनय संवर्णयमानान्, सर्वधर्मलक्षणस्वभावनयमभिद्योतयमानान्, सर्वधर्मान् समाधिद्वार संदर्शयमानान्, सर्वसत्त्वदृष्टिपर्वतनिर्भेदन प्रज्ञावज्र संदर्शय

15 मानान्, अनेकचित्तक्षणसमायोगेन सर्वसत्त्वाविद्यान्धकारविधमनप्रज्ञादित्यमण्डलोद्गम संदर्शयमानान्, सर्वसत्त्वप्रीतिसंजननतया सर्वज्ञताया सत्त्वान् परिपाचयमानानपश्यत् ॥

सर्वरोमविवरेभ्यश्च सर्वजगत्समानुदाराचिन्त्यनानावर्णविकल्पसंस्थान् आत्मभाव निर्माणमेघान्निश्चरित्वा यथाशयाधिमुक्तसर्वसत्त्वाभिमुखस्थितान् नानारुतमन्त्रसंस्कारनिर्देशै सर्वलौकिकपुण्याभिज्ञतां संदर्शयमानान्, सर्वलौकिककृत्यप्रचारतश्च सर्वत्रैधातुकसमयसंदर्शन

20 तश्च सर्वत्रैधातुकानि सरणदिक्संवर्णनतश्च सर्वदृष्टिकान्तारगहनानि सरणदिक्संदर्शनतश्च सर्वज्ञतामार्गविशेषता संवर्णयमानान्, श्रावकप्रत्येकबुद्धभूमिपर्यसमतिक्रम संदर्शयमानान्, संस्कारासंस्कारानुनयप्रतिघानुनयेऽप्रतिघानुनयतां संदर्शयमानान्, संसारनिर्वाणसुखासंनि श्रितता संदर्शयमानान्, तुषितभवनवासादिपरंपरागमनाप्रतिप्रस्रब्धिं संदर्शयमानान्, [2]बोधि मण्डप्रस्थानाभिसंबोधाप्रतिप्रस्रब्धि संदर्शयमानान्, सर्वज्ञताया सत्त्वान् परिदीपय

25 मानानपश्यत् ॥

सर्वरोमविवरेभ्यश्च एकैकस्माद्रोमविवरात् सर्वक्षेत्रपरमाणुरजःसमानात्मभावनिर्माण मेघान्निश्चरित्वा सर्वसत्त्वलोकाभिमुखस्थितान् समन्तभद्रबोधिसत्त्वचर्याप्रणिधान संवर्णय- मानान्, सर्वधर्मधातुविशुद्धिविनिष्ठाप्रणिधानवैशेषिकता संवर्णयमानान्, प्रतिचित्तक्षण सर्व- लोकधातुसमुद्रपरिशुद्धि संवर्णयमानान्, सर्वतथागतपूजोपस्थानाप्रतिप्रस्रब्धिं संवर्णयमानान्,

30 प्रतिचित्तक्षण सर्वधर्मनयसागरावताराप्रतिप्रस्रब्धि संवर्णयमानान्, प्रतिचित्तक्षण तथागत

---

1 B adds सर्वसत्त्वप्रश्नसागरसमुद्रविनयनतया प्रज्ञाविषयं संदर्शयमानान्. 2 B om बोधि मानान्

बलप्रवेशाप्रतिप्रस्रब्धतां संवर्णयमानान्, प्रतिचित्तक्षणं सर्वलोकधातुसमुद्रपरमाणुरजःसमसर्वधर्मधातुनयसागरावतरणाप्रतिप्रस्रब्धीः संदर्शयमानान्, सर्वक्षेत्रेष्वपरान्ताधिष्ठानकल्पसंवाससर्वज्ञतामार्गविशुद्धिसंप्रकाशनाप्रतिप्रस्रब्धतां संवर्णयमानान्, [1]प्रतिचित्तक्षणं तथागतबलप्रवेशाप्रतिप्रस्रब्धतां संदर्शयमानान्, सर्वत्र्यध्वनयसागरावताराप्रतिप्रस्रब्धतां संदर्शयमानान्, बोधिसत्त्वसर्वक्षेत्रार्द्धिविकुर्वितसंदर्शनाप्रतिप्रस्रब्धतां संदर्शयमानान्, बोधिसत्त्वप्रणिधानचर्या- 5 संदर्शनेन सर्वसत्त्वान् सर्वज्ञतायां प्रतिष्ठापयमानानपश्यत्॥

सर्वरोमविवरेभ्यश्च एकैकस्माद्रोमविवरात् सर्वजगच्चित्तसमान् कायनिर्माणमेघान्निश्चरित्वा सर्वसत्त्वाभिमुखस्थितानपर्यन्तं सर्वज्ञतासंभारबलं संदर्शयमानान्, अभेद्यापर्यादत्ताविनाशधर्मसर्वज्ञताचित्तबलं संदर्शयमानान्, अविवर्त्याप्रत्युदावर्त्याधिष्ठानाप्रतिप्रस्रब्धमनुत्तरसर्वबोधिसत्त्वचर्यासमुदागमबलं संदर्शयमानान्, सर्वसंसारदोषाननुलेपबलतां बोधि- 10 सत्त्वानां संवर्णयमानान्, सर्वमारमण्डलविकिरणबलं बोधिसत्त्वानां संदर्शयमानान्, सर्वक्लेशमलाननुलेपक्लेशबलतां बोधिसत्त्वानां संदर्शयमानान्, सर्वकर्मावरणपर्वतविकिरणबलं बोधिसत्त्वानां संदर्शयमानान्, सर्वकल्पसंवासबोधिसत्त्वचर्यापरिखेदमहाकरुणाबलं बोधिसत्त्वानां संदर्शयमानान्, सर्वबुद्धक्षेत्रसंप्रकम्पनसंक्षोभणसर्वसत्त्वसंप्रहर्षणबलं बोधिसत्त्वानां संदर्शयमानान्, सर्वमारपरप्रवादिगणप्रमर्दनबलं बोधिसत्त्वानां संदर्शयमानान्, महाधर्मचक्र- 15 प्रवर्तनज्ञानबलं लोके प्रभावयमानान्, सर्वसत्त्वान् सर्वज्ञतायां परिदीपयमानानपश्यत्॥

सर्वरोमविवरेभ्यश्च एकैकस्माद्रोमविवरात् सर्वजगच्चित्तसमादानानन्तवर्णकायनिर्माणसमुद्रमेघान्निश्चरित्वा दशदिगनन्तसत्त्वधातुस्फरणान् यथाशयाधिमुक्तानां सत्त्वानां बोधिसत्त्वचर्याज्ञानविक्रमं संदर्शयमानान्, सर्वसत्त्वधातुसमुद्रावतरणज्ञानं संदर्शयमानान्, सर्वसत्त्वचित्तसमुद्रावतरणज्ञानं संदर्शयमानान्, सर्वसत्त्वेन्द्रियसागरपरिज्ञाज्ञानं संदर्शयमानान्, 20 सर्वसत्त्वचर्यासमुद्रावतरणज्ञानं संदर्शयमानान्, सर्वसत्त्वपरिपाकविनयकालानतिक्रमणज्ञानं संदर्शयमानान्, सर्वधर्मधात्वानुरवणज्ञानं संदर्शयमानान्, प्रतिचित्तक्षणं सर्वधर्मधातुज्ञाननयसागरस्फरणज्ञानं संदर्शयमानान्, सर्वलोकधातुसमुद्रसंवर्तविवर्तज्ञानं संदर्शयमानान्, सर्वलोकधातुप्रतिष्ठानसंस्थानव्यूहविकल्पज्ञानं संदर्शयमानान्, सर्वतथागतपूजाविकुर्वितोपसंक्रमणपूजोपस्थानधर्मचक्रमेघसंप्रतीच्छनज्ञानं संदर्शयमानान्, एवं ज्ञानपारमिताचर्यासंदर्श- 25 नेन सत्त्वानां प्रीतिं संजनयमानानपश्यत्। चित्तं प्रसादयमानान् प्रामोद्यमुत्पादयमानान् हर्षं संजनयमानान् दौर्मनस्यं विनिवर्तयमानान् चित्तं विशोधयमानान् चित्तकल्पतामावर्तयमानान्, इन्द्रियाण्युत्तापयमानान् अधिमुक्तिबलं संजनयमानान् सर्वज्ञतायामवैवर्त्यान् कुर्वाणानपश्यत्॥

यथा च पारमिताचर्यासंदर्शनेन लोके सत्त्वान् परिपाकं गच्छतोऽपश्यत्, तथा सर्वबोधिसत्त्वधर्मनिगर्जनेन ये च प्रमुदितनयनजगद्विरोचनाया रात्रिदेवतायाः प्रथमचित्तो- 30

---

1 B om. प्रति...मानान्.

त्पादसंभारा कल्याणमित्राराधनप्रयोगा तथागतपादमूलोपसंक्रमणपूजोपस्थानप्रयोगा बुद्धोत्
धर्मचर्याभियोगप्रयोगा, ये च दानपारमिताचर्यादुष्करपरित्यागा, शीलपारमितापरिशोधन
प्रयोगा, महाराज्यैश्वर्यपरिवारभोगाधिपत्यपरित्यागाभिनिष्क्रमणप्रयोगा, ये लोके दुष्करचर्या
महाव्रततपोमण्डलक्षान्तिनिर्हारा, या बोधिसत्त्वव्रतसमादानप्रयोगाकम्प्यता, ये बोधिसत्त्वदृढ
5 समादानधर्मसमुद्रा सर्वसत्त्वधातुदुष्कृतदुर्भाषितदुश्चिन्तिताधिवासनप्रयोगा, कायिकचैत
सिकपीडाधिवासनप्रयोगा, या सर्वकर्माविप्रणाशधर्मताक्षान्ति सर्वधर्माधिमुक्तिक्षान्ति
सर्वधर्मस्वभावनिध्यानक्षान्ति, यत् सर्वज्ञतारम्भप्रयोगवीर्यम्, यत् सर्वबुद्धधर्मपरिनिष्पादन
वीर्यम्, या सर्ववीर्यपारमिताचर्या, ये ध्यानपारमितासंभारा ध्यानपारमिताभियोगा ध्यान
पारमितापरिनिष्पत्तिविशुद्धिचर्या, यानि बोधिसत्त्वसमाधिप्रतिलाभविकुर्वितानि, ये समाधि
10 मुखसमुद्रावतारा, यानि ध्यानपारमिताचरितानि, ये प्रज्ञापारमितासंभारा, ये बोधिसत्त्व
महाप्रज्ञादित्यमण्डलविशोधननया, ये महाप्रज्ञामेघसंभारा, ये प्रज्ञानिधानसंभारा, ये
महाप्रज्ञामहासागरावतारणनयप्रयोगा, ये महोपायकौशल्यनयप्रयोगा, ये महोपायकौशल्य
परिशुद्धिसंप्रयुक्ताः पूर्वयोगा, यानि बोधिसत्त्वमहाप्रणिधिपारमिताशरीराणि, या महाप्रणिधि
पारमितापरिनिष्पत्तय, यानि महाप्रणिधानपारमिताचरितानि, ये महाप्रणिधानपारमिता
15 संप्रयुक्ताः पूर्वयोगा, ये बलपारमिताप्रतिलाभमहासंभारा, ये बलपारमिताप्रत्यया, ये बलपार
मितानयमहासागरा, ये बलपारमितानिर्देशा, ये बलपारमितासंप्रयुक्ताः पूर्वयोगा, ये ज्ञानपार-
मितानया, ये ज्ञानपारमिताप्रयोगा, ये ज्ञानपारमिताविशुद्धिनया, या ज्ञानपारमितादिशः, ये
ज्ञानपारमितानुगमा, ये ज्ञानपारमिताप्रसरा, यानि ज्ञानपारमितानयसमवसरणानि, ये ज्ञान-
पारमिताविज्ञप्तिनया, यानि ज्ञानपारमिताप्रसरानुसरणानि, यानि ज्ञानपारमितास्फरणानि,
20 ये ज्ञानपारमिताप्रविस्तरा, ये ज्ञानपारमिताकाया, ये ज्ञानपारमितासमुद्रनया, ये ज्ञानपार
मितापरिनिष्पत्तिसंप्रयुक्ताः पूर्वयोगा, ये ज्ञानपारमिताचर्याप्रकारप्रविचयप्रवेशसंभवसमुद्रा
गमा, ये ज्ञानपारमितासमवसरणनयसंप्रयुक्ता धर्माधर्मसंग्रहधर्मज्ञानानुगमा कर्मज्ञानानुगमा
क्षेत्रज्ञानानुगमा कल्पज्ञानानुगमा त्र्यध्वज्ञानानुगमा बुद्धोत्पादज्ञानानुगमा बुद्धज्ञानानुगमा
बोधिसत्त्वज्ञानानुगमा बोधिसत्त्वचित्तसंभवज्ञानानुगमा बोधिसत्त्वव्यवस्थानज्ञानानुगमा बोधिस
25 त्त्वसंभवज्ञानानुगमा, बोधिसत्त्वप्रस्थानज्ञानानुगमा, बोधिसत्त्वप्रणिधिज्ञानानुगमा, बोधिसत्त्व
धर्मचक्रज्ञानानुगमा, बोधिसत्त्वधर्मप्रविचयज्ञानानुगमा, बोधिसत्त्वधर्मसागरनयज्ञानानुगमा,
बोधिसत्त्वधर्मसमुद्रज्ञानानुगमा, बोधिसत्त्वधर्मपरिवर्तज्ञानानुगमा, बोधिसत्त्वधर्मनिधान
ज्ञानानुगमा, बोधिसत्त्वधर्मगतिज्ञानानुगमा, ये प्रमुदितनयनजगद्विरोचनाया रात्रिदेवताया
यावदनन्तमध्यारम्भणज्ञानपारमितासंप्रयुक्ता बोधिसत्त्वधर्मा, तानस्याः सर्वरोमविवरेभ्य
30 एकैकरोमविवरविनिसृतनानावर्णसत्त्वकायमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्।
यदुत अकनिष्ठसुदर्शनसुदृशातपोवृहत्फलशुद्धावासदेवसदृशकायमेघनिश्चरितान् सत्त्वान् परि

१ B om ये ध्यानपारमितासंभारा

पाचयमानानपश्यत्। एवं बृहत्फलपुण्यप्रसवानभ्रकदेवसदृशकायमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। शुभकृत्स्नाप्रमाणशुभपरीत्तशुभदेवसदृशकायमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। आभास्वराप्रमाणाभपरीत्ताभदेवसदृशकायमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। महाब्रह्मब्रह्मपुरोहितब्रह्मपार्षददेवसदृशकायमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। साप्सरोगणसदेवपुत्रवशवर्तिदेवराजसदृशात्मभावमेघनिश्चरितान् 5 सत्त्वान् परिपाचयमानानपश्यत्। साप्सरोगणसदेवपुत्रसुनिर्मितदेवराजसदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। साप्सरोगणसदेवपुत्रसंतुषितदेवराजसदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। साप्सरोगणसदेवपुत्रसुयामदेवराजसदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। साप्सरोगणसदेवपुत्रशक्रदेवराजसदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। धृतराष्ट्रगन्धर्वराजगन्धर्वपुत्र- 10 गन्धर्वकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। विरूढककुम्भाण्डराजकुम्भाण्डपुत्रकुम्भाण्डकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। विरूपाक्षनागराजनागपुत्रनागकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। वैश्रवणमहायक्षराजयक्षपुत्रयक्षकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। द्रुमकिन्नरराजकिन्नरपुत्रकिन्नरकन्यासदृशात्मभावमेघनिश्चरितान् 15 सत्त्वान् परिपाचयमानानपश्यत्। सुमतिमहोरगेन्द्रमहोरगपुत्रमहोरगकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। महात्वरवेगस्थामगरुडेन्द्रगरुडपुत्रगरुडकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। राहुसुरेन्द्रासुरपुत्रासुरकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। यमधर्मराजयमपुत्रयमकन्यासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। सर्वमनुष्येन्द्र- 20 नरनारीदारकदारिकासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। एवं सर्वगतिपर्यापन्नसर्वसत्त्वसदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। सर्वश्रावकप्रत्येकबुद्धर्षिसदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। वाय्वप्तेजःस्कन्धदेवतासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। सागरनदीपर्वतवनस्पत्यौषधिवृक्षपृथिवीदेवतासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। 25 उद्याननगरबोधिमण्डरात्रिदिवसगगनदिक्पादगामिनीशरीरकायिकदेवतासदृशात्मभावमेघनिश्चरितान् सत्त्वान् परिपाचयमानानपश्यत्। एवं यावद्वज्रपाणिसदृशात्मभावमेघनिश्चरितान् दश दिशः स्फरित्वा धर्मधातुनयप्रसरेषु सर्वसत्त्वसंमुखीभावस्थितान् सत्त्वान् परिपाचयमानानपश्यत्॥

ये च प्रमुदितनयनजगद्विरोचनाया रात्रिदेवतायाः प्रथमचित्तोत्पादसमारम्भाः पूर्व- 30 जन्मसमुदागतकुशलचित्तपरंपराव्यवच्छेदनयाः, यानि च बोधिचित्तोत्पादप्रशंसापरंपरानन्त-

१ B परिदीपयमानान्.

र्याणि च्युत्युपपत्तिपरिग्रहपरंपरानन्तर्याणि आत्मभावपरिग्रहपरंपरानन्तर्याणि नामचक्रपरंपरानन्तर्याणि कल्याणमित्रोपसंक्रमणपरंपरानन्तर्याणि बुद्धोत्पादारागणपरंपरानन्तर्याणि, धर्मपदव्यञ्जनोद्ग्रहपरंपरानन्तर्याणि बोधिसत्त्वमार्गप्रतिपत्तिचित्तपरंपरानन्तर्याणि समाधिप्रतिलाभपरंपरानन्तर्याणि समाधिप्रतिलाभाद्बुद्धदर्शनपरंपरानन्तर्याणि क्षेत्रदर्शनचक्षुस्स्फरणपरंपरानन्तर्याणि कल्पपरंपराज्ञानचक्रानन्तर्याणि धर्मधातुप्रतिवेधज्ञानपरंपरानन्तर्याणि सत्त्वधातुव्यवलोकनज्ञानपरंपरानन्तर्याणि धर्मधातुनयसागरावतरणपरंपराच्युत्युपपत्तिज्ञानपरंपरानन्तर्याणि दिव्यश्रोत्रपरिशुद्धिप्रत्यवेक्षणज्ञानपरंपरानन्तर्याणि सर्वसत्त्वधातुचित्तच्यवनलोकनसर्वज्ञनयान्तिमुखपरंपरानन्तर्याणि प्रथमदिव्यचक्षुरवक्रान्तिमुखपरंपरानन्तर्याणि प्रथमदिव्यश्रोत्रविज्ञप्तिपरंपरानन्तर्याणि प्रथमपरसत्त्वचित्तज्ञानपरंपरानन्तर्याणि प्रथमात्मपरसत्त्वपूर्वनिवासानुस्मृतिज्ञानपरंपरानन्तर्याणि प्रथमाभावप्रतिष्ठानाभिसंस्कारर्द्धिप्रतिलाभप्रत्ययपरंपरानन्तर्याणि महर्द्धिविक्रमदिक्स्फरणपरंपरानन्तर्याणि बोधिसत्त्वविमोक्षप्रतिलाभपरंपरानन्तर्याणि बोधिसत्त्वविमोक्षसागराचिन्त्यनयावतारपरंपरानन्तर्याणि बोधिसत्त्वविकुर्वितपरंपरानन्तर्याणि बोधिसत्त्वविक्रमपरंपरानन्तर्याणि बोधिसत्त्वाक्रमपरंपरानन्तर्याणि बोधिसत्त्वसञ्जागतपरंपरानन्तर्याणि बोधिसत्त्वमार्गावतारपरंपरानन्तर्याणि, यावद् यानि प्रमुदितनयनजगद्विरोचनाया रात्रिदेवताया बोधिसत्त्वसुसूक्ष्मज्ञानप्रवेशपरंपरानन्तर्याणि, तानि अस्या सर्वरोमविवरेभ्यो निर्माणकायमेघान्निश्चरित्वा सत्त्वेभ्यो धर्मं देशयमानानपश्यत् । संप्रकाशयमानान् द्योतयमानान् संदर्शयमानान् उदीरयमानान् प्रविभजमानान् प्रविस्तरमानान् गणयतो निर्दिश्यमानान् विज्ञापयमानान् उपसंहरमाणानपश्यत् ॥

केषांचिद्वातमण्डलीसंक्षोभनिर्घोषरुतेन देशयमानानपश्यत् । केषांचिदग्निस्कन्धसमुच्छ्रयनिर्नादरुतेन, केषांचिज्ज्वलनार्चिर्निगर्जितरुतेन, केषांचित् सागरगर्जितनिर्घोषरुतेन, केषांचित् पृथिवीसंकम्पननिर्नादरुतेन, केषांचिन्महापर्वतराजसंघट्टनसंघर्षणनिर्घोषनिर्नादरुतेन, केषांचिद्देवनगरसंकम्पनमधुरनिर्नादनिर्घोषरुतेन, केषांचिद्दिव्यविमानसंघट्टनरुतेन, केषांचिद्देवेन्द्ररुतेन, केषांचिन्नागेन्द्ररुतेन, केषांचिद्यक्षेन्द्ररुतेन, केषांचिद्गन्धर्वेन्द्ररुतेन, केषांचिदसुरेन्द्ररुतेन, केषांचिद्गरुडेन्द्ररुतेन, केषांचिन्महोरगरुतेन, केषांचिदीश्वररुतेन, केषांचित्किन्नरेन्द्ररुतेन, केषांचिन्मनुष्येन्द्ररुतेन, केषांचिद्ब्रह्मेन्द्ररुतेन, केषांचिदप्सरःसंगीतिरुतेन, केषांचिद्दिव्यतूर्यसंप्रनादनरुतेन, केषांचिन्मणिराजनिर्घोषरुतेन, केषांचित् सर्वसत्त्वकायनानारुतैः प्रमुदितनयनजगद्विरोचनाया रात्रिदेवताया विमोक्षविषयं सत्त्वानां प्रभावयमानानपश्यत् । एवं बोधिसत्त्वात्मभावमेघैर्नानाबोधिसत्त्वरुतैस्तथागतनिर्माणकायमेघैस्तथागतरुतनिर्मितस्वराङ्गनयैः प्रमुदितनयनजगद्विरोचनाया रात्रिदेवताया विमोक्षविषयं संप्रथमचित्तोत्पादसंभवनिष्पत्तिसमुदागमं सविमोक्षविक्रीडितं सर्वसत्त्वानां विज्ञप्यमानानपश्यत् ॥

तस्या एकैकेन निर्माणरूपमेघेन प्रतिचित्तक्षणमनभिलाप्यानभिलाप्यानि दशदिशि लोके बुद्धक्षेत्राणि विशोध्यमानानपश्यत् । अनन्तमध्यान् सत्त्वसमुद्रान् सर्वापायदुःखेभ्यो

विमोच्यमानानपश्यत् । अनन्तमध्यं सत्त्वधातुं देवमनुष्यसंपत्तौ प्रतिष्ठाप्यमानानपश्यत् । अनन्तमध्यान् सत्त्वसमुद्रान् संसारसागरादुच्चाल्यमानानपश्यत् । अनन्तमध्यान् सत्त्वसमुद्रान् श्रावकप्रत्येकबुद्धभूमौ प्रतिष्ठाप्यमानानपश्यत् । प्रतिचित्तक्षणमनन्तमध्यान् सत्त्वसमुद्रान् दशभूमावावर्तमानान् सुधनः श्रेष्ठिदारकः पश्यति स्म, शृणोति व्यवचारयति अवचरति प्रतिविध्यति निध्यायति अनुगच्छति अनुसरति अनुप्रविशति समतयाधितिष्ठति यदुत ५ प्रमुदितनयनजगद्विरोचनाया रात्रिदेवताया अचिन्त्यसमन्तभद्रप्रीतिविपुलध्वजबोधिसत्त्वविमोक्षविकुर्वितवृषभितानुभावेन पूर्वसमागचरितत्वात्तथागताधिष्ठानाधिष्ठितत्वादचिन्त्यकुशलमूलपरिपाकेन समन्तभद्रायाश्च बोधिसत्त्वचर्याया भाजनीभूतत्वात् ॥

अथ खलु सुधनः श्रेष्ठिदारको महाबोधिसत्त्वप्रीतिवेगसागरावभासप्रतिलब्धो दशदिक्तथागताधिष्ठितः प्रमुदितनयनजगद्विरोचनाया रात्रिदेवतायाः पुरतः प्राञ्जलिः १० स्थित्वा प्रमुदितनयनजगद्विरोचनां रात्रिदेवतामाभिः सारूप्याभिर्गाथाभिरभ्यष्टौषीत्—

गम्भीरधर्मत जिनानां यत्र सुशिक्षितास्यमितकल्पान् ।
दशदिशि लोकि अनुपूर्वं रूप यथाशयं जगु करित्वा ॥ १ ॥
ज्ञात्वा निरात्मकमनार्थं वितथ विसंज्ञिनं सततभ्रान्तम् ।
ऋद्ध्या अनेकविध कायैश्वर्यं विदर्शत्व जगु विनेसि ॥ २ ॥ १५
अत्यन्तविज्वर प्रशान्ता धर्मशरीर अद्वयविशुद्धा ।
द्वयानिश्रितं जगशेषं निर्मितमेघगर्जेन विनेसि ॥ ३ ॥
न च स्कन्धआयतनधातौ निश्रयु तुभ्य विद्यति कदाचित् ।
सर्वाङ्गपूर्णवररूपैश्वर्यं निगर्जनैर्जगु विनेसि ॥ ४ ॥
अध्यात्मबाहिरविमुक्ता उच्चलिता द्वयोद्भवसमुद्रात् । २०
संसारसागरि अनन्तान् दर्शयसे गतीषु प्रतिभासान् ॥ ५ ॥
न च तुभ्य इञ्जन कदाचिन्मन्यन स्पन्दना न च प्रपञ्चा ।
लोके प्रपञ्चरतबालान् धर्मस्वभाव दर्शयि विनेसि ॥ ६ ॥
एकाग्रचित्त बहुकल्पान् सर्वसमाधिसागरविहारैः ।
पूजार्थमुत्सृजसि रोम्णा निर्मितमेघ दिक्षु सुगतानाम् ॥ ७ ॥ २५
बुद्धबलनयप्रवेशानोतरसि प्रतिक्षणमनन्तान् ।
सर्वान् संग्रहप्रयोगं दर्शयसे यथाक्षमवतारैः ॥ ८ ॥
व्यवलोक्य त्वं भवसमुद्रं कर्मविचित्रितं विविधरूपान् ।
धर्मेष्वनावरणमार्गं देशयती विशोधयसि सत्त्वान् ॥ ९ ॥
रूपं ति लक्षणविचित्रं शुद्ध समन्तभद्रचरणेन । ३०
सत्त्वानामाशयवशा त्वं देवत रूपु दर्शयसि लोके ॥ १० ॥

अथ खलु सुधनः श्रेष्ठिदारकः प्रमुदितनयनजगद्विरोचनां रात्रिदेवतामाभिः सारूप्याभिर्गाथाभिरभिष्टुत्य एतदवोचत्–कियच्चिरं संप्रस्थितासि देवते अनुत्तरायां सम्यक्संबोधौ ? कियच्चिरप्रतिलब्धश्चायं त्वया देवते समन्तभद्रप्रीतिविपुलविमलवेगध्वजो बोधिसत्त्वविमोक्ष इति ॥

अथ खलु प्रमुदितनयनजगद्विरोचना रात्रिदेवता सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत—

स्मरामि अतीत बहुकल्पान् क्षेत्ररजोपमास्तत परेण ।
क्षेत्र मणिप्रभसुप्राभ तत्र प्रशान्तघोषु अनुकल्प ॥ ११ ॥
दशचातुर्द्वीपनयुतानां कोटिशतसहस्र परिपूर्णम् ।
मणिपर्वताभपरिमाण मध्यम चातुर्द्वीप सुविचित्रम् ॥ १२ ॥
दशराजधानिनयुतानां कोटिशतैः सहस्रपरिपूर्णम् ।
गन्धध्वजा मणिप्रभासा मध्यमराजधानि रमणीया ॥ १३ ॥
तस्यां विशालपत्तिरभूषी पार्थिवचक्रवर्तिरभिरूपो ।
द्वात्रिंशल्लक्षणसमङ्गी सोऽनुव्यञ्जनै रचितगात्र ॥ १४ ॥
उपपादुको पद्मगर्भे काञ्चनवर्णसुप्रभशरीरो ।
जम्बुध्वज सकलु सर्व स्फरति प्रभाय सो गगनचारी ॥ १५ ॥
पुत्राण तस्य परिपूर्ण शूरवराङ्गरूपिण सहस्रा ।
कोटी अमात्य परिपूर्णा पण्डित दक्ष विज्ञ मेधावी ॥ १६ ॥
दश इस्त्रिकोटि परिपूर्णा अप्सरसादृशा रतिविधिज्ञा ।
ता स्निग्धचित्त हितचित्ता मैत्रमना उपस्थिहिषु राज्ञ ॥ १७ ॥
सो चो महापृथिवीराजा पर्वतचक्रवालपरियन्ता ।
चत्वार द्वीप सुसमृद्धा धर्मवलेन आवसति सर्वान् ॥ १८ ॥
अहु चक्रवर्तिवरभार्या ब्रह्मरतस्वरा रचनकाया ।
विमलप्रभा कनकवर्णा स्फरमि प्रभाय योजनसहस्रम् ॥ १९ ॥
अस्त गते दिनकररश्मि स्वपिति नृपे सपुत्रपरिवारे ।
संगीतिघोष उपशान्ते शयनगता अहु सुखप्रसुप्ता ॥ २० ॥
रात्रिमध्यमकि यामे बुद्ध उत्पन्नु भू शिरिसमुद्र ।
तस्मिन् विकुर्वित अनन्ता दर्शि जिनो दशदिशि फरित्वा ॥ २१ ॥
तान् सर्वक्षेत्ररजतुल्यानो सिरिपुञ्जित प्रभसमुद्रान् ।
नानाविकुर्वितशरीरान् येहि फरी दिशो दश अशेषा ॥ २२ ॥

पृथिवी प्रकम्पित सशैला घोष निगार्जि ते जिन उत्पन्नो।
देवासुरा मनुजनागाः सर्वि प्रहर्षि ते जिन उत्पन्नः ॥ २३ ॥
बुद्धस्य निर्मितसमुद्रा निश्चरि सर्वरोमविवरेभ्यः।
ते चो दशदिशि फरित्वा लोकि यथाशये भणिषु धर्मम् ॥ २४ ॥
तांश्चो विकुर्वित अनन्तान् सुपिनि जिनो निदर्शि मम सर्वान्। 5
गम्भीर गर्जित श्रुणित्वा प्रीति ममा अभूपि सुपिनान्ते ॥ २५ ॥
दश रात्रिदेवतसहस्रा उपरिं मम स्थिता नभतलस्मिन्।
वर्णानुदीर्यन्त जिनस्य दिव्यरुतेन मां भणि प्रबोध्य ॥ २६ ॥
उत्तिष्ट देवमतिमार्ये एष जिनोपपन्न तव राज्ये।
कल्यान सागरशतेभि दुर्लभ संपश्यन् सुखि विशुद्धो ॥ २७ ॥ 10
अहु प्रीतिसंयुत विबुद्धा पश्यमि आम निर्मल विशुद्धाम्।
संपश्यऽक्षण इयमाभा पश्यमि बुद्ध बोधिद्रुमराजे ॥ २८ ॥
द्वात्रिंशलक्षणविचित्रो रश्मिसमुद्र ओसरितु रोमात्।
अभ्युद्गतो यथ सुमेरु दक्षिणवामतो जिन समन्तात् ॥ २९ ॥
दृष्ट्वा मम प्रमुदितायाश्चित्तमुत्पन्नमीदृश भवेयम्। 15
प्रणिधिश्च मे कृतु उदारो बुद्धविकुर्वितं विपुल दृष्ट्वा ॥ ३० ॥
प्रतिबोधितः स मय राजा इङ्गिगणश्च योऽस्य परिवारम्।
बुद्धप्रभा विपुल दृष्ट्वा सर्वि अभूपि प्रीणितशरीराः ॥ ३१ ॥
उपसंक्रमी जिनसकाशं स्वामिन सार्ध याननयुतेभिः।
बहुप्राणिकोटिनयुतेभिः संपरिवारितः सकलकायः ॥ ३२ ॥ 20
पूजा कृता मयि जिनस्यो वर्षसहस्र विंशति अनूना।
निर्यातिता रतन सर्वे पृथिवी ससागरा च सुगतस्य ॥ ३३ ॥
सूत्रासमुद्र गुणमेघान् प्रणिधिसमुद्र संभवव्यूहान्।
सर्वांस्तथागतप्रभवान् देशयते यथाशय जगस्मिन् ॥ ३४ ॥
सा रात्रिदेवत हितार्थं बोधयि मां तदा करुणजाता। 25
तस्यां मम स्पृह उत्पन्ना ईदृश भूत्व बोधयि प्रमत्तान् ॥ ३५ ॥
एतन्मम प्रणिधिचित्तं प्रथममुपपन्नमवरबोधौ।
संसारसागरगताया नो मम निश्चिता भवसमुद्रैः ॥ ३६ ॥
दश बुद्धकोटिनयुतानि ये मम पूजिता जनिय श्रद्धाम्।
संसारि देवमनुजेषू विषयरतिसुखान्यभिलपन्त्या ॥ ३७ ॥ 30

---

१ B भद्रमति°.

प्रथमो जिनः शिरिसमुद्रस्तत्समनन्तरं गुणप्रदीपः ।
तृतीयो जिनो रतनकेतुर्बुद्ध चतुर्थ भूद्गगनप्रज्ञः ॥ ३८ ॥

जिन पञ्चमः कुसुमगर्भः षष्ठु जिनो असङ्गमतिचन्द्रः ।
जिनु धर्मचन्द्रप्रमुराजो अष्टमु ज्ञानमण्डलप्रभासः ॥ ३९ ॥

5 रचनार्चिपर्वतप्रदीपो नवमु अभूपि तत्र द्विपदेन्द्रः ।
दशमस्त्रियध्वप्रभवोपस्ते मय पूजिता प्रमुदिताया ॥ ४० ॥

एतान् दश प्रमुख कृत्वा सर्वि त पूजिता नरवरेन्द्रा ।
न च ताव लब्ध मय चक्षुर्येनि ममोत्तरि नयसमुद्रम् ॥ ४१ ॥

सर्वाङ्गतस्तदनु सत्त्वक्षेत्रमभूपि सर्वरतनाभम् ।
10 कल्पश्च देवशिरिनामा तत्र उत्पन्न बुद्ध शतपञ्च ॥ ४२ ॥

शशिमण्डलाभु प्रथमोऽभू द्वितीयु अभूपि भास्करप्रदीपः ।
ज्योतिध्वजस्तृतीयु बुद्धस्तस्य अनन्तरं मणिसुमेरुः ॥ ४३ ॥

कुसुमार्चिसागरप्रदीपो ज्वलनशिरीप देवशिरिगर्भः ।
ओभासराज प्रभकेतुर्दशमु समन्तज्ञानप्रभराजः ॥ ४४ ॥

15 एतान् दश प्रमुख कृत्वा सर्वि त पूजिता मय नरेन्द्राः ।
स्कन्धालयेऽभिरतया मे धर्मि अनालये नित्यप्रबुद्धा ॥ ४५ ॥

अर्वागतस्तदनु * * धर्मप्रदीपमेघशिरिनामा ।
अत्र लोकधातु शुभिचित्रः कल्प तदासि ब्रह्मप्रभनामा ॥ ४६ ॥

तस्मिन् जिना अपरिमाणाः ते मय पूजिताः सपरिवाराः ।
20 सर्वेष तेष सुगतानां धर्म श्रुतो मि गौरवि जनित्वा ॥ ४७ ॥

प्रथमो जिनो रतनमेरुस्तत्समनन्तरं गुणसमुद्रः ।
जिनु धर्मधातुसरकेतु धर्मसमुद्रगर्जन चतुर्थः ॥ ४८ ॥

धर्मध्वजो धरणितेजा धर्मबलप्रभो गगनबुद्धिः ।
धर्मार्चिमेरुशिखराभः पश्चिम तेषु मेघशिरिनामा ॥ ४९ ॥

25 एतान् दश प्रमुख कृत्वा सर्वि त पूजिता मय नरेन्द्रा ।
न च मेष धर्मत त्रिबुद्धा येनिम ओतरि जिनसमुद्रान् ॥ ५० ॥

तदनन्तरं सुगत आसी सूर्यप्रदीपकेतुशिरिनामा ।
क्षेत्रा ॥ बुद्धमति नाम्ना तत्र अभूच सोमशिरिकल्पः ॥ ५१ ॥

तस्मिन्नशीतिनयुतानां या मय पूजिता दशबलानाम् ।
30 निर्विधैरनन्तविपुलेभिः पूजमुखेभिर्नैकरुचिरेभिः ॥ ५२ ॥

गन्धर्वराज प्रथमोऽभू द्वितीयु अभूपि बुद्धद्रुमराजः।
तृतियु जिनो गुणसुमेरुस्तत्समनन्तरं रतननेत्रः॥ ५३॥
वैरोचनप्रभवियूहो धर्मसमुद्रतेजशिरि बुद्धः।
लोकेन्द्रतेजशिरिभद्रः पश्चिमु सर्वधर्मप्रभराजः॥ ५४॥
एतान् दश प्रमुख कृत्वा पूजित ते मया सुगत सर्वे। 5
न तु तात्र लब्ध मय ज्ञानं सद्धर्मसमुद्र येनवतरेयम्॥ ५५॥
तदनन्तरं सुपरिशुद्धं वज्रमणिअभेद्यदृढतेजः।
क्षेत्रं समन्तप्रभमेघं नैकवियूहसंस्थितविचित्रम्॥ ५६॥
यस्मिन् विशुद्ध बहुसत्त्वाः कल्पतराः किलेशमलकृष्टाः।
कल्प प्रशान्तमतितेजाः बुद्धसहस्रसंभव वियूहा॥ ५७॥ 10
प्रथमो जिनो वजिरनाभि द्वितीयु अभूदसङ्गबलधारी।
जिनु धर्मधातुप्रतिभासः सर्वदिशप्रदीपप्रभराजः॥ ५८॥
जिनु पञ्चमः करुणतेजा षष्ठ अभू जिनो व्रतसमुद्रः।
जिनु क्षान्तिमण्डलप्रदीपो अष्टम धर्ममण्डलप्रभासः॥ ५९॥
ओभाससागरवियूहः पश्चिमु तेष प्रशान्तप्रभराजः। 15
एतान् दश प्रमुख कृत्वा सर्वि त पूजिता मय नरेन्द्रा॥ ६०॥
न च मेष धर्मत विबुद्धा गगनसमा स्वभावपरिशुद्धा।
यत्र स्थिहित्व विचरेयं चारिक सर्वक्षेत्रप्रसरेषु॥ ६१॥
तदनन्तरं च रमणीयं गन्धप्रदीपमेघशिरि नाम।
क्षेत्रं किलिष्टपरिशुद्धं कल्पु सुसंभवस्तद बभूव॥ ६२॥ 20
उत्पन्न तत्र जिनकोटिस्तेभि वियूहितस्त दशकल्पः।
ते नायका भणिय धर्मा सो मय धारित स्मृतिबलेन॥ ६३॥
प्रथमो जिनो विपुलकीर्ति धर्मसमुद्रवेगशिरिराजः।
धर्मेन्द्रराज गुणघोष धर्मशिरिश्च देवमकुटश्च॥ ६४॥
ज्ञानार्चितेजशिरिनामा सप्तमु तेष आसि द्रुपदेन्द्रः। 25
जिनु अष्टमो गगनघोषो नवमु समन्तसंभवप्रदीपः॥ ६५॥
तेषां च पश्चिमकु बुद्धो ऊर्णशिरिप्रभासमतिनामा।
ते सर्वि पूजित नरेन्द्रा मार्गु न चैष शोधितु असङ्गः॥ ६६॥
तदनन्तरं वैरवियूहा[1] रत्नविचित्रसंस्थितशरीराः।
रतनध्वजाप्रमतिनामा पश्चिम लोकधातु सुविभक्ता॥ ६७॥ 30

१ B ध्वनवियूहा.

सारोच्चयश्च तद कल्पस्तत्र उत्पन्न बुद्ध शतपत्र ।
ते सर्वि सत्कृत स्वयंभू एत विमोक्ष समभिलपत्या ॥ ६८ ॥
गुणमण्डलः प्रथमु नाम्ना शान्तनिर्घोष सागरशिरिश्च ।
आदित्यतेज गिरिराजो[1] लक्षणमेरु मेघरुतघोषः ॥ ६९ ॥
धर्मेन्द्रराज गुणराजः पुण्यसुमेरु शान्तप्रभराजः ।
एतान् दश प्रमुख कृत्वा सर्वि ति पूजिता मय नरेन्द्राः ॥ ७० ॥
मार्गु विशोधितु जिनानां यत्र समोसरी जिन अशेषा ।
न च ताव लब्ध मय क्षान्तिर्या इममोतरे नयु जिनानाम् ॥ ७१ ॥
तदनन्तरं सुरुचिराभः शान्तनिर्घोषप्रहारमतिनामा ।
अत्र लोकधातु परिशुद्धो अल्पक्लिेशसत्त्वअधिवासः ॥ ७२ ॥
कल्पः सुखाभिरतिनामा यत्र अशीति बुद्धनयुतासन् ।
ते सर्वि पूजिता मय नरेन्द्रा मार्गु विशोधितो जिनवराणाम् ॥ ७३ ॥
प्रथमो जिनः कुसुमराशिः सागरगर्भ संभवगिरिश्च ।
देवेन्द्रचूड मणिगर्भ काञ्चनपर्वतो रत्नराशिः ॥ ७४ ॥
धर्मध्वजोऽथ वचनश्रीः पश्चिमु तेषु ज्ञानमति बुद्धः ।
एतान् दश प्रमुख कृत्वा पूजित ते मया सुरनरेन्द्राः ॥ ७५ ॥
अर्वागभूत्तदनु अस्ति क्षेत्र सुनिर्मितध्वजप्रदीपम् ।
कल्प सहस्रशिरिनामा तत्र य बुद्धकोटिनयुतानि ॥ ७६ ॥
शान्तध्वजः शमथकेतुः शान्तप्रदीप मेघशिरिराजः ।
ओभासयन्तप्रभराजा मेघविलम्बितः सुरियतेजा ॥ ७७ ॥
धर्मप्रदीपशिरि मेरुअर्चिशिरिश्च देवशिरिगर्भः ।
तेषां च पश्चिमकु आसीत् सिंहविनर्दितो विद्युप्रदीपः ॥ ७८ ॥
एतान् दश प्रमुख कृत्वा पूजित ते मया सुगतचन्द्रा ।
न च ताव लब्ध मय क्षान्तिर्या इममोतरे नयसमुद्रम् ॥ ७९ ॥
अर्वागतस्तदनु अस्ति क्षेत्र समन्तआभशिरिनाम्नि ।
कल्पो अनालयवियूहस्तत्र षड्विंशद्बुद्धनयुतानि ॥ ८० ॥
प्रथमः समन्तगुणमेघस्तत्समनन्तरं गगनचित्तः ।
बुद्धः सुसंगवतियूहो गर्जितधर्मसागरनिर्घोषः ॥ ८१ ॥
जिनु धर्मधातुस्वरघोषो निर्मितमेघसुस्वरशिरिश्च ।
बुद्धः समन्तदिशतेजा धर्मसमुद्रसंभवस्तथा ॥ ८२ ॥

---

[1] B गिरिराजो.

गुणसागरो गिरिप्रदीपो नवमु अभूदयात्र जिनसूर्यः।
आरागितश्चरमु तेषां रतनशिरीप्रदीपगुणकेतुः ॥ ८३ ॥
यद निष्क्रमी स द्रुपदेन्द्रो रतनशिरिप्रदीपगुणकेतुः।
शशिनक्रदेवि अहमासी निष्क्रममाणु पूजिय नरेन्द्रम् ॥ ८४ ॥
सो मे अनाल्यवियूह प्रणिधिसमुद्रसंभवत्रियूहम्। 5
सूत्रं निगर्जेसु नरेन्द्रः श्रुत्व मि धारितं स्मृतिबलेन ॥ ८५ ॥
लब्धा मया विपुलचक्षुःशान्तसमाधि धारणिबलं च।
पश्याम्यहं जिनसमुद्रान् क्षेत्रपरंपरा क्षणक्षणेन ॥ ८६ ॥
जातं हि मे करुणगर्भा मैत्रिनयं समन्तप्रभमेघम्।
बोधाय चित्तु नमतुल्य बुद्धबलाप्रमाणविपुलाभम् ॥ ८७ ॥ 10
दृष्ट्वा जगद्विपरियस्तं नित्यसुखप्रभासमिनिविष्टम्।
मोहार्थवियतमछन्नं क्लेशसमाकुल वितयसंज्ञि ॥ ८८ ॥
दृष्टीगता गहनचारिं तृष्णवशानुगं विषमकर्म।
गतिषू अनेकविधरूपां कर्मविचित्रितां समुदयन्तम् ॥ ८९ ॥
सर्वगतिच्युतिमुखेभिर्ये उपपत्तिभिः समुपपन्नाः। 15
जातीजरामरणपीडां कायिकचैतसिकामनुभवन्ति ॥ ९० ॥
तेषां तदा हितसुखार्थं चित्तमनुत्तरं समुपपन्नम्।
यत्र संभवो दशबलानां यावतुक सर्वक्षेत्रप्रसरेषु ॥ ९१ ॥
ततः संभुतः प्रणिधिमेघः सर्वजगत्सुखप्रवणगर्भः।
संसारसंभव अनन्ता मार्गसमुद्रनयअनुगतश्च ॥ ९२ ॥ 20
प्रस्थानमेघविपुलाभः सर्वपथप्रसन्नमुखवेगः।
विपुलांश्च पारमितमेघान् मुञ्चिषु धर्मधातुप्रसरेषु ॥ ९३ ॥
भूम्याक्रमो विपुलवेगः सर्वत्रियध्वसागरनयेषु।
भूमिप्वसङ्गगतिचारी एकक्षणेन सर्वजिनगामी ॥ ९४ ॥
अपि चाप्यहं सुगतपुत्र चर्य समन्तभद्र अवक्रान्ता। 25
दश धर्मधातुतलभेदास्तेष समुद्रनयमवतरामि ॥ ९५ ॥

तत्किं मन्यसे कुलपुत्र अन्यः स तेन कालेन तेन समयेन विशांपतिर्नाम राजाभूचक्रवर्ती बुद्धवंशानुपच्छेदाय स्थितः? न खलु पुनस्ते कुलपुत्र एवं द्रष्टव्यम्। मञ्जुश्रीः कुमारभूतः तेन कालेन तेन समयेन विशांपतिर्नाम राजा अभूच्चक्रवर्ती बुद्धवंशानुपच्छेदाय प्रतिपन्नः। यया चाहं रात्रिदेवतया प्रबोधिता, सा समन्तभद्रेण बोधिसत्त्वेन निर्मिता। 30 तत्किं मन्यसे कुलपुत्र अन्या सा तेन कालेन तेन समयेन भद्रमतिर्नाम चक्रवर्तिभार्या अभूत् स्त्रीरत्नम्? न खल्वेवं द्रष्टव्यम्। अहं सा तेन कालेन तेन समयेन भद्रमतिर्नाम

चक्रवर्तिभार्या अभूवं स्त्रीरत्नम्। साहं तया रात्रिदेवतया प्रतिबोध्य बुद्धदर्शने समादापिता।
इयच्चिरोत्पादितं मे कुलपुत्र अनुत्तरायां सम्यक्संबोधौ चित्तम्। साहं तेन चित्तोत्पादेन
बुद्धक्षेत्रपरमाणुरजःसमान् कल्पान् न जातु दुर्गतिविनिपातेषु उपपन्ना। सततसमितं देव-
मनुष्यगतिपरायणा। सर्वत्र च अविरहिता तथागतदर्शनेनाभूवम्। यावन्मे भगवतो रत्नश्री-
5 प्रदीपगुणकेतोस्तथागतस्यार्हतः सम्यक्संबुद्धस्य सहदर्शनादयं समन्तभद्रप्रीतिविपुलविमल-
वेगध्वजो बोधिसत्त्वविमोक्षः प्रतिलब्धः, यस्य प्रतिलाभादहमेवंरूपेण सर्वसत्त्वपरिपाकविनया-
येन प्रत्युपस्थिता॥

एतमहं कुलपुत्र समन्तभद्रप्रीतिविपुलविमलवेगध्वजं बोधिसत्त्वविमोक्षं जानामि।
किं मया शक्यं सर्वतथागतपादमूलेषु प्रतिक्षणं सर्वज्ञताप्रस्थानमहावेगसागरप्रतिलब्धानां
10 बोधिसत्त्वानां सर्वप्रस्थानमुखेषु प्रतिक्षणं महाप्रणिधानसागरावताराप्रतिप्रस्रब्धानां प्रति-
चित्तक्षणं सर्वप्रणिधानसागरनयेषु अपरान्तकल्पचर्यामण्डलाभिनिर्हारकुशलानाम्, एकैकस्यां
च चर्यायां सर्वबुद्धक्षेत्रपरमाणुरजःसमकायाभिनिर्हारकुशलानाम्, एकैकेन च कायेन
सर्वधर्मधातुनयसागरस्फरणानाम्, एकैकस्मिंश्च धर्मधातुनयसागरे सर्वबुद्धक्षेत्रेषु यथाशय-
सत्त्वकायविज्ञप्तिचर्यासंदर्शनकुशलानाम्, एकैकस्मिंश्च क्षेत्रपरमाणुरजस्यनन्तमध्यतथागत-
15 समुद्रावतरणकुशलानाम्, एकैकस्य च तथागतस्य धर्मधातुस्फरणपरमतथागतविकुर्वितावतरण-
कुशलानाम्, एकैकस्य च तथागतस्य धर्मधातुस्फरणपरमतथागतविकुर्वितावतरणकुशलानाम्,
एकैकस्य च तथागतस्य पूर्वान्तकल्पबोधिसत्त्वचर्यासंभारसंभवसमुदागमावतारकुशलानाम्,
एकैकस्य च तथागतस्य विमलधर्मचक्रसंप्रक्षेपणसंधारणकुशलानां सर्वत्र्यध्वतथागतविकुर्वित-
नयसागरावतरणकुशलानां चर्यां ज्ञातुं गुणान् वा वक्तुम्॥

20 गच्छ कुलपुत्र, इयमिहैव तथागतपर्षन्मण्डलेऽस्मदनन्तरं समन्तसत्त्वत्राणोजःश्री नाम
रात्रिदेवता प्रतिवसति। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यामण्डल-
मवतरितव्यम्, कथं परिशोधयितव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारकः प्रमुदितनयनजगद्विरोचनाया रात्रिदेवतायाः पादौ
शिरसाभिवन्द्य प्रमुदितनयनजगद्विरोचनां रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः
25 पुनरवलोक्य प्रमुदितनयनजगद्विरोचनाया रात्रिदेवताया अन्तिकात् प्रक्रान्तः॥ ३४॥

---

1 S om. धर्म... तथागतस्य.

सङ्क्लिष्टान्, कांश्चिद्व्यतिपरिशुद्धान्, कांश्चित्संक्लिष्टविशुद्धान्, कांश्चिद्विशुद्धसंक्लिष्टान्, कांश्चिदेकान्तपरिशुद्धान्, कांश्चित्समतलप्रवेशान्, कांश्चिदवमूर्धप्रतिष्ठानान्, कांश्चिच्चलत संस्थानान् । तेषु लोकधातुषु सर्वगतिषु सर्वसत्त्वोपपत्तिषु समन्तसत्त्वत्राणोजःश्रिय रात्रिदेवतां प्रतिविनेयसत्त्वसर्वसत्त्वाभिमुखामपश्यत् । सर्वलोकासंभिन्नदर्शनतया यथाशु
5 प्रमाणानां सत्त्वानां नानाधिमुक्तिगोचराणां यथाबलभावानां यथाशयवचनप्रज्ञप्तिनिरुक्ति संस्कारव्यवहाराणां यथाप्रयोगाणां यथाधिगतेयानां परिपाकविनयमुपादाय सर्वसत्त्वासंभिन्न-समुखावस्थितामपश्यत् ॥

यदुत नानानरकगतिपर्यापन्नानां सत्त्वानां विविधनरकदुःखभयविनिवर्तनतायै, नाना तिर्यग्योन्युपपन्नानां सत्त्वानामन्योन्यसंभक्षणभयविनिवर्तनतायै, यमलोकगतिपर्यापन्नानां
10 सत्त्वानां क्षुत्पिपासादिदुःखभयविनिवर्तनतायै, नागलोकगतिपर्यापन्नानां सत्त्वानां सर्वनाग दुःखभयविनिवर्तनतायै, सर्वकामधातुपर्यापन्नानां सत्त्वानां सर्वकामधातुकदुःखभयविनिवर्तन तायै, मनुष्यलोकगतिपर्यापन्नानां सत्त्वानामन्धकारतमिस्रायां रात्रौ सर्वान्धकारभयविनिवर्तन तायै, अवर्णायशोऽकीर्तिशब्दश्लोकाभिनिविष्टानां सत्त्वानां सर्वायशोऽकीर्तिभयविनिवर्तनतायै, पर्षच्छारद्यभयविनिविष्टानां सत्त्वानां पर्षच्छारद्यभयविनिवर्तनतायै, मरणभयभीतानां सत्त्वानां
15 मरणभयविनिवर्तनतायै, दुर्गतिप्रपातभयभीतानां सत्त्वानां दुर्गतिप्रपातभयविनिवर्तनतायै, आजीविकाभयभीतानां सत्त्वानामाजीविकाभयविनिवर्तनतायै, कुशलमूलविप्रणाशभयभीतानां सत्त्वानां कुशलमूलविप्रणाशभयविनिवर्तनतायै, बोधिचित्तसंमोषणभयभीतानां सत्त्वानां बोधिचित्तसंमोषणभयविनिवर्तनतायै, पापमित्रसमवधानभयभीतानां सत्त्वानां पापमित्रसमव-धानभयविनिवर्तनतायै, कल्याणमित्रविप्रवासभयभीतानां कल्याणमित्रविप्रवासभयविनि
20 वर्तनतायै, श्रावकप्रत्येकबुद्धभूमिप्रपातभयभीतानां सत्त्वानां श्रावकप्रत्येकबुद्धभूमिप्रपातभय विनिवर्तनतायै, विविधसंसारसंवासदुःखभयभीतानां विविधसंसारदुःखभयविनिवर्तनतायै, विसभागसर्वसमवधानभीतानां सत्त्वानां विसभागसर्वसमवधानभयविनिवर्तनतायै, विषमकालो पपत्तिभयभीतानां सत्त्वानां विषमकालोपपत्तिभयविनिवर्तनतायै, विषमकुलोपपत्तिभयभीतानां सत्त्वानां विषमकुलोपपत्तिभयविनिवर्तनतायै, पापकर्माभ्यापत्तिभयभीतानां पापकर्माभ्यापत्ति
25 भयविनिवर्तनतायै, कर्मक्लेशावरणभयभीतानां कर्मक्लेशावरणभयविनिवर्तनतायै, विविधसंज्ञा गतनिकेतबन्धनभयभीतानां सत्त्वानां विविधसंज्ञागतनिकेतभयविनिवर्तनतायै सर्वसत्त्वाना मसंभिन्नसमुखावस्थितामपश्यत् ॥

यदुत अण्डजानां सत्त्वानां जरायुजानां संस्वेदजानामुपपादुकानां रूपिणामरूपिणां संज्ञिनां नैवसंज्ञिनां नासंज्ञिनां सर्वसत्त्वपरित्राणप्रणिधानबलाभिनिर्हृतत्वात्, विपुलबोधिसत्त्व
30 समाधिवेगविक्रमबलेन बोधिसत्त्वमहाभिज्ञापराक्रमेण समन्तभद्रबोधिसत्त्वचर्याप्रणिध्यभि निर्हारबलेन महाकरुणानयसागरवेगसंजातत्वात्, सर्वजगदप्रतिहतमहामैत्रीस्फरणतायै

---

१ B om: सर्वलोका यथा । २ S om बोधि तायै

सर्वसत्त्वसुखसमुदयप्रीतिवेगविवर्धनतायै सर्वसत्त्वसंग्रहज्ञानप्रयोगतायै विपुलबोधिसत्त्वविमोक्षविकुर्वितवृषभितासमन्वागतत्वात्, सर्वक्षेत्रपरिशोधनाभिमुखीमपश्यत्। सर्वधर्मज्ञानानुबोधाभिमुखीं सर्वबुद्धपूजोपस्थानाभिमुखीं सर्वतथागतशासनसंधारणाभिमुखीं सर्वकुशलोपचयाभिमुखीं सर्वबोधिसत्त्वचर्याविवर्धनाभिमुखीं सर्वसत्त्वचित्तानावरणाभिमुखस्थितां सर्वसत्त्वेन्द्रियपरिपाचनाभिमुखस्थितां सर्वसत्त्वाधिमुक्तिसमुद्रविशोधनाभिमुखीं सर्वसत्त्वावरणीयधर्मविनिवर्तनाभिमुखीं सर्वसत्त्वाज्ञानान्धकारविधमनाभिमुखीं सर्वकुशलपर्ययाभिमुखीमपश्यत् सर्वज्ञज्ञानालोकसंजननतायै ॥ 5

अथ खलु सुधनः श्रेष्ठिदारकः समन्तसत्त्वत्राणोजःश्रियो रात्रिदेवताया इदमचिन्त्यं सर्वलोकाभिमुखजगद्विनयनिदर्शनबोधिसत्त्वविमोक्षवृषभिताविकुर्वितं दृष्ट्वा प्रहर्षजातो महाप्रीतिवेगसागरप्रतिलब्धः समन्तसत्त्वत्राणोजःश्रियो रात्रिदेवतायाः सर्वशरीरेण प्रणिपत्य ऊर्ध्वं वदनमवलोकयामास। अथ खलु समन्तसत्त्वत्राणोजःश्री रात्रिदेवता तां बोधिसत्त्वरूपलक्षणविशुद्धिसंपदमन्तर्धाप्य रात्रिदेवतारूपेण सर्वविकुर्वितानि प्रवर्तयमाना अध्यतिष्ठत्। अथ खलु सुधनः श्रेष्ठिदारकः समन्तसत्त्वत्राणोजश्रियो रात्रिदेवतायाः पुरतः प्राञ्जलिः स्थित्वा तस्यां वेलायामिमा गाथा अभाषत— 10

दृष्टो मया विपुलकायु तवा वरलक्षणो रतनआभरण। 15
अनुव्यञ्जनैः चित्रविचित्रशुभैर्गगनं ज्योतिषगणेन यथा ॥ १ ॥
तवनन्तक्षेत्ररजधातुसमं प्रभमण्डलं प्रवरकायशुभम्।
नानाविधानुपमवर्णनिभा येन स्फरी दिशमनन्ततला ॥ २ ॥
बहु रश्मिजाल जगचित्तसमास्तं सर्वरोममुखतः सृजसे।
रश्मीमुखे रुचिरपद्मस्थिताः तव निर्मिता जगि समेति दुःखम् ॥ ३ ॥ 20
गन्धार्चिमेघपटलां सृजसे जगरूपसंस्थितसमन्तशुभाम्।
पुष्पा प्रवर्षन्त समन्तमुखं स्फरति धर्मधातुगत सर्वजिनान् ॥ ४ ॥
रतनार्चिपर्वतमेरुनिभं तव आभकूटु विपुलं विमलम्।
येन प्रभासति समन्तजगे मोहान्धकार विनिवर्तयसे ॥ ५ ॥
तव सूर्यमेघपटला विपुला सद निश्चरन्ति वदनाद्विमलाः। 25
वैरोचनस्य विषयं विपुलं तव सूर्यमण्डलप्रभोत्सृजति ॥ ६ ॥
तव चन्द्रज्योतिषप्रभा विमला नयनेभि मेघ सद निश्चरित्रु।
ते चो दशद्दिशि स्फरित्व जगं धोवन्ति लोकि तिमिरोपहता ॥ ७ ॥
तव लक्षणैर्जगशरीरसमा गच्छति निर्मितसमुद्र दिशः।
ते धर्मधातुविपुलस्फरणाः परिपाचयन्त्यमिनसर्वजगान् ॥ ८ ॥ 30
तव कायु दर्शयति हि दिक्प्रसरैः सर्वजगाभिमुख प्रीतिकरः।
राजाग्निचोरजलजालमितं सर्व भयं शमयसे विनयन् ॥ ९ ॥

यद् प्रेषितं तव सकाशमहं समुपस्थितो गुण विचिन्तयता।
तद् रश्मिमण्डल शुभा विमला भ्रुमुखान्तरात्तु तव निश्चरिषु ॥ १० ॥

ओभासयन् दिश समुद्रशतानालोक लोकि विपुल जनिय।
नानाविकुर्वित विदर्श्य पुनरस्तगता मम शरीरि तदा ॥ ११ ॥

यद् रश्मिमण्डल ममा निपती तद् सौख्यमद्भुतमुदारमभूत्।
ओक्रान्त धारणि समाधिशता पश्यामि दिक्षु च जिनानमिता ॥ १२ ॥

क्रमविक्रमे यद् धरा क्रमत परमाणुसंख्यनयु ज्ञातु मया।
पश्यामि क्षेत्रपरमाणुसमा क्षेत्राणि एकपरमाणुरजे ॥ १३ ॥

रजसि स्थिता पृथगनेकविधा नैकान्तक्लिष्ट बहु क्षेत्रशता।
दुःखानि येष्वनुभवन्ति जना परिदेवरोदितनिनादरुतैः ॥ १४ ॥

संक्लिष्टशुद्ध पुन क्षेत्र बहून् अल्प सुख विपुल यत्र दुःख।
समुदेन्ति येषु जिन कारुणिक जिनश्रावका अपि प्रत्येकजिना ॥ १५ ॥

परिशुद्धक्लिष्ट पुन क्षेत्रनया बहुबोधिसत्त्वरचनाप्रचिता।
नरनारिमण्डित सुदर्शनीया जिनवस्तु यत्र विहरन्ती रुचिर ॥ १६ ॥

क्षेत्रसमुद्र विपुला विमला रजसि स्थिता समतलानुगता।
वैरोचने चरिता हि पुरा परिशोधिता विपुलकल्पशतैः ॥ १७ ॥

सर्वेषु क्षेत्रप्रसरेषु जिना सद्दृश्यिषु द्रुमवरेन्द्रगता।
बोधिं विबुद्ध्यमु विकुर्वयतो चक्र प्रवर्त्य विनयन्ति जगत् ॥ १८ ॥

पश्यामि त्वामनुगतामपि तां वैरोचनस्य विषये विपुले।
पूजा सहस्रनयुते अमिते सर्वान् जिनान् समभिपूजयन्ती ॥ १९ ॥

अथ खलु सुधनः श्रेष्ठिदारक इमा गाथा भाषित्वा समन्तसत्त्वत्राणोजःश्रियं रात्रिदेवतामेतदवोचत्–आश्चर्यं देवते, यावद्गम्भीरोऽयं बोधिसत्त्वविमोक्षः। किं नामायं विमोक्षः? कियच्चिरप्रतिलब्धश्चायं त्वया? कथं च प्रतिपद्यमानो बोधिसत्त्व इमं बोधिसत्त्वविमोक्षं परिशोधयति? आह–दुरभिसंभवं कुलपुत्र एतत्स्थानं सदेवकेन लोकेन सश्रावकप्रत्येकबुद्धेन। तत्कस्य हेतोः? समन्तभद्रबोधिसत्त्वचर्याप्रणिधानानुगतानां हि बोधिसत्त्वानामेष गोचरो महाकरुणागर्भाणां सर्वजगत्परित्राणप्रतिपन्नानां सर्वाक्षणापायदुर्गतिपथविशोधनप्रतिपन्नानां सर्वक्षेत्रानुत्तरबुद्धक्षेत्रपरिशुद्धिप्रतिपन्नानां सर्वबुद्धक्षेत्रतथागतवंशानुपच्छेदप्रतिपन्नानां सर्वबुद्धशासनसंधारणप्रतिपन्नानां सर्वकल्पबोधिसत्त्वचर्यासंनाहसंनद्धानां महाप्रणिधानसागरावतीर्णानां सर्वधर्मसागरवितिमिरज्ञानालोकविशोधनप्रतिपन्नानामेकक्षणेन सर्वत्र्यध्वसागरज्ञानालोकविहारप्रतिपन्नानां बोधिसत्त्वानामेष विषयः। अथ च पुनस्त्वां तथागताधिष्ठानेन निर्देक्ष्यामि–

भूतपूर्वं कुलपुत्र अतीतेऽध्वनि बुद्धक्षेत्रपरमाणुरजःसमाना कल्पाना परेण वैरोचनतेजःश्रियां लोकधातौ विरजोमण्डलो नाम कल्पोऽभूत् सुमेरुपरमाणुरजःसमबुद्धोत्पादप्रभवः । सा खलु पुनर्वैरोचनतेजःश्रीर्लोकधातुः सर्वरत्नमेघव्यूहा वज्रमयविमानभवनप्रतिमण्डिताभूत् ॥

अथ सा लोकधातुः सर्वविमलप्रभमणिराजसागरप्रतिष्ठिता सर्वगन्धराजमणिरत्नशरीरा समन्तपरिमण्डलविशुद्धसंक्लिष्टा सर्वाभरणमेघवितानसंछादिता सर्वव्यूहमणिचक्रवालसहस्रपरिक्षिप्ता चातुर्द्वीपिककोटिनियुतशतसहस्रसुरचितव्यूहा । काचित्तत्र चातुर्द्वीपिका संक्लिष्टा संक्लिष्टकर्मणा सत्त्वानामावासः, काचित्संक्लिष्टविशुद्धव्यामिश्रकर्मणा सत्त्वानामावासः, काचिद्विशुद्धसंक्लिष्टानां सत्त्वानामावासः उत्तप्तकुशलमूलानामल्पसावद्यानाम्, काचिदेकान्तपरिशुद्धाना बोधिसत्त्वानामावासः ॥

तस्याः खलु पुनर्वैरोचनश्रियो लोकधातोः पूर्वेण चक्रवालानुसंधौ रत्नकुसुमप्रदीपध्वजा नाम चातुर्द्वीपिका भूमिशुद्धिसंक्लिष्टा अकृष्टोप्तशालिपरिभोगा पूर्वकर्मविपाकाभिनिर्वृत्तकूटागारभवनविमानपरिभोगा समन्तात् कल्पवृक्षसंछादिता नानागन्धवृक्षसदाप्रमुक्तकोशगन्धमेघा विविधमाल्यवृक्षसदाप्रवर्षितमाल्यमेघा विचित्रपुष्पवृक्षा अचिन्त्यवर्णगन्धपुष्पवर्षौघप्रमुक्ता नानावर्णचूर्णवृक्षसदाप्रमुक्तकोशसर्वगन्धरत्नराजचूर्णवर्षाभिप्रवृष्टा विविधरत्नवृक्षमहामणिरत्नकोशविसृतवर्णावभासिता दिव्यवाद्यवृक्षसर्ववाद्यमेघवातसमीरितगगनतलप्रमुक्तमधुरनिर्घोषा चन्द्रसूर्यरात्रिंदिवासुरप्रभवा मणिरत्नसमन्तावभाससमभूमिभागा ॥

तस्या खलु चातुर्द्वीपिकाया दश राजधानीकोटीनियुतशतसहस्राण्यभूवन् । एकैका च राजधानी समन्तान्नदीसहस्रपरिक्षिप्ता । सर्वाश्च ता नद्यो विचित्रदिव्यपुष्पौघसंकरवाहिन्यो दिव्यतूर्यसंगीतिमनोज्ञमधुरनिर्घोषाः सर्वरत्नद्रुमतीरसुरचिरव्यूहाः नानारत्नप्रतिमण्डिताः नौसंचारिण्यो यथेच्छाविविधसुखपरिभोग्याः । एकैकस्या च नद्यन्तरिकाया दश नगरकोटीनियुतशतसहस्राणि संस्थितान्यभूवन् । एकैकं च नगरं दशनगरकोटीनियुतशतसहस्रपरिवारम् । सर्वे ते ग्रामनगरनिगमा अनेकदिव्योद्यानभवनविमानकोटीनियुतशतसहस्रपरिवारा अभूवन् । तस्यां खलु पुनश्चातुर्द्वीपिकायां जम्बुद्वीपस्य मध्ये रत्नकुसुमप्रदीपा नाम मध्यमा राजधान्यभूत्, ऋद्धा च स्फीता च क्षेमा च सुभिक्षा च आकीर्णबहुजनदेवमनुष्या च दशकुशलकर्मपथसमात्तानां सत्त्वानामालयः । तस्यां खलु पुना रत्नकुसुमप्रदीपायां राजधान्यां वैरोचनरत्नपद्मगर्भश्रीचूडो नाम राजा अभूत् चक्रवर्ती चतुर्द्वीपेश्वरः औपपादुकः पद्मगर्भे द्वात्रिंशन्महापुरुषलक्षणसमलंकृतशरीरो धार्मिको धर्मराजः सप्तरत्नसमन्वागतः । पूर्णं चास्य सहस्रमभूत् पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानां सर्वाकारसुपरिपूर्णवराङ्गानाम् । दश चास्य स्त्रीकोटीनियुतशतसहस्राण्यन्तःपुरमभूत् सर्वासां चक्रवर्तिसभागकुशलमूलप्रभवानां सभागचरितानां सहजनकायानां कायगतां कल्याणचित्तानां देवकन्याविनिर्विशिष्टसदृशरूपाणां जाम्बूनदसुवर्णवर्णकायानां नानादिव्यगन्धरोमकूपप्रमुक्त-

गात्राणां दिव्यगन्धविमलप्रभाप्रमुञ्चनशरीराणाम्। दश चास्य अमात्यकोट्योऽभूवन् परिणायकरत्नप्रमुखाः॥

तस्य खलु वैरोचनरत्नपद्मगर्भश्रीचूडस्य राज्ञश्चक्रवर्तिनः संपूर्णश्रीवक्त्रा नाम भार्या अभूत् स्त्रीरत्नम्, अभिरूपा प्रासादिका दर्शनीया परमशुभवर्णपुष्कलतया समन्वागता। अभिनीलकेशी अभिनीलनेत्रा सुवर्णवर्णच्छविर्ब्रह्मस्वरा सततप्रमुक्तप्रभाशरीरा समन्ताद्योजनसहस्रमनेकवर्णया दिव्यगन्धप्रभया स्फरति स्म। तस्याश्च संपूर्णश्रीवक्त्राया राजभार्यायाः पद्मभद्राभिरामनेत्रश्रीर्नाम चक्रवर्तिदुहिता अभूत्, सर्वाङ्गसंपूर्णा अभिरूपा प्रासादिका दर्शनीया सर्वलोकातृप्तदर्शना। तद्यथापि नाम कुलपुत्र राज्ञश्चक्रवर्तिनो दर्शनेन न कश्चित् तृप्यति, एवमेव तस्याः पद्मभद्राभिरामनेत्रश्रियश्चक्रवर्तिदुहितुर्न कश्चिद्दर्शनेन तृप्तिमापद्यते स्थापयित्वा प्रज्ञातृप्तान्। तेन च कालेन तेन समयेन अमितायुषः सत्त्वा अभूवन् न नियतायुषः, नास्ति अन्तरेण कालक्रिया। तेन च कालेन सत्त्वानां संस्थाननानात्वमपि प्रज्ञायते स्म। वर्णनानात्वमपि स्वरनानात्वमपि नामधेयनानात्वमपि कुलनानात्वमपि आयुष्प्रमाणनानात्वमपि आरोहपरिणाहविमात्रतामपि उत्साहबलपराक्रमस्थामविमात्रतामपि मनापामनापकरणीयविमात्रतामपि उदारहीनाधिमुक्तिनानात्वमपि प्रज्ञायते स्म। तत्र ये सत्त्वाः सुवर्णा अभूवन्नुदाराधिमुक्तिकाः संपूर्णगात्रा अभिरूपा दर्शनीयाः, त एवं वाचमभाषन्त–अहं भोः पुरुष सुवर्णतरस्त्वत्सकाशादिति। एवं ये सत्त्वाः सुसंस्थितशरीरा अभूवन्, ते दुःसंस्थितशरीरान् सर्वानवमन्यन्ते स्म। ते तेन अन्योन्यावमाननासमुदितेन अकुशलमूलेन आयुःप्रमाणादपि परिहीयन्ते स्म, वर्णादपि बलादपि सौख्यादपि परिहीयन्ते स्म॥

तस्या खलु रत्नकुसुमप्रदीपाया राजधान्यामुत्तरेण समन्तावभासनधर्ममेघनिर्घोषध्वजो नाम बोधिमण्डवृक्षोऽभूत् सर्वतथागतबोधिमण्डव्यूहप्रतिक्षणदर्शनः अभेद्यवज्रमणिराजसारमूलः सर्वमणिरत्ननिचितविपुलोद्विद्धस्कन्धः सर्वरत्नमयस्कन्धशाखापत्रपलाशपुष्पफलसंपन्नः समन्तसुविभक्तः समभागाभिप्रलम्बरचितशाखः समन्तस्फरणाक्षयताव्यूहो नानारत्नार्चिर्विद्युत्समन्तभद्रप्रमुक्तावभासः सर्वतथागतविषयविकुर्वितनिर्घोषानुरवितः॥

तस्य खलु बोधिमण्डस्य पुरतो रत्नकुसुमविद्युद्धर्मनिगर्जितमेघघोषं नाम गन्धोदकसरोऽभूद्रत्नद्रुमकोटीनियुतशतसहस्रपरिवारम्। सर्वे च ते रत्नवृक्षा बोधिवृक्षसंस्थाना अभूवन्। तस्य खलु पुना रत्नकुसुमविद्युद्धर्मनिगर्जितमेघघोषस्य महागन्धोदकसरसः सर्वमणिरत्नसुविभक्तनिचितानि कूलान्यभूवन्, सर्वरत्नहारप्रलम्बितानि विशुद्धरत्नमयसर्वभवनव्यूहोपशोभितानि विशुद्धसर्वाभरणव्यूहसमलंकृतानि। सर्वैश्च बोधिमण्डोऽप्रमाणैः पद्मगर्भैरचिन्त्यव्यूहमहामणिरत्नकूटागारैः समन्तात्परिवृतोऽभूत्। तस्य खलु पुना रत्नकुसुमविद्युद्धर्मनिगर्जितमेघघोषस्य गन्धोदकसरसो मध्यात् सर्वतथागतविषयप्रसंभिन्नघोषितमेघं नाम महारत्नराजपद्मं प्रादुरभूत्॥

तत्र महापद्मे समन्तज्ञानार्चिश्रीगुणकेतुध्वजो नाम तथागतः प्रादुर्बभूव तेषां सुमेरु-
परमाणुरजःसमानां तथागतानां प्रथमकल्पिकः, येन तस्मिन् कल्पे सर्वप्रथममनुत्तरा सम्य-
क्संबोधिरभिसंबुद्धा । सोऽनेकवर्षसहस्राणि धर्मश्रवणेन सत्त्वान् परिपाच्य दशवर्षसहस्रं
रश्म्यवभासविकुर्वितेन परिपाचयामास तत्र दशभिर्वर्षसहस्रैः स तथागतः प्रादुर्भविष्यतीति ।
यत्तः सर्वेभ्यस्तथागतविषयपत्रसंधिनिर्घोषितरश्मिमेघव्यूहमहारत्नराजप्रभात् सर्वसत्त्व- 5
विरजःप्रदीपा नाम रश्मिर्निश्चचार, यया रश्म्या ते सत्त्वाः स्पृष्टाः संजानन्ति स्म—दशभिर्वर्ष-
सहस्रैस्तथागत उत्पत्स्यत इति, नवभिर्वर्षसहस्रैः स तथागत उत्पत्स्यत इति । यततो महा-
बोधिवृक्षाद्विरजोवतीश्रीगर्भा नाम रश्मिर्निश्चचार, यया रश्म्या ते सत्त्वाः स्पृष्टाः सर्वरूपाणि
सूक्ष्माण्यपश्यन्—अष्टाभिर्वर्षसहस्रैः स तथागत उत्पत्स्यत इति । यतत एव महाबोधिवृक्षाद्
सर्वसत्त्वकर्मविपाकनिर्घोषा नाम रश्मिर्निश्चचार, यया रश्म्या ते सत्त्वाः स्पृष्टाः स्वकस्वकान् 10
कर्मसमुदानवतरन्ति स्म, कर्मस्मृतिज्ञानं च प्रलभन्त—सप्तभिर्वर्षसहस्रैः स तथागत उत्प-
त्स्यत इति । यतत एव महाबोधिवृक्षात् सर्वकुशलमूलसंभवनिर्घोषा नाम रश्मिर्निश्चचार,
यया रश्म्या ते सत्त्वाः स्पृष्टाः परिपूर्णा अविकलसर्वेन्द्रियाः संतिष्ठन्ते स्म—षड्भिर्वर्षसहस्रैः स
तथागत उत्पत्स्यत इति । यतत एव महाबोधिवृक्षादचिन्त्यबुद्धविषयनिदर्शननिर्घोषा नाम
रश्मिर्निश्चचार, यया ते सत्त्वाः स्पृष्टाः उदारातिशयतया निकुर्वन्ति स्म—पञ्चभिर्वर्षसहस्रैः 15
स तथागत उत्पत्स्यत इति । यतत एव महाबोधिवृक्षात् सर्वबुद्धक्षेत्रपरिशुद्धिनिगर्जितप्रति-
भासविज्ञापना नाम रश्मिर्निश्चचार, यया ते सत्त्वाः स्पृष्टाः सर्वाकारां बुद्धक्षेत्रपरिशुद्धिमद्राक्षुः—
चतुर्भिर्वर्षसहस्रैः स तथागत उत्पत्स्यत इति । यतत एव महाबोधिवृक्षात् सर्वतथागत-
विषयसंभेदप्रदीपा नाम रश्मिर्निश्चचार, यया ते सत्त्वाः स्पृष्टाः तस्य तथागतस्य सर्वत्रानु-
गतविकुर्वितमवतरन्ति स्म—त्रिभिर्वर्षसहस्रैः स तथागत उत्पत्स्यत इति । यतत 20
एव महाबोधिवृक्षात्सर्वजगदभिमुखप्रदीपा नाम रश्मिर्निश्चचार, यया ते सत्त्वाः स्पृष्टाः
तथागतमभिमुखमभिमुखमपश्यन्—द्वाभ्यां वर्षसहस्राभ्यां स तथागत उत्पत्स्यत इति ।
यतत एव महाबोधिवृक्षात् त्र्यध्वज्ञानविधुप्रदीपा नाम रश्मिर्निश्चचार तत्तथागतपूर्वयोग-
निर्घोषा नाम, यया ते सत्त्वाः स्पृष्टाः तस्य तथागतस्य पूर्वयोगसमुदानयकल्पपारम्परामवतरन्ति
स्म—वर्षसहस्रेण स तथागत उत्पत्स्यत इति । यततो महाबोधिवृक्षाद्वितिमिरज्ञान- 25　8

सर्वं तं लोकधातुमप्रमाणैः संकम्पननयैः संकम्प्य एकान्तपरिशुद्धामध्यतिष्ठत् यावद्दशसु दिक्षु सर्वतथागतानां बुद्धक्षेत्रपरिशुद्धिः । तामपि सर्वां प्रतिचित्तक्षणं तत्र बुद्धक्षेत्रनानाविधाचिन्त्यव्यूहान् संदर्शयामास । अथ पश्चिमे सप्ताहे ये तत्र लोकधातौ सत्त्वा बुद्धदर्शनपरिपक्वाः, ते सर्वे बोधिमण्डाभिमुखाः स्थिता अभूवन् ॥

5 अथ खलु तस्मिन् लोकधातौ सर्वचक्रवालेभ्य सर्वसुमेरुभ्यः सर्वपर्वतेभ्यः सर्वनदीभ्यः सर्वसागरेभ्यः सर्ववृक्षेभ्यः सर्वपृथिवीतलेभ्यः सर्वनगरेभ्यः सर्वप्राकारेभ्यः सर्वभवनेभ्यः सर्वविमानेभ्यः सर्ववस्त्राभरणपरिभोगेभ्यः सर्ववाद्यवृक्षेभ्यः सर्वतूर्यसंगीतिभ्यः सर्वनिर्माणव्यूहेभ्यः एकैकस्मादारम्बणात् सर्वतथागतविषयप्रभवं निगर्जमानाः सर्वगन्धधूपमेघान्निश्चार्य सर्वरत्नार्चिमेघान् सर्वगन्धधूपार्चिगर्भान् सर्वगन्धमणिविग्रहमेघान् सर्वमणिवस्त्ररत्नाभरणमेघान् 10 सर्वरत्नपुष्पसुमेरुमेघान् सर्वचूर्णमेघान् सर्वतथागतरश्मिमेघान् विद्योतयमानाः सर्वतथागतप्रभामण्डलमेघान्निश्चारयमाणाः सर्ववाद्यतूर्यमेघान् संघट्टयमानाः सर्वतथागतप्रणिधाननिर्घोषमेघान् प्रमुञ्चयमानाः सर्वतथागतस्वराङ्गरुतसमुद्रमेघान् निगर्जयमानाः सर्वतथागतलक्षणानुव्यञ्जनविचित्रप्रतिभासमेघान् निदर्शयमानाः अचिन्त्यानि तथागतोत्पादपूर्वनिमित्तानि संदर्श्य तस्य सर्वत्र्यध्वतथागतविषयपत्रसंधिघोषितरश्मिमेघव्यूहमहारत्नराजपद्मस्य बोधौ दशबुद्धक्षेत्र- 15 परमाणुरजःसमा महारत्नराजपद्मपरिवाराः समवतिष्ठन्त । तेषां च महारत्नराजपद्मपरिवाराणां महारत्नपद्मानां केसरकर्णिकासु दशबुद्धक्षेत्रपरमाणुरजःसमानि महामणिरत्नगर्भाणि सिंहासनानि प्रादुरभूवन् । तेषु च मणिरत्नगर्भेष्वासनेषु दशबुद्धक्षेत्रशतसहस्रपरमाणुरजःसमा बोधिसत्त्वाः पर्यङ्कनिषण्णाः प्रादुर्बभूवुः ॥

समनन्तराभिसंबुद्धस्य तस्य भगवतः समन्तज्ञानरत्नार्चिश्रीगुणकेतुराजः तथागतस्य 20 अनुत्तरां सम्यक्संबोधिम्, अथ तावदेव दशसु दिक्षु सर्वलोकधातुतथागता अनुत्तरां सम्यक्संबोधिमभिसंबुध्य यथाशयानां सत्त्वानामभिमुखं धर्मचक्रं प्रवर्तयामासुः । तेन ततो लोकधातोरप्रमेयाः सत्त्वाः सर्वदुर्गतिविनिपातेभ्यो विनिवर्तिताः । अप्रमेयाः सत्त्वाः स्वर्गोपपत्तिप्रतिष्ठापिताः । अप्रमेयाः सत्त्वाः श्रावकभूमौ प्रतिष्ठापिताः । अप्रमेयाः सत्त्वाः प्रत्येकबोधौ परिपाचिताः । अप्रमेयाः सत्त्वा वेगप्रभानिर्याणायां बोधौ परिपाचिताः । अप्रमेयाः सत्त्वा 25 विमलपराक्रमध्वजायां बोधौ परिपाचिताः । अप्रमेयाः सत्त्वाः धर्मप्रभावनाभवननिर्याणायां बोधौ प्रतिष्ठापिताः । अप्रमेयाः सत्त्वा इन्द्रियपरिशुद्धिप्रभावनानिर्याणायां बोधौ परिपाचिताः । अप्रमेयाः सत्त्वा बलसमतासमुदाचारानुगमनिर्याणायां बोधौ परिपाचिताः । अप्रमेयाः सत्त्वा धर्मनगराभिमुखविपथयानसंभवनिर्याणायां बोधौ प्रतिष्ठापिताः । अप्रमेयाः सत्त्वाः सर्वत्रानुगतदर्शाभिसंभिन्ननययाननिर्याणायां बोधौ प्रतिष्ठापिताः । अप्रमेयाः सत्त्वाः चर्याप्रयोगसमव- 30 सरणनयनिर्याणायां बोधौ प्रतिष्ठापिताः । अप्रमेयाः सत्त्वाः समाधिप्रस्थाननयनिर्याणायां बोधौ प्रतिष्ठापिताः । अप्रमेयाः सत्त्वाः सर्वारम्बणविषयपरिशुद्धिमण्डलनयनिर्याणायां बोधौ प्रतिष्ठापिताः । अप्रमेयाः सत्त्वा बोधिसत्त्वबोधौ चित्तमुत्पादिताः । अप्रमेयाः सत्त्वा बोधि-

सत्त्वमार्गे प्रतिष्ठापिताः। अप्रमेयाः सत्त्वाः पारमितामार्गविशुद्धौ प्रतिष्ठापिताः। अप्रमेयाः सत्त्वाः प्रथमायां बोधिसत्त्वभूमौ प्रतिष्ठापिताः। एवं तस्य तथागतस्य अचिन्त्येन बुद्धवृषभिताविकुर्वितेन धर्मचक्रं प्रवर्तयतः प्रतिचित्तक्षणमनन्ताप्रमेयाः सत्त्वा द्वितीयायां तृतीयायां चतुर्थ्यां पञ्चम्यां षष्ठ्यां सप्तम्यामष्टम्यां नवम्याम्, अप्रमेयाः सत्त्वा दशम्यां भूमौ प्रतिष्ठापिताः। अप्रमेयाः सत्त्वाः प्रणिधानवैशेषिकायां बोधिसत्त्वचर्यायामवतारिताः। अप्रमेयाः 5 सत्त्वाः समन्तभद्रबोधिसत्त्वचर्याप्रणिधानविशुद्धौ प्रतिष्ठापिताः। एवं तस्य तथागतस्य अचिन्त्येन बुद्धवृषभिताविकुर्वितेन धर्मचक्रं प्रवर्तयतः प्रतिचित्तक्षणमनन्तमध्यसत्त्वधातुर्विनयमगमत्। तस्मिंश्च लोकधातौ सर्वसत्त्वा यथाशयास्तस्य तथागतस्य नानारम्भावोपायकौशल्यप्रमुक्तां धर्मदेशनामाजानन्ति स्म ॥

तस्यां खलु पुना रत्नकुसुमप्रदीपायां राजधान्यां रूपवर्णविषयपरिभोगमदमत्तानां 10 सत्त्वानामन्योन्यमवमन्यमानानां विनयवशं समुपादाय समन्तभद्रो बोधिसत्त्व उदारवर्णरूपगतमभिनिर्माय तां राजधानीमनुप्राप्तः। तस्योदारया प्रभया सर्वा सा राजधान्यवभासिता। या च तस्या राजधान्याः प्रभा, या च राज्ञश्चक्रवर्तिनो वैरोचनरत्नपद्मगर्भश्रीचूडस्य स्वशरीरनिर्याता प्रभा, या च स्त्रीरत्नस्य प्रभा, या च रत्नवृक्षाणां प्रभा, या च महामणिरत्नस्य प्रभा, या च चन्द्रसूर्यग्रहनक्षत्रज्योतिषां प्रभा, या च सर्वजम्बुद्वीपे प्रभा, सा च सर्वा न 15 प्रज्ञायते स्म। तद्यथापि नाम आदित्ये उदिते विगतेऽन्धकारे न चन्द्रग्रहनक्षत्रज्योतिषां नाग्नेर्न मणीनां प्रभा प्रज्ञायते स्म, एवमेव समन्तभद्रस्य बोधिसत्त्वस्य प्रभयाभिभूताः तत्र जम्बुद्वीपे सर्वप्रभा न प्रज्ञायते स्म। तद्यथापि नाम जाम्बूनदकनकबिम्बस्य पुरतो मषिपिण्डो न शोभते न भासते न तपति न विरोचते, एवमेव समन्तभद्रस्य बोधिसत्त्वस्य पुरतः तेषां सत्त्वानां रूपकाया न शोभन्ते, न भासन्ते, न तपन्ति, न विरोचन्ते ॥ 20

तेषामेतदभवत्- कोऽन्वयं भविष्यति देवो वा ब्रह्मा वा, यस्य पुरतो वयं न शोभामहे, न भासामहे, न तपामो न विरोचामहे कायेन वा प्रभया वा शुभया वा वर्णेन वा तेजसा वा? न चास्य शक्नुमो निमित्तमुद्ग्रहीतुम् ॥

अथ खलु समन्तभद्रो बोधिसत्त्वः तस्या रत्नकुसुमप्रदीपाया राजधान्या मध्ये वैरोचनरत्नपद्मगर्भश्रीचूडस्य राज्ञश्चक्रवर्तिनो विमानस्योपर्यन्तरिक्षे स्थित्वा तं वैरोचनरत्नपद्म- 25 गर्भश्रीचूडं राजानं चक्रवर्तिनमेतदवोचत्-यत् खलु महाराज जानीयाः-तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पन्नः। इहैव तव विजिते समन्तधर्मावभासधर्ममेघनिर्घोषध्वजबोधिमण्डे विहरति ॥

अथ खलु समन्तज्ञानार्चिपद्मभद्राभिरामनेत्रश्रीचन्द्रा राजदुहिता समन्तभद्रस्य बोधिसत्त्वस्य रूपकायं दृष्ट्वा प्रभाविकुर्वितमाभरणनिर्घोषं च श्रुत्वा महाप्रीतिप्रामोद्यवेगजाता 30 तस्यां वेलायामेवं चित्तमुत्पादयामास-यन्मे किंचिदुपचितकुशलमूलं तेनाहमीदृशं कायं प्रति-

लभेयम्। ईदृशमलंकारम्, ईदृशानि लक्षणानि, ईदृशमीर्यापथम्, ईदृशीमृद्धिम्। यथा अनेनान्धकारायां रात्रौ सत्त्वानामवभासः सजनस्य बुद्धोत्पादः संप्रकाशितः, तथाहमपि सत्त्वानामज्ञानान्धकारं विधूय महाज्ञानालोकं कुर्याम्। यत्र यत्र चोत्पद्येयम्, सर्वत्राविरहिता स्याममनेन कल्याणमित्रेण॥

5 अथ खलु कुलपुत्र वैरोचनरत्नपद्मगर्भश्रीचूडश्चक्रवर्ती सार्धं चतुरङ्गेन बलकायेन, सार्धं सप्तभी रत्नैः, सार्धं स्त्रीगणपरिवारेण, सार्धं पुत्रामात्यनैगमैर्जानपदैः, महत्या राजर्द्ध्या, महता राजानुभावेन तस्या रत्नकुसुमप्रदीपाया राजधान्या उच्चाल्य योजनमूर्ध्वं विहायसमभ्युद्गम्य सर्वं जम्बुद्वीपं सर्वावतीं चातुर्द्वीपिकलोकधातुं महतावभासेन स्फरित्वा सर्वसत्त्वानां बुद्धदर्शनसमादापनार्थं सर्वरत्नपर्वतेषु प्रतिभासं संदर्श्य सर्वचातुर्द्वीपिकलोकधातुपर्यापन्नानां 10 सत्त्वानामभिमुखं स्थित्वा तद्बुद्धदर्शनं गाथाभिगीतेन संवर्णयामास—

बुद्धो लोके समुत्पन्नस्त्राता यः सर्वदेहिनाम्।
सर्वे भजन्त उत्थाय द्रष्टुं लोकविनायकम्॥ २०॥

कदाचित्कल्पकोटीभिरुत्पद्यन्ते तथागताः।
प्रकाशयन्ति ते धर्मं हितार्थं सर्वदेहिनाम्॥ २१॥

15 दृष्ट्वा लोकं विपर्यस्तमज्ञानतिमिरावृतम्।
संसारदुःखाभिहतं संजन्य महतीं कृपाम्॥ २२॥

कल्पकोटीरसंख्येयाश्चरिता बोधिचारिका।
सत्त्वानां परिपाकार्थं सर्वदुःखोपशान्तये॥ २३॥

पर्यत्यजन् हस्तपादान् कर्णनासाः शिरांसि च।
20 कल्पानन्तपर्यन्ता बुद्धबोध्यमृताप्तये॥ २४॥

दुर्लभाः कल्पकोटीभिर्नैके लोकविनायकाः।
अमोघं श्रवणं येषां दर्शनं पर्युपासनम्॥ २५॥

बोध्यासननिषण्णोऽयं दृश्यते वदतां वरः।
मारं ससैन्यं निर्जित्य विबुद्धो बोधिमुत्तमाम्॥ २६॥

25 बुद्धकायं च वीक्षध्वं अनन्तरश्मिमण्डलम्।
नानावर्णं विनिःसृत्य प्रह्लादयति यज्जगत्॥ २७॥

रश्मिमेघानसंख्येयान् बुद्धरोमविनिःसृतान्।
विन्दन्ति प्रीतिमतुलां सत्त्वा यैरवभासिताः॥ २८॥

सम्यग्धर्मेण चित्तेन पूजयध्वं विनायकम्।
जनयित्वा महावीर्येण यामस्तद्दर्शनक्रमम्॥ २९॥

---

1 B सैन्यं

अथ खलु राजा वैरोचनरत्नपद्मगर्भश्रीचूडश्चाभिर्गाथाभिः स्वविजितवासिनः सर्वान् सत्त्वान् संचोद्य दशभिर्विविधपूजामेघसहस्रैश्चक्रवर्तिकुशलमूलपरिनिष्पन्नैः समन्तावभासधर्ममेघनिर्घोषध्वजं बोधिमण्डं समन्तादभिप्रवर्षन् येन स भगवान् समन्तज्ञानरत्नार्चिश्रीगुणकेतुराजस्तथागतः तेनोपसंक्रान्तः सर्वरत्नच्छत्रमेघसंछादितमाकाशं कुर्वन्, सर्वपुष्पवितानमेघविततमाकाशं कुर्वन्, सर्ववस्त्रमेघसंछादितालंकारमाकाशं कुर्वन्, सर्वरत्नकिङ्किणीजालमेघैर्गगनमलंकुर्वन्, सर्वगन्धसागरनिर्धूपितगन्धार्चिमेघालंकारं गगनतलमधितिष्ठन्, सर्वरत्नासनमणिरत्नवक्त्रप्रज्ञसविरचनमेघालंकारं गगनतलमधितिष्ठन्, सर्वरत्नध्वजमेघोच्छ्रितालंकारं गगनतलमधितिष्ठन्, सर्वभवनविमानमेघसंछन्नालंकारं गगनतलमधितिष्ठन्, सर्वपुष्पमेघसंछन्नालंकारं गगनतलमधितिष्ठन्, सर्वपूजाव्यूहमेघाभिप्रवर्षणालंकारं गगनतलमधितिष्ठन् । उपसंक्रम्य भगवतः समन्तज्ञानरत्नार्चिश्रीगुणकेतुराजस्य तथागतस्य पादौ शिरसाभिवन्द्य तं 10 भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य तस्य भगवतः पुरतः समन्तदिग्विद्योतितमहामणिरत्नपद्मगर्भासने न्यषीदत् ॥

अथ खलु समन्तज्ञानरत्नार्चिःपद्मभद्राभिरामनेत्रश्रीचन्द्रा चक्रवर्तिदुहिता स्वान्याभरणानि कायान्निर्मुच्य तैराभरणैस्तं भगवन्तं समन्तज्ञानरत्नार्चिश्रीगुणकेतुराजानं तथागतमभ्यवकिरत् । अथ तान्याभरणानि तस्य भगवतः उपरि मूर्धसंधौ महामणिरत्नाभरणच्छत्रं 15 संस्थितमभूवन् विचित्रमणिरत्नजालपरिक्षिप्तं नागेन्द्रकायपरिगृहीतं सर्वाभरणशरीरसुसंस्थितपरिमण्डलं दशाभरणच्छत्रमण्डलपरिवारितमेकान्तपरिशुद्धं कूटागारसंस्थानविचित्रव्यूहं सर्वरत्नाभरणमेघसंछादितं सर्वमणिराजद्रुमव्यूहसंछन्नं सर्वगन्धसागरमणिराजसमलंकृतम् । तस्य मध्ये धर्मधातुप्रभवसर्वरत्नमणिशाखाप्रलम्बं नाम महाबोधिवृक्षमद्राक्षीत् अनन्तमध्यव्यूहनिर्देशं प्रदक्षिणनानाव्यूहसंदर्शनम् । तत्र वैरोचनं नाम तथागतमद्राक्षीत् अनभि- 20 लाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्बोधिसत्त्वैः परिवृतं पुरस्कृतं सर्वैः समन्तभद्रबोधिसत्त्वचर्याप्रणिधाननिर्यातैः नानाबोधिसत्त्वैरचिन्त्यव्यूहासंभिन्नविहारिभिः, सर्वलोकेन्द्रांश्च तदभिमुखानद्राक्षीत् । तस्य भगवतो वैरोचनस्यानन्तमध्यं बुद्धविकुर्वितमद्राक्षीत्, पूर्वबोधिसत्त्वचर्याकल्पपरंपरां च अवतरति स्म । तस्याश्च लोकधातोः संवर्तविवर्तकल्पानवतरति स्म । तत्र लोकधातावतीतां बुद्धवंशपरंपरामवतरति स्म । तस्यां च लोकधातौ समन्तभद्रबोधिसत्त्व- 25 मद्राक्षीत् । सर्वतथागतपादमूलेषु बुद्धपूजाप्रयुक्तसर्वसत्त्वपरिपाकविनयाभिमुखं चाद्राक्षीत् । सर्वबोधिसत्त्वांश्च समन्तभद्रस्य बोधिसत्त्वस्य काये प्रतिभासप्राप्तान्, आत्मानं च तत्रैवानुगतमद्राक्षीत् सर्वतथागतपादमूलेषु । समन्तभद्रस्य बोधिसत्त्वस्य कायप्रतिभासप्राप्तसर्वबोधिसत्त्वपादमूलेषु सर्वसत्त्वभवनेषु, तासु च लोकधातुष्वेकैकस्मिन् लोकधातौ बुद्धक्षेत्रपरमाणुरजःसमान् लोकधातूनद्राक्षीत् । ससंधिव्यूहान्, सप्रतिष्ठानान्, ससंस्थानान्, सशरीरान्, 30 सनानाव्यूहपरिशुद्धान्, नानाव्यूहमेघपरिसंछन्नान्, नानाकल्पनामसंख्येयान्, नानातथागतवंशनिर्देशान्, नानात्र्यध्वनयावतारान्, नानादिक्प्रसरप्रवेशान्, नानाधर्मधातुप्रसरपर्यापन्नान्

नानाधर्मधातुतलप्रवेशान्, नानाकाशतलव्यवस्थानान्, नानाबोधिमण्डव्यूहान्, नानातथा-
गतविकुर्वितप्रभान्, नानाबुद्धसिंहासनव्यूहान्, नानातथागतपर्षन्मण्डलसमुद्रान् नाना-
तथागतपर्षन्मण्डलपरिवर्तान् नानातथागतोपायकौशल्यपरिदीपनान्, नानातथागतधर्मचक्र-
प्रवर्तननयान्, नानातथागतस्वराङ्गरुतनिर्घोषमुक्तान् नानामन्त्रनयसागरनिर्देशान् नाना-
5 सूत्रान्तमेघानुच्चरमाणानद्राक्षीत् । दृष्ट्वा च भूयस्या मात्रया महाप्रीतिप्रसादवेगान् प्रत्यलभत ॥

तस्या महाप्रीतिवेगसंजातायाः स भगवान् समन्तज्ञानरत्नार्चिःश्रीगुणकेतुराज-
स्तथागतः सर्वतथागतधर्मचक्रनिर्घोषं नाम सूत्रान्तं संप्रकाशयामास दशबुद्धक्षेत्रपरमाणु-
रजःसमसूत्रान्तपरिवारम् । तस्यास्तं सूत्रान्तं श्रुत्वा दश समाधिमुखशतसहस्राण्यवक्रान्तानि
मृदूनि सुखसंस्पर्शनानि । तद्यथापि नाम तद्दिवसावक्रान्तस्य गर्भस्य मातुः कुक्षौ विज्ञानम्,
10 तद्यथापि नाम सत्त्वानां कर्माभिनिर्हारम्, तद्यथापि नाम तद्दिवसावरूढस्य सालकल्याण-
वृक्षस्य बीजाङ्कुरहेतुः, एवमेव ते समाधयो मृदवः कमनीयाः । यदुत सर्वतथागताभि-
मुखविज्ञापनो नाम समाधिः । सर्वक्षेत्रप्रसरानुगतावभासो नाम समाधिः । सर्वत्र्यध्वनयाव-
तारप्रवेशो नाम समाधिः । सर्वतथागतधर्मचक्रनिर्घोषो नाम समाधिः । सर्वबुद्धप्रणिधानसागर-
विज्ञापनो नाम समाधिः । सर्वसंसारदुःखप्रतिपीडितसर्वनिर्याणनिर्घोषविज्ञापनो नाम समाधिः ।
15 सर्वसत्त्वतमोन्धकारविधमनप्रणिधानव्यूहो नाम समाधिः । सर्वसत्त्वदुःखविप्रमोक्षप्रणिधिविलम्बो
नाम समाधिः । सर्वसत्त्वसुखनिष्पत्तिसंभवो नाम समाधिः । सर्वसत्त्वपरिपाकविनयापरि-
खेदगर्भो नाम समाधिः । सर्वबोधिसत्त्वमार्गावतरणध्वजो नाम समाधिः । सर्वबोधिसत्त्वभूम्याक्रमण-
संभवव्यूहो नाम समाधिः । एवंप्रमुखानि अस्या दश समाधिमुखशतसहस्राण्यवक्रान्तानि ॥

सा सूक्ष्मसमाहितचित्ता अनिञ्जनचित्ता प्रहर्षितचित्ता समाश्वासितचित्ता अना-
20 भासचित्ता कल्याणमित्रेष्वनुगतचित्ता गम्भीरसर्वज्ञतारम्बणचित्ता मैत्र्यानुगमनसागरप्रसृतचित्ता
सर्वाभिनिवेशोत्कलितचित्ता सर्वलोकविषयासंवासचित्ता तथागतविषयावतरणचित्ता सर्वबुद्ध-
रूपवर्णसागरावभासितचित्ता अक्षुभितचित्ता अनीरितचित्ता अप्रतिहतचित्ता अभिन्नचित्ता
अनुन्नतचित्ता अनवनतचित्ता अखिन्नचित्ता अनिवर्त्यचित्ता असंसीदनचित्ता सर्वधर्मस्वभाव-
निध्यप्तिचित्ता सर्वधर्मस्वभावनयसागरानुगतचित्ता सर्वधर्मप्रतिभयनयानुगतचित्ता सर्वसत्त्व-
25 समुद्रावतरणचित्ता सर्वजगत्परित्राणचित्ता विपुलबुद्धसमुद्रावभाससंजातचित्ता, सर्वतथा-
गतप्रणिधानसागरावतरणचित्ता सर्वावरणपर्वतविकिरणचित्ता विपुलपुण्यसंभारसमुदानयन-
चित्ता दशतथागतबलप्रतिभाभिमुखचित्ता सर्वबोधिसत्त्वविषयावभासप्रतिलब्धचित्ता
सर्वबोधिसत्त्वसंभारसंवर्तनचित्ता सर्वदिक्समुद्रस्फरणचित्ता समन्तभद्रमहाप्रणिधानाध्या-
लम्बनतायै, दशबुद्धक्षेत्रपरमाणुरजःसमैः प्रणिधानसमुद्रैः सर्वतथागतानां पूर्वप्रणिधाने
30 स्वबुद्धक्षेत्रपरिशुद्धयेऽभिनिर्हरति स्म, यदुत सर्वसत्त्वपरिपाकविनयाय धर्मधातुनयसमुद्रप्रसर-
परिज्ञायै धर्मधातुनयसमुद्रावतरणतायै सर्वबुद्धक्षेत्रेष्वपरान्तकल्पबोधिसत्त्वचर्यावतरणतायै
सर्वबोधिसत्त्वचर्यामण्डलापरान्तकल्पसंपादनतायै सर्वतथागतोपसंक्रमणतायै सर्वकल्याण-

मित्रारागणतायै सर्वतथागतपूजोपस्थानपरिपूरणतायै प्रतिचित्तक्षणं सर्वज्ञज्ञानविरोहणविबोधन-बोधिसत्त्वचर्यानुपच्छेदनतायै । एवंप्रमुखैर्दशबुद्धक्षेत्रपरमाणुरजःसमैः प्रणिधानाभिनिर्हार-मुखसमुद्रैः समन्तभद्रायां बोधिसत्त्वचर्यायां प्रणिधिमभिनिर्हरति स्म तस्याः समन्तभद्र-बोधिसत्त्वचर्याप्रणिध्यभिनिर्हाराय ॥

स भगवान् समन्तज्ञानरत्नार्चिश्रीगुणकेतुराजस्तथागतः पूर्वकुशलमूलानि संचोदयति 5 उद्योतयति संदर्शयति विवृणोति विभजति संप्रकाशयति सारीकरोति अविप्रणाशतायै, विपुलीकरोति महास्फरणतायै, स्थापयति सर्वज्ञताप्रमाणीकरणतायै, यदुत प्रथमचित्तोत्पाद-मुपादाय तथागतपूर्वप्रणिधिसमुद्रासंख्येयप्रतिलाभाय ॥

भूतपूर्वं कुलपुत्र अतीतेऽध्वनि ततः परेण दशमे कल्पे मणिसूर्यचन्द्रविद्योतितप्रभायां लोकधातौ चन्द्रध्वजश्रीकेतोः तथागतस्य प्रवचने समन्तज्ञानार्चि:पद्मभद्राभिरामनेत्रश्री- 10 चन्द्रया दारिकया समन्तभद्रबोधिसत्त्वसमादापितया प्रलुग्णस्तथागतविग्रहः पद्मनिषण्णः प्रतिसंस्कारितः । प्रतिसंस्कार्य चित्रितः । चित्रयित्वा रत्नप्रतिमण्डितः कृतः । अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितं समन्तभद्रबोधिसत्त्वकल्याणमित्रमागम्य । सा तेन कुशलमूलेन अविनिपातधर्मिणी सदा देवेन्द्रकुलेषु मनुष्येन्द्रकुलेषु चोपपन्ना, सर्वत्र चाभिरूपाभूत् प्रासादिका दर्शनीया परमशुभवर्णपुष्कलतया समन्वागता । सदा च अविरहिताभूत्तथा- 15 गतदर्शनेन समन्तभद्रबोधिसत्त्वेन । तेनैव च कल्याणमित्रेण तस्यां तस्यां जातौ परिपाचिता संचोदिता स्मारिता। एतर्हि च पुनस्तया समन्तभद्रो बोधिसत्त्व आरागितोऽत्यन्ताविरागणतया ॥

तत्किं मन्यसे कुलपुत्र—अन्यः स तेन कालेन तेन समयेन वैरोचनरत्नपद्मगर्भश्री-प्रभाचूडो नाम राजचक्रवर्ती ? न खलु पुनस्ते कुलपुत्र एवं द्रष्टव्यम् । मैत्रेयः स बोधि-सत्त्वः तेन कालेन तेन समयेन वैरोचनरत्नपद्मगर्भश्रीप्रभाचूडो नाम राजाभूच्चक्रवर्ती । 20 स्यात्खलु पुनस्ते कुलपुत्र एवम्—अन्या सा तेन कालेन तेन समयेन संपूर्णश्रीवक्त्रा नाम राजभार्याभूत् ? न खलु एवं द्रष्टव्यम् । इयं प्रशान्तरुतसागरवती नाम रात्रिदेवता, या ममानन्तरं संनिषण्णा । तत्किं मन्यसे कुलपुत्र—अन्या सा तेन कालेन तेन समयेन समन्त-ज्ञानार्चिःपद्मभद्राभिरामनेत्रश्रीचन्द्रा नाम राजदुहिता अभूत् ? न खल्वेवं द्रष्टव्यम् । अहं सा तेन कालेन तेन समयेन समन्तज्ञानार्चिःपद्मभद्राभिरामनेत्रश्रीचन्द्रा नाम 25 राजदुहिता अभूवम् । यन्मे दारिकाभूतया इन्द्रध्वजकेतोस्तथागतस्य प्रवचने प्रलुग्णस्तथा-गतविग्रहः पद्मोद्गतः प्रतिसंस्कारितः, स मे हेतुरभूत् यावदनुत्तरायाः सम्यक्संबोधेः । यदा चास्मि समन्तभद्रेण बोधिसत्त्वेन अनुत्तरायां सम्यक्संबोधौ समादापिता, स मे कुलपुत्र प्रथमचित्तोत्पादो बोधाय अभूत् । यदा च स मे भगवान् समन्तज्ञानार्चिःश्रीगुण-केतुराजः तथागत उपसंक्रम्य आभरणैरवकीर्णः, तथागतविकुर्वितप्रातिहार्यं च दृष्ट्वा धर्मश्च 30 मे तस्य भगवतोऽन्तिकाच्छ्रुतः, तदा मयैष सर्वलोकाभिमुखजगद्विनयनिदर्शनो बोधिसत्त्व-विमोक्षः प्रतिलब्धः । सर्वे च ते सुमेरुपरमाणुरजःसमास्तथागता आरागिता अभिराधिताः,

सर्वोपकरणपूजासत्कारेण च सत्कृताः । यश्च तैस्तथागतैर्धर्मो भाषितः, स मे सर्वं श्रुतः ।
तेषां चास्मि तथागतानामववादानुशासनीषु प्रतिपन्ना । तेषु च मे तथागतेषु तीव्रं गौरवं
प्रतिलब्धं यथारूपेण गौरवेण एकचित्तक्षणे तान् सर्वांस्तथागतांस्तानि बोधिसत्त्वपर्षन्मण्ड-
लानि तानि च सर्वाणि बुद्धक्षेत्राणि पश्यामि ॥

5 तस्यां च वैरोचनश्रियां लोकधातौ संवृत्तायां तत्र च विरजोमण्डले कल्पे
निर्गतेऽनन्तरे मणिचक्रविचित्रप्रतिमण्डितव्यूहा नाम लोकधातुर्महाप्रभश्च नाम कल्पोऽभूत् ।
तत्र पञ्च बुद्धशतान्युत्पन्नानि । तानि मया सर्वाण्यारागितानि । तस्मिंश्च खलु महाप्रभे
कल्पे महाकरुणमेघध्वजो नाम तथागतः प्राथमकल्पिकोऽभूत् । स मया रात्रिदेवता-
भूतया अभिनिष्क्रामन् पूजितः । तस्यानन्तरं वज्रनारायणकेतुर्नाम तथागत उत्पन्नः । स
10 मया चक्रवर्तिभूतया पूजितः । तेन च मे सर्वबुद्धोत्पादसंभवो नाम सूत्रान्तः संप्रकाशितो
दशबुद्धक्षेत्रपरमाणुरजःसमसूत्रान्तपरिवारः । स च मे श्रुतः उद्गृहीतः । तस्यानन्तरं
ज्वलनार्चिःपर्वतश्रीव्यूहो नाम तथागत उत्पन्नः । स मे श्रेष्ठिदुहितृभूतया पूजितः । तेन
च मे त्र्यध्वावभासगर्भो नाम सूत्रान्तः संप्रकाशितो जम्बुद्वीपपरमाणुरजःसमसूत्रान्तपरिवारः ।
स च मे श्रुतः उद्गृहीतः । तस्यानन्तरं सर्वधर्मसमुद्राभ्युद्गतवेगराजो नाम तथागतो लोक
15 उदपादि । स मया असुरराजभूतया पूजितः । तेन च मे सर्वधर्मधातुतलज्ञानभेदो नाम
सूत्रान्तः संप्रकाशितः पञ्चसूत्रान्तशतपरिवारः । स च मे श्रुतः उद्गृहीतः । तस्यानन्तरं
गम्भीरधर्मश्रीसमुद्रप्रभो नाम तथागत उत्पन्नः । स मे नागेन्द्रकन्याभूतया पूजितश्चिन्ता-
राजमणिरत्नमेघवर्षमभिप्रवर्षन्त्या । तेन च मे प्रीतिसागरविवर्धनवेगो नाम सूत्रान्तः
संप्रकाशितो दशसूत्रान्तकोटीशतसहस्रपरिवारः । स च मे श्रुत्वोद्गृहीतः । तस्यानन्तरं
20 रत्नशिखरार्चिःपर्वतप्रदीपो नाम तथागतः उत्पन्नः । स च मे सागरदेवताभूतया रत्नपद्ममेघ-
पर्षदुपसंक्रम्य पूजितः । तेन च मे धर्मधातुसागरनयप्रभो नाम सूत्रान्तः संप्रकाशितो
दशबुद्धक्षेत्रपरमाणुरजःसमसूत्रान्तपरिवारः । स च मे श्रुत्वोद्गृहीतः, स्मृत्या च संधारितः ।
तस्यानन्तरं गुणसमुद्रावभासमण्डलश्रीर्नाम तथागत उत्पन्नः । स मे पञ्चाभिज्ञऋषिभूतया
महर्द्धिविकुर्वितेन षष्टिऋषिसहस्रपरिवृतया उपसंक्रम्य गन्धपुष्पशिखरमेघानभिप्रवर्षन्त्या
25 पूजितः । तेन च मे अनालयधर्मप्रदीपो नाम सूत्रान्तः संप्रकाशितः षष्टिसूत्रान्तसहस्रपरिवारः ।
स च मे श्रुत्वोद्गृहीतः । तस्यानन्तरं वैरोचनश्रीगर्भो नाम तथागत उत्पन्नः । अहं च
समतार्थसंभवा नाम पृथिवीदेवता अभूवम् । सा अहमप्रमेयपृथिवीदेवतापरिवारा सर्वरत्न-
द्रुमकोशेभ्यो रत्नपुष्पमेघवर्षाण्युत्सृजमाना सर्वरत्नहारमेघान् प्रवर्षमाणा उपसंक्रान्ता तस्य
तथागतस्य पूजाकर्मणे । तेन च मे सर्वतथागतसंभवज्ञानाकरगर्भो नाम सूत्रान्तः संप्र-
30 काशितोऽप्रमेयसूत्रान्तपरिवारः । स च मे श्रुत्वा धारितो न विप्रणाशितः ॥

तेषां खलु कुलपुत्र पञ्चानां बुद्धशतानां सर्वपश्चिमो धर्मधातुगगनपूर्णरत्नशिखर-
श्रीप्रदीपो नाम तथागतो लोक उदपादि । अहं च तेन कालेन अभिरामश्रीवक्त्रा नाम

नटदारिका अभूवम् । सा अहं तस्य तथागतस्य नगरप्रवेशसमये नाटके प्रवृत्ते बुद्धानुभावेन ऊर्ध्वं गगनतले स्थित्वा गाथासहस्रेण तं तथागतमभिष्टुवन्ती उपसंक्रान्ता । तेन च मे धर्मधातुविद्योतितव्यूहं नाम रश्मिमूर्णकोशादुत्सृज्य सर्वकायोऽवभासितः । तया च मे रश्म्या समनन्तरस्पृष्ट्या धर्मधातुनयावर्तगर्भो नाम विमोक्षः प्रतिलब्धः ॥

इति हि कुलपुत्र एतान् प्रमुखान् कृत्वा यानि तत्र मणिचक्रविचित्रप्रतिमण्डितव्यूहायां लोकधातौ महाप्रभे कल्पे पञ्च बुद्धशतान्युत्पन्नानि, तानि मया सर्वाण्यारागितानि, पूजा च मे तेषां तथागतानां कृता । यश्च मे तैस्तथागतैर्धर्मो देशितः, तं सर्वं स्मरामि । एकपदव्यञ्जनमपि मे ततो धर्मनयान्न विप्रमुषितम् । एकैकस्य च मे तथागतस्यान्तिकमुपसंक्रामन्त्या अपरिमाणानां सत्त्वानामर्थः कृतो बुद्धधर्मसंवर्णनतया । एकैकस्य च मे तथागतस्य अन्तिकात् त्र्यध्वज्ञानगर्भधर्मधातुविपुलो नाम धर्मधातुशरीरसागरः सर्वज्ञताविद्युदवभासः प्रतिलब्धः सर्वसमन्तभद्रचर्यासंवासमवसरणः । एतर्ह्यपि मे कुलपुत्र प्रतिचित्तक्षणमनन्तमध्यास्तथागता आभासमागच्छन्ति । सर्वेषां च मे तेषां तथागतानां सहदर्शनाद् सर्वज्ञताविद्युदवभासा आश्चर्येऽवक्रान्ता अप्रतिलब्धपूर्वा अदृष्टपूर्वाः । न च समन्तभद्राया बोधिसत्त्वचर्याया उच्चलामि । तत्कस्य हेतोः ? अनन्तमध्यनिर्देश एष सर्वज्ञताविद्युदवभासप्रतिलम्भः ॥

अथ खलु समन्तसत्त्वत्राणोजःश्री रात्रिदेवता तस्यां वेलायां तमेव सर्वलोकाभिमुखजगद्विनयनिदर्शनं बोधिसत्त्वविमोक्षं भूयस्या मात्रया प्रदर्शयमाना बुद्धाधिष्ठानेन सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत–

शृणु सुधना वचनमेतु ममा गम्भीर दुर्दृश दुरावगहम् ।
सर्वत्रियध्वतलभेदनयं धर्माभमण्डलसमन्तप्रभम् ॥ ३० ॥
यथ संभुत प्रथम चित्तु ममा बोधाय बुद्धगुणप्रार्थनया ।
यथ बोधिविमोक्षु अयु लब्धु मया एतं शृणोहि प्रविभागनयम् ॥ ३१ ॥
इतु बुद्धक्षेत्रपरमाणुरजःसमकल्पपूर्वतु परेण ततः ।
वैरोचनध्वजप्रदीपशिरी अत्र लोकधातु विपुला विमला ॥ ३२ ॥
कल्पो अभू विरजमण्डलु यो अच्छिन्नु यत्र जिनवंशु अभूत् ।
तस्मिन् सुमेरुपरमाणुसमा उपपद्यिषू दशबला अनिधा ॥ ३३ ॥
तस्मिन् समन्तरतनार्चिशिरी गुणकेतुराज प्रथमः सुगतः ।
धर्मध्वजः शिरिसुमेरु जिनो गुणकेसरीश्वरु चतुर्थ जिनः ॥ ३४ ॥
जिनु शान्तिराज समितायुरथो यशपर्वतो गुणसुमेरुशिरी ।
जिनभास्करः शशिमुखो भगवानेते दश प्रथम अत्र नये ॥ ३५ ॥
गगनालयो जिनु समन्तप्रभो दिशसंभवः स्मृतिसमुद्रमुखः ।
अभ्युद्गता जिनु सुमेरुशिरी धर्मार्चिपर्वतशिरी सुगतः ॥ ३६ ॥

पद्मोद्गतो नवमु कारुणिको जिनु धर्मधातुकुसुमो दशमः ।
बुद्धोसमुद परिदीपयतो एषा दशा द्वितिय अत्र नये ॥ ३७ ॥
प्रभकेतुराजमति ज्ञानमति चित्रार्थ[1] इन्द्रशिरि देवमति ।
जिनु वेगराजगति ज्ञानशिरी अवभासराज प्रभकेतुशिरी ॥ ३८ ॥
विक्रान्तदेवगति नाम जिनो तथ धर्मधातुपदुमो दशमः ।
एव नयं विपुल दर्शयतो तृतिया दशा भवति अत्र नये ॥ ३९ ॥
रत्नार्चिपर्वतशिरी भगवांस्तादनन्तरं गुणसमुद्रशिरी ।
धर्मप्रभो पदुमगर्भशिरी गतिचन्द्रनेत्रनयनः सुगतः ॥ ४० ॥
गन्धप्रभो मणिसुमेरुशिरी गन्धर्वकायु प्रभराजः * * ।
मणिगर्भराज शिरितेजवती दशमो जिनः प्रशमरूपगतिः ॥ ४१ ॥
तदनन्तर विपुलबुद्धि जिनो रतनप्रभो गगनमेघशिरी ।
वरलक्षणः शिरि बभूव जिनो व्रतमण्डलश्च स्वशरीरप्रभः ॥ ४२ ॥
नारायणव्रत सुमेरुशिरी गुणचक्रवालशिरिराजु जिनः ।
अपराजितव्रतध्वजो भगवान् द्रुमपर्वतो दशमु तेष जिनः ॥ ४३ ॥
सालेन्द्रराजशिरिगर्भु जिनो लोकेन्द्रकायप्रतिभासप्रभः ।
अभ्युद्गतप्रभशिरी भगवान् विरजप्रभो धरणितेजशिरी ॥ ४४ ॥
गम्भीरधर्मगुणराजशिरी जिनु धर्मसागरनिर्घोषमतिः ।
मेरुध्वजः शिरिप्रभासमतिर्दशमो जिनो रतनराजशिरिः ॥ ४५ ॥
ब्रह्मप्रभो गगनघोष जिनस्तथ धर्मधातुप्रतिभासशिरिः ।
आलोकमण्डलप्रभो भगवान् दशमेद्ज्ञानप्रभकेतुमतिः ॥ ४६ ॥
गगनप्रदीप अभिरामशिरी वैरोचनप्रभशिरी सुगतः ।
पुण्यप्रभासशिरि शान्तशिरी दशमो महाकरुणमेघशिरी ॥ ४७ ॥
तथताप्रभो बलप्रभासमतिः सर्वजगाभिमुखरूप जिनः ।
अभ्युद्गतामु अभु तत्रे[2] जिनस्तादनन्तरं समशरीरु जिनः ॥ ४८ ॥
धर्मोद्गतोऽप्य स अभूत्सुगतस्तदनन्तरं अनिलवेगशिरी ।
शूरध्वजो रतनगात्रशिरी दशमस्त्रियध्वप्रतिभासप्रभः ॥ ४९ ॥
प्रणिधानसागरप्रभासशिरी वज्राशयो गिरिशिरी द्वितियः ।
तृतीयो जिनो हरिसुमेरुशिरी स्मृतिकेतुराजशिरि धर्ममतिः ॥ ५० ॥
प्रज्ञाप्रदीप प्रभकेतुशिरी तदनन्तर विपुलबुद्धि जिनः ।
जिनु धर्मधातुनयज्ञाननिधिर्मः समुद्रमतिज्ञानशिरिः ॥ ५१ ॥

---

१ B' राजशिरी प्रभराजशिरी. २ S गात्र for तत्र.

धर्मधरो रतनदानशिरि गुणचक्रवालशिरि मेघु जिनः ।
क्षान्तिप्रदीपशिरि तेजवर्तिवेगप्रभः शमथघोषु जिनः ॥ ५२ ॥
शान्तिध्वजो जगप्रदीपशिरि बुद्धो महाप्रणिधिवेगशिरि ।
अपराजितध्वजबलो भगवान् ज्ञानार्चिसागरशिरिश्च जिनः ॥ ५३ ॥
धर्मेश्वरो जिन असङ्गमतिर्जगमन्त्रसागरनिर्घोषमतिः । 5
सर्वस्वराङ्गरुतघोषशिरी वशवर्तियज्ञयशयष्टिमतिः ॥ ५४ ॥
दिशदेशआमुखजगो भगवान् सत्त्वाशयैः समशरीरशिरिः ।
बुद्धो परार्थसविहारशिरी प्रकृतीशरीरशिरि भद्रजिनः ॥ ५५ ॥
एते जिना प्रमुख तत्र अभूदुपपधि ये जिन प्रदीपकराः ।
कल्पैः सुमेरुपरमाणुसमैः ये पूजिता जिनसमुद्रनये ॥ ५६ ॥ 10
तैर्बुद्धक्षेत्रपरमाणुसमैः कल्पैरुपपधिषु ये केचि जिनाः ।
ते सर्वि पूजित मया सुगता एतं विमोक्षनयमोतरिया ॥ ५७ ॥
कल्पाननन्त अहु चीर्ण पुरा एतं विमोक्षनयु भावयती ।
त्वमपि श्रुणित्व प्रतिपद्य लघु प्रतिलप्स्यसे नयमिमं नचिरात् ॥ ५८ ॥

एतमहं कुलपुत्र सर्वलोकाभिमुखजगद्विनयनिदर्शनं बोधिसत्त्वविमोक्षं जानामि । 15 किं मया शक्यमनन्तमध्यबोधिसत्त्वचर्यासागरनानाधिमुक्तिसंवासानां बोधिसत्त्वानां नानाशयशरीराणां विविधेन्द्रियसागरपरिनिष्पन्नानां विचित्रबोधिसत्त्वप्रणिधानसुप्रतिविद्धानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इयमिहैव बोधिमण्डे प्रशान्तरुतसागरवती नाम रात्रिदेवता, या ममानन्तरं ज्योतिर्ध्वजमणिराजप्रतिमण्डितगर्भे पद्मासने निषण्णा दशरात्रिदेवतासंख्येयशत- 20 सहस्रपरिवारा । तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारकः समन्तसत्त्वत्राणोजःश्रियो रात्रिदेवतायाः पादौ शिरसाभिवन्द्य समन्तसत्त्वत्राणोजःश्रियं रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य समन्तसत्त्वत्राणोजःश्रियो रात्रिदेवताया अन्तिकात् प्रक्रान्तः ॥ ३५ ॥

# ३८ प्रशान्तरुतसागरवती ।

अथ खलु सुधनः श्रेष्ठिदारकः समन्तसत्त्वत्राणोजःश्रियो रात्रिदेवतायाः सर्वलोकाभिमुखजगद्विनयनिदर्शनं बोधिसत्त्वविमोक्षं भावयन् अवतरन् अधिमुच्यमानोऽवगाहयमानो विपुलीकुर्वाणः स्फरन् प्रसरन् वशीकुर्वन् अवभासयमानः समवसरन् येन प्रशान्तरुतसागरवती रात्रिदेवता तेनोपसंक्रम्य प्रशान्तरुतसागरवत्या रात्रिदेवतायाः पादौ शिरसाभिवन्द्य प्रशान्तरुतसागरवतीं रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य प्रशान्तरुतसागरवत्या रात्रिदेवतायाः पुरतः प्राञ्जलिः स्थित्वा एवमाह—अहमार्ये देवते अनुत्तरायां सम्यक्संबोधौ संप्रस्थितः । सोऽहं कल्याणमित्रसंनिश्रयेण बोधिसत्त्वचर्यायां शिक्षमाणो बोधिसत्त्वचर्यामवतरन् बोधिसत्त्वचर्यायां प्रतिपद्यमानो बोधिसत्त्वचर्यायां प्रतिष्ठितः सर्वज्ञतायां निर्यातुमिच्छामि । तद्वदस्व मे आर्ये देवते कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु प्रशान्तरुतसागरवती रात्रिदेवता सुधनं श्रेष्ठिदारकमेतदवोचत्—साधु साधु कुलपुत्र, यस्त्वं कल्याणमित्रसंनिश्रयेण बोधिसत्त्वचर्यासागरं परिमार्गसि । अहं कुलपुत्र विपुलप्रीतिवेगसमन्तचित्तक्षणव्यूहस्य बोधिसत्त्वविमोक्षस्य लाभिनी । सुधन आह—किंकर्मासि देवते, किंविषयासि, किंप्रयोगा किंव्यवचारा? क एतस्य विपुलप्रीतिवेगसमन्तचित्तक्षणव्यूहस्य बोधिसत्त्वविमोक्षस्य विषयः? सा अवोचत्—अहं कुलपुत्र चित्ताशयसागरपरिशुद्धिसमताप्रतिपन्ना सर्वलोकरजोमलविमलामेघव्यूहसंप्रतिपन्ना अवैवर्त्यप्रमुदापर्यारम्भचित्ता रत्नपर्वतगुणाकाराकम्प्यचित्ता अप्रतिष्ठितानालयचित्ता सर्वजगत्परित्राणाभिमुखचित्ता सर्वबुद्धसमुद्रदर्शनावितृप्तचित्ता सर्वबोधिसत्त्वबलाशयविशुद्धचित्ता महाज्ञानावभासव्यूहस्मृतिसागरसंनाहचित्ता सर्वसत्त्वशोककान्तारसमतिक्रमणाय प्रतिपन्ना, सर्वसत्त्वदुःखदौर्मनस्यविनिवर्तनायाभियुक्ता, सर्वसत्त्वानां नामरूपशब्दगन्धरसस्पर्शसमुदाचारविनिवर्तनाय प्रतिपन्ना, सर्वसत्त्वानां प्रियाप्रियविप्रयोगसंप्रयोगदुःखव्युपशमाय प्रतिपन्ना, सर्वसत्त्वानां विषयप्रत्ययसंमोहदुःखविनिवर्तनप्रयुक्ता, विनिपतितसर्वसत्त्वप्रतिशरणभूता सर्वसत्त्वसंसारसंत्रासदुःखविनिःसरणसंदर्शनाभियुक्ता, सर्वसत्त्वानां जातिजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासविनिवर्तनाय प्रतिपन्ना, सर्वसत्त्वानामनुत्तरतथागतसुखपरिनिष्पत्त्यै प्रतिपन्ना, सर्वग्रामनगरनिगमजनपदराष्ट्रराजधानीगतानां सत्त्वानां सुखोपस्थानेन तुष्टिं विन्दामि, तेषां च धार्मिकीं रक्षावरणगुप्तिं संविदधामि । अनुपूर्वेण च तान् सर्वज्ञतायां परिपाचयामि । यदुत महाभवनविमानगतानां सत्त्वानामनभिरतिं संजनयामि । तानि तानि च दौर्मनस्यानि व्यपनयामि । सर्वाभिनिवेशव्यवच्छेदाय सर्वधर्मस्वभावपरिज्ञायै च धर्मं देशयामि । मातापितृभ्रातृभगिनीज्ञातिसालोहितसमवधानगतानां सत्त्वानां चिरकालसंवासस्नेहानां बुद्धबोधिसत्त्वसमवधानप्रतिलम्भाय धर्मं देशयामि । भार्यापुत्रसमवधानगतानां

1 S om. 'भ्रातृ

सत्त्वानां सर्वसंसाररतितृष्णाप्रहाणाय सर्वसत्त्वसमचित्ततायै महाकरुणाप्रतिलाभाय धर्मं
देशयामि। अन्तरापणमध्यगतानां सत्त्वानामार्यसंघतथागतदर्शनसमवधानसमवसरणतायै
धर्मं देशयामि। भोगमदमत्तानां सत्त्वानां क्षान्तिपारमितापरिपूरणाय धर्मं देशयामि।
नृत्तगीतवाद्याभिरतानां सत्त्वानां धर्मारामरत्यै धर्मं देशयामि। विषयरतिगृद्धानां सत्त्वानां
तथागतविषयसमवसरणतायै धर्मं देशयामि। क्रोधाविष्टानां सत्त्वानां क्षान्तिपारमिता- 5
प्रतिष्ठापनतायै धर्मं देशयामि। कुसीदानां सत्त्वानां वीर्यपारमितापरिशुद्धये धर्मं देशयामि।
विभ्रान्तचित्तानां[1] सत्त्वानां तथागतध्यानपारमिताप्रतिलाभाय धर्मं देशयामि। दृष्टिकृतगहन-
प्रस्कन्नानां सत्त्वानामविद्यान्धकारपतितानां दृष्टिकृतगहनाविद्यान्धकारविनिवर्तनतायै धर्मं
देशयामि। दुष्प्रज्ञानां सत्त्वानां प्रज्ञापारमिताप्रतिलाभाय धर्मं देशयामि। त्रैधातुकाभि-
निविष्टानां सत्त्वानां संसारदुःखनिःसरणाय धर्मं देशयामि। हीनाधिमुक्तानां सत्त्वानां 10
तथागतबोधिप्रणिधानपरिपूर्यै धर्मं देशयामि। आत्महितप्रयुक्तानां सत्त्वानां सर्वसत्त्वहिता-
वहनप्रणिधानपरिपूर्यै धर्मं देशयामि। दुर्बलाध्याशयानां सत्त्वानां बोधिसत्त्वबलपारमिता-
विशुद्धये धर्मं देशयामि। अविद्यातमोन्धकारचेतसां सत्त्वानां बोधिसत्त्वज्ञानपारमिताविशुद्धये
धर्मं देशयामि। विरूपकायानां[2] सत्त्वानां तथागतरूपकायविशुद्धये धर्मं देशयामि।
विसंस्थितशरीराणां सत्त्वानामनुत्तरधर्मकायविशुद्धये धर्मं देशयामि। दुर्वर्णानां सत्त्वानां 15
सूक्ष्मतथागतसुवर्णवर्णच्छवितायै काचिलिन्दिकसुखसंस्पर्शशरीरताविशुद्धये धर्मं देशयामि।
दुःखितानां सत्त्वानामत्यन्ततथागतसुखप्रतिलाभाय धर्मं देशयामि। सुखितानां सत्त्वानां
सर्वज्ञतासुखप्रतिलाभाय धर्मं देशयामि। ग्लानानामातुराणां सत्त्वानां प्रतिभासोपमबोधि-
सत्त्वकायपरिनिष्पत्तये धर्मं देशयामि। विचित्ररतिप्रसक्तानां[3] सत्त्वानां बोधिसत्त्वचर्यारति-
प्रतिलाभाय धर्मं देशयामि। दरिद्राणां सत्त्वानां बोधिसत्त्वधर्मनिधानकोशप्रतिलाभाय धर्मं 20
देशयामि। उद्यानगतानां सत्त्वानां बुद्धधर्मपर्येष्ट्यभियोगाहेतुतायै धर्मं देशयामि। मार्गगतानां
सत्त्वानां[4] सर्वज्ञतामार्गप्रतिपत्तये धर्मं देशयामि। ग्रामगतानां सत्त्वानां सर्वत्रैधातुकनिः-
सरणतायै धर्मं देशयामि। जनपदप्रदेशगतानां सत्त्वानां श्रावकप्रत्येकबोधिमार्गसमतिक्रमाय
तथागतभूमिप्रतिष्ठापनतायै धर्मं देशयामि। नगरगतानां सत्त्वानां धर्मराजनगरावभासनतायै
धर्मं देशयामि। विदिग्गतानां सत्त्वानां त्र्यध्वसमताज्ञानप्रतिलाभाय धर्मं देशयामि। 25
दिग्गतानां सत्त्वानां सर्वधर्मज्ञानाभिज्ञतायै धर्मं देशयामि। एकान्तरागचरितानां सत्त्वाना-
मशुभमुखेन सर्वसंसाररतितृष्णाविनिवर्तनतायै धर्मं देशयामि। दोषचरितानां सत्त्वानां
महामैत्रीनयसागरावतरणतायै धर्मं देशयामि। मोहचरितानां सत्त्वानां सर्वधर्ममुखसमुद्रप्रवि-
चयज्ञानाभिज्ञतायै धर्मं देशयामि। समभागचरितानां सत्त्वानां सर्वयानप्रणिधाननयसागर-
वैशेषिकतायै धर्मं देशयामि। संसारविषयरत्याशयानां सत्त्वानां संसारविषयरतिविनिवर्तनतायै 30
धर्मं देशयामि। सर्वसंसारदुःखस्पृष्टानां सत्त्वानां सर्वसंसारदुःखानुपक्लिष्टतायै धर्मं देशयामि।

---

१ S विभ्रान्त°. २ S विरूपकानां. ३ S °प्रयुक्तानां. ४ B om. बुद्धधर्म...सत्त्वानां.

तथागतवैनयिकानां सत्त्वानामनुत्पादपदसंप्रकाशनतायै धर्मं देशयामि। स्कन्धनिकेताशयानां सत्त्वानामनालयधर्मगोचरविहारतायै धर्मं देशयामि। संलीनाशयानां सत्त्वानां मार्गव्यूहविशेषसंप्रकाशनतायै धर्मं देशयामि। अधिमानप्राप्तानां सत्त्वानां सर्वधर्मसमताक्षान्तिं संप्रकाशयामि। मायाशाठ्यविषयाशयानां सत्त्वानां बोधिसत्त्वाशयपरिशुद्धिं संप्रकाशयामि॥

एवमहं कुलपुत्र सर्वसत्त्वान् धर्मदानेन संगृह्य सर्वदुःखदुर्गतिपथेभ्यो विनिवर्तयमाना देवमनुष्यसंपत्तिसुखानि संदर्शयमाना त्रैधातुकादुच्चालयमाना सर्वज्ञतायां प्रतिष्ठापयमाना विविधैरुपायमुखैः परिपाचयमाना महाप्रीतिवेगसमुद्रावभासप्रतिलब्धा मोदामि, प्रमोदामि, आत्तमनस्का भवामि। अपि तु खलु पुनरहं कुलपुत्र सर्वदिग्विदिक्षु बोधिसत्त्वपर्षन्मण्डलसमुद्रानवलोकयमाना नानाप्रणिधानचरितानां बोधिसत्त्वानां नानाकायविशुद्धानां नानाप्रभामण्डलव्यूहानामनन्तवर्णरश्मिप्रभामण्डलं प्रमुञ्चमानानां नानासर्वज्ञतानयसागरप्रसृतज्ञानालोकानां नानासमाधिसमुद्रावतीर्णानां नानाविकुर्वितविषयाणां नानास्वराङ्गरुतसागरनिर्घोषाणां नानाभरणविभूषितशरीराणां नानातथागतनयावतीर्णानां नानाक्षेत्रसमुद्रप्रसरप्रसृतशरीराणां नानाबुद्धसागरावतीर्णानां नानाप्रतिसंविन्नयसागरावतीर्णानां नानातथागतविमोक्षज्ञानविषयावभासितानां नानाज्ञानसागरावभासप्रतिलब्धानां नानासमाधिसमुद्रनयविहारिणां नानाधर्मविमोक्षविनयविक्रीडितविषयाणां नानासर्वज्ञताद्वाराभिमुखानां नानाधर्मधातुगगनव्यूहानां नानाव्यूहमेघगगनस्फरणानां नानापर्षन्मण्डलसमुद्रव्यवलोकयितॄणां नानाप्रीतिवेगलोकधातुसंनिपतितानां नानाबुद्धक्षेत्रप्रसरानुसृतानां नानादिक्सागरसंनिपतितानां तथागतसंप्रेषितानां नानातथागतपादमूलोपस्थितानां नानाबोधिसत्त्वगणपरिवाराणां नानाव्यूहमेघप्रवर्षणानां नानातथागतनयावतीर्णानां नानातथागतधर्मसागरविचाराणां नानाज्ञानसमुद्रावतीर्णानां नानाव्यूहगर्भसिंहासननिषण्णानां नानाप्रीतिवेगसमुद्रान् संजनयामि। ते नानाप्रीतिवेगसमुद्रसंजातास्तथागतपर्षन्मण्डलसमुद्रानवतरन्ति पश्यन्ति विचारयन्ति। तेषां तथागतबलाप्रमाणतामनुविचिन्तयतां महाप्रीतिवेगसमुद्राः संभवन्ति॥

अपि तु खलु पुनरहं कुलपुत्र भगवतो वैरोचनस्य लक्षणप्रतिमण्डितामचिन्त्यां रूपकायपरिशुद्धिमवतरमाणा लभामि उदारप्रीतिप्रसादप्रामोद्यम्। प्रतिचित्तक्षणमनन्तमध्यवर्णसमुद्रसंदर्शनधर्मधातुविपुलं प्रभासमण्डलमवलोकयमाना चित्तक्षणे चित्तक्षणे महाप्रीतिवेगसमुद्रान् प्रतिलभे॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायादेकैकस्माद्रोमविवरादनन्तमध्यबुद्धक्षेत्रपरमाणुरजःसमान् महारश्मिसमुद्रान् निश्चरमाणान्, एकैकं च रश्मिमनन्तबुद्धक्षेत्रपरमाणुरजःसमरश्मिसमुद्रपरिवारां सर्वबुद्धधर्मधातुस्फरणां सर्वसत्त्वदुःखानि प्रशमयमानां दृष्ट्वा चित्तक्षणे चित्तक्षणे महाप्रीतिवेगसमुद्रान् प्रतिलभे॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य उत्तमाङ्गादंसकूटाभ्यां च प्रतिचित्तक्षणे सर्वबुद्धक्षेत्रपरमाणुरजःसमान् सर्वरत्नार्चिःपर्वतमेघान् निश्चरमाणान् सर्वधर्मधातुस्फरणान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभे॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायादेकैकस्माद्रोमविवरात् प्रतिचित्तक्षणं सर्वबुद्धक्षेत्रपरमाणुरजःसमवर्णान् नानागन्धरश्मिमेघान्निश्चरमाणान् सर्वबुद्धक्षेत्रस्फरणान् दृष्ट्वा उदारान् प्रीतिवेगसमुद्रान् प्रतिलभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माल्लक्षणात्सर्वबुद्धक्षेत्रपरमाणुरजःसमान् लक्षणमण्डितांस्तथागतविग्रहमेघान् निश्चरमाणान् 5 सर्वलोकधातुसमुद्रस्फरणान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायादेकैकस्मादनुव्यञ्जनात्प्रतिचित्तक्षणं सर्वबुद्धक्षेत्रपरमाणुरजःसमानशीलनुव्यञ्जनोज्ज्वलांस्तथागतनिर्मितकायमेघान् निश्चरमाणान् सर्वबुद्धक्षेत्रसमुद्रस्फरणान् सर्वतथागतधर्मचक्रनिर्घोषनिगर्जनान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभे ॥ 10

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् बुद्धविकुर्वितमेघान् सप्रथमचित्तोत्पादान् सपट्पारमितामार्गविशुद्धिव्यूहान् सबोधिसत्त्वभूम्याक्रमणविकुर्वितान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायात्प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् देवेन्द्रकायमेघान् निश्चरमाणान् सर्वलोकधातुस्फरणान् सदेवेन्द्रविकुर्वितान् देवेन्द्रकायसंदर्शनवैनयिकानां सत्त्वानामभिमुखं स्थित्वा धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभे ॥ 15

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायात् प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान्नागेन्द्रकायमेघान् सनागेन्द्रविकुर्वितान् नागेन्द्रकायसंदर्शनवैनयिकानां सत्त्वानामभिमुखं स्थित्वा धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभामि ॥ 20

पुनरपरं कुलपुत्र तस्य भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् यक्षेन्द्रकायमेघान् सयक्षेन्द्रविकुर्वितान् सर्वधर्मधातुस्फरणान् यक्षेन्द्रकायसंदर्शनवैनयिकानां सत्त्वानामभिमुखं स्थित्वा 25 धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभे ॥

पुनरपरं[1] कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् गन्धर्वेन्द्रकायमेघान् सगन्धर्वेन्द्रविकुर्वितान् सर्वधर्मधातुस्फरणान् गन्धर्वेन्द्रकायसंदर्शनवैनयिकानां सत्त्वानामभिमुखं स्थित्वा धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलभे ॥ 30　B

१ B om पुनरपरं...प्रतिलभे.

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानसुरेन्द्रकायमेघान्निश्चरमाणान् सासुरेन्द्रनिर्मितानसुरेन्द्रकायसंदर्शनवैनयिकानां सत्त्वानामभिमुखं स्थित्वा सर्वधर्मधातुगतानां सत्त्वानां धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलेभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् गरुडेन्द्रकायमेघान्निश्चरमाणान् सगरुडेन्द्रनिर्मितान् गरुडेन्द्रकायसंदर्शनवैनयिकानां सर्वधर्मधातुगतानां सत्त्वानामभिमुखं स्थित्वा धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलेभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमकूपादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् किंनरेन्द्रकायमेघान् निश्चरमाणान् सकिंनरेन्द्रनिर्मितान् किंनरेन्द्रकायसंदर्शनविनेयानां सत्त्वानां धर्मधातुगतानां सत्त्वानामभिमुखं स्थित्वा धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलेभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् महोरगेन्द्रकायमेघान् निश्चरमाणान् समहोरगेन्द्रनिर्मितान् महोरगेन्द्रकायसंदर्शनविनेयानां सर्वधर्मधातुगतानां सत्त्वानामभिमुखं स्थित्वा धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलेभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् मनुष्येन्द्रकायमेघान्निश्चरतः समनुष्येन्द्रनिर्मितान् मनुष्येन्द्रकायसंदर्शनविनेयानां सर्वधर्मधातुगतानां सत्त्वानामभिमुखं स्थित्वा धर्मं देशयमानान् दृष्ट्वा उदारान् महाप्रीतिवेगसमुद्रान् प्रतिलेभे ॥

पुनरपरं कुलपुत्र भगवतो वैरोचनस्य कायं व्यवलोकयमाना प्रतिचित्तक्षणमेकैकस्माद्रोमविवरादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् ब्रह्मेन्द्रकायमेघान्निश्चरतः सब्रह्मेन्द्रनिर्मितान् ब्रह्मेन्द्रकायसंदर्शनविनेयानां सर्वधर्मधातुगतानां सत्त्वानामभिमुखं स्थित्वा ब्रह्मस्वररुतनिर्घोषेण धर्मं देशयमानान् दृष्ट्वा उदारान् धर्मधातुविपुलाधिचक्षणे चित्तक्षणे सर्वज्ञतासंगतान् महाप्रीतिवेगसमुद्रान् प्रतिलेभे ॥

न च प्रतिलब्धपूर्वान् प्रतिलेभे । नाधिगतपूर्वानधिगच्छामि । नावतीर्णपूर्वानवतरामि । न स्पृष्टपूर्वान् स्पृशामि । न दृष्टपूर्वान् पश्यामि । न च श्रुतपूर्वान् शृणोमि । तत्कस्य हेतोः ? किंचापि धर्मधात्वेकलक्षणपरिज्ञेयाः सर्वधर्माः, एकलक्षणाप्रमाणपर्यन्तता पुनरनन्तमध्यनिर्देशाः सर्वधर्माः ॥

अपमस्य कुलपुत्र विपुलप्रीतिवेगमयस्त्रिलक्षणव्यूहस्य बोधिसत्त्वविमोक्षनयसमुद्रस्यावभास । आप नु अनन्तमध्य श्रवण विमोक्षो धर्मधातुनयसमुद्रावतारणतात् । अभय

एष विमोक्षः सर्वज्ञताचित्तोत्पादासंभिन्नत्वात् । अपर्यन्त एष विमोक्षो बोधिसत्त्वचक्षुर्विज्ञेयत्वात् । अतुल एष विमोक्षोऽसंभिन्नधर्मधातुनयतलस्फरणत्वात् । समन्तमुख एष विमोक्ष एकारम्बणसर्वविकुर्वितसमवसरणत्वात् । अमोघ एष विमोक्षः सर्वधर्मशरीराद्वयसमुदाचारत्वात् । अनुत्पन्न एष विमोक्षो मायोपमसमुदाचारत्वात् । प्रतिभासोपम एष विमोक्षो सर्वज्ञताप्रणिधानप्रतिभाससंभूतत्वात् । निर्मितोपम एष विमोक्षो बोधिसत्त्वचर्यासुनिर्मितत्वात् । महापृथिवीसदृश एष विमोक्षः सर्वजगत्प्रतिशरणत्वात् । अप्स्कन्धोपम एष विमोक्षः सर्वजगन्महाकरुणाभिष्यन्दनतया । तेजःस्कन्धोपम एष विमोक्षः सर्वसत्त्वतृष्णास्नेहपर्यादानतया । वायुस्कन्धोपम एष विमोक्षः सर्वसत्त्वसर्वज्ञताप्रतिष्ठापनतया । सागरोपम एष विमोक्षः सर्वजगद्गुणालंकारालयत्वात् । मेरुपर्वतराजोपम एष विमोक्षः सर्वधर्मज्ञानरत्नसमुद्राभ्युद्गतत्वात् । व्यूहनयवातमण्डलसदृश एष विमोक्षः सर्वधर्मविमोक्षविधिव्यूहनतया । गगनोपम एष विमोक्षस्त्र्यध्वप्राप्तसर्वतथागतविकुर्वितावकाशत्वात् । महामेघोपम एष विमोक्षः सर्वसत्त्वाभिमुखधर्ममेघाभिप्रवर्षणत्वात् । आदित्योपम एष विमोक्षः सर्वसत्त्वाज्ञानतमोन्धकारविधमनतया । चन्द्रोपम एष विमोक्षो महापुण्यज्ञानसमुद्रसुसमार्जितत्वात् । तथागतोपम एष विमोक्षः सर्वत्रानुगतत्वात् । स्वच्छायोपम एष विमोक्षः कर्मधर्मसुनिर्मितत्वात् । प्रतिश्रुत्कोपम एष विमोक्षो यथाधिमुक्तसर्वधर्मनिर्घोषनिगर्जनतया । प्रतिभासोपम एष विमोक्षो यथाशयसर्वसत्त्वविज्ञापनतया[1] । द्रुमराजोपम एष विमोक्षः सर्वबुद्धविकुर्वितसंकुसुमितत्वात् । वज्रोपम एष विमोक्षोऽभेद्यधर्मत्वात् । चिन्ताराजमणिरत्नोपम एष विमोक्षोऽनन्तमध्यविकुर्वितसमुद्राभिनिर्हरणतया । विमलगर्भमणिराजोपम एष विमोक्षः सर्वत्र्यध्वतथागतविकुर्वितविज्ञप्त्यनावरणतया । नन्दिध्वजमणिरत्नोपम एष विमोक्षः सर्वबुद्धधर्मचक्रसमतानिर्घोषत्वात् । एवमपरिमाणोपमोपन्यासानुगमनिर्देशो बतायं कुलपुत्र विपुलप्रीतिवेगसंभवचित्तक्षणव्यूहो बोधिसत्त्वविमोक्षः ॥

अथ खलु सुधनः श्रेष्ठिदारकः प्रशान्तरुतसागरवतीं रात्रिदेवतामेतदवोचत्—कथं प्रतिपद्यमानस्य देवते बोधिसत्त्वस्य अयमेवंरूपो विमोक्षः संपद्यते ? आह—दशेमे कुलपुत्र बोधिसत्त्वानां महासंभारा महावितानधर्मा महाविस्फारा महाद्युतयो महावभासा महाप्रभावभासा महाभागा महाविभागा महासंभवा महाविभवाः, येषु प्रतिपद्यमानानां बोधिसत्त्वानामयमेवंरूपो विमोक्षः संपद्यते । कतमे दश ? यदुत दानं बोधिसत्त्वस्य यथाशयसर्वसत्त्वसमुद्रसंतोषणप्रसृतं महावितानधर्मः । शीलं बोधिसत्त्वस्य सर्वतथागतगुणसमुद्रावतारप्रतिपत्तिप्रसृतं महावितानधर्मः । क्षान्तिर्बोधिसत्त्वस्य सर्वधर्मस्वभावनिध्यप्तिप्रसृतं महावितानधर्मः । वीर्यं बोधिसत्त्वस्य सर्वज्ञतासमारम्भाविवर्त्यप्रसृतं महावितानधर्मः । ध्यानं बोधिसत्त्वस्य सर्वसत्त्वक्लेशप्रतापप्रशमनप्रसृतं महावितानधर्मः । प्रज्ञा बोधिसत्त्वस्य सर्वधर्मसमुद्रप्रज्ञाप्रसृता महावितानधर्मः । उपायो बोधिसत्त्वस्य सर्वसत्त्वसमुद्रपरिपाकविनयप्रसृतो

B

---

१ B °विमाबे° for °विमोक्ष°. २ B om. महापुण्य...विज्ञापनतया.

महावितानधर्मः । प्रणिधानं बोधिसत्त्वस्य सर्वक्षेत्रसमुद्रप्रसृतमपरान्तकोटीगतकल्पसर्वक्षेत्र बोधिसत्त्वचर्यासंतरणतायै महावितानधर्मः । बलं बोधिसत्त्वस्य सर्वधर्मधातुनयसमुद्रप्रसृत सर्वक्षेत्रेषु प्रतिक्षणमभिसंबोधिदर्शनाप्रतिप्रश्रब्धये महावितानधर्मः । ज्ञानं बोधिसत्त्वस्य तथागतबलप्रसृतं त्र्यध्वसर्वधर्मानावरणज्ञानविज्ञप्तये महावितानधर्मः । इमे कुलपुत्र दश 5 बोधिसत्त्वानां महासंभारा महावितानधर्माः, येषु प्रतिष्ठितानां बोधिसत्त्वानामयमेवंरूपो विमोक्षः संपद्यते, विशुध्यति सम्भवति संवर्धते समुदेति प्रादुर्भवति सर्वतेव सारीभवति विपुलीभवति परिनिष्पद्यते संतिष्ठते ॥

सुधन आह---कियच्चिर संप्रस्थितासि देवते अनुत्तरायां सम्यक्संबोधौ? सा अवोचत्---अस्ति कुलपुत्र अस्य कुसुमतलगर्भव्यूहालंकारस्य लोकधातुसमुद्रस्य पूर्वेण 10 दशलोकधातुसमुद्रसहस्राण्यतिक्रम्य परेण सर्वरत्नविमलप्रभाव्यूहो नाम लोकधातुसमुद्रः । तस्य मध्ये सर्वतथागतप्रभाप्रणिधिनिर्घोषो नाम लोकधातुवंशः । तस्य मध्ये कनकविमलप्रभाव्यूहो नाम लोकधातुः सर्वरत्नमेघविचित्रः अधोऽलोकधातौ सर्वरत्नहारजालसागरप्रतिष्ठितः सर्वगन्धप्रभमणिराजव्यूहशरीरः कूटागारपरिणाहसंस्थानो विशुद्धोऽसंक्लिष्टः दिव्यविमानभवनमेघसंछादितः । तत्र समन्तावभासध्वजो नाम कल्पः । तस्मिन् लोकधातौ सर्वरत्नगर्भविचित्राभो 15 नाम बोधिमण्डोऽभूत् । तत्र भगवानविवर्त्यधर्मधातुनिर्घोषो नाम तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । अहं च तेन कालेन तेन समयेन तस्मिन् बोधिवृक्षे पुण्यप्रदीपसंपत्केतुप्रभा नाम बोधिमण्डदेवता अभूवम् । तया मे तस्य तथागतस्य अभिसंबोधिविकुर्वितं दृष्ट्वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । तस्य च मे तथागतस्य सहदर्शनेन तथागतगुणसमुद्रावभासो नाम समाधिः प्रतिलब्धः । तस्यानन्तरं तस्मिन्नेव लोकधातौ 20 समन्तसपूर्णश्रीगर्भाया राजधान्यां तत्रैव बोधिमण्डे धर्मद्रुमपर्वततेजो नाम तथागतोऽभिसंबुद्धः । अहं च ततश्च्युता तत्रैव बोधिमण्डे ज्ञानश्रीपुण्यप्रभा नाम रात्रिदेवता अभूवम् । तया मे तस्य भगवतो धर्मद्रुमपर्वततेजसस्तथागतस्य धर्मचक्रप्रवर्तनविकुर्वितं दृष्ट्वा सर्वजगत्सदर्शनसमन्तावभासविषयो नाम समाधिः प्रतिलब्धः । तस्यानन्तरं तत्रैव बोधिमण्डे सर्वधर्मसागरनिर्घोषराजो नाम तथागत आरागितः । तस्य मे सहदर्शनेन सर्वधर्म25 भूमिसंवर्धनस्थानो नाम समाधिः प्रतिलब्धः । तस्यानन्तरं तत्रैव बोधिमण्डे रत्नरश्मिप्रदीपध्वजराजो नाम तथागत आरागितः । तस्य मे सहदर्शनेन समन्तवृक्षप्रभमेघो नाम समाधिः प्रतिलब्धः । तस्यानन्तरं तत्रैव बोधिमण्डे गुणसुमेरुप्रभतेजो नाम तथागत आरागितः । तस्य मे सहदर्शनेन बुद्धसमुद्रावभासो नाम समाधिः प्रतिलब्धः । तस्यानन्तरं तत्रैव बोधिमण्डे धर्ममेघनिर्घोषराजो नाम तथागत आरागितः । तस्य मे 30 सहदर्शनेन धर्मसागरप्रदीपो नाम समाधिः प्रतिलब्धः । तस्यानन्तरं तत्रैव बोधिमण्डे ज्ञानोल्काभासराजो नाम तथागत आरागितो देवकन्याभूतया । तस्य मे सहदर्शनेन सर्वसत्त्वदुःखप्रशमनप्रतिभासप्रदीपो नाम समाधिः प्रतिलब्धः । तस्यानन्तरं तत्रैव बोधि

मण्डे धर्मविकुर्वितवेगध्वजश्रीर्नाम तथागत आरागितः। तस्य मे सहदर्शनेन त्र्यध्वतथागत-सप्रस्थानावभासगर्भो नाम समाधिः प्रतिलब्धः। तस्यानन्तरं तत्रैव बोधिमण्डे धर्मप्रदीप-विक्रमज्ञानसिंहो नाम तथागत आरागितः। तस्य मे सहदर्शनेन सर्वलोकाप्रतिहतज्ञानचक्र-प्रभतेजो नाम समाधिः प्रतिलब्धः। तस्यानन्तरं तत्रैव बोधिमण्डे ज्ञानबलपर्वततेजो नाम तथागत आरागितः। तस्य मे सहदर्शनेन त्र्यध्वसर्वसत्त्वचर्येन्द्रियप्रभासो नाम समाधिः 5 प्रतिलब्धः। इति हि कुलपुत्र तस्मिन् समये मया कनकविमलप्रभे लोकधातौ तस्मिन् समन्तावभासध्वजकल्पे दशबुद्धक्षेत्रपरमाणुरजःसमाः तथागता आरागिताः। केचिद्देवेन्द्र-भूतया केचिन्नागेन्द्रभूतया केचिद्यक्षेन्द्रभूतया केचिद्गन्धर्वेन्द्रभूतया केचिदसुरेन्द्रभूतया केचिद्गरुडेन्द्रभूतया केचित्किन्नरेन्द्रभूतया केचिन्महोरगेन्द्रभूतया केचिन्मनुष्येन्द्रभूतया केचिद्ब्रह्मेन्द्रभूतया केचिद्देवभूतया केचिन्मनुष्यभूतया केचित्स्त्रीभूतया केचित्पुरुषभूतया 10 केचिद्दारकभूतया केचिद्दारिकाभूतया आरागिताः। सर्वे च मे तथागताः पूजिता यथा-सम्प्राप्तैः पूजापरिष्कारैः। सर्वे च ते तथागता उपस्थिताः। सर्वेषां च मे तेषां तथागतानां धर्मदेशना श्रुता॥

सा अहं ततश्च्युत्वा तस्मिन्नेव लोकधातौ बुद्धक्षेत्रपरमाणुरजःसमान् कल्पान् बोधि-सत्त्वचर्यां चरित्वा ततश्च्युत्वा[1] इह कुसुमतलगर्भव्यूहालंकारे लोकधातुसमुद्रे अस्मिन् सहा- 15 लोकधातावुपपन्ना। तया मे भगवान् क्रकुच्छन्दस्तथागत आरागितः। तस्य च मे सहदर्शनेन सर्वान्धकारविरजप्रतिभासो नाम समाधिः प्रतिलब्धः। तस्यानन्तरं कनकमुनिस्तथागत आरागितः। तस्य च मे सहदर्शनेन सर्वक्षेत्रसागरावभासानुगतस्फरणो नाम समाधिः प्रतिलब्धः। तस्यानन्तरं काश्यपस्तथागतः आरागितः। तस्य च मे सहदर्शनेन सर्वसत्त्व-मन्त्रसमुद्रनिगर्जनस्वरनिर्घोषो नाम समाधिः प्रतिलब्धः। तस्यानन्तरमयं भगवान् 20 वैरोचनस्तथागत आरागितः। तद्बोधिमण्डे तथागताभिसंबोधिविकुर्वितमुखसमुद्रान् प्रतिचित्तक्षणे संदर्शयमानान् दृष्ट्वा मया एष विपुलप्रीतिवेगसंभवचित्तक्षणव्यूहो बोधि-सत्त्वविमोक्षः प्रतिलब्धः, यस्य सहप्रतिलम्भाद्दशबुद्धक्षेत्रानभिलाप्यानभिलाप्यपरमाणुरजः-समान् सर्वधर्मधातुनयसमुद्रानवतीर्णा। तेषु च सर्वधर्मधातुनयसमुद्रान्तर्गतेषु सर्वबुद्धक्षेत्रेषु यानि सर्वपरमाणुरजांसि, तेषु एकैकस्मिन् परमाणुरजसि दशानभिलाप्यबुद्धक्षेत्रपरमाणुरजः- 25 समानि बुद्धक्षेत्राण्यवतीर्य पश्यामि। तेषु च सर्वक्षेत्रेष्वेकैकस्मिन् बुद्धक्षेत्रे भगवन्तं वैरोचनं बोधिमण्डवरगतं प्रतिचित्तक्षणमभिसंबोधिविकुर्वितं संदर्शयमानानेकैकेन च अभिसंबोधिविकुर्वितेन सर्वधर्मधातुनयसागरान् स्फरन्तं पश्यामि। तेषां च सर्वतथागताना-मेकैकस्य च तथागतस्य पादमूलगतमात्मानं संजाने। ये च तेषु लोकधातुषु ते तथागता बोधिमण्डगता धर्मं देशयन्ति, तं सर्वं शृणोमि। ये च तेषां सर्वतथागतानां निर्माणसमुद्राः 30 सर्वरोमविवरेभ्यो निश्चर्य धर्ममेघसमुद्रान् निगर्जमानान् नानाविकुर्वितानि संदर्शयमानान्

1 B ततो च्युता.

सर्वधर्मधातुदिक्समुद्रान्तर्गतेषु क्षेत्रसमुद्रेषु सर्वलोकधातुवंशेषु सर्वलोकधातुप्रसरेषु सर्वसत्त्व-
प्रसरेषु नानागत्युपपन्नेषु सत्त्वाशयवशेन नानासंज्ञागतैर्धर्मचक्रं प्रवर्तयन्ति, तं सर्वं
संधारयामि, प्रतिपद्ये, निध्यापयामि । सर्वार्थपदव्यञ्जनोद्ग्रहवेगविक्रमया धारण्या उद्गृह्णामि
सर्वधर्ममण्डलविशुद्धिगर्भानुगमया प्रज्ञया परिशोधयामि । सर्वधर्मसागरप्रविचयाभिज्ञया गत्यनु-
5 गच्छामि । त्र्यध्वविपुलया बुद्ध्या स्फरामि । तथागतसमतानुगामिन्या प्रज्ञया सामीकरोमि ।
सर्वधर्मनयानभिनिर्हरामि । सर्वधर्ममेघेषु सूत्रान्तमेघानभिनिर्हरामि । सर्वसूत्रान्तमेघेषु धर्म-
समुद्रान् परिसंस्थापयामि । सर्वधर्मसमुद्रेषु धर्मपरिवर्तान् समवसरामि । सर्वधर्मपरिवर्तेषु
धर्ममेघान् संजाने । सर्वधर्ममेघेषु धर्मोर्मीन् संजनयामि । सर्वधर्मोर्मिषु धर्मप्रीतिवेगसागरान्
प्रतिलभे । सर्वधर्मप्रीतिवेगसागरेषु भूमिप्रतिलम्भवेगानभिनिर्हरामि । सर्वभूमिवेगेषु समाधि-
10 समुद्रवेगानभिनिर्हरामि । सर्वसमाधिसमुद्रमेघेषु बुद्धदर्शनसमुद्रान् प्रतिलभे । सर्वबुद्धदर्शन-
समुद्रेष्ववभाससमुद्रान् प्रतिलभे । सर्वावभाससमुद्रेषु त्र्यध्वज्ञानमण्डलभूमीः परिसंस्थापयामि
अनन्तमध्यदिक्सागरस्फरणयोगेन, अप्रमेयतथागतपूर्वान्तचर्यासमुद्रावतरणयोगेन, अप्रमेय-
तथागतपूर्वयोगसमुद्रज्ञानावभासयोगेन, अप्रमेयतथागतज्ञानालोकप्रतिलम्भयोगेन, अप्रमेय-
तथागतशीलमण्डलपरिशुद्ध्यवभासयोगेन, अप्रमेयतथागतक्षान्तिभूमिपरिशोधनयोगेन, अप्रमेय-
15 तथागतमहावीर्यवेगविवर्धननिक्रमज्ञानावभासप्रतिलम्भयोगेन, अप्रमेयतथागतध्यानमण्डल-
ध्यानागमसमुद्रपरिशुद्धिप्रयोगावभासप्रतिलम्भयोगेन, अप्रमेयतथागतप्रज्ञापारमितानयसागर-
परिशुद्धिविज्ञप्त्यवभासयोगेन, अप्रमेयतथागतोपायकौशल्यपारमितानयसमुद्रावतरणयोगेन,
अप्रमेयतथागतप्रणिधानपारमितानयसमुद्रावतरणयोगेन, अप्रमेयतथागतपुण्यज्ञानबलपारमिता-
समर्धनसमवसनज्ञानप्रतिलम्भयोगेन, अप्रमेयतथागतज्ञानपारमितानयसागरविचारप्रलम्भयोगेन,
20 अप्रमेयतथागतपूर्वबोधिसत्त्वभूम्याक्रमणज्ञानावभासप्रतिलम्भयोगेन, अप्रमेयतथागतभूम्या-
क्रमणसंधिविकुर्वितकल्पसागरसंवसनयोगेन, अप्रमेयतथागतपूर्वबोधिसत्त्वभूमिमण्डलाक्रमण-
योगेन, अप्रमेयतथागतबोधिसत्त्वभूमिसंवसनयोगेन, अप्रमेयतथागतबोधिसत्त्वभूमिपरिशोधन-
योगेन, अप्रमेयतथागतज्ञानसागरविचारणयोगेन, अप्रमेयतथागतज्ञानावभासप्रतिलाभयोगेन,
अप्रमेयतथागतबोधिसत्त्वभूताशेषपूर्वबुद्धदर्शनानुबन्धनिज्ञप्तियोगेन, अप्रमेयतथागतबोधिसत्त्व-
25 भूताशेषपूर्वबुद्धसमुद्रदर्शनकल्पसमुद्रसंवासयोगेन, अप्रमेयतथागतपूर्वबोधिसत्त्वभूताशेषक्षेत्र-
समुद्रस्फरणकायाभिनिर्हारज्ञानावभासप्रतिलाभयोगेन, अप्रमेयतथागतविपुलपूर्वबोधिसत्त्वचर्या-
नयशेषधर्मधातुस्फरणयोगेन, अप्रमेयतथागतपूर्वबोधिसत्त्वचर्यानानोपायसुखसर्वसत्त्वपरिपाचन-
विनयसंदर्शनयोगेन, अप्रमेयतथागतसर्वदिक्समुद्रानवशेषप्रभाप्रसरस्फरणयोगेन, अप्रमेयतथा-
गतसत्त्वाभिमुखविकुर्वितसंदर्शनयोगेन, अप्रमेयतथागतभूम्याक्रमणज्ञानावभासयोगेन, अप्रमेय-
30 तथागताभिसंबोधिविकुर्वणज्ञानावभासप्रतिलाभयोगेन, अप्रमेयतथागतधर्मचक्रप्रवर्तनसर्व-
धर्ममेघानवशेषसंप्रतीच्छनसंधारणयोगेन, अप्रमेयतथागतलक्षणसमुद्रविज्ञप्तिज्ञानावभासप्रति-
लाभयोगेन, अप्रमेयतथागतकायसमुद्रसमुदाचारविज्ञप्त्यवभासप्रतिलाभयोगेन, अप्रमेयतथागत-

विपुलविषयज्ञानावभासप्रतिलाभयोगेन । तेषां च तथागतानां प्रतिचित्तक्षणं प्रथमचित्तोत्पादमादाय यावत्सद्धर्मान्तर्धानं सर्वमवतरामि ॥

यत्पुनरेवं वदसि–कियच्चिरप्रतिलब्धस्त्वयायं विपुलप्रीतिवेगसंभवचित्तक्षणव्यूहो बोधिसत्त्वविमोक्ष इति । यन्मया विबुद्धक्षेत्रपरमाणुरजःसमानां बुद्धकल्पानां परेण कनकविमलप्रभायां लोकधातौ पुण्यप्रदीपसंपत्समन्तकेतुप्रभा बोधिवृक्षदेवता अभूत्, तया 5 अवैवर्त्यधर्मधातुनिर्घोषस्य तथागतस्य धर्मदेशनां श्रुत्वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य तान् विबुद्धक्षेत्रपरमाणुरजःसमान् कल्पान् बोधिसत्त्वचर्यां चरित्वा इह सहायां लोकधातावुपपद्य क्रकुच्छन्दप्रमुखाः शाक्यमुनिपर्यवसाना भद्रकल्पिकास्तथागता आरागिताः। अनागतांश्च सर्वानारागयिष्यामि । यथेह लोकधातौ, तथा सर्वलोकधातुष्वनागतान् बुद्धवंशानारागयिष्यामि, पूजयिष्यामि । अद्यापि हि कुलपुत्र सा कनकविमलप्रभा लोकधातु- 10 स्तिष्ठति अच्छिन्नबुद्धवंशः । तस्मात्तर्हि कुलपुत्र इह नये गहता बोधिसत्त्वविक्रमेण प्रयोक्तव्यम् ॥

अथ खलु प्रशान्तरुतसागरवती रात्रिदेवता तस्यां वेलायामेतमेव विपुलप्रीतिवेगसंभवचित्तक्षणव्यूहं बोधिसत्त्वविमोक्षं भूयस्या मात्रया प्रदर्शयमाना सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत– 15

शृणु सुधना वचनमेतु मम
　यथयं विमोक्ष प्रतिलब्धु शुभम् ।
श्रुत्वा च प्रीतिबलु संजनिया
　एतं विमोक्षनयमोतरहि ॥ १ ॥

बहु कल्पसागर पुरा चरिता 20
　चित्ताशयं स्वकु विशोधयति ।
अधिमुक्तिवेग विपुलां जनिया
　सर्वज्ञज्ञाननगराभिमुखम् ॥ २ ॥

श्रुत्वा त्रियध्वपरमा सुगता-
　नधिमुक्ति तेषु विपुलां जनिय । 25
सर्वैः सुखैः सपरिवार मया
　ते उपस्थिताः सबहुकल्पशतान् ॥ ३ ॥

दृष्ट्वा मया पुरिमकाः सुगताः
　संपूजिता जनहिताय चरन् ।
धर्मश्च मे निरुपमोऽद्यु श्रुतः 30
　प्रीतिबलं विपुलं संजनिया ॥ ४ ॥

माता पिता गुरुजनः सततं
 मय सत्कृता हितसुखेन तदा ।
उपस्थानु गौरवस्थिताय कृतं
 एतं विमोक्षनयमोतरमाणा ॥ ५ ॥

5 जीर्णातुरा धनविहीन नरा
 विकलेन्द्रिया दुखि अनाथ बहू ।
ते मे सुखे स्थपिय मैत्रमना
 सुधना सनाथ कृत जातिशतान् ॥ ६ ॥
राजाग्नितस्करजलप्रभया

10 सिंहद्विपा हि परशत्रुभयात् ।
विविधैर्भयैर्भवसमुद्गता
 मय त्रायिता विचरतीय पुरा ॥ ७ ॥
क्लेशप्रतापित सदा त्रिभवे
 [1] कर्मैः प्रगाम्नित तथा अशुभैः ।

15 संसारपर्वतप्रपातगता
 मय त्रायिता भवगतीषु प्रजा ॥ ८ ॥
ये दुःखदुर्गतिप्रपातभयाः
 तीव्रा निरन्तरखरा सुबहू ।
जातीजरामरणरोगभया

20 लोके मया शमित ते निखिला ॥ ९ ॥
संसारतीव्रदुखसंशमनं
 सत्वान सर्वसुखसंजननम् ।
अत्यन्तबुद्धसुखसंजननं
 [2] अपरान्तकल्प प्रणिधानु मम ॥ १० ॥

25 एतमहं कुलपुत्र विपुलप्रीतिवेगसंभवचित्तक्षणव्यूहं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यं सर्वधर्मधातुनयसागरप्रतीर्णानां बोधिसत्त्वानामाध्यात्मिकबाह्यनिरवशेषदुःखविप्रमुक्तानां सर्वकल्पसंज्ञागतज्ञानप्रतिलब्धानां सर्वलोकधातुसमुद्रसंभवविभवज्ञानकुशलानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, इयमिहैव बोधिमण्डे भगवतो वैरोचनस्य पर्षन्मण्डले सर्वनगररक्षा-
30 संभवतेजःश्रीर्नाम रात्रिदेवता । तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

---

1 S om. कर्मैः 2 S om. °विभव°

स्वप्नोपमं लोकमिमं विदित्वा
बुद्धांश्च सर्वान् प्रतिभाससत्पान् ।
धर्मान् प्रतिश्रुत्कसमानघोषा-
नसज्जमाना जगति प्रवर्तसे ॥ १८ ॥

त्र्यध्वस्थितस्यापि जनस्य देवि
प्रतिक्षणं दर्शयसि स्वकायम् ।
द्वयंप्रवृत्तिर्न च तेऽस्ति चित्ते
धर्मं वदस्येव च सर्वदिक्षु ॥ १९ ॥

रजस्यनन्ता हि महासमुद्रा
तथामिताः सत्त्वमहासमुद्राः ।
अनन्तमध्या सुगतार्णवाश्च
विमोक्षचर्यस्य हि गोचरस्ते ॥ २० ॥

अथ खलु सुधनः श्रेष्ठिदारकः प्रशान्तरुतसागरवती रात्रिदेवताभाभिर्गाथाभिरभिष्टुत्य अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य प्रशान्तरुतसागरवत्या रात्रिदेवताया अन्तिकात्प्रक्रान्तः ॥ ३६ ॥

## ३९ सर्वनगररक्षासंभवतेजःश्रीः ।

अथ खलु सुधन श्रेष्ठिदारकस्त विपुलप्रीतिवेगसभवचित्तक्षणव्यूह बोधिसत्त्व-
विमोक्ष भावयन् सभावयन् प्रशान्तरुतसागरवत्या रात्रिदेवताया अनवादानुशासनीमनुस्मरन्,
निगमयन्, एकैकपदव्यञ्जनानेकनयाप्रमाणाशय धर्मतानयज्ञानमनुस्मरन्, स्मृतावुप-
निबध्नन्, मत्या प्रविचिन्वन्, गत्या अनुगच्छन्, बुद्ध्या विपुलीकुर्वन्, कायेन स्पृष्ट्वा विहरन्, 5
अवतरन्, अनुप्रविशन्, अनुपूर्वेण येन सर्वनगररक्षासभवतेज श्री रात्रिदेवता तेनोप-
सक्रान्त । सोऽपश्यत् सर्वनगररक्षासभवतेज श्रिय रात्रिदेवता सर्वनगरभवनप्रभासमणि-
राजगर्भमहापद्मासने निषण्णामनभिलाप्यरात्रिदेवतापरिवारा सर्वदिक्सत्त्वजगदभिमुखेन
कायेन सर्वजगद्रूपसमेन कायेन सर्वसत्त्वाभिमुखेन कायेन सर्वजगदनुलिप्तेन कायेन
सर्वजगत्समशरीरेण कायेन सर्वजगदभ्युद्गतेन कायेन सर्वजगत्परिपाकविनयाकूलेन कायेन 10
समन्तदिग्विनिगर्जनेन कायेन सर्वजगदसक्रान्तेन कायेन सर्वावरणात्यन्तसमुद्घाटितेन कायेन
तथागतस्वभावेन कायेन सर्वजगद्विनयनिष्ठापर्यवसानेन कायेन ॥

दृष्ट्वा च तुष्ट उदग्र आत्तमना प्रमुदित प्रीतिसौमनस्यजात सर्वनगररक्षासभवतेज -
श्रियो रात्रिदेवताया पादौ शिरसाभिवन्द्य सर्वनगररक्षासभवतेज श्रिय रात्रिदेवतामनेक
शतसहस्रकृत्व प्रदक्षिणीकृत्य सर्वनगररक्षासभवतेज श्रियो रात्रिदेवताया पुरत प्राञ्जलि 15
स्थित्वा एवमाह—अह खलु देवते अनुत्तराया सम्यक्सबोधौ सप्रस्थित । तद्वदस्व मे देवते
कथ बोधिसत्त्वो बोधिसत्त्वचर्याया चरन्नुपकारीभूतो भवति सत्त्वानाम् । कथ च सत्त्वाननुत्त-
रेण सग्रहेण सगृह्णाति । कथ बोधिसत्त्वस्तथागतानुज्ञातो बोधिसत्त्वकर्मणि प्रयुक्तो भवति,
यथाप्रयुक्तस्य बोधिसत्त्वस्य आसन्नो भवति धर्मराज । एवमुक्ते सर्वनगररक्षासभवतेज श्री
रात्रिदेवता सुधन श्रेष्ठिदारकमेतदवोचत्—साधु साधु कुलपुत्र, यस्त्व सर्वजगत्परिपाक- 20
विनयनिष्ठागमनतायै सर्वतथागतवशासधारणप्रयोगनिष्ठागमनतायै सर्वदिक्प्रसरस्फरणज्ञान-
प्रयोगतायै सर्वधर्मधातुनयसागरावतरणाभिमुखतायै आकाशसमतलानन्तज्ञानज्ञेयस्फरणतायै
सर्वतथागतधर्मचक्रप्रतीच्छनसधारणतायै यथाशयसर्वजगत्समुद्रधर्ममेघाभिप्रवर्षणचर्यानय
परिपृच्छसि । अह कुलपुत्र मनोज्ञरुतगम्भीरविघुर्षितप्रवेशस्य बोधिसत्त्वविमोक्षस्य लाभिनी ।
सा खलु पुनरह कुलपुत्र अनेन विमोक्षेण समन्वागता असङ्गमहाधर्मभाणकपट्टबद्धाप्या- 25
लम्बनप्रयोगा सर्वतथागतधर्मकोशविश्राणनप्रणिधाना महाकरुणामैत्रीबलप्रतिलब्धा सर्व-
सत्त्वबोधिचित्तप्रतिष्ठापनतायै सर्वसत्त्वार्थक्रियासप्रस्थिता अप्रतिप्रस्रब्धबोधिचित्तकुशलमूल-
सभारोपचयाय सर्वजगत्सारथिभूमिसप्रस्थिता सर्वसत्त्वाना सर्वज्ञतामार्गप्रतिष्ठापनतायै,
सर्वलोके धर्ममेघधर्मसूर्यसभवप्रयोगा अप्रमेयकुशलमूलप्रभवसर्वलोकावभासनतायै, सर्वजग-
त्समचित्तप्रसृताप्रतिप्रश्रब्धा सर्वजगत्कुशलमूलाभिसस्कारसमार्जनप्रयोगविज्ञानतायै, विशुद्ध- 30
चित्तप्रयोगा सर्वकुशलकर्मपथप्रदक्षिणकर्मान्ततया सर्वसत्त्वसार्थवाहतायै सप्रस्थिता सर्वा-

---

5 B on सर्वाणि विमुच्यर°

कुशलकर्मपथप्रहीणा सर्वसत्त्वकुशलधर्मप्रतिष्ठापनकर्मप्रयोगा सर्वसत्त्वक्षेमगतिसंप्रदर्शनप्रयोगा सर्वसत्त्वयानव्यूहपूर्वंगमसंप्रस्थिता सर्वकुशलधर्मचक्राचरणसर्वसत्त्वप्रतिष्ठापनप्रयोगा सर्वकल्याणमित्राभेद्योपचरणाभिराधनसंप्रस्थिता सर्वसत्त्वतथागतशासनप्रतिष्ठापनप्रयोगा धर्मदानपूर्वंगमसर्वशुक्लधर्मसमारम्भप्रयोगा सर्वज्ञताचित्तोत्पादाभिजातदृढाभेद्याशया वज्रनारायणगर्भदृढबुद्धबलारम्बणविपुलचित्तमण्डला कल्याणमित्रमुपनिश्रित्य विहरामि । सर्वक्लेशकर्मावरणपर्वतविकिरणचित्ता सर्वज्ञतासंभारसमारम्भा सर्वशुक्लधर्मसमर्जनप्रयोगा अनन्तमध्यसर्वज्ञताभिमुखारम्बणचेतनाप्रयोगप्रयुक्ता ॥

सा खलु पुनरहं कुलपुत्र एवंरूपं सर्वसत्त्वविज्ञापनं धर्मालोकमुखं परिशोधयमाना कुशलमूलोपचयसंभारप्रत्युपस्थिता दशभिराकारैर्धर्मधातुं व्यवलोकयामि अनुगच्छामि प्रसरामि । कतमैर्दशभिः ? यदुत अप्रमेयं धर्मधातुमनुगच्छामि विपुलज्ञानालोकप्रतिलाभेन । अनन्तमध्यधर्मधातुमनुगच्छामि सर्वतथागतविकुर्वितविज्ञप्तये । अपर्यन्तधर्मधातुमनुगच्छामि सर्वबुद्धक्षेत्राक्रमणतथागतपूजोपस्थानपरिपूरये । असीमाप्राप्तं धर्मधातुमवतरामि सर्वलोकधातुसमुद्रेषु बोधिसत्त्वचर्यासंदर्शनतायै । अव्यवच्छिन्नं धर्मधातुमवतरामि असंभिन्नतथागतज्ञानमण्डलावतरणतायै । एकोतीभावगतं धर्मधातुमवतरामि यथाशयसर्वसत्त्वविज्ञपनतथागतस्वरमण्डलावतरणतायै । स्वभावविमलं धर्मधातुमवतरामि सर्वजगद्विनयनिष्ठागतपूर्वप्रणिधाननिष्ठावतरणतायै । सर्वजगत्समतानुगतं धर्मधातुमवतरामि समन्तभद्रबोधिसत्त्वचर्याप्रसरप्रवेशाय । एकालंकारं सर्वधर्मधातुमवतरामि समन्तभद्रबोधिसत्त्वचर्याविकुर्विताऽलंकारावतरणतायै । अविनाशनं धर्मधातुमवतरामि सर्वकुशलधर्मधातुस्फरणविशुद्ध्यविनाशधर्मतायै । एभिरहं कुलपुत्र दशभिराकारैः सर्वधर्मधातुं व्यवलोकयामि अनुगच्छामि प्रसरामि सर्वकुशलमूलसंभारोपचयाय बुद्धमाहात्म्यावतरणतायै अचिन्त्यबुद्धविषयानुगमाय ॥

पुनरपरं कुलपुत्र अहमेवं तथागतमाहात्म्यानुगतैर्मनसिकारैर्दशभिर्धारणीमण्डलपरिवर्तसहस्रैः सत्त्वानां धर्मं देशयामि । कतमैर्दशभिः ? यदुत सर्वधर्मसमुद्रसमवसरणेन च नाम्ना धारणीमण्डलेन । सर्वधर्माधिष्ठानेन[2] च धारणीमण्डलेन । सर्वधर्ममेघसंप्रतीच्छनेन च धारणीमण्डलेन । सर्वतथागतस्मृतिप्रदीपेन च धारणीमण्डलेन । सर्वसत्त्वकर्मसमुद्रप्रदीपगर्भेण च धारणीमण्डलेन । सर्वयाननयसमुद्रविमलसमवसरणेन च धारणीमण्डलेन । सर्वतथागतनामचक्रावर्तनिर्घोषेण च धारणीमण्डलेन । त्र्यध्वबुद्धपूर्वनिर्याणप्रणिधानसागरनिर्देशसमवसरणेन च धारणीमण्डलेन । सर्वधर्माभिमुखावर्तवेगेन च धारणीमण्डलेन । सर्वज्ञताप्रवेशप्रभेण च नाम्ना धारणीमण्डलेन । एतानि च कुलपुत्र दश धारणीमण्डलानि प्रमुखं कृत्वा दशभिर्धारणीमण्डलपरिवर्तसहस्रैः सत्त्वानां धर्मं देशयामि ॥

पुनरपरं कुलपुत्र श्रुतमय्या प्रज्ञया सत्त्वानां धर्मं देशयामि, चिन्तामय्या भावनामय्या प्रज्ञया सत्त्वानां धर्मं देशयामि । एकमपि भवपरिवर्तमारभ्य सत्त्वानां धर्मं देशयामि ।

---

1 S om. 'धर्म'. 2 B अधिष्ठानं.

सर्वभवसमुद्रपरिवर्तानप्यारम्य सत्त्वानां धर्मं देशयामि। एकस्यापि तथागतस्य नामचक्रसमुद्रमारम्य धर्मं देशयामि। एकमपि लोकधातुसमुद्रमारम्य धर्मं देशयामि। सर्वलोकधातुसमुद्रानप्यारम्य धर्मं देशयामि। एकमपि बुद्धव्याकरणसमुद्रमारम्य धर्मं देशयामि। सर्वतथागतव्याकरणसमुद्रानप्यारम्य धर्मं देशयामि। एकमपि तथागतपर्षन्मण्डलसमुद्रमारम्य धर्मं देशयामि। सर्वतथागतपर्षन्मण्डलसमुद्रानप्यारम्य धर्मं देशयामि। एकमपि तथागतधर्मचक्रमारम्य धर्मं देशयामि। सर्वतथागतधर्मचक्रसमुद्रानप्यारम्य धर्मं देशयामि। एकमपि सूत्रान्तमारम्य धर्मं देशयामि। सर्वतथागतधर्मचक्रसमवसरणानपि सूत्रान्तानारम्य धर्मं देशयामि। एकमपि तथागतपर्षन्मण्डलसंनिपातमारम्य धर्मं देशयामि। सर्वतथागतपर्षन्मण्डलसमुद्रानप्यारम्य धर्मं देशयामि। एकमपि सर्वज्ञताचित्तमारम्य धर्मं देशयामि। सर्वबोधिचित्ताङ्गसमुद्रानप्यारम्य धर्मं देशयामि। एकमपि यानमारम्य धर्मं देशयामि। सर्वयाननिर्याणसमुद्रानप्यारम्य धर्मं देशयामि। एतत्प्रमुखैरहं कुलपुत्र अनभिलाप्यैर्देशनानयाभिनिर्हारैः सत्त्वानां धर्मं देशयामि। एवमहं कुलपुत्र धर्मधातुनयासंभिन्नांस्तथागतसमुद्रानवतरमाणा सर्वसत्त्वानां धर्मदेशनया अनुत्तरधर्मसंग्रहं कुर्वाणा समन्तभद्रबोधिसत्त्वचर्यापरान्तकोटीगतान् कल्पसमुद्रान् संवसमाना एतन्मनोज्ञरुतगम्भीरविकुर्वितप्रवेशं बोधिसत्त्वविमोक्षं भावयामि एकैकचित्तक्षणविवर्धनेन विमोक्षविषयभावनानयेन। एकैकेन च विमोक्षविषयभावनानयेन प्रतिचित्तक्षणं सर्वधर्मधातुं स्फरामि॥

सुधन आह—आश्चर्यं देवते यावद्गम्भीर एष बोधिसत्त्वविमोक्षः। कियच्चिरप्रतिलब्धः त्वयायमार्ये बोधिसत्त्वविमोक्षः? आह—भूतपूर्वं कुलपुत्र अतीतेऽध्वनि लोकधातुपरिवर्तपरमाणुरजःसमानां कल्पानां परेण धर्मार्चिनगरमेघा नाम लोकधातुरभूत् चातुर्द्वीपलोकधातुपरमाणुरजःसमगन्धमणिसुमेरुजालप्रतिष्ठिता सर्वतथागतपूर्वप्रणिधाननिर्घोषपद्मसंधिव्यूहा सर्वसत्त्वकर्मसमुद्रसंभूतमणिराजसागरशरीरा महापद्मसंस्थाना विशुद्धसंक्लिष्टा सुमेरुपरमाणुरजःसमपुष्पचक्रवालपरिवृता सुमेरुपरमाणुरजःसमगन्धमणिसुमेरुविम्युद्गतालंकारा सुमेरुपरमाणुरजःसममहाचातुर्द्वीपिकालंकारा। एकैकस्यां चातुर्द्वीपिकायामनभिलाप्यानभिलाप्यनगरकोटीनियुतशतसहस्राण्यभूवन्॥

तस्यां खलु कुलपुत्र लोकधातौ विमलप्रभो नाम कल्पोऽभूत् सुमेरुपरमाणुरजःसमतथागतप्रभवः। तस्यां च धर्मार्चिनगरमेघायां लोकधातौ मध्यमा विचित्रध्वजा नाम चातुर्द्वीपिकाभूत्। तस्या मध्ये समन्तरत्नकुसुमप्रभा नाम राजधान्यभूत्। तस्या राजधान्या नातिदूरे धर्मराजभवनप्रतिभासो नाम बोधिमण्डोऽभूत्। तत्र बोधिमण्डे सर्वधर्मसागरनिर्घोषप्रभराजो नाम तथागत उदपादि तेषां सुमेरुपरमाणुरजःसमानां तथागतानां प्रथमकल्पिकः। तेन च समयेन विमलचक्रभानुप्रभो नाम राजा अभूत् चक्रवर्ती। तेन तस्य भगवतः सर्वधर्मसागरनिर्घोषप्रभराजस्तथागतस्यान्तिकात् सर्वधर्मसागरो नाम सूत्रान्त उद्गृहीतः। उद्गृह्य च धर्मचक्रमनुप्रवर्तितम्। परिनिर्वृतस्य च प्रव्रजित्वा शासनं संधारि-

तम्। शासनान्तर्धानकाले च सहस्रधा भिन्ने शासने दशनयशतभिन्नायां धर्मदेशनायामनन्तरकल्पकषाये प्रत्युपस्थिते सर्वकर्मक्लेशावरणावृतानां सत्त्वानां कलहविग्रहविवादमापन्नानां भिक्षूणां च बुद्धशासनगुणानर्थिकानां विषयरतिपरायणानां राजचौरकथाभिरतानां स्त्रीजनपदसमुद्रकथाभिरतानां लोकायतमन्त्राभिरतानामुद्वेगसंजननार्थं धार्मिक उत्कासः कृतोऽभूत्-अहो बतेयमनेककल्पसमुदानीता महाधर्मोल्का अन्तर्धास्यतीति संवेगजननीया कथा कृता। स ऊर्ध्वं गगनतले सप्ततालमात्रमभ्युद्गम्य अनन्तवर्णानर्चिर्मेघान्निश्चार्य नानावर्णान् महारश्मिजालव्यूहान् कायादुत्सृज्य अनेकवर्णया प्रभया लोके क्लेशतापं शमयित्वा अनन्तमध्यान् सत्त्वान् बोधौ प्रतिष्ठापयामास। तच्च तथागतशासनं पुनर्ज्वालयित्वा षष्टिवर्षसहस्राण्यस्थात्॥

तेन च समयेन धर्मचक्रनिर्माणप्रभा नाम भिक्षुण्यभूत्, तस्यैव विमलचन्द्रभानुप्रभस्य चक्रवर्तिनो दुहिता भिक्षुणीशतसहस्रपरिवारा। सा तं संवेगशब्दं श्रुत्वा तच्च महाप्रातिहार्यं दृष्ट्वा सपरिवारा बोधाय चित्तमुत्पादयामास। तच्च भिक्षुणीशतसहस्रमनुत्तरायां सम्यक्संबोधावबैवर्तिकमभूत्। तथागतसंमुखीभावसमवसरणं च नाम समाधिं प्रत्यलभत। सर्वतथागतधर्मचक्रनिर्माणप्रभं च नाम धारणीं सर्वधर्मसागरनयप्रवेशां च नाम प्रज्ञापारमितां प्रत्यलभत। धर्मचक्रनिर्माणप्रभा च भिक्षुणी सर्वतथागतशासनसंभवावभासप्रदीपं च नाम समाधिम्, एतं च मनोज्ञरुतगम्भीरविकुर्वितप्रवेशं च बोधिसत्त्वविमोक्षं सूक्ष्ममृदुकं प्रत्यलभत, यत्प्रतिलाभादस्य सर्वधर्मसागरनिर्घोषप्रभराजस्य तथागतस्य तत्सर्वं विकुर्वितमामुखीभूतम्॥

तत्किं मन्यसे कुलपुत्र अन्यः स तेन कालेन तेन समयेन विमलचन्द्रभानुप्रभो नाम राजाभूच्चक्रवर्ती येन तत्सर्वधर्मसागरनिर्घोषप्रभराजस्तथागतस्य शासने प्रव्रजित्वा धर्मचक्रमनुप्रवर्तितम्, परिनिर्वृतस्य च शासनान्तर्धानकालसमये शासनं संधारितम्, महाधर्मोल्का च ज्वलिता? न खलु पुनस्ते कुलपुत्र एवं द्रष्टव्यम्। समन्तभद्रो बोधिसत्त्वः स तेन कालेन तेन समयेन विमलचन्द्रभानुप्रभो नाम राजा अभूच्चक्रवर्ती। तत्किं मन्यसे कुलपुत्र अन्या सा तेन कालेन तेन समयेन विमलचन्द्रभानुप्रभस्य राज्ञश्चक्रवर्तिनो धर्मचक्रनिर्माणप्रभा नाम दुहिता भिक्षुण्यभूद्भिक्षुणीशतसहस्रपरिवारा? न खल्वेवं द्रष्टव्यम्। अहं सा तेन कालेन तेन समयेन धर्मचक्रनिर्माणप्रभा नाम भिक्षुण्यभूवम्। मया तत्तस्य सर्वधर्मसागरनिर्घोषप्रभराजस्तथागतस्य शासनं संधारितम्। तच्च भिक्षुणीशतसहस्रं सर्वमवैवर्तिकं कृतमनुत्तरायां सम्यक्संबोधौ। तथागतसंमुखीभावसमवसरणे च समाधौ प्रतिष्ठापितम्। सर्वतथागतधर्मचक्रप्रभायां धारण्यां सर्वधर्मसागरनयप्रवेशायां च प्रज्ञापारमितायां प्रतिष्ठापितम्॥

तत्र च मया तथागतस्यानन्तरं विमलधर्मपर्वतज्ञानशिखराभो नाम तथागत आरागितः। तस्यानन्तरं मण्डलावभासप्रभचूडो नाम तथागत आरागितः। तस्यानन्तरं धर्मभास्करश्रीमेघो नाम तथागत आरागितः। तस्यानन्तरं धर्मसागरनिर्देशघोषो नाम तथागत

आरागितः। तस्यानन्तरं धर्मादित्यज्ञानमण्डलप्रदीपो नाम तथागत आरागितः। तस्यानन्तरं धर्मकुसुमकेतुध्वजमेघो नाम तथागत आरागितः। तस्यानन्तरं धर्मार्चिःपर्वतकेतुराजो नाम तथागत आरागितः। तस्यानन्तरं धर्मनयगम्भीरश्रीचन्द्रो नाम तथागत आरागितः। तस्यानन्तरं धर्मज्ञानसंभवसमन्तप्रतिभासगर्भो नाम तथागत आरागितः। तस्यानन्तरं ज्ञानाकरचूडो नाम तथागत आरागितः। तस्यानन्तरं शैलेन्द्रश्रीगर्भराजो नाम तथागत आरागितः। तस्यानन्तरं समन्तमुखज्ञानभद्रमेरुर्नाम तथागत आरागितः। तस्यानन्तरं सर्वधर्मवीर्यवेगध्वजो नाम तथागत आरागितः। तस्यानन्तरं धर्मरत्नकुसुमश्रीमेघो नाम तथागत आरागितः। तस्यानन्तरं शान्तिप्रभगम्भीरकूटो नाम तथागत आरागितः। तस्यानन्तरं रश्मिनेत्रप्रतिभासप्रभचन्द्रो नाम तथागत आरागितः। तस्यानन्तरं ज्ञानार्चिःश्रीसागरो नाम तथागत आरागितः। तस्यानन्तरं समन्तज्ञानभद्रमण्डलो नाम तथागत आरागितः। तस्यानन्तरं अधऊर्ध्वदिग्ज्ञानावभासो नाम तथागत आरागितः। तस्यानन्तरं रश्मिसंकुसुमितप्रदीपो नाम तथागत आरागितः। तस्यानन्तरं ज्ञानसिंहकेतुध्वजराजो नाम तथागत आरागितः। तस्यानन्तरं समन्तसूर्यावभासप्रभराजो नाम तथागत आरागितः। तस्यानन्तरं रत्नलक्षणविभूषितमेरुर्नाम तथागत आरागितः। तस्यानन्तरं सूर्यविक्रमसमन्तप्रतिभासो नाम तथागत आरागितः। तस्यानन्तरं धर्मजालविबुद्धश्रीचन्द्रो नाम तथागत आरागितः। तस्यानन्तरं धर्मपद्मप्रफुल्लितश्रीमेघो नाम तथागत आरागितः। तस्यानन्तरं लक्षणसूर्यचक्रसमन्तप्रभो नाम तथागत आरागितः। तस्यानन्तरं समन्तावभासधर्मश्रीघोषो नाम तथागत आरागितः। तस्यानन्तरं वैशारद्यवज्रनारायणसिंहो नाम तथागत आरागितः। तस्यानन्तरं समन्तज्ञानध्वजशूरो नाम तथागत आरागितः। तस्यानन्तरं धर्मपद्मफुल्लगात्रो नाम तथागत आरागितः। तस्यानन्तरं गुणकुसुमश्रीसागरो नाम तथागत आरागितः। तस्यानन्तरं धर्मधनशिखराभस्कन्धो नाम तथागत आरागितः। तस्यानन्तरं ज्ञानशिखरार्चिर्मेघो नाम तथागत आरागितः। तस्यानन्तरं समन्तधर्मद्वारवहनशिखराभो नाम तथागत आरागितः। तस्यानन्तरं बोधिमण्डविबुद्धश्रीचन्द्रो नाम तथागत आरागितः। तस्यानन्तरं धर्मोल्काज्वलनश्रीचन्द्रो नाम तथागत आरागितः। तस्यानन्तरं समन्तप्रतिभासचूडो नाम तथागत आरागितः। तस्यानन्तरं धर्ममेघध्वजप्रदीपो नाम तथागत आरागितः। तस्यानन्तरं वज्रसागरध्वजमेघो नाम तथागत आरागितः। तस्यानन्तरं यशःपर्वतश्रीमेघो नाम तथागत आरागितः। तस्यानन्तरं चन्दनश्रीचन्द्रो नाम तथागत आरागितः। तस्यानन्तरं समन्तश्रीकुसुमतेजाभो नाम तथागत आरागितः। तस्यानन्तरं सर्वसत्त्वावभासतेजो नाम तथागत आरागितः। तस्यानन्तरं गुणपद्मश्रीगर्भो नाम तथागत आरागितः। तस्यानन्तरं गन्धार्चिरवभासराजो नाम तथागत आरागितः। तस्यानन्तरं हेतुरश्मो नाम तथागत आरागितः। तस्यानन्तरं लक्षणपर्वतवैरोचनो नाम तथागत आरागितः। तस्यानन्तरं समन्तविशुद्धकीर्तिध्वजो नाम तथागत

आरागितः । तस्या[1]नन्तरं समन्तज्ञानप्रभामेरुर्नाम तथागत आरागितः[1] । तस्यानन्तरं धर्मनगरप्रभश्री-
र्नाम तथागत आरागितः । तस्यानन्तरं द्रुमपर्वततेजो नाम तथागत आरागितः । तस्यानन्तरं
समन्तश्रीवैरोचनकेतुर्नाम तथागत आरागितः । तस्यानन्तरं धर्मसागरनिर्नादनिर्घोषो नाम
तथागत आरागितः । तस्यानन्तरं सर्वधर्मभावनारम्भसंभवतेजो नाम तथागत आरागितः ।
5 तस्यानन्तरं समन्तज्ञानाभप्रवैरो नाम तथागत आरागितः । तस्यानन्तरं वरलक्षणश्रीर्नाम
तथागत आरागितः । तस्या[3]नन्तरं धर्मबलशूलध्वजो नाम तथागत आ[3]रागितः । तस्यानन्तरं
धर्मचक्रप्रभनिर्घोषो नाम तथागत आरागितः । तस्यानन्तरं रश्मिगुणमकुटज्ञानप्रज्ञाप्रभो
नाम तथागत आरागितः । तस्यानन्तरं धर्मचक्रचन्द्रोद्गतश्रीर्नाम तथागत आरागितः ।
तस्यानन्तरं धर्मपद्मवैरोचनविबुद्धकेतुर्नाम तथागत आरागितः । तस्यानन्तरं रत्न-
10 पद्माभमासगर्भो नाम तथागत आरागितः । तस्यानन्तरं रत्नश्रीशिखरमेघप्रदीपो नाम
तथागत आरागितः । तस्यानन्तरं समन्तसूचिसुविशुद्धज्ञानकुसुमो नाम तथागत आरागितः ।
तस्या[4]नन्तरं नानारश्मिश्रीमेरुगर्भो नाम तथागत आ[4]रागितः । तस्यानन्तरं रश्मिमण्डल-
शिखरराजो नाम तथागत आरागितः । तस्या[5]नन्तरं पुण्यमेघचूडो नाम तथागत आ[5]रागितः ।
तस्यानन्तरं धर्मशिखरध्वजमेघो नाम तथागत आरागितः । तस्यानन्तरं गुणपर्वततेजो नाम
15 तथागत आरागितः । तस्यानन्तरं धर्मसूर्यमेघप्रदीपो नाम तथागत आरागितः । तस्यानन्तरं
धर्ममेघविघुष्टकीर्तिराजो नाम तथागत आरागितः । तस्यानन्तरं धर्ममण्डलपटलमेघो नाम
तथागत आरागितः । तस्यानन्तरं विशुद्धज्ञानबोधिध्वजतेजो नाम तथागत आरागितः ।
तस्यानन्तरं धर्ममण्डलविबुद्धश्रीचन्द्रो नाम तथागत आरागितः । तस्यानन्तरं कनकमणि-
पर्वततेजोभद्रो नाम तथागत आरागितः । तस्यानन्तरं भद्रश्रीमेरुतेजो नाम तथागत
20 आरागितः । तस्यानन्तरं समन्तप्रज्ञप्तिनिर्घोषमेघो नाम तथागत आरागितः । तस्यानन्तरं
धर्मबलश्रीकूटो नाम तथागत आरागितः । तस्यानन्तरं गन्धार्चिमेघश्रीराजो नाम
तथागत आरागितः । तस्यानन्तरं कनकमणिपर्वतघोषो नाम तथागत आरागितः ।
तस्यानन्तरं उष्णीषकोशसर्वधर्मप्रभामण्डलमेघो नाम तथागत आरागितः । तस्यानन्तरं
धर्मचक्रज्वलनतेजो नाम तथागत आरागितः । तस्यानन्तरं शैलशिखराभ्युद्गततेजो नाम
25 तथागत आरागितः । तस्यानन्तरं समन्तवीर्योल्काप्रभासमेघो नाम तथागत आरागितः ।
तस्यानन्तरं समाधिमुद्राविपुलमकुटप्रज्ञाप्रभो नाम तथागत आरागितः । तस्यानन्तरं रत्नरुचिर-
श्रीराजो नाम तथागत आरागितः । तस्यानन्तरं धर्मोल्कारत्नवितानघोषो नाम तथागत
आरागितः । तस्यानन्तरं धर्मगगनकान्तारसिंहप्रभो नाम तथागत आरागितः । तस्यानन्तरं
लक्षणविभूषितध्वजचन्द्रो नाम तथागत आरागितः । तस्यानन्तरं रश्मिपर्वतविद्योतितमेघो
30 नाम तथागत आरागितः । तस्यानन्तरं अनावरणधर्मगगनप्रभो नाम तथागत आरागितः ।

---

१ S om. तस्या...गितः. २ B °प्रभो. ३ S om. तस्या...गितः. ४ S om. तस्या...गितः. ५ S om. तस्या...गितः.

तस्यानन्तरं लक्षणरुचिरसुपुष्पिताङ्गो नाम तथागत आरागितः । तस्यानन्तरं लोकेन्द्रप्रवरप्रभघोषो नाम तथागत आरागितः । तस्यानन्तरं सर्वधर्मसमाधिप्रभघोषो नाम तथागत आरागितः । तस्यानन्तरं द्वारस्वरप्रभूतकोशो नाम तथागत आरागितः । तस्यानन्तरं धर्मज्वलनार्चिः सागरघोषो नाम तथागत आरागितः । तस्यानन्तरं त्र्यध्वलक्षणप्रतिभासतेजो नाम तथागत आरागितः । तस्यानन्तरं धर्ममण्डलश्रीशिखराभप्रभो नाम तथागत आरागितः । 5 तस्यानन्तरं धर्मधातुसिंहप्रभो नाम तथागत आरागितः । तस्यानन्तरं सर्वसमाधिसागरावभाससिंहो नाम तथागत आरागितः । तस्यानन्तरं समन्तज्ञानप्रभासो नाम तथागत आरागितः । तस्यानन्तरं समन्तप्रज्ञाभधर्मनगरप्रदीपो नाम तथागत आरागितः ॥

इति हि कुलपुत्र एतद्बुद्धशतं प्रमुखं कृत्वा तस्मिन् विमलाभे कल्पे सुमेरुपरमाणुरजःसमास्तथागता उत्पन्ना अभूवन् । तेषां खलु पुनः कुलपुत्र सुमेरुपरमाणुरजःसमानां 10 तथागतानां सर्वपश्चिमो धर्मधातुनगराभज्ञानप्रदीपराजो नाम तथागतोऽभूत् । ते खलु मया कुलपुत्र सुमेरुपरमाणुरजःसमास्तथागताः सर्वधर्मसागरनिर्घोषप्रभराजपूर्वंगमा धर्मधातुनगराभज्ञानप्रदीपराजपश्चिमाः सर्वे पूजिताः । सर्वेषां च मे तथागतानामुपस्थानं कृतम् । सर्वेषां च धर्मदेशना श्रुता । सर्वेषां च तेषामहं तथागतानां शासने प्रव्रजिता । सर्वेषां च मे तेषां तथागतानां शासनं संधारितम् । सर्वेषां च मया तेषां तथागतानामन्तिकादेष मनोज्ञ- 15 रुतगम्भीरविकुर्वितप्रवेशो बोधिसत्त्वविमोक्षो विविधैः प्रतिलाभनयैः प्रतिलब्धः । सर्वेषां च मया तेषां तथागतानामन्तिकादनन्तमध्याः सत्त्वसागराः परिपाचिताः । ततोऽर्ध्वं बुद्धक्षेत्रपरमाणुरजःसमेषु यावन्तस्तथागता उत्पन्नाः, सर्वे ते मया तथागता धर्मप्रतिपत्त्या पूजिताः । सा खलु पुनरहं कुलपुत्र ततः उपादाय संसाररात्रिगतेषु सत्त्वेषु अज्ञाननिद्राप्रसुप्तेषु जागर्मि, चित्तनगरं चैषां परिपालयामि, त्रधातुकनगराच्चैनानुच्चाल्य सर्वज्ञताधर्मनगरे प्रतिष्ठापयामि ॥ 20

एतमहं कुलपुत्र मनोज्ञरुतगम्भीरविकुर्वितप्रवेशं बोधिसत्त्वविमोक्षं लौकिकमभिन्नप्रलापविनिवर्तनमद्वयभणितानिनियोजनं सत्यप्रतिष्ठापनपर्यवसानं जानामि । किं मया शक्यं बोधिसत्त्वानामविप्रतिपन्नद्वसर्वनामस्वभावज्ञानानां प्रविचितलक्षणं सर्वधर्माभिसंबोधिवशवर्तिनां सर्वसत्त्ववचनरुतघोषसागरावतीर्णानां सर्वमन्त्रसमुद्रसंस्कारकुशलानां सर्वधर्ममन्त्रनामसमुद्रनयविधिज्ञानां सर्वधर्मसमवसरणधारणीसमुद्रवशवर्तिनां सर्वसत्त्वयथाशयधर्ममेघा- 25 भिनिर्हारकुशलानां सर्वसत्त्वपरिपाकविनयचर्यापर्यवसानानां चर्यां ज्ञातुं गुणान् वा वक्तुं, सर्वसत्त्वसंग्रहप्रतिपत्तिर्वा ज्ञातुम्, अनुत्तरो बोधिसत्त्वकर्मसमारम्भप्रयोगो वा बोधिसत्त्वसूक्ष्मज्ञानानुगमो वा बोधिसत्त्वधर्मनिधानकोशविभक्तवृषभिता बोधिसत्त्वधर्मसांकथ्यसिंहासनाक्रमण

अथ खलु सर्वनगररक्षासंभवतेजःश्री रात्रिदेवता तस्यां वेलायामेतमेव मनोज्ञरुतगम्भीर-विकुर्वितप्रवेशं बोधिसत्त्वविमोक्षं भूयस्या मात्रया संदर्शयमाना सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत—

गम्भीर दुर्दृशु विमोक्ष जिनात्मजानां
5 आकाशलक्षणसमन्ततलप्रवेशाः ।
अध्यासितानवतरन्ति जिनानशेषान्
यैर्धर्मधातुप्रसरां च अनन्तमध्यान् ॥ १ ॥
संसारसंभवविमोक्षनयाननन्तान्
प्रतिलाभ धर्मत अचिन्तिय अप्रमेयान् ।
10 संवर्धनामपि समन्त असङ्गवेगम्
अवगाह्य मैत्रिषु त्रियध्वनयप्रवेशु ॥ २ ॥
इति बुद्धक्षेत्रपरिवर्तरजःसमानां
कल्पानमादिगतमास पुरा हि क्षेत्रम् ।
धर्मार्चिमेघनगरः शिरिलोकधातु
15 कल्पो बभूव विमलाभ महाप्रभश्च ॥ ३ ॥
तत्रैव कल्पि जिनवंशि अनूपच्छिन्ने
बुद्धाः सुमेरुपरमाणुसमा उपन्नाः ।
धर्मसमुद्रप्रभगर्जितराज बुद्धः
पूर्वंगमः प्रथमकल्पिक आसि तेषाम् ॥ ४ ॥
20 जितु धर्ममेघनगराभप्रदीपराज्ञो
यः सर्वपश्चिमु अभूत्सुगतान तेषाम् ।
ते सर्वि पूजित मया उपसंक्रमित्वा
धर्मश्च तेष मि श्रुतो जनयित्व प्रीतिम् ॥ ५ ॥
दृष्टो मया प्रथमु काञ्चनवर्णरश्मिः
25 धर्मः समुद्रप्रभगर्जितघोषराजः ।
द्वात्रिंशल्लक्षणविचित्रितु मेरुकल्पो
दृष्ट्वा च मे मतिरभूत्सुगतो भवेयम् ॥ ६ ॥
सहदर्शनेन मम तस्य तथागतस्य
प्रादुर्बभूव बलवज्जिनचित्तमाद्यम् ।
30 सर्वज्ञताप्रसरसंभवप्रत्ययेभिः
आकाशधातुविपुलं तथतास्वभावम् ॥ ७ ॥
येन त्रियध्वगत सर्वि स्फुटाः समन्तात्
बुद्धाश्च तत्सुतसमुद्रवृता अशेषाः ।

क्षेत्रार्णवा अपि समुद्र *** सर्वे
आसन् कृपामृतमहोदधि संभवेत ॥ ८ ॥
कायेन सर्वि स्फरणार्थमशेष क्षेत्रा
कायं यथाशयजगद्विनिदर्शनाय ।
क्षेत्राण्यशेषमवभासनकम्पनाय 5
पाकाय चैव जगतां जनितं मनो मे ॥ ९ ॥
द्वितीये यज्जिनस्य उपसंक्रमणेऽपि दृष्टाः
क्षेत्रार्णवेषु दशासु स्थित ये जिनेन्द्राः ।
क्षेत्राः समुद्रपरमाणुरजःसमेषु
क्षेत्रार्णवेषु जिन पश्चिमके मि दृष्टाः ॥ १० ॥ 10
सर्वान्तक्षेत्रपरिवर्तरजःसमेषु
कल्पेषु ये जिन उपन्न जगत्प्रदीपाः ।
ते सर्वि पूजित मया उपसंक्रमित्वा
एवं विमोक्षनयसागरु शोधयेयम् ॥ ११ ॥

अथ खलु सुधनः श्रेष्ठिदारको मनोज्ञरुतगम्भीरविकुर्वितप्रवेशं बोधिसत्त्वविमोक्षं 15 प्रतिलब्धः अनन्तमध्यसमाधिमुखसमुद्रावतीर्णो विपुलधारणीमुखसमुद्रसंभूतचेता बोधिसत्त्वमहाभिज्ञावभासप्रतिलब्धो महाप्रीतिसंविल्सागरावतीर्णो विपुलप्रीतिवेगसागरविवर्धितचेताः सर्वनगररक्षासंभवतेजःश्रियं रात्रिदेवतामाभिः सारूप्याभिर्गाथाभिरभ्यष्टावीत्—

प्रज्ञा हि ते विपुल धर्मसमुद्रचारी
चीर्णा च मे भवसमुद्र अनन्तमध्यान् । 20
दीर्घायु निर्ज्वर सुज्ञानशरीरगर्भे
त्वं देवि रोचसि इमां परिषामुपेत्य ॥ १२ ॥
बुध्यित्व धर्मप्रकृतिं गगनप्रकाशां
सर्वत्रियध्वनयमोतरसे असङ्गम् ।
आरम्बणानि तुलयस्यपि चाविकल्पा 25
चित्तक्षणेन अपि तानि अचिन्तियानि ॥ १३ ॥
निःसत्त्वधर्मत निरीक्षसि ज्ञानचक्षुः
सत्त्वोदधीन् करुणयावतरस्यनन्तान् ।
बुद्ध्या विमोक्ष सुगभीर विगाहमाना
सर्वान् विनेसि परिपाचयसेऽप्रमेयान् ॥ १४ ॥ 30 8
त्वं धर्ममण्डलविचारनये विधिज्ञा
धर्मस्वभावप्रतिवेधनये विबुद्धा ।

सर्वार्यमार्गममलं परिभावयन्ती
  निर्यास्यसे जगदशेष विशोधयन्ती ॥ १५ ॥
त्वं सत्त्वसारथिवरानभिमूख देवि
  सर्वज्ञज्ञानमचलं प्रतिग्राहमाना ।
त्वं धर्मधातुगत सर्वि स्फरित्व सत्त्वान्
  धर्मं प्रकाश्य भय सर्वि शमेसि लोके ॥ १६ ॥
वैरोचनप्रणिधिमार्गनयेन देवि
  यास्यस्यसङ्गविपुलामलबुद्धियुक्ता ।
सर्वत्र जिनबलं प्रतिपद्यमाना
  संपत्स्यसे जिनविकुर्वित सर्वक्षेत्रैः ॥ १७ ॥
चित्तं दुरासदु तथा गगनप्रकाशं
  सर्वे क्लिेशमलि निर्मलमादिशुद्धम् ।
यस्मिन् समोसरि त्रियध्वग सर्वक्षेत्रा
  बुद्धाश्च सात्मजगणाः सह सर्वसत्त्वैः ॥ १८ ॥
रात्रिंदिवं क्षणलवान्तुपक्षमासान्
  संवत्सरांश्च सविनाशवितर्ककल्पान् ।
कल्पार्णवानपि सनामसमुद्रसंख्यान्
  संशोदधीन् जगतां विदर्शयसि क्षणेन ॥ १९ ॥
दिशतासु यावत तु सत्त्वच्युतोपपादा
  ये रूपिणामपि च संज्ञिअसंज्ञिनां च ।
व्यवहारसत्यनय ओतरमाणा तेषां
  मार्गं विदर्श्य वरबोधिपथे प्रणेसि ॥ २० ॥
वैरोचनप्रणिधिजालकुलात् प्रसूता
  प्रभूतसर्वसुगतैकसमुच्छ्रयाच ।
त्वं धर्मकायपरिशुद्ध असङ्गचित्ता
  रूपं विदर्शयसि लोकि यथाशयानाम् ॥ २१ ॥

अथ खलु सुधनः श्रेष्ठिदारकः सर्वनगररक्षासंभवतेजःश्रियं रात्रिदेवतामाभिः सारूप्याभिर्गाथाभिरभिष्टुत्य सर्वनगररक्षासंभवतेजःश्रियो रात्रिदेवतायाः पादौ शिरसाभिवन्द्य सर्वनगररक्षासंभवतेजःश्रियं रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सर्वनगररक्षासंभवतेजःश्रियो रात्रिदेवताया अन्तिकात्प्रक्रान्तः ॥ ३७ ॥

---

## ४० सर्ववृक्षप्रफुल्लनसुखसंवासा।

अथ खलु सुधनः श्रेष्ठिदारको मनोज्ञरुतगम्भीरविकुर्वितप्रवेशं बोधिसत्त्वविमोक्षं भूयस्या मात्रया प्रभावयमानः संभावयमानो विपुलीकुर्वन् येन सर्ववृक्षप्रफुल्लनसुखसंवासा रात्रिदेवता तेनोपसंक्रान्तः। सोऽपश्यत् सर्ववृक्षप्रफुल्लनसुखसंवासां रात्रिदेवतां रत्नद्रुमाङ्कुरगर्भे सिंहासने सर्वगन्धरत्नद्रुमशाखे कूटागारे संनिषण्णां दशरात्रिदेवतासहस्रपरिवाराम्॥

अथ खलु सुधनः श्रेष्ठिदारकः सर्ववृक्षप्रफुल्लनसुखसंवासाया रात्रिदेवतायाः पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्ये देवते अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां चरितव्यम्, कथं शिक्षितव्यम्। तद्वदस्व मे देवते, कथं बोधिसत्त्वा बोधिसत्त्वचर्यायां चरन्ति, कथं शिक्षन्ते, कथं चरित्वा कथं शिक्षित्वा निर्यान्ति सर्वज्ञतायाम्॥

एवमुक्ते सर्ववृक्षप्रफुल्लनसुखसंवासा रात्रिदेवता सुधनं श्रेष्ठिदारकमेतदवोचत्—मम कुलपुत्र अनुभावेन सहे लोकधातौ आदित्यास्तंगमनकाले पद्मानि प्रफुल्लानि सुगन्धीभवन्ति। सर्वे नगरनारीगणाश्चोद्यानगता रतिक्रीडाप्रयुक्ता गृहगमनाय मतिमुत्पादयन्ति। पथोत्पथगताः सत्त्वा रात्रिस्थाने चेतनाबहुल्याः सर्वजगत्पालनाभिमुखा भवन्ति। दरीगहनगुहाश्रयाः सत्त्वा दरीगहनगुहासु प्रविशन्ति। वृक्षालयाश्रयाः सत्त्वा वृक्षालयाश्रयाभिमुखा भवन्ति। बिलाश्रयाः सत्त्वा बिलान्यनुप्रविशन्ति। ग्रामनगरनिगमजनपदाश्रयाः सत्त्वा ग्रामनगरनिगमजनपदाननुप्रविशन्ति। उदकाश्रयाः सत्त्वा जलमवतरन्ति। अन्यदिग्जनपदगताः सत्त्वाः स्वजनपददिक्चेतनामुत्पादयन्ति रात्रौ सुखस्पर्शविहाराय॥

अपि तु खलु पुनरहं कुलपुत्र नरनारीगणानां दहराणां तरुणानां यौवनमदमत्तानां नृत्यगीतवाद्यरतिप्रमत्तानां सत्त्वानां कामगुणप्रयुक्तानां जातिजरामरणमहान्धकारभयप्रतिपक्षाय कुशलमूलसंजानाभियोगं संवर्णयामि। मत्सरिणः सत्त्वान् दाने संनियोजयामि। दुःशीलान् सत्त्वान् शीले प्रतिष्ठापयामि। व्यापन्नचित्तानां सत्त्वानां मैत्रीं संवर्णयामि। क्षुभितचित्तान् सत्त्वान् क्षान्तौ प्रतिष्ठापयामि। कुसीदान् सत्त्वान् बोधिसत्त्ववीर्यारम्भे प्रतिष्ठापयामि। विभ्रान्तचित्तान सत्त्वान् ध्यानेषु प्रतिष्ठापयामि। दुःप्रज्ञान् सत्त्वान् प्रज्ञापारमितायां नियोजयामि। हीनयानाधिमुक्तान् सत्त्वान् महायाने प्रतिष्ठापयामि। त्रैधातुकाभिनिविष्टान् सत्त्वान् भवगतिनिघ्रामण्डलचारिणो बोधिसत्त्वप्रणिधानपारमितायां प्रतिष्ठापयामि। आवरणवशगतान् सत्त्वान् कर्मक्लेशप्रपीडितान् पुण्यज्ञानबलपरिहीणान् बोधिसत्त्वबलपारमितायां प्रतिष्ठापयामि। अज्ञानतमोवनद्धान् सत्त्वान् अहंकारममकारविधान्धकारप्राप्तान् बोधिसत्त्वज्ञानपारमितायां प्रतिष्ठापयामि॥

अपि तु खलु पुनरहं कुलपुत्र विपुलप्रीतिसंभवसंतुष्टयवभासस्य बोधिसत्त्वविमोक्षस्य लाभिनी। सुधन आह—क एतस्य देवते विपुलप्रीतिसंभवतुष्टयवभासस्य बोधिसत्त्वविमोक्षस्य

१ S विश्रान्त°. २ S om. °भवघर°.

विषयः ? आह—तथागतपुण्यसत्त्वसंग्रहज्ञानोपायावभास एष कुलपुत्र विमोक्षः । तत्कस्य हेतोः ? यत्किंचित् कुलपुत्र सत्त्वाः सुखमनुभवन्ति, सर्वं तत्तथागतपुण्यप्रभावेन तथागतानुशासनीपथेन तथागतवचनप्रतिपत्त्या तथागतानुशिक्षणेन तथागताधिष्ठानेन तथागतज्ञानमार्गप्रतिपत्त्या तथागतमार्गकुशलमूलावरोपणेन तथागतधर्मदेशनानिष्यन्देन तथागतज्ञानसूर्यावभासेन । तथागतगोत्रशुक्लकर्ममण्डलप्रभया हि कुलपुत्र सत्त्वानां सुखानि संभवन्ति । तत्कस्य हेतोः ? तथा हि कुलपुत्र अहमेतं विपुलप्रीतिसंभवसंतुष्टयवभासं बोधिसत्त्वविमोक्षमवतरन्ती भगवतो वैरोचनस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य पूर्वबोधिसत्त्वचर्यासमुद्रं समनुस्मरन्ती अवतरन्ती अवगाहयमाना एवं जानामि, एवमनुगच्छामि—यथा भगवतः पूर्वबोधिसत्त्वभूमिमभ्यारुह्यमानस्य सत्त्वानहंकारममकाराभिनिविष्टान् विद्यान्धकारप्राप्तान् दृष्टिगहनकान्तारप्रविष्टांस्तृष्णावशंगतान् रागबन्धनबद्धान् दोषप्रतिघचेतसो मोहाकुलसंतानानीर्ष्यामात्सर्यपर्यवनद्धान् क्लेशासमाकुलचित्तान् महासंसारदुःखं प्रत्यनुभवतः संसारदारिद्र्यदुःखप्रपीडितान् बुद्धदर्शनविमुखान् सत्त्वान् दृष्ट्वा महाकरुणाचित्तं प्रादुरभवत् । सर्वसत्त्वानामयं सर्वजगदुपकरणरत्नसंग्रहपरिग्रहचित्तं सर्वसत्त्वसंसारोपकरणसंभवचित्तं सर्ववस्त्वाग्रहविगतचित्तं सर्वविषयालुब्धचित्तं सर्वरतिष्वनध्यवसितचित्तं सर्वपरिभोगेष्वगृद्धचित्तं सर्वदानेषु विपाकाप्रतिकाङ्क्षणचित्तं सर्वलोकसंपत्तिष्वस्पृहणाचित्तं हेतुप्रत्ययसंमूढचित्तं सुपर्येषितयथावद्धर्मनिष्पत्तिचित्तं सर्वसत्त्वार्थप्रतिशरणताभिनिर्हरणचित्तं प्रादुरभवत् ॥

स एवं यथाभूतसर्वधर्मस्वभावावतीर्णचेताः सर्वसत्त्वधातौ महामैत्रीसमताप्रतिपन्नः सर्वजगन्महाकरुणामेघस्फरणप्रयोगः सर्वसत्त्वलोकसंछादनमहाधर्मच्छत्रमण्डलः सर्वसत्त्वक्लेशपर्वतविनिर्भेदनमहाज्ञानवज्रप्रहरणः सर्वजगत्सुखसंभवतुष्टिवेगसंवर्धितचेताः सर्वसत्त्वात्यन्तसुखाभिनिर्हारप्रणिधानचेता यथाशयाभिप्रायसर्वसत्त्ववस्त्वभिप्रवर्षणचेताः सर्वसत्त्वापरित्यागसमप्रयोगचेता आर्यधनसर्वसत्त्वसंतर्पणचेताः परमदशबलज्ञानरत्नप्रतिलम्भचेता बोधिसत्त्वमहाभिज्ञाबलाधानप्राप्तो विविधबोधिसत्त्वमहाविकुर्वितमेघेन धर्मधातुपरमाकाशधातुपर्यवसानं सर्वसत्त्वधातुं स्फरित्वा सर्वसत्त्वाभिमुखस्थितः सर्वाकारसर्वारम्बणमहामेघं प्रवर्तयन् सर्वरत्नाभरणमहामेघवर्षं चाभिप्रवर्षन्, यदुत सर्वसत्त्वानां यथानुकूलपरिभोगाय अनन्तवस्तुविमात्रतापरित्यागमप्रमेयोपकरणवैमात्रचारित्रं नानाविधसर्वदानसंग्रहप्रयोगमनेकविधवस्तुपरित्यागसमुदाचारमनभिलाप्योपकरणजातव्यूहाभिसंस्कारं नानालक्षणदानसंभारविचित्रं यथेप्सितसत्त्वसंतोषणमनन्तत्यागविधिमनुगच्छन् यथाशयसत्त्वसंतर्पणाभिनिर्हारं सर्ववस्तुत्यागविसर्जनमविच्छिन्नसर्वजगत्संस्कारदुःखपरित्राणप्रयोगं सर्वसत्त्वप्रतिकाराप्रतिकाङ्क्षी सर्वजगत्समतासमुद्गतचेताः सर्वजगच्चित्तरत्नं परिशोधयमानः सर्वबुद्धैकघनकुशलमूलसमुद्रसंभूतं सर्वजगद्यथाशयोपकरणवर्षसंग्रहप्रयोगं सर्वजगत्सर्वज्ञतापुण्यसमुद्रवेगं विवर्धयन् प्रतिचित्त-

१ S om. °ममका°. २ S om. यथा...प्यवत्,

क्षणमनवशेषसर्वसत्त्वपरिपाकविनयपरंपराविशुद्धयेऽभिनिर्हरति स्म । प्रतिचित्तक्षणमनवशेषसर्वक्षेत्रपरंपरानुपच्छिन्नानुत्तरबुद्धक्षेत्रालंकारविशुद्धव्यूहप्रतिमण्डलपरिपूरये प्रतिचित्तक्षणमनवशेषसर्वधर्मनयसागरकरणविशुद्धये प्रतिचित्तक्षणमनवशेषाकाशधातुतलस्फरणज्ञाननयपरिपूरये प्रतिचित्तक्षणमनवशेषसत्त्वाध्यवतरणज्ञाननयविशुद्धये प्रतिचित्तक्षणमनवशेषसर्वजगद्विनयज्ञाननयावभासप्रतिलम्भाय प्रतिचित्तक्षणमनवशेषसर्वकालधर्मचक्रप्रवर्तनाभिवर्धतायै प्रतिचित्तक्षणमनवशेषसर्वज्ञज्ञानाधिष्ठानकौशलसंदर्शनसर्वजगदुपकारीभूतत्वाय प्रतिचित्तक्षणमनवशेषसर्वलोकधातुसंख्याप्रचारेषु सर्वलोकधातुसमुद्राभ्युद्गतेषु सर्वलोकधातुसमुद्रसमवसरणेषु नानालोकधातुप्रसरनिर्देशेषु नानालोकधातुवंशव्यवस्थानसंधिव्यूहेषु नानाप्रतिष्ठानानेकशरीरनिर्देशेषु नानाव्यूहकल्पविमात्रतानिर्देशेषु संक्लिष्टविशुद्धसंक्लिष्टैकान्तपरिशुद्धविपुलमहद्गताप्रमाणसंक्षिप्तसूक्ष्मोदारसमतलव्यत्यस्तोर्ध्वमूर्धदिग्विदिग्मुखनानादिक्समुद्रसमवसरणेषु नानामुखनिर्देशान्तद्वारसंस्थानविमात्रताव्यूहेषु सर्वलोकधातुप्रसरेषु बोधिसत्त्वचर्यां चरन् बोधिसत्त्वन्याममवक्रम्य नानाबोधिसत्त्वचर्याविकुर्वितस्फरणतायै प्रतिचित्तक्षणमनवशेषसर्वत्र्यध्वबुद्धकायपरसत्त्वचित्ताशयविज्ञप्तये सर्वजगत्सर्वज्ञतापुण्यसमुद्रवेगं विवर्धयन्नभिनिर्हरति स्म ॥

एवं हि कुलपुत्र भगवान् वैरोचनस्तथागतः पूर्वबोधिसत्त्वचर्यां चरन् पुण्यज्ञानसंभारविरहिते लोकसंनिवेशे अकृतज्ञसत्त्वपरिपूर्णे अज्ञानतमोवनद्धे अहंकारममकाराभिनिविष्टे अविद्यान्धकारतिमिरावृते अयोनिशोवितर्कप्रसृते दृष्टिगहनकान्तारप्रस्कन्धे हेतुफलसंमूढे कर्मक्लेशवशगते महासंसारकान्तारदुःखपातालमध्यप्रपतिते विविधदारिद्र्यदुःखं प्रत्यनुभवति महाकरुणां संजनय्य विपुलान् पारमितचर्यामेघानभिनिर्हृत्य कुशलमूलदृढप्रतिष्ठानं संवर्णयन् सर्वसत्त्वानां संसारदारिद्र्यदुःखं विनिवर्तयन् महापुण्यज्ञानसंभारमभिरोचयन् हेतुमण्डलदिशमभिद्योतयन् कर्मधर्माविरोधदिशं प्रभावयन् बुद्धधर्ममण्डलसमुदागमदिशामवभासयन् सर्वसत्त्वाधिमुक्तिदिशं प्रभासयन् सर्वसत्त्वक्षेत्रसंभवदिशं संदर्शयन् सर्वतथागतवंशानुपच्छेददिशमनुबध्नन् सर्वबुद्धशासनदिशं संधारयन् सर्वाकुशलधर्मदिशं विनिवर्तयन् सर्वज्ञतासंभारदिशं संवर्णयन् सर्वसत्त्वधातुं स्फरित्वा महान्तं पारमितामेघमभिनिर्हृत्य यथाशयसत्त्वसंतोषणमत्यन्तधर्मसंग्रहे सत्त्वान् प्रतिष्ठापयामास । सर्वज्ञतासंभारे समादापयति स्म । महाबोधिसत्त्वपारमितास्ववतारयामास । सर्वार्थघनप्रतिलम्भैरुपस्तम्भयामास । सर्वज्ञताप्रीतिवेगैः कुशलमूलसमुद्रान् सत्त्वानां विवर्धयामास । सर्वतथागतविकुर्वितमुखेषु चैनानवतार्य अत्यन्तमुपधिशेषसुखसंग्रहेण संगृह्य तथागतमाहात्म्याभिमुखान् कृत्वा बोधिसत्त्वसंग्रहज्ञाने प्रतिष्ठापयामास ॥

सुधन आह–कियच्चिरं संप्रस्थितासि देवते अनुत्तरायां सम्यक्संबोधौ ? आह–दुरभिसंभवं कुलपुत्र एतत्स्थानं दुर्विज्ञेयं दुरधिमोचं दुरवतरं दुःप्रत्याहारं दुरधिगमम् । न शक्यं सदेवकेन लोकेनावतरितुं सर्वश्रावकप्रत्येकबुद्धैश्च, अन्यत्र तथागताधिष्ठानेन

कल्याणमित्रपरिग्रहेण विपुलपुण्यज्ञानसंभारोपस्तब्धचित्ततया आशयविशुद्धया अदीनाक्लिष्ट-चक्रानुपहतासंकुचितानन्धकारचित्ततया समन्तावभासज्ञानालोकावभासचित्ततया सर्वप्राणि-हितसुखाधानपरिणतचित्ततया सर्वमारमण्डलक्लेशदुर्धर्षचित्ततया सर्वज्ञताज्ञानप्रतिलम्भाव-काशचित्ततया सर्वसंसारसुखानभिलाषिभिस्तथागतसुखाभ्यालम्बनैः सर्वसत्त्वदुःखदौर्मनस्य-प्रशमनप्रतिपन्नैस्तथागतगुणसमुद्रावतारप्रतिपत्त्यभिमुखैः सर्वधर्मस्वभावनिध्यप्तिगगनगोचरैः उदाराधिमुक्तिपथविशुद्धैः संसारस्रोतोविमुखैः सर्वतथागतज्ञानसमुद्राभिमुखैः सर्वनगरगमन-निश्चितैः तथागतविषयाक्रमणवीर्यैः बुद्धभूमिगतिविक्रान्तैः सर्वज्ञताबलपरिनिष्पत्त्यभिमुखैः दशबलप्रतिलम्भपर्यवसानैः सत्त्वैः शक्यमेतत्स्थानमवतरितुमधिमोक्तुमुद्ग्रहीतुमनुसर्तुं विज्ञातुम् । तत्कस्य हेतोः ? तथागतज्ञानविषयं हि कुलपुत्र एतत्स्थानमनाक्रान्तं सर्वबोधिसत्त्वैः, प्रागेव अन्यैः सर्वसत्त्वैः । अथ च पुनस्तथागताधिष्ठानेन निर्देक्ष्यामि आजानेयानां सत्त्वानामाशय-सम्यग्विशुद्धये, कुशलमूलचरितानां सत्त्वानामध्याशयवशितायै, तव च अध्याशयपरि-पृच्छाव्याकरणधर्मताप्रवर्तनाप्रतिलम्भाय ॥

अथ खलु सर्ववृक्षप्रफुल्लनसुखसंवासा रात्रिदेवता तस्यां वेलायामेतमेवार्थं भूयस्या मात्रया संदर्शयमाना त्र्यध्वप्राप्ततथागतविषयं व्यवलोक्य इमा गाथा अभाषत—

गम्भीर बौद्धो विषयो अनन्त
यं पृच्छसि त्वं खलु बुद्धपुत्र ।
अचिन्तियक्षेत्ररजोपमानैः
कल्पैर्न शक्यं स हि सर्व वक्तुम् ॥ १ ॥

न लुब्धसत्त्वैर्न च दुष्टचित्तैः
शक्यं न मोहान्धतमोवृतैश्च ।
न म्रक्षमानोपहताशयैश्च
विजानितुं शान्त जिनान धर्मता ॥ २ ॥

नैर्ष्याण मात्सर्यवशानुगामिभिः
न शाठ्यमायाकलुषाशयेभिः ।
न क्लेशकर्मावरणावृतैश्च
शक्यो ह्ययं जानितु बुद्धगोचरः ॥ ३ ॥

न स्कन्धधात्वायतनप्रतिष्ठितैः
न चापि सत्कायसमाश्रितेभिः ।
न दृष्टिसंज्ञाविपरीतचित्तैः
शक्या इयं जानितु बुद्धभूमिः ॥ ४ ॥

दुर्ज्ञेय शान्तो विषयो जिनानां
स्वभावतो निर्मलनिर्विकल्पः ।

संसारसक्तैर्न भवाश्रितैश्च
　शक्यं समाज्ञातुमयं हि धर्मः ॥ ५ ॥
ये बुद्धगोत्रैर्हि कुलेऽभिजाता
　स्वधिष्ठिताः सर्वतथागतैश्च ।
ये धर्मराज्ञा कुलवंशधारिण-　　5
　स्तेषामृषीणां खलु गोचरोऽयम् ॥ ६ ॥
ये शुक्लधर्मार्णवतृप्तचित्ताः
　कल्याणमित्रैः सुपरिगृहीताः ।
मुनेर्बलारम्बणचित्तमेघाः
　क्षान्तिं लभन्ते त इदं निशाम्य ॥ ७ ॥　　10
ये निर्मलाध्याशयनिर्विकल्पा
　यथान्तरिक्षे खलु दिग्विदिक्षु ।
हतान्धकारा मतिदीपमेघाः
　तेषामयं गोचरु निर्मलानाम् ॥ ८ ॥
कृपाशयेनेह जगत्समुद्रान्　　15
　ये सर्वत्र्यध्वगतान् स्फरन्ति ।
अशेषसत्त्वानुगता च मैत्री
　नये जिनानां त इहावतीर्णाः ॥ ९ ॥
अनाग्रहा ये खलु हृष्टचित्ताः
　सर्वास्तिदानाभिरताः सदैव ।　　20
सर्वेषु सत्त्वेषु समप्रवृत्ता-
　स्तेषामियं भूमिरनाग्रहाणाम् ॥ १० ॥
येऽक्लिष्टचित्ता निरवद्यचर्या
　येऽत्यन्तकौकृत्यविनीतचित्ताः ।
बुद्धानुशास्तिप्रतिपत्तियुक्ता-　　25
　स्तेषामयं गोचरु निर्मलानाम् ॥ ११ ॥
येऽक्षोभ्यचित्ता ह्यविकम्प्यचित्ता
　धर्मस्वभावप्रतिबद्धचित्ताः ।
कर्मोदधिष्वप्यविरुद्धचित्ताः
　तेषां विमोक्षोऽयमिहाक्षयाणाम् ॥ १२ ॥　　30
येऽखिन्नचित्ताऽविनिवर्तचित्ता
　पौरुष्यवीर्याधिपतेययुक्ताः ।

सर्वज्ञसमारि अनन्तवीर्या-
स्तेषामय गोचरु सुमतानाम् ॥ १३ ॥
प्रशान्तचित्ताश्च समाहिताश्च
येऽत्यन्तशान्ति गत निर्ज्वराश्च ।
5 सर्वज्ञध्यानाङ्गसमुद्रचारिण
स्तेषां नयोऽय प्रशम गतानाम् ॥ १४ ॥

ये सर्वसङ्गे परिमुक्तचित्ता
धर्मस्वभावप्रतिविद्धचित्ता ।
गतिं गता ये जिनधर्मधातौ
10 प्रज्ञाप्रदीपान नयेष तेषाम् ॥ १५ ॥
सत्त्वस्वभावप्रतिविद्धचित्ता
भवार्णवे येऽप्रतिगृद्धचेतस ।
ये सत्त्वचित्तप्रतिभासचन्द्रा
स्तेषामय मार्गविदा विमोक्ष ॥ १६ ॥
15 व्यवस्थिताना जिनसागराणा
प्रणिधानगोत्रार्णवसंभवानाम् ।
ये सर्वक्षेत्रेष्वपरान्तचर्या
समन्तभद्रान नयेष तेषाम् ॥ १७ ॥
ये धर्मधातोर्नयसागरैश्च
20 जगत्समुद्रानवतीर्ण सर्वान् ।
सर्वान् संसरतीनिवर्तकल्पा
स्तेषां विमोक्षोऽयमकल्पकानाम् ॥ १८ ॥

ये सर्वदिक्क्षेत्ररज स्वसङ्ख्यान्
पश्यन्ति बुद्धान् द्रुमराजमूले ।
25 विबुद्ध्य बोधिं विनयन्त सर्वान्
असङ्गनेत्राण नयेष तेषाम् ॥ १९ ॥
त्वमागत कल्पमहासमुद्रान्
कल्याणमित्राण्युपसेवमान ।
S 371 धर्मार्थिको धर्मगवेष्यखिन्न
30 श्रुत्वा च त धारयितु समर्थ ॥ २० ॥

---
१ S सर्व सत्वेषु । २ B उपसेवमान

तदाशयस्य प्रविशोधनाय
मुनेरधिष्ठानबलादचिन्त्यात् ।
वैरोचनीयो विषयोऽप्रमेयः
प्रवर्तते मद्वचनाद्‌दसङ्गः ॥ २१ ॥

भूतपूर्वं कुलपुत्र अतीतेऽध्वनि लोकधातुसमुद्रपरमाणुरज.समानां कल्पानां परेण परतरं मणिकनकपर्वतशिखरवैरोचनो नाम लोकधातुसमुद्रोऽभूत् । तस्मिन् खलु पुनः कुलपुत्र मणिकनकपर्वतशिखरवैरोचनलोकधातुसमुद्रे ज्ञानपर्वतधर्मधातुदिक्प्रतपनतेजोराजो नाम तथागतोऽभूत् । तेन खलु पुनः कुलपुत्र ज्ञानपर्वतधर्मधातुदिक्प्रतपनतेजोराजोनाम्ना तथागतेन पूर्वं बोधिसत्त्वचर्यां चरता स मणिकनकपर्वतशिखरवैरोचनो लोकधातुसमुद्रः परिशोधितः । तस्मिन् लोकधातुसमुद्रे पृथिवीपर्वतपरमाणुरजःसमलोकधातुप्रसरनिर्देशाः । 10
एकैकस्मिंश्च लोकधातुप्रसरे लोकधातुवंशपरमाणुरजःसमा लोकधातुनिर्देशाः । एकैकस्मिंश्च लोकवंशे लोकधातुपरमाणुरजःसमाः कल्पसंख्यानिर्देशाः । एकैकस्मिंश्च कल्पेऽनेकेऽनन्तरकल्पनिर्देशाः । एकैकस्मिंश्चानन्तरकल्पेऽनेकलोकधातुनानाकरणनिर्देशाः । तथागतोत्पादविविधविकुर्वितनिर्देशाः । एकैकस्मिंश्च तथागतोत्पादे लोकधातुपरमाणुरजःसमाः सूत्रान्तसंप्रकाशननिर्देशाः । एकैकस्मिंश्च सूत्रान्ते लोकधातुपरमाणुरजःसमा बोधिसत्त्वव्याकरणनिर्देशाः 15
अनन्तमध्यसत्त्वविनयनिर्देशा नानायाननयैः प्रवर्तिता नानाविकुर्वितप्रातिहार्यविनयताः ॥

तस्मिन् खलु पुनर्मणिकनकपर्वतशिखरवैरोचने लोकधातुसमुद्रे समन्तदिगभिमुखद्वारध्वजव्यूहो नाम मध्यमो लोकधातुवंशोऽभूत् । तस्मिन् खलु पुनः कुलपुत्र समन्तदिगभिमुखद्वारध्वजव्यूहे मध्यमे लोकधातुवंशे सर्वरत्नवर्णसमन्तप्रभासश्रीर्नाम लोकधातुरभूत् । सर्वतथागतबोधिमण्डप्रतिभासमणिराजो लोकधातुसंधिव्यूहः सर्वरत्नकुसुमसागरप्रतिष्ठितः 20
सर्वतथागतनिर्माणनिर्भासनिदर्शनमणिराजशरीरो देवनगरसंस्थानो विशुद्धसंक्लिष्टः । तस्मिन् पुनर्लोकधातौ सुमेरुपरमाणुरजःसमाश्चातुर्द्वीपका लोकधातवोऽभूवन् । तेषां च सुमेरुपरमाणुरजःसमानां चातुर्द्वीपकानां सर्वरत्नशिखरध्वजो नाम मध्यमश्चातुर्द्वीपकोऽभूत् । तस्मिन् खलु पुनः सर्वरत्नशिखरध्वजे चातुर्द्वीपके लोकधातौ अप्रमेययोजनशतसहस्रायामविस्ताराश्चत्वारो द्वीपा अभूवन् । एकैकस्मिंश्च द्वीपके दश महानगरसहस्राण्यभूवन् । 25
तस्मिंश्च खलु पुनः चातुर्द्वीपके जम्बुद्वीपस्य मध्ये रत्नशालव्यूहमेघप्रदीपा नाम राजधान्यभूद्दशनगरसहस्रपरिवारा । तस्मिन् खलु पुनर्जम्बुद्वीपे दश वर्षसहस्राणि मनुष्याणामायुष्प्रमाणमभूत् । तस्यां खलु पुना रत्नशालव्यूहमेघप्रदीपायां राजधान्यां सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषो नाम राजाभूच्चक्रवर्ती । राज्ञः खलु पुनः सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य पद्मामालशतान्यभूवन् । षष्टिः स्त्रीसहस्राण्यन्तःपुरमभूत् । सप्त पुत्रशतान्यभूवन् सर्वेषां 30
शूराणां वीराणां वराङ्गरूपिणां सुदर्शनानां महातेजसां महाबलानाम् । तस्य खलु पुनः सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञः सर्वो जम्बुद्वीप एकच्छत्रोऽभूत्क्षिप्तनष्टचक्रसर्पिकः ॥

तेन च समयेन लोकधातावन्तरकल्पक्षये प्रत्युपस्थिते पञ्चसु कषायेषु लोके प्रादु-
र्भूतेषु दशसु कुशलेषु कर्मपथेष्वन्तर्हितेषु दशाकुशलकर्मपथवर्तिनः सत्त्वा यद्भूयसा दुर्गति-
गामिनोऽभूवन् । ते दशाकुशलकर्मपथसमादानहेतोः परीत्तायुषोऽभूवन् अल्पभोगा विरूपा
विवर्णा दुःसंस्थितशरीरा अल्पसुखसमुदाचारा दुःखवेदनासमुदाचारबहुला अन्योन्यविसं-
5 वादवचनशीला अन्योन्यभेदप्रतिपन्नाः परुषवचनसमुदाचाराः प्रकीर्णवचसो विषमलोभाभि-
भूताः प्रदुष्टमनःसंकल्पा विविधदृष्टिगहनकान्तारप्रविष्टाः । तेषामधर्मरागरक्तानां विषम-
लोभाभिभूतानां मिथ्याधर्मपरिगतानां न देवः काले वारिधारा उदसृजत्, येन पृथिव्यां बीज-
ग्रामाः सस्यग्रामा विरोहेयुः ॥

तेन खलु पुनः सत्त्वाः शुष्केषु तृणगुल्मौषधिवनोद्यानद्रुमेषु नानाव्याधिस्पृष्टा
10 दिग्विदिशो विधावन्ति स्म अपरायणाः । ते समागम्य सर्व एव येन रत्नसालव्यूहमेघप्रदीप-
राजधानी तेनोपसंक्रम्य तां समन्तादनुपरिवार्य केचिदूर्ध्वबाहवः, केचित्कृताञ्जलिपुटाः,
केचित् संकम्पितशरीराः, केचिदश्रुमुद्गताक्षाः, केचिदधोमुखं प्रपतिताः, केचित्सर्वशरीरेण
प्रणिपतिताः, केचिद्धरणितलजानुप्रतिष्ठिताः, केचिद्गगनतलाभिनतबाहवः, केचिन्नग्ना निर्व-
सनाः, केचिद्विकृतवदननयनाः सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञोऽभिमुखं महान्त-
15 मार्तस्वरमुत्क्रोशमकार्षुः--उपद्रुताः स्म । देवापसृष्टाः स्म । क्षुत्पिपासादुःखप्रपीडिताः स्म ।
त्रिविधभयोपद्रुताः स्म । त्राणविरहिताः स्म । देव अशरणा अपरायणाः स्म । दुःखपञ्जर-
गताः स्म जीवितोपरोधप्राप्ता मरणाभिमुखाः । इति नानाविधान् प्रलापान् प्रलपन्तो नाना-
स्वराङ्गैर्नानावचनैर्नानाविकृतवक्त्रनयना विविधराज्ञावचनव्याहारनिमग्नपदैर्नानार्थसूचक-
वचनपदैरुत्क्रोशमकार्षुः । ये च तस्यां राजधान्यां स्त्रीपुरुषदारकदारिकाः क्षुत्पिपासाप्रपीडिता
20 निराभरणगात्रा नग्ननिर्वसना दुष्टविवर्णा रूक्षपरुषगात्रा दुःखिता दुर्मनसोऽनात्तमनस्काः,
ते चापि सत्त्वा दुःखानभिलाषिणो दुःखभयनिर्विण्णाः । ते सर्वधर्मनिर्नादच्छत्रमण्डल-
निर्घोषं राजानं महाज्ञानपुरुषं प्रतिशरणभूतं शरणमुपागताः सर्वसुखप्रतिलम्भसंज्ञया सर्व-
प्रियसमवधानप्रतिलम्भसंज्ञया जीविताशापरिगतनिधानप्रतिलम्भसंज्ञया तीर्थसंदर्शनसंज्ञया
महापथप्रतिपत्तिसंज्ञया महायानपात्रसंज्ञया महाज्ञानरत्नद्वीपसंज्ञया महार्थप्रतिलम्भसंज्ञया
25 स्वर्गसर्वरतिसुखप्रतिलम्भसंज्ञया ॥

अश्रौषीद्राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषः तस्य महतः समन्तावाचनकसमूहस्य
तं महान्तमार्तस्वरमुत्क्रोशनशब्दम् । श्रुत्वा च अस्य दश महाकरुणामुखासंख्येयशतसहस्रा-
ण्यवक्रामन् । स महाकरुणानयचेतनानिध्यप्तिचित्तो मुहूर्तमेकाग्रतामनुभूय दश महाकरुणो-
पसंहितानि वचनपदान्युदीरयामास । कतमानि दश? अहो बत अनालम्बना: सत्त्वा
30 महासंसारप्रपातप्रपतिताः । कदा तद्भविष्यति यदहं संसारमहाप्रपातप्रपतितानां सत्त्वानां
लयनभूता भविष्यामः तथागतलयनभूमिप्रतिष्ठापनतया । अहो बत अत्राणाः सत्त्वा
नानाक्लेशोपद्रवोपद्रुताः । कदा तद्भविष्यति यदहं त्रिविधक्लेशभयोपद्रुतानां सत्त्वानामत्राणानां

त्राणभूता भविष्यामोऽनवद्यकर्मान्तप्रतिष्ठापनतया। अहो बत अशरणाः सत्त्वा लोके जरामरणभयाविष्टाः। कदा तद्भविष्यति यद्वयमशरणानां सत्त्वानां शरणभूता भविष्यामः सर्वसंसारभयविनिवर्तनतया। अहो बत अपरायणाः सत्त्वा त्रिविधलोकभयोपद्रुताः। कदा तद्भविष्यति यद्वयं त्रिविधलोकभयोपद्रुतानामपरायणानां सत्त्वानां परायणं भविष्यामोऽत्यन्तयोगक्षेमे सर्वज्ञतामार्गे प्रतिष्ठापनतया। अहो बत अविद्यान्धकारप्राप्तः सर्वलोको विमतिसंशयतिमिरावृतः। कदा तद्भविष्यति यद्वयमुल्काभूता भविष्यामः सर्वसत्त्वानामविद्यान्धकारविधमनतया। अहो बत आलोकविरहिताः सत्त्वाः। कदा तद्भविष्यति यद्वयं महाज्ञानालोककरा भविष्यामः सर्वसत्त्वानां वितिमिरज्ञानमुखसंदर्शनतया। अहो बत ज्ञानज्योतिर्विरहितः सर्वसत्त्वधातुरीर्ष्यामात्सर्यमायाशाठ्यकालुष्याशयः। कदा तद्भविष्यति यद्वयमनुत्तरज्ञानप्रद्योतकरा भविष्यामः सर्वसत्त्वानामत्यन्तपरिशुद्धिप्रतिष्ठापनतया। अहो बत नायकविरहितः सर्वलोको महासंसारसागरविषमस्रोतःप्रपन्नः। कदा तद्भविष्यति यद्वयं नायकभूता भविष्यामः सर्वसत्त्वानां कर्मसमुद्रनयावतरणतया। अहो बत विनायकविरहितः सर्वलोको दुर्विनीतः। कदा तद्भविष्यति यद्वयं विनायकभूता भविष्यामः सर्वसत्त्वानां सर्वाकारपरिपाकनियततथागताधिष्ठानकालानतिक्रमणेन। अहो बत अपरिणायकः सर्वलोको जात्यन्धभूतः। कदा तद्भविष्यति यद्वयं परिणायकभूता भविष्यामः सर्वसत्त्वानामनावरणसर्वज्ञज्ञाननयावतरणतया॥

स इमानि दश महाकरुणोपसंहितानि वचनपदान्युदीर्य तस्यां राजधान्यां घण्टावघोषणमकार्षीत्। महात्यागदुन्दुभिनिर्घोषं च अकारयत्—सर्वजगत् संतर्पयिष्यामः, यस्य येनार्थस्तस्मै तदनुप्रदास्याम इति। तेन सर्वजम्बुद्वीपे सर्वराजधानीषु सर्वग्रामनगरनिगमजनपदपत्तनेषु सर्वोपकरणकोशा विवृताः। सर्वशृङ्गाटकरथ्याचत्वरेषु विविधोपकरणनिधयः स्थापिताः। सर्वजगदुपजीव्याः सुप्रतिविहिताः। सर्वकोशकोष्ठागाराणि विवृतानि। महारत्ननिधाननिचया निदर्शिताः। अनेकनानाविधरत्नराशयः स्थापिताः। अन्नपानवस्त्रयानपुष्पमाल्यगन्धविलेपनचूर्णनानागन्धवर्णचीवररत्नकोशा विवृताः। शयनासनवसनभवनविमानगृहाण्यलंकृतानि सर्वधनकनकसमृद्धानि ज्योतिर्ध्वजमणिराजविन्यासविधूतान्धकाराणि। स तेषां सत्त्वानां यथाभिलषितसर्वाभिप्रायपरिपूरणार्थं तेषु गृहेषु प्रत्येकमात्मभावसदृशमुपादाय कायमभिनिर्माय स्थापयामास। सर्वसत्त्वसर्वव्याधिप्रशमनाय च वैद्यभैषज्योपस्थायकविविधजीवितोपकरणप्रत्ययसंपदमुपस्थापयामास। यथार्हविविधोपकरणपूर्णानि च नानारत्नविचित्रभाजनान्युपस्थापयामास—यदुत वज्रमणिभाजनानि नानागन्धमणिरत्नपरिपूर्णानि, नानागन्धवस्त्रभाजनानि विविधोदारविचित्रवर्णवस्त्रपरिपूर्णानि, यानेयुग्यानि सुयुक्तानि नानाकारसंस्थानानि विचित्ररत्नविमण्डितानि आजानेयाश्वगजगोयुक्तानि। विविधांश्च रथान् राजार्हान् सर्वरत्नाभरणपरिभोगांश्च सर्वालंकारविधींश्च नानारत्नविविधवर्णान् विविध-

1 S मनुष्याणि.

नितानवितान् रत्नकिङ्किणीजालावनद्धान् उच्छ्रितच्छत्रध्वजपताकोपशोभितान् सर्वजन-
पदप्रदेशेषु स्थापयामास । ग्रामनगरनिगमजनपदप्रदानानि चोद्घोषयामास । नानाविधोद्यान-
रम्यारामतपोवनपरिभोगानपि सर्वगृहकलत्रपुत्रदारकपरित्यागानपि अनर्घसर्वरत्नपरित्यागानपि
स्वहृदयमज्जाग्रगुणवृक्कमेदमांसरुधिरच्छविचर्मकरचरणबाहुकर्णनासानयनजिह्वादन्तोष्ठशीर्ष-
5 परित्यागानपि यावत्सर्वबाह्याध्यात्मिकसर्वाकारपरित्यागानप्युद्घोषयामास ॥

स तमेवंरूपमुपकरणपरित्यागविधिं प्रत्युपस्थाप्य महायज्ञवाटं कारयामास,[1] यत्तस्या
रत्नसालव्यूहमेघप्रदीपाया राजधान्याः पूर्वेण मणिशिखरतेजोनाम्नो नगरद्वारस्य पुरतः
समविपुलायामः परमविस्तीर्णधरणीतलप्रवेशो निम्नोन्नतविशुद्धसमतलोऽपगतश्वभ्रप्रपातः
सर्वस्थाणुकण्टकापगतः उत्सन्नशर्कराकठल्लः सर्वरत्नधातुसंचयः सर्वरत्नमयमणिरत्नराजसंस्तीर्ण-
10 तलः अनेकमणिरत्नव्यूहोपशोभितो नानारत्नकुसुमाभिकीर्णः सर्वचूर्णसुगन्धराजसमाकुलः
सर्वगन्धधूपपरिधूपितो रत्नार्चिःप्रदीपः तेजःश्रीसर्वगन्धधूपपटलमेघगगनसंछादितालंकारः
सर्वरत्नद्रुमपङ्क्तिसुविभक्तोपशोभितो नानाभवनविमानकूटागारसमलंकृतः उच्छ्रितच्छत्रध्वज-
पताको नानारत्नपट्टप्रलम्बविद्योतितो विविधरत्नकुसुमजालसंछन्नः सर्वगन्धराजरत्नजाल-
च्छत्रमण्डलः सुवर्णजालरत्नघण्टानिर्घोषो नानारत्नविराजितवितानविततः सर्वगन्धराजचूर्ण-
15 विकीर्णः सर्वरत्नकुसुमप्रकीर्णाभिरामः तूर्यकोटीनियुतशतसहस्रमनोज्ञरुतघोषनिर्नादितः सर्व-
रत्नविचित्रालंकारव्यूहसुपरिशुद्धो बोधिसत्त्वकर्मविपाकाभिनिर्वृत्तः । तस्य मध्ये महासिंहा-
सनमभिनिर्वृत्तं दशरत्ननिचितविचित्रभूमितलसंस्थानं दशरत्ननानावेदिकापरिवारविराजितं
दशमणिद्रुमशाखावेदिकान्तरसुविभक्तोपशोभितव्यूहम् अभेद्यवज्रचक्रधरणीतलसुप्रतिष्ठितपादं
सर्वरत्नबिम्बविग्रहसंधारितासनचक्रम्, अनेकरत्नमयनिर्यूहशतालंकृतं नानारत्नभक्तिविचित्र-
20 व्यूहप्रतिमण्डितं समन्तसुविभक्तरत्नध्वजसमुच्छ्रितं नानारत्नपताकाप्रलम्बितविचित्रव्यूहं रत्न-
किङ्किणीजालपरिस्फुतं नानादिव्यमणिविचित्रहेमजालविततं विविधरत्नकुसुमजालमहामणि-
राजजालविचित्रप्रवररत्नजालयथार्हसंछादितोपशोभितव्यूहम् अनेकगन्धमणिविग्रहपाणिमण्डल-
गन्धमेघप्रमुक्तमचिन्त्यवर्णगन्धमणिराजविसृतमनोज्ञनानासंस्थानसर्वगन्धपटलमेघप्रमुक्तं सर्व-
दिव्यगन्धधूपप्रधूपितोपचारं दिव्यातिरेकसुखसंस्पर्शानेकवर्णमणिरत्नवस्त्रप्रज्ञप्तमनेकदिव्यतूर्य-
25 संगीतिशतसहस्रं समन्तात् संप्रवादितमनोज्ञमधुरनिर्घोषं नानारत्नसोपानपङ्क्तिपताकासुविभक्त-
वेदिकाप्रतिमण्डितव्यूहमनेकमणिरत्नप्रत्यर्पितविविधविकुर्वितमणिबिम्बविग्रहविद्योतितप्रभासम्
यत्र स राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषः संनिषण्णोऽभूत् अभिरूपः प्रासादिको दर्श-
नीयः परमशुभवर्णपुष्कलतया समन्वागतो विशुद्धमहापुरुषलक्षणप्रतिलब्धो वैरोचनमणि-
रत्ननिर्भासकेशमकुटः अभेद्यनारायणवज्रसंहननकायो गूढदृढपार्श्वनिबद्धसंधिः सर्वाङ्गपरिपूर्णः
30 समन्तभद्रः समन्तप्रासादिकः समन्तशोभनः सर्वाकारवरोपेतो महाधर्मराजकुलोदितः सर्वपरि-
ष्कारवशिताप्रतिलब्धो धर्मवशितासुविशुद्धः सुविचित्रशासनो अप्रतिहतवचनमण्डलः अक्षोभ्य-

---

1 B om. महायज्ञवाटं कारयामास.

ज्ञानसमन्वितः सुप्रतिष्ठापितधर्मसम्यक्प्रयोगोऽनन्तगुणवर्णनिर्देशः । तस्य खलु पुनः सर्वधर्म-
निर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञो महासिंहासननिषण्णस्योपरि मूर्धसंधावन्तरिक्षे महाच्छत्र-
मण्डलं प्रादुर्बभूव विचित्रोद्विद्धमणिरत्नदण्डं महामहामणिकोशगर्भसर्वरत्नशलाकाशतसहस्र-
सम्पञ्चिततमनेकार्चिःश्रीतेजोज्ज्वलितव्यूहं जाम्बूनदकनकप्रभाभास्वरविशुद्धच्छदनं नानारत्न-
भक्तिचित्रहेमजालास्यन्तव्यूहच्छदनोपेतं विविधमुक्ताहाराभिप्रलम्बितं समन्तान्नानारत्नजाल- 5
संछादितं रत्नकिङ्किणीजालसुवर्णमणिघण्टारत्नसूत्रदामोपनिबद्धाभिप्रलम्बितं महामणिरत्नहार-
समन्ताभिप्रलम्बितव्यूहं दिव्यमधुरमनोज्ञप्रमुक्तशब्दोपचारं सर्वसत्त्वकुशलकर्मपथसंचोदन-
घण्टाविसृतनिर्घोषम् । स खलु राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषो रत्नबालव्यजनैः
संवीज्यमानः शक्रदेवेन्द्रातिरेकेण तेजसा ज्वाल्यमुपशोभते स्म । तस्य समनन्तरनिषण्णस्य
तस्मिन् सिंहासने सर्वो जनकायोऽभिमुखः प्राञ्जलिः स्थितोऽभूत्तमेव राजानं नमस्यन् ॥ 10

अथ खलु सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञोऽसंख्येयेषु प्राणिकोटीनियुत-
शतसहस्रेषु संनिपतितेषु नानायाचनकेषु नानावस्तुपरिग्राहकेषु नानोपकरणाधिमुक्तेषु
नानाजातिषु नानागतिपर्यापन्नेषु नानाभिलापचित्तेषु नानाशयाभिप्रायेषु नानादिक्संनि-
पतितेषु नानाविषयपरिभोगोपचारेषु नानापरिभोगाभिलाषितचेतनेषु नानाभिप्रायकल्पेषु
नानामनुष्यनिकायेषु नानाकुलोपपत्त्युपपन्नेषु नानाजनपदसमागतेषु नानानिरुक्तिवचनमन्त्र- 15
संस्कारेषु नानास्वरमण्डलप्रमोचकेषु नानावस्तुव्यञ्जनेषु नानावचनपदान्युदीरयत्सु, तमेकं
महापुण्यसुमेरुमुल्लोकयमानेषु अयमेवैको महाज्ञानपुरुष इति निश्चितचेतनेषु, महापुण्योप-
स्तब्धो महापुरुषचन्द्रो महात्यागाशयप्रतिलब्ध इत्युन्मुखेषु, बोधिसत्त्वप्रणिधिचेतना-
निपतितेषु बोधिसत्त्वप्रणिधिचेतनानिर्मितेषु तं महान्तं याचनकसंनिपातं दृष्ट्वा तेषां याचन-
कानामन्तिकेऽभूच्चित्तप्रेम चित्तप्रीतिः चित्तप्रसादः । कल्याणमित्रदर्शनसंज्ञा सुविपुला 20
महाकरुणवेगाः संबभूवुः । अपरान्तकल्पसर्वयाचनकसंतर्पणाविसर्जवीर्यवेगाः प्रादुरभवन् ।
सर्वजगत्समप्रयोगपरित्यागचित्तस्फुरणमेघाः समभवन् ॥

स खलु पुनः सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषो राजा तेषां याचनकानां सहदर्शनेन
आत्तमनस्कतरोऽभूत् न त्रिसाहस्रचक्रवर्तिराज्यप्रतिलम्भेन असीमाप्राप्तकल्पपर्यवसानेन, न
शक्रत्वाधिपत्यासनप्रतिलम्भेन बहुकल्पकोटीनियुतशतसहस्रपर्यवसानेन, न सुयामदेवराजा- 25
धिपत्यासनप्रतिलम्भेन बहुकल्पकोटीनियुतशतसहस्रपर्यवसानेन, न संतुषितदेवराजाधिपत्या-
सनप्रतिलम्भेन बहुकल्पकोटीनियुतशतसहस्रपर्यवसानेन, न सुनिर्मितदेवराजैश्वर्याधिपत्या-
सनप्रतिलम्भेन अप्रमेयकल्पावसानेन, न वशवर्तिदेवराजाधिपत्यासनप्रतिलम्भेन सुमुखाप्सर-
मनोहरदेवकन्योपस्थानेन अचिन्त्यकल्पपर्यवसानेन, न ब्रह्मासनेनानभिलाप्यकल्पब्रह्म-
विहारसुखावसानेन, न आभास्वरदेवसुखेन अनन्तकल्पावसानेन, न शुभकृत्स्नदेवसुखेन 30
अतुल्यकल्पापर्यन्तकल्पावसानेन, न शुद्धावासदेवशान्तविमोक्षसुखविहारेण अपर्यन्तकल्पावसानेन ।
तद्यथा कुलपुत्र पुरुषस्यैकान्ततृष्णाचरितस्य मातापितृभ्रातृभगिनीमित्रामात्यज्ञातिसालोहित-

पुत्रदुहितृभार्याचिरकालविप्रयुक्तस्य अटवीकान्तारविप्रनष्टस्य तद्दर्शनकामस्य तेषां समवधानेन महती प्रीतिरध्यवसानमुत्पद्यते तद्दर्शनावितृप्ततया, एवमेव कुलपुत्र राज्ञः सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य तेषां याचनकानां सहदर्शनेन महाप्रीतिवेगाः संजाताः[1] । चित्ततुष्टिसुखमवक्रान्तम् । महौध्चित्तोद्गतावेगः प्रादुर्भूतः । महाप्रामोद्यहर्षवेगः संभूतः । बुद्धबोधादुदारश्रद्धाधिमुक्तिवेगबलं संवर्धितम् । मूलजाता श्रद्धा सर्वज्ञतायां विवर्धिता । सर्वबुद्धधर्माध्याशयविशुद्धिबलमभिविवर्धितम् । बोधिसत्त्वेन्द्रियकर्मण्यता संभूता । चित्तहर्षपरिपूर्णमहाप्रसादवेग उदपद्यत । विपुलचित्तौद्बिल्यवेगेन कल्याणमित्रेन्द्रियाशयता मृदुभूता । तत्कस्य हेतोः ? तथा हि तस्य सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञः सर्वज्ञतारम्बणप्रयुक्तकस्य सर्वज्ञताधर्मताप्रतिशरणस्य सर्वज्ञतामार्गद्वाराभिमुखस्य सर्वजगत्संतर्पणमनसिकारप्रयुक्तस्य सर्वबुद्धगुणसमुद्रावतारप्रतिपत्त्यभिमुखस्य सर्वमारकर्मक्लेशावरणपर्वतविकिरणप्रयुक्तस्य सर्वतथागतानुशासनीप्रदक्षिणग्राहितावस्थितस्य सर्वकुशलमूलसमुद्रसमन्तमुखसमार्जनाभियोगगर्भस्य सर्वाभिनिवेशोज्ज्वलितसंतानस्य सर्वलोकविषयानभिनिविष्टस्य सर्वधर्मस्वभावगगनगोचरस्य तेषु सर्वयाचनकेष्वेकपुत्रकसंज्ञा उदपद्यत, मातापितृसंज्ञा दक्षिणीयसंज्ञा कल्याणमित्रसंज्ञा दुर्लभसंज्ञा दुष्करकारकसंज्ञा बहुकरसंज्ञा परमोपकारकसंज्ञा बोधिमार्गोपस्तम्भसंज्ञा आचार्यसंज्ञा शास्तृसंज्ञा उदपद्यत । स तान् सर्वयाचनकान् यथागतान् यथासंप्राप्तान् यथाकालसंनिपतितान् यथादिग्देशस्थितान् यथावस्तुयाचनकान् यथारुचीन् यथाभिप्रायान् यथाभिकाङ्क्षिणो यथाभिलाषिणो यथावस्तुपर्येषकान् संतर्पयामास अप्रतिहतेन महामैत्रीमण्डलेन याचनकजनापराङ्मुखतया महात्यागरश्मिना सर्वसत्त्वसमप्रयोगेन त्यागमुखेन । सोऽन्नमन्नार्थिकेभ्यः प्रादात् । पानं पानार्थिकेभ्यो वस्त्रं वस्त्रार्थिकेभ्यः पुष्पाणि पुष्पार्थिकेभ्यः प्रादात् । एवं गन्धधूपमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकारत्नाभरणासनशयनभवनविमानविहारारामोद्यानतपोवनानि हयगजरथपरिवाहनयुग्ययानान्यपि हिरण्यसुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवालजातरूपरजतान्यपि प्रादात् । स्वगृहविमानान्तःपुरपरिवारानपि, सर्वकोशानपि विसृज्य विभज्य अर्थिकेभ्यः प्रादात्—यस्य येनार्थः स तं गृह्णातु इति । जनपदानपि जनपदार्थिकेभ्यः प्रादात् । ग्रामानपि ग्रामार्थिभ्यो नगराण्यपि नगरार्थिभ्यः प्रादात् । स तान् सर्वयाचनकान् सर्वास्तिपरित्यागतया सर्वसत्त्वेषु समप्रतिपन्नः सर्ववस्तुपरित्यागैरभिच्छादयामास ॥

तेन खलु पुनः समयेन रत्नप्रभा नाम श्रेष्ठिदारिका पष्टिकन्यापरिवारा तस्मिन्नेव महायज्ञवाटे संनिपतिताभूत्, अभिरूपा प्रासादिका दर्शनीया परमशुभवर्णपुष्कलतया समन्वागता, सुवर्णवर्णच्छविरभिनीलकेश्यभिनीलनेत्रा मनोज्ञगन्धा प्रज्ञस्वरा सुवस्त्रा स्वलंकृता स्मृतिमतिगतिर्ह्रीअपत्राप्येर्याचर्यासंपन्ना, गुरुषु सगौरवा, परमसंप्रजन्यचारिणी गम्भीरचेष्टा मेधासंपन्ना धर्माणां ग्रहणधारणप्रतिबोधिषु पूर्वसुकृतकुशलमूला धर्माभिष्यन्दितप्रसन्नसंताना

1 B संक्रान्ता°.

विशुद्धकल्याणाशया उदाराधिमुक्तिगगनगोचरपरिहितपरिणतचित्ता बुद्धदर्शनदिगभिमुखा सर्वज्ञज्ञानाभिलापिणी। सा खलु रत्नप्रभा श्रेष्ठिदारिका सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञो महासिंहासनस्य प्रदक्षिणेन नातिदूरे स्थिताभूत् प्राञ्जलिस्तं राजानं नमस्यन्ती, न च किंचिद्व्रवीति। एकान्तस्थिता चैवं चित्तमुत्पादयामास-सुलब्धा मे लाभाः, यदहमेवंरूपस्य कल्याणमित्रस्य दर्शनसमवधानप्रतिलाभिनीति। सा तस्य सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य 5 राज्ञोऽन्तिके कल्याणमित्रसंज्ञामनुकम्पकसंज्ञामनुग्राहकसंज्ञां बुद्धसंज्ञामुत्पाद्य मायाशाठ्यापगतेन चित्तेन परमोदारप्रीतिप्रसादप्रामोद्यवेगप्रतिलब्धा स्वान्याभरणानि कायादवमुच्य येन राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषः, तेनाभिमुखमक्षैप्सीत्। तानि तस्य सिंहासनवेदिकामध्ये अधः पृथिवीमण्डले प्रतिष्ठितान्यभूवन्। सा तान्याभरणानि प्रविकीर्य एवं प्रणिधिमुत्पादयामास-यथैष राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषोऽनाथानां सत्त्वानामन्धकारप्राप्तानां 10 प्रतिशरणभूतः, तथाहमप्यनागतेऽध्वनि भवेयम्। यामेष धर्मतां जानाति, तामहमपि जानीयाम्। येन यानेनैष निर्यास्यति, तेनाहमपि निर्यायाम्। यस्मिन्नेव मार्गप्रतिपन्नः, तत्राहमपि प्रतिपद्येयम्। यथायमसेचनको रूपेणाक्षयभोगोऽनन्तपरिवारो दुर्धर्षोऽपराजितोऽनवमृद्यः, तथाहमपि भवेयम्। यत्र यत्र चास्योपपत्तिर्भवेत्, अहमपि तत्र तत्रोपपद्येयमिति॥

तामेवंचित्तमनसिकारप्रयुक्तामाज्ञाय राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषोऽव- 15 लोक्य एवमाह—गृहाण दारिके, येन तेऽर्थः। अहं खलु दारिके सर्वास्तिपरित्यागी सर्वसत्त्वसंतर्पणाय प्रतिपन्नः। सा खलु समन्वाहृता तेन राज्ञा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषेणेति भूयस्या मात्रया प्रसादं प्रत्यलभत। सा प्रसन्नचित्ता उदारविपुलकुशलमूलवेगसंजाता राजानं सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषं तस्यां वेलायामाभिर्गाथाभिरध्यभाषत—

पूर्वे इयं सालवियूहमेघा 20
　अनोपपन्ने त्वयि राजसिंह।
निराभिरम्या हततेज आसीद्
　प्रेतालयो वा यथ भीषणीया॥ २२॥

प्राणातिपाती मनुजा अभूवन्
　अदत्तमादायि असंयताश्च। 25
मृषामभाषन् परुषां च वाचं
　पिशुनामबद्धां गिरमप्यवोचन्॥ २३॥

परवान्यचित्तेषु अभिध्यचेतसो
　व्यापन्नचित्ताः परपुद्गलेषु।
दृष्टीगतैर्निश्रितपापगोचरा 30
　मिथ्याप्रयोगेन पतन्ति दुर्गतिम्॥ २४॥

अधर्मचारीण नराण चैव
अविद्यमोहान्धतमोवृतानाम् ।
दृष्टीविपत्त्या विपरीतदर्शिनां
बहुभिर्वर्षैर्भिर्न देवु वर्षति ॥ २५ ॥

5 अवर्षि देवे च विनष्टबीजाः
सस्या न रोहन्ति न चैव वृक्षाः ।
सरस्तडागा नदिस्रोत शुष्का-
स्तृणोषधीः सर्ववनस्पतीश्च ॥ २६ ॥

नद्यो विशुष्का अभवन्नशेषा
10 उद्यान सर्वे अटवीप्रकाशाः ।
श्वेतास्थिपूर्णा पृथिवी बभूव
तवानुत्पादे सुविशुद्धनेत्रा ॥ २७ ॥

यदा हि ते याचकसंधिसंमुते
संतर्पिता याचनकास्तु सर्वे ।
15 उत्पद्य मेघेन तदा चतुर्दिशं
संतर्पिता निम्नस्थला च सर्वे ॥ २८ ॥

भूयो न चोरा न भटा न धूर्ता
न हन्यते कश्चन चापि वध्यते ।
न चाप्यनाथा मरणं व्रजन्ति
20 नाथो भवान् सर्वजगत्सनाथे ॥ २९ ॥

प्राणातिपाताभिरता मनुष्या
हत्वा परांस्तद्रुधिरं पिबन्ति ।
खादन्ति मांसानि परस्परं ये
ते त्वत्प्रदानैर्भुत मैत्रचित्ताः ॥ ३० ॥

25 एकः शतान्तो हि सहस्रसंख्या-
ञ्जना तदा चीवरसंवृताभूत् ।
संछाद्य कायं तृणपर्णचीवरैः
प्रेताः क्षुधार्ता इव तेऽविशंस्तदा ॥ ३१ ॥

प्रादुर्बभौ शालिरनुप्तकृष्टः
30 कल्पद्रुमाश्चैव विमुक्तकोशाः ।
हृष्यन्ति नार्यस्तु नराश्च पण्डिता
जातो यदा त्वं जगतोऽस्य नाथः ॥ ३२ ॥

मासार्धमासस्य कृतेन पूर्व-
मकारिषुः संनिधिमुत्पथस्थाः ।
स्वलंकृतास्त्वद्य महार्हवस्त्राः
क्रीडन्ति देवा इव नन्दनस्थाः ॥ ३३ ॥

कामेषु मिथ्याविषमप्रवृत्ता
अधर्मरागेण नरा हि रक्ताः ।
नार्यः कुमार्यः स्वपराभिगुप्ता
विषं शयन्ति स्म पुरा प्रसज्य ॥ ३४ ॥

वराप्सरोवर्णसमानरूपा
दृष्ट्वा सुवस्त्राः समलंकृताश्च ।
परस्त्रियश्चन्दनलिप्तगात्र्यः
तुष्टाः स्वदारैस्तुषिता इवाद्य ॥ ३५ ॥

मृषां च रूक्षां पिशुनामबद्धां
पुरा गिरं शाठ्यवशादवोचन् ।
चतुर्विधां वाचमिमां प्रहाय
धर्मं चरन्त्यद्य कुदृष्टिमुक्ताः ॥ ३६ ॥

न तूर्यनिर्नादरुतं मनोज्ञं
न दिव्यसंगीतिरुतान्यमूनि ।
सब्रह्मघोषाः कलविङ्कघोषा
रुतस्य तुभ्यं पदवीं स्पृशन्ति ॥ ३७ ॥

छत्रं हि ते तिष्ठति मूर्धसंधौ
समुच्छ्रितं काञ्चनजालच्छन्नम् ।
वैडूर्यदण्डं शिरिगर्भकोशं
समन्ततः सन्मणिकण्ठजालम् ॥ ३८ ॥

घण्टासमुत्थाभिरुतान्यशेषान्
सर्वस्वराङ्गान्यभिभूय लोके ।
बुद्धस्वराङ्गैः सदृशं चरन्तो
सद्धर्मनिर्नादरुतं प्रशान्तम् ॥ ३९ ॥

ये श्रुत्व सत्त्वाः शमयन्ति क्लेशान्
अशेषदिक्क्षेत्रपरंपरासु ।
कल्पार्णवानां सुगतोदधीनां
धीमत्समुद्रस्य च नामचक्रम् ॥ ४० ॥

पूर्वान्ततः क्षेत्रपरंपराभि-
रनन्तरं यस्य च नामधेयम् ।
तवानुभावेन च दिक्ष्वशेषं
सद्धर्मचक्राणि रवन्ति घण्टाः ॥ ४१ ॥
घण्टास्वरं स्वेममसज्जमाना
जम्बुध्वजं व्याप्य रणत्यशेषम् ।
ब्रह्मेन्द्रदेवेन्द्रजगत्पतीनां
स्वकस्वकं कर्मविधीन् ब्रुवाणः ॥ ४२ ॥
श्रुत्वा च ते घण्टरुतां नृदेवाः
स्वकस्वकां कर्मनिधानकोशान् ।
विवर्ज्य पापं शुभमाचरन्ति
सर्वे प्रतिष्ठन्ति च बुद्धबोधौ ॥ ४३ ॥
ज्योतिःप्रभस्ते नृपतिः पिताभूत्
पद्मप्रभा तन्महिषी च माता ।
अभ्युत्सदे पञ्चकषायकाले
क धर्मराज्यं प्रतिलब्धवान् सः ॥ ४४ ॥
उद्यानमस्मै विपुलं बभूव
सुपुष्पितव्यूहमणिप्रदीपम् ।
तत्पञ्चभिः पुष्किरिणीशतैश्च
संशोभितं वृक्षशतैर्वृतानाम् ॥ ४५ ॥
प्रत्येकमासाममवद्विमानं
स्थूणासहस्रोच्छ्रित चारुतीरे ।
सवेदिकाव्यूहसहस्रचित्रं
जालार्धचन्द्रोज्ज्वलितं समन्तात् ॥ ४६ ॥
यदापि देवो न यदा बहूनि
वर्षाण्यधर्मे बलवत्प्रपूर्णे ।
जलं तदा पुष्किरिणीष्वशेषा
द्रुमाः सपत्रच्छवयश्च शुष्काः ॥ ४७ ॥
जनिष्यमाणे त्वयि सप्तरात्रा-
दासन्निमित्तानि तदाद्भुतानि ।
निःसंशया यानि निरीक्ष्य सत्त्वा-
स्त्राता हि नः संभवितेत्यवोचन् ॥ ४८ ॥

सुमध्यरात्रेष्वथ षड्विकारं
संकम्पिताभून्नृप भूतधात्री ।
अनिन्दितायामपि पुष्किरिण्यां
मध्येऽवभासोऽर्कसमो बभूव ॥ ४९ ॥
अथाङ्गसद्वारिभृतान्यभूवन्
पद्माप्यथो पुष्किरिणीशतानि ।
सुजातशाखास्तरवो बभूवुः
सुतेजसः पुष्पफलैरुपेताः ॥ ५० ॥
ताः पुष्किरिण्यः सलिलाभिपूर्णा
अतर्पयंस्तद्वनमप्यशेषम् ।
स्रोतोभिरस्मात्सरितः प्रवृत्तैः
जम्बुध्वजोऽभूत्सलिलप्रपूर्णः ॥ ५१ ॥
द्रुमौषधीसस्यतृणान्यरोहन्
वृक्षा बभूवुः फलपुष्पनद्धाः ।
बीजानि यान्यन्ति च भूतधात्र्यां
सर्वाण्यरोहन्त जलाप्लुतानि ॥ ५२ ॥
जलाप्लुतो यः पृथिवीप्रदेशः
सर्वः समोऽसावभवत्तदानीम् ।
निम्नोन्नताश्चैव महीप्रदेशाः
सर्वे समा एव तदा बभूवुः ॥ ५३ ॥
श्वभ्रप्रपाता विषमाश्च देशाः
समास्तदानीमभवन् क्षणेन ।
अन्तर्दधुः कण्टकशर्कराद्याः
सुरत्नगोत्राणि समुद्बभूवुः ॥ ५४ ॥
आसन्मुदमा नरनारिसंघाः
तृषार्दिताश्चैव पपुर्जलानि ।
उदानयामासुरुदानमेवं
सुखानुभावोऽयमहोऽद्य कस्य ॥ ५५ ॥
ज्योतिःप्रभो भूमिपतिः सपुत्रो
दारैः सहामात्यगणैस्तदानीम् ।
कोटीसहस्रैश्च वृतो जनानां
उद्यानयात्रां प्रययावुदग्राम् ॥ ५६ ॥

अनिन्दिता पुष्किरिणी सुरम्या
या मध्यमा गन्धजलाभिपूर्णा ।
तस्यां स्थितोऽभून्नृपतिः सदारः
प्रासादमारुह्य सुधर्मतीर्यम् ॥ ५७ ॥

सप्तम्यभूद्या रजनी जलस्य
समुद्भवां तत्र समेव रात्रे ।
पुनः सशैला सविमानमाला
चचाल सर्वा धरणी तथैव ॥ ५८ ॥
अनिन्दितायाश्च सहस्रपत्रं
मध्यान्महाम्भोरुहमुद्बभूव ।
सहस्रसूर्यद्युतिमेघजाल
सौमेरुमूर्धप्रभया स्फुरित्वा ॥ ५९ ॥
तद्वज्रदण्डं शुभसत्त्वगर्भं
मणीन्द्रपत्रं विपुलं विशुद्धम् ।
महार्हजाम्बूनदकर्णिकं च
सुगन्धराजोज्ज्वलकेसराढ्यम् ॥ ६० ॥
तत्कर्णिकायामसि नाथ जातः
पर्यङ्कबद्धेन समुच्छ्रयेण ।
विरोचसे लक्षणचित्रिताङ्गः
शतैः सुराणामभिपूज्यमानः ॥ ६१ ॥
प्रासादपृष्ठादवतीर्य राजा
त्वां संप्रगृह्यात्तमनाः कराभ्याम् ।
देव्यै ददौ वाचमुवाच चैवं
सुतस्तवायं भव तुष्टचित्ता ॥ ६२ ॥
प्रादुर्बभूवैव निधानकोट्यः
प्रमुक्तकोशास्तरवो बभूवुः ।
तूर्यैश्च निर्नादितमन्तरिक्ष-
मभूत्प्रसूते त्वयि लोकनाथे ॥ ६३ ॥
जम्बुध्वजे ये खलु सर्वसत्त्वा-
स्त्वद्दुन्दुभाशेऽप्यभवन् प्रतीताः ।
अहोऽस्यनाथस्य जनस्य नाथ
इत्यब्रुवन् प्राञ्जलयश्च भूत्वा ॥ ६४ ॥

प्रभा शरीरात्तव निश्चरित्वा
　　प्रभासयामास महीं समन्तात्।
तमोऽन्धकारं जगतां च हत्वा
　　व्याधीनशेषान् शमयांबभूव ॥ ६५ ॥

ये यक्षकुम्भाण्डपिशाचसंघा
　　विहेठकास्ते च सदापजग्मुः।
आशीविषा नाप्यचरंस्तदानीं
　　महाविषाः सत्त्ववधप्रवृत्ताः ॥ ६६ ॥

अलाभनिन्दे अयशोऽथ दुःखं
　　या ईतयो व्याधिरुपद्रवाश्च।
शमं समासाद्य हितं जगाम
　　लोके प्रमोदस्तु समुद्बभूव ॥ ६७ ॥

परस्परं मातृसमानसंज्ञी
　　मैत्रात्मकं सर्वजगत्तदासीत्।
अवैरचित्तं विनिहिंसकश्च
　　सर्वज्ञमार्गप्रतिपत्तिमच्च ॥ ६८ ॥

विवर्तिता दुर्गति धर्मराज्ञा
　　अपावृतः स्वर्गमहापथश्च।
सर्वज्ञतावर्त्मनिदर्शनं च
　　कृतस्त्वयार्यो जगतो विशालः ॥ ६९ ॥

लाभः परो नस्तव दर्शनेन
　　दातुर्महाम्भोनिधिसंनिभस्य।
अनाथनाथो जगति प्रसूतः
　　चिरप्रनष्टेऽद्भुतनायकस्त्वम् ॥ ७० ॥

अथ खलु रत्नप्रभा श्रेष्ठिदारिका सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषं राजानमाभिर्गाथाभिरभिष्टुत्य संवर्ण्य संप्रशस्य अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य प्रणिपत्य एकान्ते प्राञ्जलिः स्थिताभून्नमस्यन्ती। अथ खलु राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषो रत्नप्रभां श्रेष्ठिदारिकामवलोक्य एवमाह–साधु साधु दारिके, या त्वं परसत्त्वगुणविशेषज्ञानाभिज्ञामवतीर्णा। दुर्लभास्ते दारिके सत्त्वाः सर्वलोके, ये परसत्त्वगुणानधिमुच्यन्ते। न शक्यं दारिके तमोवृतैरकृतज्ञसत्त्वैः बुद्धिविपन्नैः क्षुभितचित्तैर्दूषितसंतानैरसामर्थ्येनोभिः प्रकृतिविनष्टाशयैः प्रतिपत्तिच्युतैः परसत्त्वगुणविशेषानभिज्ञैर्बोधिसत्त्वगुणा अवतारितुं तथागतगुणा वा स्पर्शयितुं सर्वगुणज्ञानविशेषाभिज्ञा वा अनुमातुम्। असंशयं त्वं दारिके बोधौ

संप्रस्थिता, या त्वमेवंरूपान् बोधिसत्त्वगुणानवतरसि । उदारसत्त्वाभिज्ञतया जम्बुद्वीपेऽमोघो-
ऽस्माकं सत्त्वसंग्रहविक्रमो येषां नो विजिते त्वमेवंरूपज्ञानसमन्वागता उत्पन्ना । अथ खलु
राजा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषोऽनर्घं महामणिरत्नं ज्योतिःप्रभमणिरत्नविचित्रं च
अनर्घं वस्त्ररत्नं स्वेन पाणिना आदाय रत्नप्रभायाः श्रेष्ठिदारिकायाः प्रादात् । तत्परिवारस्य च
5 सर्वासां दारिकाणां प्रत्येकं नानावस्त्ररत्नानि प्रादात्, एवं चावोचत्–प्रतिगृहाण दारिके
त्वमिदं वस्त्ररत्नम्, परिगृह्यात्मना परिभुङ्क्ष्व । अथ खलु रत्नप्रभा श्रेष्ठिदारिका सपरिवारा
उभाभ्यां जानुभ्यां धरणितले प्रणिपत्य तद्वस्त्ररत्नं पाणिभ्यां परिगृह्य मूर्ध्नि कृत्वा प्रत्यवस्थाप्य
तद्वस्त्ररत्नं प्रावृतवती । तत्परिवाराश्च सर्वा दारिकाः प्रत्येकं स्वानि वस्त्ररत्नानि प्रावृतवत्यः ।
सा तद्वस्त्ररत्नं प्रावृत्य राजानं सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषं प्रदक्षिणमकरोत् सार्धं स्वेन
10 दारिकापरिवारेण । तासां सर्वासां तेषु वस्त्ररत्नेषु सर्वनक्षत्रज्योतिर्बिम्बानि विद्योतमाना-
न्यदर्शन् । तां जनकायो दृष्ट्वा एवमाह–शोभनस्तावदयं दारिके कन्यापरिवारः । रात्रिदेवतेव
ज्योतिर्गणप्रतिमण्डिता त्वमाभिः परिवृता अतीव भ्राजसे ॥

अथ खलु सर्ववृक्षप्रफुल्लनसुखसंवासा रात्रिदेवता सुधनं श्रेष्ठिदारकमेतदवोचत्–तत्किं
मन्यसे कुलपुत्र–अन्यः स तेन कालेन तेन समयेन राजाभूत् सर्वधर्मनिर्नादच्छत्रमण्डल-
15 निर्घोषो नाम ? न खल्वेवं द्रष्टव्यम् । अयं स भगवान् वैरोचनस्तथागतोऽर्हन् सम्यक्सं-
बुद्धस्तेन कालेन तेन समयेन राजा अभूत् सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषो नाम ।
स्यात्खलु पुनस्ते कुलपुत्र–अन्या सा तेन कालेन तेन समयेन पद्मप्रभा नाम देव्यभूद्राज्ञो
ज्योतिष्प्रभस्य भार्या सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञो माता ? न खल्वेवं द्रष्टव्यम् ।
इयं सा मायादेवी तेन कालेन पद्मप्रभा नाम राजभार्या अभूत्, यया स उपपादुकः कुमारः
20 उत्सङ्गे प्रतिगृहीतः । स्यात्खलु पुनस्ते कुलपुत्र एवम्–अन्यः स तेन कालेन तेन समयेन
ज्योतिष्प्रभो नाम राजा अभूत्सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य राज्ञः पिता ? न खल्वेवं
द्रष्टव्यम् । शुद्धोदनः स राजा तेन कालेन ज्योतिष्प्रभो नाम राजा अभूत् । स्यात्खलु पुनस्ते
कुलपुत्र एवम्–अन्या सा तेन कालेन तेन समयेन रत्नप्रभा नाम श्रेष्ठिदारिका अभूत् । न
खल्वेवं द्रष्टव्यम् । अहं सा तेन कालेन तेन समयेन रत्नप्रभा नाम श्रेष्ठिदारिका अभूवम् । स्यात्खलु
25 पुनस्ते कुलपुत्र एवम्–अन्ये तेन कालेन तेन समयेन सत्त्वा अभूवन्, ये तत्र जम्बुद्वीपे
उपपन्नाः राज्ञा सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषेण चतुर्भिः संग्रहवस्तुभिः संगृहीताः ? न
खल्वेवं द्रष्टव्यम् । इमे ते बोधिसत्त्वाः सर्वे इहैव भगवतः पर्षन्मण्डलसमवसृता येऽनुत्तरायां
सम्यक्संबोधौ अवैवर्तिकायां बोधिसत्त्वभूमौ प्रतिष्ठापिताः । केचित्प्रथमायां भूमौ, केचिद्
द्वितीयायां केचित्तृतीयायां केचिच्चतुर्थ्यां भूमौ केचित्पञ्चम्यां केचित्षष्ठ्यां केचित्सप्तम्यां
30 केचिदष्टम्यां केचिन्नवम्यां केचिद्दशम्यां बोधिसत्त्वभूमौ प्रतिष्ठापिताः । ये नानाप्रणिधान-
निर्मातृताभिर्नानासर्वज्ञताप्रस्थानैर्नानासंभारैर्नानासमुदागमैर्नानानिर्याणैर्नानामार्गव्यूहशुद्धिभि-

1 B धर्मप्रभा.

नानाविकुर्वितवृषभिताभिर्विविधमार्गव्यूहैः समुदागता नानाविमोक्षविहारैरिह पर्षन्मण्डले नानाधर्मविमानविहारानावसन्तो विहरन्ति ॥

अथ खलु सर्ववृक्षप्रफुल्लनसुखसंवासा रात्रिदेवता तस्यां वेलायामेतमेव विपुलप्रीतिसंभवनिधानसंतुष्टवभासं बोधिसत्त्वविमोक्षं भूयस्या मात्रया संदर्शयमाना सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत— 5

चक्षुर्ममा जिनसुता विपुलं
येनो विलोकयमि सर्वदिशः ।
क्षेत्रोदधीन् बहुविधान् विपुलान्
सत्त्वार्णवानपि च संसरतः ॥ ७१ ॥ 10

सर्वेषु क्षेत्रप्रसरेषु जिनान्
बोधिद्रुमासनगतान् विरजान् ।
व्याप्यर्द्धिभिर्दश दिशः सतत
धर्मोक्तिभिर्विनयतो जनताम् ॥ ७२ ॥

श्रोत्रार्णव. सुपरिशुद्ध ममा 15
येन शृणोम्यपरिशेषरुतम् ।
धर्मानशेषसुगताभिहितान्
सर्वान् शृणोमि भृशमात्तमनाः ॥ ७३ ॥

ज्ञानं ममाद्वयमसङ्गगतं
परसत्त्वचित्तविषयप्रसृतम् । 20
चित्तोदधिः सुविपुला जगत-
श्चित्तक्षणादवतराम्यखिलाम् ॥ ७४ ॥

पूर्वान्त मे स्मृतिसमाधिबलात्
कल्पोदधीनहमवेष्यमि तान् ।
जात्यन्तरार्णवशतानि बहू- 25
न्यहमात्मनश्च जगतामपि च ॥ ७५ ॥

क्षेत्रार्णवैकपरमाणुसमान्
कल्पान् क्षणेन च विदाम्यखिलान् ।
सत्त्वान् गतिष्वपि च संसरतो
बुद्धान् विकुर्वितगणैश्च सह ॥ ७६ ॥ 30

तच्च स्मरामि खलु लोकविदां
सेषा यथा प्रथमकः प्रणिधिः ।

प्रस्थानसंभवनयैर्विपुलैः
समुदागताश्चरिसुपेत्य च याः ॥ ७७ ॥
अभिषेकभूमिगमनानि च या-
न्यसमाधितोत्तमगुणौघवताम्।
5 बोधैश्च बुध्यननयान् विपुलां-
श्चित्तक्षणादवतराम्यखिलान् ॥ ७८ ॥
यैर्यैरुपायविषयैः सुगताः
प्रावर्तयन् जगति चक्रवरम्।
या निर्वृतीरपरिमाणगुणा
10 धर्मस्थितेरपि च यो नियमः ॥ ७९ ॥
ये यानसागरनया विमला
ये चैव सत्त्वविनया विपुलाः।
संदर्शिता जगति तानखिलै-
र्नानानयैरवतरामि पृथक् ॥ ८० ॥
15 प्रीतेर्निधानप्रतुष्टिघना-
भ्यालोक एष हि विमोक्षनयः।
मम भावितो विपुल कल्पशता-
न्येतं त्वमप्यवतराशु नयम् ॥ ८१ ॥

एतमहं कुलपुत्र विपुलप्रीतिसंभवनिधानसंतुष्टप्रभासं बोधिसत्त्वविमोक्षं जानामि। किं मया शक्यं सर्वतथागतपादमूलेषु सर्वज्ञताप्रस्थानप्रणिधिसमुद्रावतीर्णानां सर्वतथागतपूर्वप्रणिधानसागराभिनिर्हारप्रणिधिपरिपूर्णानामेकबोधिसत्त्वभूम्याक्रमणसर्वबोधिसत्त्वभूमिसागराक्रमणविक्रान्तज्ञानानां सर्वबोधिसत्त्वचर्यासमुद्रैकैकचर्यासमवसरणप्रणिधानचर्यापरिशुद्धानामेकैकस्मिन् बोधिसत्त्वविमोक्षे सर्वबोधिसत्त्वविमोक्षसागरसमवसरणविहारवशवर्तिनां बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥ B 341

25 गच्छ कुलपुत्र, इयमिहैव बोधिमण्डे सर्वजगद्रक्षाप्रणिधानवीर्यप्रभा नाम रात्रिदेवता भगवतः सकाशमुपसंक्रान्ता। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन अनुत्तरायां सम्यक्संबोधौ सत्त्वाः परिपाचयितव्याः, कथं सर्वबुद्धक्षेत्राणि परिशोधितव्यानि, कथं सर्वतथागता आराधयितव्या अत्यन्ताराधनतया, कथं बोधिसत्त्वेन सर्वबुद्धधर्मेषु प्रयोक्तव्याः ॥

अथ खलु सुधनः श्रेष्ठिदारकः सर्ववृक्षप्रफुल्लनसुखसंवासाया रात्रिदेवतायाः पादौ 30 शिरसाभिवन्द्य सर्ववृक्षप्रफुल्लनसुखसंवासां रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सर्ववृक्षप्रफुल्लनसुखसंवासाया रात्रिदेवताया अन्तिकात्प्रक्रान्तः ॥ ३८ ॥

## ४१ सर्वजगद्रक्षाप्रणिधानवीर्यप्रभा ।

अथ खलु सुधनः श्रेष्ठिदारको येन सर्वजगद्रक्षाप्रणिधानवीर्यप्रभा रात्रिदेवता तेनोपसंक्रान्तः। सोऽद्राक्षीत्सर्वजगद्रक्षाप्रणिधानवीर्यप्रभां रात्रिदेवतां तस्मिन्नेव पर्षन्मण्डले सर्वजगद्भवनप्रतिभासमणिराजगर्भासननिषण्णां धर्मधातुनयप्रतिभासमणिजालसंछादितशरीरां सर्वचन्द्रसूर्यज्योतिर्ग्रहतारानक्षत्रप्रतिभाससंदर्शनकायां यथाशयसत्त्वचक्षुर्विज्ञप्तिसंदर्शनकायां सर्वसत्त्वकायसंस्थानसदृशस्वशरीरविज्ञपनकायाम्, अनन्तमध्यवर्णसमुद्रोदारविज्ञप्तिसंदर्शनकायां सर्वेर्यापथविहारनयसंदर्शनकायां समन्तमुखाभिमुखविज्ञपनकायां सर्वदिगभिमुखसत्त्वपरिपाचनाभिमुखकायां समन्तधर्ममेघनिर्गर्जितविविधविकुर्वितसर्वदिक्स्फरणसर्वजगदभिमुखकायां सर्वकालजगदर्थाभिमुखगगनप्रलम्बकायां सर्वतथागतक्रमतलप्रणिपतितकायां सर्वसत्त्वकुशलमूलोपचयसुखपूर्वंगमकायां सर्वतथागताभिमुखधर्ममेघसंप्रतीच्छनसंधारणप्रणिधिसिद्धिपरिपूर्णचेतोपराङ्मुखस्मृतिसंधारणकायाम्, अनन्तमध्यावभाससर्वदिक्स्फरणशरीरां सर्वजगत्तमोविकिरणधर्मप्रदीपालोकसमन्तप्रमुखावभाससंदर्शनकायां मायागतधर्मनिर्मलज्ञानशरीरनिदर्शनकायां विगततमोरजोधर्मशरीरनिदर्शनकायां मायागतधर्मतानिर्जातकायां धर्मताप्रतिविबुद्धान्धकारचित्तां समन्तमुखज्ञानालोकावभासप्रतिलब्धाम्, अत्यन्तनिर्ज्वरनिःसंतापमनःशरीरां धर्मकायाभेद्यसारवतीधातुनिर्मिताम्, अप्रतिष्ठिततथागताधिष्ठानप्रकृत्यसंक्लिष्टस्वभावनिर्मलधर्मताशरीरविशुद्धकायाम्। स तां दृष्ट्वा मूर्ध्ना प्रणम्य बुद्धक्षेत्रपरमाणुरजःसमान् दर्शननयाननुस्मरमाणोऽन्तरधरणितले प्रणिपत्य सुचिरमतिनामयामास ॥

अथ खलु सुधनः श्रेष्ठिदारकः तस्माद्धरणितलादुत्थाय प्राञ्जलीभूतः सर्वजगद्रक्षाप्रणिधानवीर्यप्रभाया रात्रिदेवतायाः कायं निरीक्षमाणो दश संज्ञाविशुद्धीः प्रतिलभते स्म, यासां प्रतिलाभात् सर्वकल्याणमित्रसभागतां प्रत्यलभत। कतमा दश? यदुत—कल्याणमित्रेषु स्वचित्तसंज्ञां प्रत्यलभत सर्वज्ञतासमारम्भवीर्यसर्वालम्बनसंनाहाय। स्वकर्मविपाकविशुद्धिस्वभावसंज्ञां प्रत्यलभत कल्याणमित्रारागणविपुलकुशलमूलसमुदागमारागणतायै। बोधिसत्त्वचर्यालंकारसंज्ञां प्रत्यलभत सर्वप्रणिधानालंकारचर्यासंवसनतायै। सर्वबुद्धधर्माभिनिष्पादनसंज्ञां प्रत्यलभत सर्वकल्याणमित्रानुशासनीपथप्रतिपत्त्यै। स्वयोनिपपत्तिसंज्ञां प्रत्यलभत सर्वबुद्धविषयानुत्तरधर्मविहारावभाससंदर्शनतायै। एकनिर्याणसंज्ञां प्रत्यलभत समन्तभद्रयाननिर्याणप्रणिधानचर्याविशुद्धये। सर्वज्ञपुण्यसागराकरसंज्ञां प्रत्यलभत सर्वशुक्लधर्मसमार्जनविवर्धनतायै। सुपरिपूर्णकुशलधर्मपरिपूरणसंवर्धनपरिपालनसंज्ञां प्रत्यलभत बुद्धबोधये सर्वज्ञज्ञानवीर्यवेगसंवर्धनतायै। सर्वकुशलमूलपरिपूरिसंज्ञां प्रत्यलभत सर्वसत्त्वसर्वाभिप्रायपरिपूरणतायै। सर्वार्थसंसाधकसंज्ञां प्रत्यलभत कल्याणमित्रेषु सर्वबोधिसत्त्वकर्मसंवर्तिताप्रतिष्ठापनाय। इमा दश संज्ञाविशुद्धीः प्रतिलभते स्म, यासां प्रतिलाभात् सर्वजगद्रक्षाप्रणिधानवीर्यप्रभाया रात्रिदेवताया बुद्धक्षेत्रपरमाणुरजःसमा बोधिसत्त्वसभागताः प्रत्यलभत।

१ S om °तारा°. २ S °मुख°. ३ B अनन्त°.

B 343 यदुत स्मृतिसभागता दशदिक्सर्वतथागतत्र्यध्वानुस्मृतिनयेषु, मतिसभागता सर्वधर्मसागर-
नयासंभेदविनिश्चितेषु, गतिसभागता सर्वतथागतधर्मचक्रमण्डलगत्यनुगतासंभेदविभागनय-
कौशल्येषु, बोधिसभागतामाकाशसमबुद्ध्या सर्वत्र्यध्वनयसागरावभासप्रतिलाभाय, इन्द्रिय-
विशुद्धिसभागता सर्वबोधिसत्त्वेन्द्रियसागरज्ञानावभासप्रतिलाभाय, चित्तविशुद्धिसभागता
सर्वाकारसत्त्वसंग्रहव्यूहबोधिसत्त्वमार्गगुणप्रतिपत्त्यलंकारमार्गप्रतिपत्तये, गोचरसभागता तथा-
गतज्ञानगोचरावभासप्रतिलाभाय, नयानुगमसभागता सर्वाकारसर्वज्ञतानयसमुद्रावतारपर्याव-
भासप्रतिलाभाय, अर्थप्रतिवेधसभागता सर्वधर्मस्वभावज्ञानप्रतिवेधप्रतिलाभाय, धर्मविहार-
सभागता सर्वावरणपर्वतविनिरणतायै, रूपकायविशुद्धिसभागता यथाशयजगद्विमात्रता-
संदर्शनलक्षणानुव्यञ्जनविचित्रशरीरविशुद्धिप्रतिलाभाय, बलसभागता बोधिसत्त्वबलपरि-
10 निष्पत्तिसर्वज्ञतारम्बणाविवर्तनतायै, सर्वधर्मनयसमुद्रेषु वैशारद्यसभागता चित्ताशयगगनपरि-
शुद्धये, वीर्यसभागता सर्वकल्पबोधिसत्त्वचर्यासंवासापरिखेदप्रतिलाभाय, प्रतिभानसभागता
सर्वधर्मानावरणज्ञानालोकप्रतिलाभाय, अनभिभूतसभागता सर्वजगदभ्युद्गतात्मभावपरिशुद्धये,
अदीनालीनवचनसभागता सर्वपर्षन्मण्डलाभिराधनपरिशुद्धये, घोषसभागता सर्वधर्मनयसमुद्र-
रुतगर्जनतायै, स्वराङ्गविशुद्धिसभागता सर्वजगद्वचनविज्ञप्त्यभिव्याहारनयसमुद्रेषु, गुणविशुद्धि-
15 सभागता तथागतानुशासनीगुणप्रतिपत्तिविशुद्धिषु, शुद्धधर्मकर्मवशानिरोधनसभागता-
मनवद्यकर्मविपाकविशुद्धये, धर्मयज्ञभूमिप्रतिष्ठापनसभागता सर्वबुद्धोत्पादधर्मचक्रप्रवर्तनतायै,
ब्रह्मचर्यविशुद्धिसभागता सर्वतथागतविषयज्ञानसंवसनतायै, महामैत्रीसभागता नानामैत्री-
नयप्रतिक्षणसर्वसत्त्वसागरस्फरणतायै, महाकरुणानयसमुद्रावतारसभागता सर्वसत्त्वधातुपरि-
त्राणधर्ममेघाभिप्रवर्षणतायै, कायकर्मसभागता सर्वसत्त्वपरिपाचनोपायोपचारसभागतायै,
20 वाक्कर्मविशुद्धिसभागता सर्वधर्मव्यवहाराभिलापेषु, मनस्कर्मसभागता सर्वसत्त्वचित्तेषु सर्व-
ज्ञतारम्बणोपसंहरणतायै, विविधसर्वव्यूहप्रतिमण्डनसभागता सर्वबुद्धक्षेत्रेषु सर्वतथा-
गतोपसंक्रमणतायै, उपसंक्रमणसभागता सर्वबुद्धोत्पादसमुद्रेषु, धर्मचक्राध्येषणसभागता
सर्वतथागतेषु, पूजोपस्थानसभागता सर्वतथागताशेषकाल्सर्वपूजोपस्थानतायै, सर्वसत्त्व-
परिपाकविनयसभागता सर्वसत्त्वधातौ, आलोकप्रतिलाभसभागता सर्वसत्त्वधर्मनयेषु,
25 समाधिप्रतिलाभसभागता सर्वसमाधिनयसमुद्रेषु, समन्तस्फरणसभागता सर्वबुद्धक्षेत्रसमुद्र-
बोधिसत्त्वचर्याविकुर्वितस्फरणतायै, बोधिसत्त्वविहारसभागता सर्वबोधिसत्त्वविकुर्वित-
नयसमुद्रेषु, परिवारसभागता सर्वबोधिसत्त्वचर्यासंवासेषु, प्रवेशसभागता सर्वलोक-
धातुसुसूक्ष्मप्रवेशेषु, चित्तविभक्तिसभागता सर्वबुद्धक्षेत्रवैपुल्येषु, अनुगमवैमात्रतासभागता
सर्वबुद्धक्षेत्रसमुद्रावतारविमात्रतानुगमेषु, समन्तनयप्रसरस्फरणसभागता सर्वबुद्धक्षेत्रविभक्त्य-
नन्तज्ञानविज्ञप्तिषु, अभ्युद्गतसभागता सर्वबुद्धक्षेत्रेषु, अवैवर्त्यसभागता सर्वदिक्स्फरणसमव-
सरणाधिष्ठानाविवर्त्यतायै, अन्धकारविधमनसभागता सर्वबुद्धबोधिमण्डविबुध्यनज्ञानमण्डल-

1 B om विचि.. समागता.

वभासप्रतिलाभाय, अनुप्राप्तिसभागता सर्वबुद्धपर्षन्मण्डलसमुद्रेषु, सर्वबुद्धक्षेत्रकायजालस्फरणसभागतामनभिलाप्यबुद्धक्षेत्रतथागतपूजोपस्थानप्रयोगेषु, ज्ञानप्रत्यक्षसभागता तत्र धर्मनयसमुद्रानुप्रबन्धेषु, प्रतिपत्तिसभागतामनुलोमसर्वधर्मनयनसमुखप्रयोगेषु, एषणसभागता तीव्रधर्मच्छन्दारम्भविशुद्धये, त्रिशुद्धिसभागता कायवाङ्मनस्कर्मबुद्धगुणालंकारसमादानेषु, सुमन सभागतामविषमकल्पचित्तमण्डलसर्वधर्मज्ञानमण्डलपरिशुद्धये, वीर्यारम्भ- 5 सभागता सर्वकुशलमूलसंभारसमारम्भनिस्तीरणप्रयोगेषु, चर्याव्यूहसभागता सर्वबोधिसत्त्वचर्यापरिनिष्पत्तिषु, असङ्गविहारसभागता सर्वधर्मनिमित्तप्रतिवेधेषु, उपायकौशल्यनयसभागता तत्र तत्र धर्मविहारज्ञानविकुर्वणतासु, आयतनविशुद्धिसभागता यथाशयसत्त्वाविषमदर्शनसमादानेषु, बोधिसत्त्वसमाधिमुखप्रतिलाभसभागतां सर्वधर्मविभावनाप्रतिलाभेषु, अधिष्ठानसभागता सर्वतथागतवेशेषु, भूम्याक्रमणसभागता सर्वबुद्धबोधिसत्त्वभूमिप्रतिलाभेषु, प्रतिष्ठान- 10 सभागता सर्वबोधिसत्त्वव्यवस्थानेषु, आदेशनसभागता सर्वबुद्धव्याकरणेषु, समाधिसभागता एकक्षणे सर्वसमाधिसागरनयेषु, समाधिव्यवस्थानसभागता नानालक्षणबुद्धकार्येषु, अनुस्मृतिसभागता सर्वानुस्मृत्यारम्बणनयसमुद्रेषु, बोधिसत्त्वचरणसभागता बोधिसत्त्वकार्यपरान्तकोटीगतकल्पव्यवसायेषु, प्रसादसभागतामप्रमेयबुद्धज्ञानाधिमुक्तिप्रीतिवेगसमुद्रविवर्धनतायै, विवर्धनसभागता सर्वावरणपर्वतानामविवर्तज्ञानसभागता बुद्धज्ञानानन्तसभारसभवाय, 15 उपपत्तिसभागता सर्वसत्त्वपरिपाकविनयकालेषु, विहारसभागता[1] सर्वज्ञतानयमुखेषु, विषयसभागतां धर्मधातुनयवृषभितावि षयप्रवेशेषु, अनालयसभागता सर्वालयसमुद्घातितचित्ततायै, सर्वधर्मनिर्देशसभागता धर्मसमताज्ञानावतारेषु, अभियोगसभागता सर्वबुद्धाधिष्ठानस्वशरीरसप्रतीच्छनतायै, अभिज्ञासभागता सर्वलोकज्ञापनप्रतिपत्तिनयेषु, अनभिसंस्कारर्द्धिप्रतिलाभसभागता सर्वदिक्क्षेत्रसागरावतारेषु, धारणीभूमिसभागता सर्वधारणीसमुद्रावभासप्रतिलाभाय, 20 सर्वबुद्धधर्मचक्राभ्यवतारसभागता सर्वसूत्रान्तधर्मपर्यायेषु, गम्भीरधर्मप्रवेशसभागता गगनतलोपमसर्वधर्मनयावतारेषु, अवभाससभागता सर्वलोकधातुप्रसरेषु, अभिरोचनसभागता यथाशयजगद्विज्ञप्तिसंदर्शनेषु, प्रकम्पनसभागता क्षेत्राधिष्ठानविकुर्वितसत्त्वदर्शनेषु, अमोघचरणसभागतां दर्शनश्रवणानुस्मृतिसत्त्वविनयेषु, निर्याणसभागता प्रत्यलभत सर्वप्रणिधानसमुद्रनयपरिनिष्पत्तिदशबलज्ञानानुबोधाय। इति हि सुधनः श्रेष्ठिदारकः प्रसन्नचित्तः सर्वजग- 25 द्रक्षाप्रणिधानवीर्यप्रभा रात्रिदेवतामवलोकयन् आसां दशानां सत्त्वविशुद्धीनां प्रतिलाभादेतत्प्रमुखान्[2] बुद्धक्षेत्रपरमाणुरज समान् सर्वजगद्रक्षाप्रणिधानवीर्यप्रभाया रात्रिदेवताया सभागनयान् प्रतिलभते स्म॥

अथ खलु सुधनः श्रेष्ठिदारकः सर्वजगद्रक्षाप्रणिधानवीर्यप्रभाया रात्रिदेवताया बुद्धक्षेत्रपरमाणुरज समदर्शनतया अवतीर्णोऽनन्तमध्यकल्याणमित्रसत्त्वविशुद्धिप्रतिलब्धो बुद्ध- 30

१ B om. सर्वसत्त्व ... सभागता २ B °समुचोदित°.

क्षेत्रपरमाणुरजःसमसमागमानयावतीर्णः एकांसं चीवरं प्रावृत्य येन सर्वजगद्रक्षाप्रणिधान-वीर्यप्रभा रात्रिदेवता, तेनाञ्जलिं प्रणम्य तस्यां वेलायामिमा गाथा अभाषत–

यथा स्वचित्ते वशिता ममास्ति
छन्दश्च बोधौ सुदृढोऽनिवर्त्यः ।
त्वदीयचित्तेऽपि हि मे तथैव
सतैव देव्यद्य दृढोपजाता ॥ १ ॥

पापान्यशेषाणि विशोधितानि
शुभो विपाको द्युतिमानवाप्तः ।
सुदर्शनायास्तव दर्शनान्मे
समार्जिताश्चाक्षयशुक्लधर्माः ॥ २ ॥

चित्तं गुणौघैः समलंकृतं मे
पृथग्विधैः सत्त्वहितप्रवृत्तेः ।
समलंकृतो यैश्चरितासि चर्यां
क्षेत्रेषु सर्वेष्वपरान्तकल्पान् ॥ ३ ॥

निदर्शिता ते खलु सर्वधर्मान्
निष्पत्तिरार्ये मदनुग्रहाय ।
हिताय मेऽनुग्रहसंज्ञयैव
धर्मानुशास्तिं परमां प्रयच्छ ॥ ४ ॥

विवर्तितो दुर्गतिपातमार्गो
संदर्शितः स्वर्गपथो विशुद्धः ।
सर्वज्ञमार्गश्च निदर्शितस्ते
यानानुयानं सुगतैश्च बोधेः ॥ ५ ॥

त्वदन्तिके मेऽनुपमाद्भुताद्य
निर्याणसंज्ञा परमोपजाता ।
आकाशधात्वामलप्रमाण
सर्वज्ञताधर्मसुखं विशुद्धम् ॥ ६ ॥

सर्वज्ञताशेषशुभाकरत्व-
संज्ञाश्च मे त्वय्युदिताप्रमेयाः ।
पुण्यार्णवा मे गगनप्रमाणाः
प्रतिक्षणं चेतसि चोद्भवन्ति ॥ ७ ॥

उपेहि मे पारमिताभिरार्ये
पुण्यैरचिन्त्यैश्च विवर्धयस्व ।

संवर्धितः सर्वगुणैः शुभैश्च
सर्वज्ञपट्टं नचिरेण लप्स्ये ॥ ८ ॥
कल्याणमित्रेषु हि मे सदैव
सर्वज्ञतामार्गप्रतिपूरिसंज्ञा ।
अतोनिमित्ता मम सर्वशुक्लं 5
संपूजिताशु प्रभविष्यतीति ॥ ९ ॥
सर्वे यतोऽर्थाः प्रभवन्ति चास्मात्
सिद्धश्च कल्याणगुणैरुपेतः ।
आराध्य चैवेनमनन्तवर्णं
सर्वज्ञमार्गं जगतां प्रवक्ष्ये ॥ १० ॥ 10
आचार्यभूता मि गुणाप्रमेये
सर्वज्ञधर्मेषु मम प्रणेत्री ।
न कल्पकोटीनयुतैरसंख्यैः
शक्यं मया ते प्रतिकर्तुमार्ये ॥ ११ ॥

अथ खलु सुधनः श्रेष्ठिदारकः इमा गाथा भाषित्वा सर्वजगद्रक्षाप्रणिधानवीर्यप्रभां 15 रात्रिदेवतामेतदवोचत्–संदर्शितस्त्वया देवते ममायमचिन्त्यो बोधिसत्त्वविमोक्षविषयः । वदस्व मे देवते–को नामायं विमोक्षः? कियच्चिरं संप्रस्थितासि देवते अनुत्तरायां सम्यक्संबोधौ? कियच्चिरेण वा त्वमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे?

एवमुक्ते सर्वजगद्रक्षाप्रणिधानवीर्यप्रभा रात्रिदेवता सुधनं श्रेष्ठिदारकमेतदवोचत्—सर्वसत्त्वपरिपाकसंचोदनकुशलसंभवो नाम कुलपुत्र अयं विमोक्षः। अहं कुलपुत्र अनेन 20 विमोक्षेण समन्वागता सर्वधर्मस्वभावसमतामनुबुद्ध्य सर्वधर्मप्रकृतिमवतीर्य अनालयं धर्मं निश्रित्य सर्वलोकोच्चालिता सुविभक्तरूपतां धर्माणामवतीर्य अविसभागवर्णा अवैवर्तवर्णा अविकल्पवर्णा अनीलवर्णा अपीतवर्णा अलोहितवर्णा अनवदातवर्णा धर्मतामवतीर्य अनेकवर्णविभक्तिरूपात्मभावा नानात्ववर्णा अविसभागा अनानात्वा अनैमात्र्या अविकल्पा अनीला अपीता अलोहिता अनवदातवर्णा, अनेकवर्णा अप्रमेयवर्णा विशुद्धवर्णा सर्वव्यूहप्रमुखनवर्णा समन्त- 25 दर्शनवर्णा सर्वजगत्सदृशवर्णा सर्वलोकाभिमुखातिरेकवर्णा समन्तावभासप्रतिभासवर्णा अप्रतिकूलदर्शनवर्णा लक्षणानुव्यञ्जनसुविशोधितवर्णा अनवद्यचरणप्रभासवर्णा महाबलविक्रमसंदर्शनवर्णा दुरासदगम्भीरवर्णा सर्वलोकापर्यादत्तवर्णा क्षणक्षणविचित्रवर्णा नानावर्णमेघसंदर्शनवर्णा नानारूपसंस्थानवर्णा अप्रमेयविकुर्वितसंदर्शनवर्णा सुरुचिरवचनवर्णा[1] सर्वसुरूपचितवर्णा सर्वसत्त्वपरिपाकानुकूलवर्णा यथाशयवैनेयाभिमुखोपनीतकुशलवर्णा 30 अप्रतिहतसमन्तप्रभासवर्णा अच्छानाविलविप्रसन्नप्रभास्वरवर्णा अभेद्यकायोपचयोपशोभित-

---

१ S सुरुचित°.

वर्णा अचिन्त्यधर्मनयप्रभासनवर्णा अभिभूतनभिभूतसर्वाभिभवनवर्णा अतमस्तिमिरवर्णा
सर्वान्धकारविधमनवर्णा सर्वशुक्लसुसमार्जितवर्णा महात्मगुणसमुद्रवर्णा पूर्वगुरुगौरवसुसमार्जित-
वर्णा अध्याशयगगनपरिशुद्धिवरप्रवरोत्तमविशालवर्णा अनाच्छेद्याक्षयगुणसमुद्रप्रभासनवर्णा
सर्वलोकाभिनिश्रितासंभेदवर्णा असङ्गसर्वदिक्स्फरणवर्णा अनभिलाप्यक्षेत्रसमुद्रचित्तक्षण-
5 प्रसरानेकविविधवर्णसमुद्रसंदर्शनवर्णा सर्वसत्त्वमहाप्रीतिवेगविवर्धनवर्णा सर्वसत्त्वसागर-
संग्रहवर्णा सर्वरोमविवराशेषबुद्धगुणसमुद्रमेघनिगर्जनवर्णा सर्वसत्त्वाशयाधिमुक्तिसागरवि-
शोधितवर्णा सर्वधर्मार्थविनिश्चयसंदर्शनवर्णा नानावर्णरश्मिजालावभासवर्णा गगनप्रमाणविमल-
प्रभावर्णा विशुद्धमणिराजविमलरजःप्रभाविश्रितवर्णा निर्मलधर्मताप्रतिभासवर्णा अतुल्यवर्ण-
नयसमुद्रविचित्रप्रतिभासवर्णा समन्तदिगवभासवर्णा यथाकालजगत्संदर्शनाभिज्ञवर्णा प्रशम
10 दमदिक्संभववर्णा सर्वक्लेशप्रशमनवर्णा सर्वजगत्पुण्यक्षेत्रप्रभावनवर्णा सर्वनयप्रशमनवर्णा
अमोघजगत्स्फरणवर्णा महाज्ञानविक्रमप्रभावनवर्णा असङ्गकायसमन्तस्फरणवर्णा समन्ताद्वर-
कायामोघजगत्संदर्शनवर्णा महामैत्रीसमुद्रसमुदागमवर्णा महा[1]पुण्यसुमेरुसमुदागमवर्णा सर्व-
जगदभिनिश्रितसर्वलोकगतिप्रतिभासप्राप्तवर्णा महाज्ञानबलविशोधनवर्णा सर्वलोकानुस्मृति-
संजननवर्णा सर्वरत्नाभवर्णा वैरोचनगर्भनिदर्शनवर्णा सर्वजगत्प्रसादानुरूपवर्णा सर्वज्ञतास्वरा-
15 भिमुखवर्णा प्रहसितनयनजगत्प्रसादवर्णा सर्वरत्नव्यूहाग्रावभासवर्णा अनागृहाभाससर्वजग-
त्पराङ्मुखवर्णा अनियताभिनिविष्टवर्णा अधिष्ठानविकुर्वितवृषभितासंदर्शनवर्णा सर्वविविध
विकुर्वितवृषभितासंदर्शनवर्णा तथागतकुशलमूलावभासनवर्णा अनवद्यसर्वधर्मधातुनयसागर-
प्रसृतवर्णा सर्वबुद्धपर्षन्मण्डलोपसंक्रमणप्रतिभासप्राप्तवर्णा विविधवर्णसमुद्रनिष्पादनवर्णा
सुचरितनिष्यन्दसंभूतवर्णा यथावैनायिकोपनायिकवर्णा सर्वलोकातृप्तदर्शनवर्णा विचित्रप्रभा
20 स्वरावभासनवर्णा सर्वत्र्यध्ववर्णा समुद्रसंदर्शनवर्णा सर्ववर्णरश्मिसमुद्रप्रमुञ्चनवर्णा अनभि-
लाप्यवर्णा प्रभामण्डलसमुद्रनानार्थविमात्रतासंदर्शनवर्णा सर्वगन्धावभाससर्वजगत्समति-
क्रान्तवर्णा एकैकरोमविवरानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमसूर्यमण्डलमेघसंदर्शनवर्णा विमल-
चन्द्रमण्डलविग्रहमेघाधिष्ठानवर्णा अनन्तरुचिरपुष्पसुमेरुमेघसंप्रमुञ्चनवर्णा नानाभिनिर्हार-
माल्यद्रुममेघसर्वालंकारमाल्यवर्षप्रमुञ्चनवर्णा सर्वरत्नपद्ममेघसंदर्शनवर्णा सर्वगन्धधूपपटल-
25 विग्रहमेघसर्वधर्मधातुस्फरणवर्णा प्रतिचित्तक्षणं सर्वचूर्णकोशमेघानधिष्ठाय दशसु दिक्षु सर्वधर्म
धातुनयसागरान् स्फरित्वा दर्शनवैनेयानां सत्त्वानां श्रवणवैनेयानामनुस्मृतिवैनेयानां धर्मचक्र-
निर्माणाभिनिर्हारवैनेयानां प्रत्युपस्थितपरिपाककालवैनेयानां रूपकायसंदर्शनवैनेयानां प्रत्यु-
पासनवैनेयानामनुबोधनवैनेयानां विविधविकुर्वितप्रातिहार्यसंदर्शनवैनेयानामचिन्त्यविकुर्वित-
प्रातिहार्यविज्ञप्तिसंदर्शनवैनेयानां सत्त्वानामाशयवशेन कालवशेन अकुशलकर्मविवर्तनवशेन
30 कुशलधर्मसंभवप्रतिष्ठापनवशेन पूर्वमहाप्रणिधानाभिनिर्हारवशेन सर्वज्ञतावेगवशेन बोधिसत्त्व-
विमोक्षविपुलविकुर्वितप्रतिलाभधर्मवशेन सर्वजगत्परित्राणस्वभिनिर्हृतमहाकरुणाबलसंभववशेन
महामैत्रीसागरविशुद्धिसंजननाशयवशेन प्रवर्तयामि तथागताधिष्ठानसुप्रतीच्छितत्वात् ॥

---

1 B om. महा वर्णा

एवमहं कुलपुत्र अस्मिन् सर्वसत्त्वपरिपाकयथाशयकुशलमूलसंचोदनबोधिसत्त्व-विमोक्षे प्रतिष्ठाय अविभक्तरूपधर्मतामवतीर्य अनन्तमध्यकायवर्णसंस्थानतां संदर्शयित्वा एकैकस्माच्चर्याकायादनन्तमध्यान् वर्णसमुद्रालोकविज्ञप्त्या एकैकस्माच्चर्यावर्णादनन्तमध्यान् रश्मिमेघानवसृज्य बुद्धक्षेत्रप्रतिभासान् दर्शयित्वा एकैकस्मिंश्च बुद्धक्षेत्रे अनन्तमध्यामैकैकस्मा-द्देशैरनन्तमध्यान् तथागतोत्पादान् संदर्शयित्वा एकैकस्य च तथागतस्य अनन्तमध्यानि 5 विकुर्वितानि संदर्शयमाना पूर्वकाणि कुशलमूलानि संचोदयामि। अनवरोपितानि च कुशलमूलान्यवरोपयामि। अवरोपितानि च विपुलीकरोमि। विपुलीकृतानि च कुशलमूलानि विवर्धयामि। प्रतिचित्तक्षणं च अनन्तमध्यं सत्त्वधातुमनुत्तरायां सम्यक्संबोधौ अविनिवर्त्य-भूमौ प्रतिष्ठापयामि॥

यत्पुनः कुलपुत्र एवं वदसि–कियच्चिरसंप्रस्थितासि देवते अनुत्तरायां सम्यक्संबोधौ? 10 कियन्ति कल्पशतान्युपादाय बोधिसत्त्वचारिकां चरसि? इत्येतदपि तेऽर्थं निर्देक्ष्यामि बुद्धानु-भावेन। अकल्पाविकल्पपरिकल्पविषयं कुलपुत्र बोधिसत्त्वानां ज्ञानमण्डलम्। न तत्र संसार-दीर्घता वा संसारह्रस्वता वा प्रभाव्यते प्रज्ञायते। कल्पसंक्लिष्टता वा कल्पविशुद्धता वा कल्प-परीत्तता वा कल्पमहद्गतता वा कल्पबहुत्वं वा कल्पनानात्वं वा कल्पनानाकरणं वा कल्प-विमात्रता वा प्रभाव्यते प्रज्ञायते वा। तत्कस्य हेतोः? प्रकृतिस्वभावपरिशुद्धं कुलपुत्र बोधि- 15 सत्त्वानां ज्ञानमण्डलं सर्वसंज्ञाजालविनिर्मुक्तं सर्वावरणपर्वतसमतिक्रान्तमाशये उदेति। तच्च सर्व-सत्त्वानां यथाशयपरिपाककालवैनेयानामवभासं करोति। तद्यथा कुलपुत्र सूर्यमण्डले रात्रिंदिव-संख्या न विद्यते, न संवसति। अस्तंगमिते सूर्यमण्डले रात्रिः प्रज्ञायते प्रभाव्यते। उद्गते च सूर्यमण्डले दिवसः प्रज्ञायते प्रभाव्यते। एवमेव कुलपुत्र अविकल्पे बोधिसत्त्वज्ञानमण्डले सर्वकल्पविकल्पपरिकल्पा न संविद्यन्ते। सर्वसंसारसंवसनसंज्ञागतानि सर्वाध्वानश्च संविद्यन्ते। 20 अथ च पुनर्बोधिसत्त्वाशयोदिता विकल्पज्ञानमण्डलप्रभेन सर्वसत्त्वपरिपाककालवशेन कल्पसंवाससंसारसंज्ञागतगणनासंख्या प्रभाव्यते। अविकल्पज्ञानमण्डले पूर्वान्तापरान्तकल्प-संवाससंज्ञागतसंख्या प्रभाव्यते। तद्यथा कुलपुत्र सूर्यमण्डलं गगनतलगतं सर्वरत्नपर्वतेषु सर्वरत्नद्रुमेषु सर्वरत्नराजेषु सर्वरत्नाकरेषु सर्वसागरेषु सर्वोत्ससरःसु सर्वस्वच्छजलभाजनेषु सर्वजगच्चित्तेषु च प्रतिभासप्राप्तं विज्ञायते। सत्त्वानां चाभिमुखं समुदागच्छति। सर्वरत्नपर- 25 माणुरजःसु च सूर्यमण्डलं प्रतिभासप्राप्तं दृश्यते। न च पुनस्तत्सूर्यमण्डलं रत्नपर्वतेषु संभवति, न रत्नद्रुमेषु यावन्न परमाणुरजःस्वनुप्रविशति। न मणिस्फटिकेष्वन्तर्गतं भवति। न रत्नाकरेष्वनुगच्छति। न सागरेष्ववतरति। न सर्वोदकभाजनेष्वनुप्रविशति। सर्वत्र चान्तर्गतं दृश्यते। एवमेव कुलपुत्र बोधिसत्त्वो महासत्त्व उच्चलितो भवसमुद्रादुद्गतस्तथागतधर्मधातुगगने धर्मस्वभावगगनगोचरविहारी शान्तगगननिलयः सर्वभवगत्युपपत्तिषु संदृश्यते सर्वसत्त्वसदृशे 30 काये सत्त्वानां परिपाकविनयमुपादाय। न च संसारदोषैर्लिप्यते, न च्युत्युपपत्तिदुःखैरुपतप्यते, न च कल्पविकल्पे संवसति, न चास्य कल्पे दीर्घसंज्ञा भवति न ह्रस्वसंज्ञा। तत्कस्य हेतोः?

तथा हि बोधिसत्त्वोऽत्यन्तमविपर्यस्तसंज्ञाचित्तदृष्टिविपर्यासमतिक्रान्तः, स्वप्नोपमसर्वलोकयथाभूतज्ञानदर्शी मायोपमसर्वलोकावतीर्णो निःसत्त्वनयधर्मधातुज्ञानप्रतिलब्धो यथाभूतधर्मदर्शी सुविपुलकरुणामण्डलमहाप्रणिधानवशेन सर्वसत्त्वाभिमुखः संदृश्यते परिपाकविनयमुपादाय ॥

तद्यथा कुलपुत्र महानद्यादिषु यानपात्रं सततसमितं सत्त्वसंतारणाय प्रयुक्तमप्रतिप्रस्रब्धं भवति, यावज्जीवं न चास्य अपारिमे तीरेऽभिनिवेशो भवति न पारिमे, न चोदकमध्ये संतिष्ठते, एवमेव कुलपुत्र बोधिसत्त्वो महापारमितायानपात्रबलेन संसारनदीस्रोतसः सर्वसत्त्वसंतारणाय प्रतिपन्नो भवति । न चास्य अपारिमे तीरे उत्त्रासो भवति, न पारिमे तीरे क्षेमसंज्ञा । अथ च पुनः सततसमितं सत्त्वसंतारणाय प्रतिपन्नो भवति । अपरिमितसर्वकल्पव्यवसितेन बोधिसत्त्वचर्यासंवासेन च कल्पविमात्रतामभिनिविशते । न कल्पातिक्रमणदीर्घसंज्ञायामभिनिविष्टो बोधिसत्त्वचर्यायां चरति ॥

तद्यथा कुलपुत्र धर्मधातुविपुल आकाशधातुगगनमण्डलं सर्वलोकधातुषु संवर्तमानेषु विवर्तमानेषु व्यतिवृत्तेषु वा अविकल्पं प्रकृतिविशुद्धमसंक्लिष्टमनावृतमखिलमदीर्घमनवतीर्णमपरान्तकालं सर्वक्षेत्राणि धारयमाणम्, एवमेव कुलपुत्र बोधिसत्त्व आशयज्ञानगगनतलमण्डलं महाप्रणिधानवातमण्डलीपरिवृतं सर्वदुर्गतिप्रपातेभ्यः सत्त्वान् संधारयमाणं न परिखिद्यते, सुगतिपथमुपनयमानो न परित्रस्यति, सर्वज्ञतापथेषु प्रतिष्ठापयमानो नावसीदति, सर्वक्लेशैर्नाकुलीभवति, संसारदोषैर्नोपलिप्यते ॥

तद्यथा कुलपुत्र मायागतनिर्वृत्तस्य पुरुषस्य सर्वाङ्गप्रत्यङ्गपरिपूर्णस्य दश शरीरस्था धर्मा न संविद्यन्ते । कतमे दश ? यदुत आश्वसितं वा निःश्वसितं वा, शीतं वोष्णं वा, क्षुधा वा पिपासा वा, हर्षो वा मन्युवृतभावो वा, जातिजराव्याधिमरणं वा पीडा वा न संविद्यते । एवमेव कुलपुत्र बोधिसत्त्वस्य ज्ञानमायागतनिर्यातरूपस्यासंभिन्नधर्मधातुकायस्य सर्वभवगतिसूपपन्नस्य सर्वसत्त्वपरिपाकस्य सर्वकल्पान् संवसमानस्य दश धर्मा न संविद्यन्ते । कतमे दश ? यदुत संसाराभिलापो वा संसारभवगत्युपपत्तिनिर्वेदो वा विषयरत्यनुनयो वा प्रतिघातचित्तता वा उपभोक्तुकामता वा सर्वक्लेशपरितापो वा दुःखवेदनानुभावो वा विषमगत्युपपत्तिभयं वा भवाभिलापो वा अभिनिवेशो वा । अपि तु खलु कुलपुत्र निर्देक्ष्यामि बुद्धानुभावेन अनागतानां च बोधिसत्त्वानां विपुलबोधिसत्त्वप्रणिधानबलविवर्धनतायै ॥

भूतपूर्वं कुलपुत्र अतीतेऽध्वनि लोकधातुसमुद्रपरमाणुरजःसमानां परेण परतरेण यदासीत्-तेन कालेन तेन समयेन रत्नप्रभा नाम लोकधातुः । तस्यां खलु पुनः कुलपुत्र रत्नप्रभायां लोकधातौ सुप्रभो नाम कल्पोऽभूत् । तस्मिन् खलु पुनः सुप्रभे कल्पे दश बुद्धसहस्राण्युपपद्यन्ते स्म । तेषां खलु कुलपुत्र दशानां बुद्धसहस्राणां प्राथमकल्पिको धर्मचक्रनिर्घोषगगनप्रदीपराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्, येन सर्वप्रथममनुत्तरा सम्यक्संबोधिरभिसंबुद्धा । स खलु पुनः कुलपुत्र तथागतो मध्ये

चातुर्द्वीपकस्य रतिव्यूहाया राजधान्या नातिदूरे उपपन्न । तस्या खलु पुना रतिव्यूहाया राजधान्या पूर्वेण सुप्रभ नाम वनपण्डमभूत् । तस्मिन् खलु पुन सुप्रभे वनपण्डे रत्नकुसुममेघो नाम बोधिमण्डोऽभूत् । तस्मिन् खलु रत्नकुसुममेघे बोधिमण्डे वैरोचनमणिपद्मगर्भसिंहासन प्रादुरभूत्, यत्र स भगवान् धर्मचक्रनिर्घोषगगनमेघप्रदीराजस्तथागतो निषद्य अनुत्तरा सम्यक्सबोधिमभिसबुद्ध । तेन च समयेन मनुष्याणा दश वर्षसहस्राणि आयु - ⁵ प्रमाणमभूत् । अथ प्राणातिपातिषु सर्वेषु लोके प्रादुर्भूतेषु अदत्तादायिषु काममिथ्याचारिषु मृषावादिषु पैशुनिकेषु पारुषिकेषु सभिन्नप्रलापिषु अभिध्यालुषु व्यापन्नचित्तेषु मिथ्यादृष्टिषु, एव दशस्वकुशलेषु कर्मपथेषु विपुलीभूतेषु सुप्रतिष्ठितेषु स भगवान् धर्मचक्रनिर्घोषगगनमेघप्रदीपराजस्तथागत परिपूर्णं वर्षसहस्र बोधिमण्डगतो बोधिसत्त्वाना धर्मं देशयामास लोकेन्द्राणा च पूर्वजिनकृताधिकाराणा जम्बुद्वीपकाना च मनुष्याणा कुशलमूलपरिपाचनाय ॥ 10

तेन च समयेन तस्या रतिव्यूहाया राजधान्या जयप्रभो नाम राजा अभूत् । तेन अदत्तादायिना पुरुषाणा चौराणा किल्बिषकारिणा प्राणातिपातिना काममिथ्याचारिणा मृषावादिना पैशुनिकाना पारुषिकाणा सभिन्नप्रलापिना अभिध्यालूना व्यापन्नचित्ताना मिथ्यादृष्टिकानामधर्मरागरक्ताना विषमलोभाभिभूताना मिथ्याधर्मपरिगताना कृतपापाना कृतरौद्राणामकृतपुण्यानामकृतभयभीरुत्राणानाममातृज्ञानामपितृज्ञानामश्रामण्यानामब्राह्मण्यानाममनार्यज्ञानामपराधिनामनेकानि शतसहस्राणि चारके प्रक्षिप्तान्यभूवन् दमनार्थाय । राज्ञ खलु पुन जयप्रभस्य विजितावी नाम पुत्रोऽभूदभिरूप प्रासादिको दर्शनीय परमशुभवर्णपुष्कलतया समन्वागतोऽष्टाविंशतिभिर्महापुरुषलक्षणैरुपेत । अथ स सरस्वतिसगीतिप्रासादाभिरूढो महास्त्रीगणपरिवारपरिवृत तेषा चारकावरुद्धाना सत्त्वाना विविधगाढबन्धनबद्धाना भैरवमुक्रोशशब्दमश्रौषीत् । श्रुत्वा च पुनरुद्विग्न सविग्नचित्तो महाकरुणा- 20 सजात तस्मात्प्रासादादवतीर्य तच्चारके प्रविश्य अद्राक्षीत्तांश्चारकगहनप्रक्षिप्तान् सत्त्वान् नानाहडिनिगडकटकखुण्डलशृङ्खलाखलीनबन्धनबद्धान् परस्परशरीरविनिबद्धान् महान्धकारप्रक्षिप्तान् धूमतिमिरावृतान् विषमवातोपहतशरीरान् धमनीसततगात्रान् क्षुत्पिपासापरिपीडितान् नग्नान् निर्वसनान् पांशुरज सप्रक्षिप्तशरीरांश्च केशाभिच्छादितकायान् करुनिगडबन्धनबद्धान् विविधा कारणा कार्यमाणान् दु खवेदनामनुभवमानाननेकविधान् 25 कारणान् परिदेवविप्रलापान् प्रमुञ्चमानान् । तान् दृष्ट्वा महत्कारुण्यमुत्पाद्य उदारकरुणाशयसजात परहिताधानोद्भुतचेताश्चारकगहनगतान् सत्त्वान् समाश्वासयामास बन्धनविप्रमोक्षाय । स तेषां सत्त्वानामभय दत्वा येन राजा जयप्रभस्तेनोपसक्रम्य एवमाह—यत्खलु देवो जानीयात्—मया बन्धनागारबन्धनगतानां सत्त्वानां कारुण्यादभय दत्तम् । ते मुच्येरन् । अथ जयप्रभेण राज्ञा सर्वाणि पञ्चामात्यशतानि सनिपात्य परिपृष्टानि— 30 युष्माक कथ भवति ? त आहु —एते राजकोशविलोपिनो राज्ञो वधाय पराक्रान्ता । राज्ञोऽन्त पुरे पराक्रमन्तो गृहीता । वधार्हा एते । अथ एषां दण्डो बन्धनगतानां वा मरणं । योऽप्येषामनुग्रहाय प्रतिपद्यते, सोऽपि राज्ञोऽपराधी ॥

अथ खलु स विजितावी राजपुत्रो महाकरुणापरिपीडितस्तानमात्यान् प्रोवाच—तथास्तु यथा यूयं वदथ। तदयोत्सृजतैतानपराधिनः पुरुषान्। अहमेषामर्थाय सर्वदुःखवेदनां समोढुमुत्सहे। यद्‌ युष्माभिरेषां करणीयं तन्मम कुरुत। अहमेषां बन्धनविप्रमोक्षाय विविधकारणापरिगतं कायजीवितं परित्यजामि। तत्कस्य हेतोः[2] ? यद्यहमेतान् सत्त्वा-
5 नस्माद्बन्धनान्न शक्नोमि मोचयितुम्, तत्कथं शक्यं त्रैधातुकबन्धनागारगतान् सत्त्वांस्तृष्णा-
पाशविनिबद्धान् अविद्यागहनगतान् मोहान्धकारप्रक्षिप्तान् दारिद्र्यदुःखसमपीडितान् गम्भीर-
गहनदुर्गतिप्रतिपन्नान् विसंस्थितविवर्णशरीरान् निरस्तसर्वेन्द्रियप्रयोगान् विभ्रान्तमानसान्
अनिःसरणदर्शिनः आलोकविरहितांस्त्रैधातुकाभिनिविष्टान् पुण्यज्ञानसंभारविकलान्
ज्ञानायतनपरिभ्रष्टान् नानाक्लेशमलिनचित्तान् दुःखपञ्जरप्रक्षिप्तान् मारवशगतान् जातिजरा-
10 मरणशोकपरिदेवदुःखदौर्मनस्योपायासप्रपीडितान् परिमोचयितुम्॥

अथ खलु विजितावी राजकुमारस्तान् सर्वान् बन्धनगतान् सत्त्वांस्तस्माद्बन्धना-
गारात्परिमोचयति स्म आत्मपरित्यागेन सर्वपरिवारेण सर्वधनस्कन्धेन। स तान्
परिमोच्य येषां सत्त्वानां दुःखोपधानं तदुत्सृज्य न विनिवर्तयते स्म। अथ तानि पञ्चा-
मात्यशतान्यूर्ध्वबाहूनि उत्क्रोशमानानि जयप्रभं राजानमुपसंक्रम्य एवमाहुः—यत्खलु देवो
15 जानीयात्—विजिताविनः कुमारस्य च्छन्देनायं राजकोशो विलुप्यते। अस्माकमपि सर्वेषां
जीविते संशयः। यदि देवो विजिताविनो राजकुमारस्य निग्रहं न करिष्यति, देवस्य
नचिरेण जीवितं न भविष्यति॥

अथ खलु जयप्रभो राजा कुपितो विजिताविनं राजकुमारं सह तैरपराधिभिः
पुरुषैर्वध्यान् सृष्टवान्। तस्य माता जनेत्री तच्छ्रुत्वा उद्विग्ना स्त्रीसहस्रपरिवृता प्रमुक्तकेशी
20 निराभरणगात्री स्वमुखं व्यालुप्य उरस्ताडयन्ती पांशुविकीर्णशिरस्का क्रन्दमाना आर्तस्वरं
रुदन्ती राजानमुपसंक्रम्य सपरिवारा चरणयोर्निपत्य एवं विज्ञापयामास—प्रमुञ्च देव विजिताविनं
राजकुमारम्। देहि देव कुमारस्य जीवितम्। अथ राजा विजिताविनं कुमारं संमुखं
स्थापयित्वा एवमाह—उत्सृज कुमार एतानपराधिनो मनुष्यान्। यदि नोत्स्रक्ष्यसि, तदेषामर्थाय
वधमुपगमिष्यसीति। स वधमभ्युपगतवानसंलीनेन चित्तेन असंकुचितेन सर्वज्ञतारम्बण-
25 प्रयुक्तेन परहितपरिणतेन महाकरुणापूर्वंगमेन। तस्य जनेत्र्या राजा जयप्रभोऽर्धमासं
याचितो दर्शनाय—अर्धमासं कुमारो दानं ददातु यस्य येनार्थः। ततो यथाकामं करणीयं
भवतु तत्त्वयेति राज्ञानुज्ञातम्। अथ तस्या रतिव्यूहाया राजधान्या उत्तरेण पूर्वयज्ञवाटप्रकृतं
सूर्यप्रभं नाम महोद्यानम्। तत्र कुमारोऽभिनिष्क्रम्य यस्य येनार्थस्तस्य तत्प्रादात्। तेन
निरर्गलं यज्ञं यजता अर्धमासं विविधा दानविधयो दत्ताः। अन्नमन्नार्थिभ्यः पानवस्त्रपुष्पमाल्यविले-
30 पनचूर्णचीवरच्छत्रध्वजपताकारत्नाभरणविविधविभूषणसर्वोपकरणविषयस्तदर्थिभ्यो विसृष्टः॥

ततः पश्चिमे दिवसे सर्वजनकायः संनिपतितः। राजामात्यस्त्रीगणश्रेष्ठिगृहपति-

१ S महार्थं २ S विग्रह

नैगमजनपदा सर्वपाषण्डाश्च संनिपतिता । स च भगवान् धर्मचक्रनिर्घोषगगनमेघप्रदीपराजस्तथागतः सत्त्वपरिपाकविनयकालमागमय्य तं यज्ञवाटमुपसंक्रान्तो देवेन्द्रगणपरिवृतो नागेन्द्रगणपरिवृतो नागेन्द्रसंपूजितो यक्षेन्द्रकायाभिनतो गन्धर्वेन्द्राभिष्टुतोऽसुरेन्द्रप्रणतशरीरश्चूडामणिविभूषितप्रसन्नचित्तो गरुडेन्द्रपूजाविधिभिरभिप्रकीर्णः प्रीतिमनोभिः किंनरेन्द्रैः परिपूजितः स्तुतिसंगीतिसंचोदितो महोरगेन्द्रसंप्रेक्षितावलोकितवदनः । अद्राक्षीत् स 5 महाजनकायो निर्जितावी च राजकुमारस्तं भगवन्तं धर्मचक्रनिर्घोषगगनमेघप्रदीपराजं तथागतमर्हन्तं सम्यक्संबुद्धं दूरत एवागच्छन्तं प्रासादिकं दर्शनीयं शान्तेन्द्रियं शान्तमानसं गुप्तं जितेन्द्रियं नागमिव सुदान्तं ह्रदमिवाच्छं विप्रसन्नमनाविलं महता बुद्धविकुर्वितप्रातिहार्येण महत्या बुद्धवृषभितया विरोचयमानं बुद्धाधिपतेयेनाभिभवन्तं बुद्धमाहात्म्यतया प्रभासयमानं महाबुद्धलक्षणानुव्यञ्जनविभूषणोपशोभितकायं सर्वलोकं बुद्धप्रभामण्डलाव- 10 भासेन स्फरमाणं बुद्धरश्मिभिरवभासयमानं सर्वरोमविवरेभ्यो गन्धरत्नार्चिश्चक्राणि प्रमुञ्चमानं बुद्धक्षेत्रप्रकम्पनेन सर्वलोकं संकम्पयमानं सर्वव्यूहमेघप्रवर्षणेन बुद्धविक्रमेण सर्वसत्त्वक्लेशप्रजहनेन बुद्धेर्यापथेन सर्वसत्त्वप्रीतिवेगविवर्धनेन बुद्धदर्शनप्रभावेनोपसंक्रममाणम्। दृष्ट्वा च भगवतोऽन्तिके चित्तमभिप्रसादयामासुः ॥

अथ खलु निर्जितावी राजकुमारः स च महान् जनकायस्तं भगवन्तं धर्मचक्र- 15 निर्घोषगगनमेघप्रदीपराजं तथागतं दूरादेव प्रत्युद्गम्य प्रसन्नचित्तः सर्वशरीरेण प्रणिपत्य पादौ शिरसाभिवन्द्य अनेकविधया पूजया संपूज्य एवं वाचमभाषत–एहि भगवन्, एहि सुगत । समन्वाहृताः स्म तथागतेन, अनुपरिगृहीताः स्म सुगतेन । अथ खलु निर्जितावी राजकुमारस्तस्य भगवतोऽग्रासनमुपदर्शयन् एवमाह–निषीदतु भगवान् । इदमासनं प्रज्ञप्तम् । ततो भगवत उपसंक्रामतस्तदासनं शुचिगर्भशरीरकायिकाभिर्देवताभिर्बुद्धानुभावेन गन्धमणि- 20 राजपद्मगर्भमधिष्ठितम् । न्यषीदद्भगवान् धर्मचक्रनिर्घोषगगनमेघप्रदीपराजस्तथागतस्तत्रासने, आसनपरिवारेषु च बोधिसत्त्वाः । तस्य सहदर्शनेन तस्यां पर्षदि सर्वेषां सत्त्वानां सर्वव्याधयः प्रशान्ताः, सर्वावरणविवरणविगताश्चार्यधर्माणां भाजनीभूताः संस्थिताः ॥

अथ खलु भगवान् धर्मचक्रनिर्घोषगगनमेघप्रदीपराजस्तथागतस्तान् सत्त्वान् भाजनभूतान् विदित्वा अनुपूर्वेण कथामकार्षीत् । यदुत हेतुमण्डलप्रभासं नाम सूत्रान्तं संप्रकाशयामास । सत्त्वाङ्गसहस्रसंप्रयुक्तं च वदनान्तराद् सर्वधर्माङ्गसंप्रयुक्तं सर्वजगन्मन्त्रसागरनिरुक्तिनिर्नादनिर्घोषं निश्चारयामास । अथ तावदेव तत्र पर्षदोऽशीतीनां प्राणिनियुतानां विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नम् । बहुभिश्च प्राणिनियुतैरशैक्षभूमिरनुप्राप्ता । दश च प्राणिसहस्राणि महायाने विनीतानि, यदुत समन्तभद्रबोधिसत्त्वचर्यामहाप्रणिधानपरिपूरिनयेऽवतारितानि । एवं तस्य भगवतो महाबुद्धविकुर्वितेन धर्मचक्रं प्रवर्तयमानस्य दशसु 30 दिक्षु बुद्धक्षेत्रशतसहस्रपरमाणुरजःसमाः सत्त्वा महायाने विनयमगमन् । अनन्ताश्च सत्त्वा दशदिशि लोके नानाबुद्धक्षेत्रप्रसरसमवसरणेष्वपायभूमिं विनिवर्तयामासुः ।

गणनासमतिक्रान्ताश्च सत्त्वा स्वर्गोपपत्तिपथे प्रतिष्ठापिता अभूवन्। विजितावी च राजकुमार इमं सर्वसत्त्वपरिपाकयथाशयसंचोदनकुशलमूलसंभवं बोधिसत्त्वविमोक्षं प्रत्यलभत॥

स्यात्खलु पुनस्ते कुलपुत्र-अन्यः स तेन कालेन तेन समयेन विजितावी राजकुमारो-ऽभूत्, येन तत्स्वकायजीवितं परित्यज्य सर्वधनस्कन्धपरिवारं परित्यज्य सर्वमानुष्यकं च जीवलोकसुखं परित्यज्य ते बन्धनगताः सत्त्वाः तस्माद्बन्धनात् परिमोक्षिताः। स च निर्गलो महायज्ञो यष्टः। स च भगवान् धर्मचक्रनिर्घोषगगनमेघप्रदीपराजस्तथागतोऽर्हन् सम्यक्संबुद्ध आरागितः। तस्य च तथागतस्य सहदर्शनेनानुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। एष च सर्वसत्त्वपरिपाकयथाशयसंचोदनकुशलमूलसंभवो बोधिसत्त्वविमोक्षः प्रतिलब्धः। न खलु पुनस्ते कुलपुत्र एवं द्रष्टव्यम्। अहं स तेन कालेन तेन समयेन विजितावी नाम 10 राजकुमारोऽभूवम्। मया तद्विजितावीराजकुमारभूतेन महाकरुणाप्रपीडितेन सर्वजगद्धित-प्रतिपन्नेन त्रैधातुकानिश्रितेन विपाकाप्रतिकाङ्क्षिणा यशस्कीर्तिनामानभिनन्दिना आत्मान-मनुत्कर्षयता परमपंसयता सर्ववस्तुष्वनभिनिविष्टेन भवसमुद्रोच्चलितेन त्रैधातुकानभिनन्दिना लोकविषयसुखविमुखेन तथागतविषयाविमुखेन बोध्याशयविशुद्धेन अध्याशयवज्रपरिनिष्पन्नेन सर्वजगन्महामैत्रीप्रयोगेन सर्वजग-महाकरुणादुःखव्युपशमसंप्रयुक्तेन तथागतबलाध्याशय-15 मध्यालम्बता बोधिसत्त्वमार्गं परिशोधयता महायानव्यूहनिर्याणपथमनुवर्तता सर्वज्ञतामार्ग-मभिविलोकयता इमान्येवं दुष्कराणि कृतानि। एवं चिरप्रतिलब्धः कुलपुत्र मयैष सर्वसत्त्व-परिपाकयथाशयसंचोदनकुशलमूलसंभवो बोधिसत्त्वविमोक्षः॥

तत्किं मन्यसे कुलपुत्र-अन्यानि तानि तेन समयेन पञ्चामात्यशतान्यभूवन्, यैः स राजा जयप्रभो वितथं विज्ञाप्य मम वधायोद्योजितः। न खल्वेवं द्रष्टव्यम्। इमानि 20 तानि पञ्च पुरुषशतानि यानि देवदत्तेन भगवतो वधायोद्योजितानि। तानि च भगवता विनीय अनुत्तरायां सम्यक्संबोधौ व्याकृतानि-भविष्यन्त्यनागतेऽध्वनि सुमेरुपरमाणुरज-समैः कल्पैः एकस्मिन् सुप्रभनामधेये कल्पे पञ्च बुद्धशतानि नानाबुद्धक्षेत्रगुणव्यूहानि नानाजन्मकुलगोत्रसमन्वितानि नानामातापितृव्यपदेशानि नानाजन्मविकुर्वितसंदर्शनानि नानाभिनिष्क्रमणविकुर्वितानि नानाबोधिवृक्षप्रभासदर्शनानि नानाबोधिमण्डोपसंक्रमणमुखानि 25 नानामारभङ्गसंदर्शनानि नानाभिसंबोधिविकुर्वितसंदर्शनानि नानाधर्मचक्रप्रवर्तननयनाम-निर्वर्तीनि नानासूत्रान्तनयनिर्देशानि नानावाक्पथरुतोदाहाराणि नानापर्षन्मण्डलव्यूहानि नानाप्रभामण्डलप्रभाव्यूहप्रमुञ्चनानि नानायुःप्रमाणानि नानाशासनाधिष्ठानानि नाना-शासनविज्ञप्तीनि नानानामधेयानि महाकरुणाशरीराणि, येषां प्राथमकल्पिको महाकारुणिको नाम तथागतो रत्नप्रभायां लोकधातावनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। तस्यानन्तरं 30 लोकाभासो द्वितीयः सर्वजगद्धितप्रणिधानचन्द्रो नाम तथागत उत्पत्स्यते। तृतीयो महा-

---

१ S गर्भगर्भदन्त°

करुणासिंहो नाम तथागत उत्पत्स्यते । चतुर्थः सर्वलोकहितैषी नाम तथागत उत्पत्स्यते । यावत्सर्वपश्चिमो वैद्यराजो नाम तथागत उत्पत्स्यते ॥

तत्किं मन्यसे कुलपुत्र–अन्ये ते तेन कालेन तेन समयेन अपराधिनः पुरुषा राजकिल्बिषकारिणोऽभूवन् ये ते मया वध्यघातवशगताः स्वकायजीवितं परित्यज्य ततो बन्धनात् परिमोक्षिताः ? न खल्वेवं द्रष्टव्यम् । इमे ते क्रकुच्छन्दपूर्वंगमा भद्रकल्पिकास्तथागताः । तदन्यानि च दश बोधिसत्त्वासंख्येयशतसहस्राणि यैर्भगवतोऽनन्तबलविघुष्टनिर्नादितश्रीसंभवमतेस्तथागतस्य दर्शनेन अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्, यान्येतर्हि दशसु दिक्षु बोधिचर्यां चरन्ति । इमे च सर्वसत्त्वपरिपाकयथाशयसंचोदनकुशलमूलसंभव बोधिसत्त्वविमोक्ष भावयन्ति विपुलीकुर्वन्ति ॥

तत्किं मन्यसे कुलपुत्र–अन्यः स तेन कालेन तेन समयेन जयप्रभो नाम राजा अभूत् ? न खल्वेन द्रष्टव्यम् । सत्यकः स महावादी तेन कालेन तेन समयेन जयप्रभो नाम राजा अभूत् । तत्किं मन्यसे कुलपुत्र–अन्यः स तेन कालेन तेन समयेन राजपरिवारोऽभूदन्तःपुरव्यागारदौवारिकपार्षद्या वा अनुयात्रिका या [1] न खल्वेवं द्रष्टव्यम् । इमानि तानि षष्टिर्निर्ग्रन्थसहस्राणि, यानि सत्यकेन महावादिना भगवतः सकाशमुपनीतानि, वादिध्वजधारणतया भगवतो वादायोपसंक्रान्तानि । तानि च सर्वाणि भगवता व्याकृतान्यनुत्तरायां सम्यक्संबोधौ । नानाबुद्धक्षेत्रव्यूहैर्नानाकल्पैर्नानानामधेयैस्तथागता लोके उत्पत्स्यन्ते ॥

स खलु पुनः कुलपुत्र निर्जितारी राजकुमारो मातापितृभ्यामनुज्ञातस्तान् बन्धनगतान् सत्त्वान् परिमोच्य स्फीतां वसुमतीं धनकनकरत्नसमृद्धामपहाय पुत्रदारं चोत्सृज्य तस्य भगवतो धर्मचक्रनिर्घोषगगनमेघप्रदीपराजस्य तथागतस्यान्तिके प्राव्रजत् । प्रव्रजित्वा पञ्च वर्षसहस्राणि ब्रह्मचर्यमचरत् । एतस्मिन्नन्तरे दश समाधिमुखसहस्राणि समनिष्पादयामास । दश च धारणीमुखसहस्राणि प्रत्यलभत । दश च अभिज्ञानयसहस्राण्यवक्रान्तानि । दश बोधिसत्त्वमहाभिज्ञासहस्राणि प्रतिलभते स्म । दश चास्य सर्वज्ञतानयसहस्राण्याजातानि । दश चानेन क्षान्तिमुखसहस्राणि परिशोधितानि । दश चित्तनिष्पत्तिसहस्राण्यभिनिर्हृतानि । दश च बोधिसत्त्वबलशरीराणि संवर्धितानि । दश च बोधिसत्त्वज्ञानमुखसहस्राण्यवक्रान्तानि । दश चास्य प्रज्ञापारमितानयसहस्राण्याजातानि । दश च बुद्धसहस्रदर्शनदिङ्मुखसहस्राण्यामुखीभूतानि । दश च अनेन बोधिसत्त्वप्रणिधानसहस्राण्यभिनिर्हृतानि । स एव धर्मसमन्वागतः प्रतिचित्तक्षणे दशसु दिक्षु दशबुद्धक्षेत्रसहस्राण्याक्रामति स्म । एकैकस्यां च लोकधातौ चित्तक्षणे चित्तक्षणे दश बुद्धसहस्राणि पूर्वान्तापरान्ततोऽनुस्मरति स्म । तेषां च तथागतानां दश बुद्धनिर्माणसमुद्रसहस्राणि दशदिक्प्रसृतान्यवतरन्ति स्म । चित्तक्षणे चित्तक्षणे दश बुद्धक्षेत्रसहस्रपर्यापन्नान् सर्वसत्त्वानद्राक्षीत् । नानागत्युपपन्नां-

---

1 S वादिप्रथम°.

च्यवत उपपद्यमानान् हीनान् प्रणीतान् सुगतान् दुर्गतान् सुवर्णान् दुर्वर्णान् यथाकामोपगतान् । तेषां च सत्त्वानां च्युत्युपपत्तीरवतरति स्म । चित्तपरिवर्तान् चित्त चरितानि चिन्तानन्तर्यतामाशयनानात्वमिन्द्रियसागरानपि प्रयोगप्रसरानपि कर्मावसानमपि परिपाकविनयकालमपि अवतरति स्म ॥

5 स खलु पुनः कुलपुत्र विजितावी राजकुमारस्ततश्च्युत्वा तत्रैव जम्बुद्वीपे रतिव्यूहायां राजधान्यां तस्मिन्नेव राजकुले उपपद्य चक्रवर्तिराज्यैश्वर्यं प्रत्यलभत । तेन चक्रवर्तिराजभूतेन तस्य भगवतो धर्मचक्रनिर्घोषगगनमेघप्रदीपराजस्य तथागतस्य परिनिर्वृतस्यानन्तरं धर्मगगनाभ्युद्गतश्रीराजो नाम तथागत आरागितः । तस्यानन्तरं तत्रैव बोधिमण्डे शक्रभूतेन देवेन्द्रगर्भो नाम तथागत आरागितः । तस्यानन्तरं तत्रैव लोकधातौ सुयामदेवराजभूतेन 10 धरणीश्रीपर्वततेजो नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव लोकधातौ संतुषितदेवराजभूतेन धर्मचक्रप्रभनिर्घोषराजो नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव लोकधातौ सुनिर्मितदेवराजभूतेन गगनकान्तराजो नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव लोकधातौ वशवर्तिदेवराजभूतेनानवमर्द्यध्वजकेतुर्नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव लोकधातावसुरेन्द्रभूतेन सर्वधर्मनिगर्जितराजो नाम तथागत आरागितः । 15 तस्यानन्तरं तस्मिन्नेव लोकधातौ ब्रह्मेन्द्रभूतेन धर्मचक्रनिर्माणसमन्तप्रतिभासनिर्घोषो नाम तथागत आरागितः । इति हि कुलपुत्र एतांस्तथागतान् प्रमुखान् कृत्वा तस्यामेव रत्नप्रभायां लोकधातौ तस्मिन्नेव सुप्रभे कल्पे दश बुद्धसहस्राण्युदपद्यन्त । सर्वे च ते तथागता विजिताविना राजकुमारेणारागिताः । तस्य खलु पुनः कुलपुत्र सुप्रभस्य महाकल्पस्यानन्तरं सुरश्मिर्नाम कल्पोऽभूत् । तस्मिंश्च सुरश्मिकल्पे दश बुद्धसहस्राण्युपपद्यन्त । अहं च 20 तस्मिन् कल्पे महामतिर्नाम राजा अभूवम् । तेन मे राजभूतेन लक्षणश्रीपर्वतो नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पे गृहपतिभूतेन सवृतस्कन्धो नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पे अमात्यभूतेन सिंहविक्रमो नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पेऽसुरेन्द्रभूतेन वेदधारी[1] नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पे वृक्षदेवताभूतेन लक्षणसुमेरुर्नाम तथागत आरागितः । तस्या25 नन्तरं तस्मिन्नेव कल्पे सार्थवाहभूतेन विमलबाहुर्नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पे नगरदेवताभूतेन सिंहविक्रान्तगामी नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पे वैश्रवणभूतेन देवेन्द्रचूडो नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पे गन्धर्वराजभूतेन धर्मोद्गतकीर्तिर्नाम तथागत आरागितः । तस्यानन्तरं तस्मिन्नेव कल्पे कुम्भाण्डेन्द्रभूतेन अवभासमकुटी नाम तथागत आरागितः ॥

30 इति हि कुलपुत्र मयैतान् दश तथागतान् प्रमुखान् कृत्वा तत्र सुरश्मिकल्पे परिवुद्धकोट्य आरागिता । नानोपपत्तिकायिकया सर्वे च मे तथागताः पूजिताः । एकैक

1 B वेदधारी

च तथागतमुपसंक्रामन्त्या अनन्तमप्यः सत्त्वधातुरनुत्तरायां सम्यक्संबोधौ परिपाचितः। एकैकं च तथागतमुपसंक्रामन्त्या नानासमाधिमुखानि प्रतिलब्धानि। नानाधारणीमुखानि नानाभिनिर्हारनया नानाप्रतिसंविन्नयाभिनिर्हारा नानासर्वज्ञतानयानुगमा नानाधर्मालोकमुखप्रतिलाभनया नानाज्ञाननयानुगमविचारा नानादिक्समुद्रप्रवेशावभासा नानाक्षेत्रसमुद्रावतारप्रवेशावभासा नानातथागतदर्शनसमुद्रविज्ञप्त्यवभासाः प्रतिलब्धाः, अवक्रान्ता विशुद्धाः 5 संवर्धिताः प्रसृताः प्रतिसृताः। यथा च तत्र सुरश्मिकल्पे तथागता आरागिताः, तथा सर्वत्र लोकधातुसमुद्रपरमाणुरजःसमेषु कल्पेषु ये केचित्तथागता उपपद्यन्ते, येऽपि तदन्येभ्यो लोकधातुभ्य आगत्य तथागता धर्मं देशयामासुः, तेषां मया सर्वेषां तथागतानामन्तिकाद्धर्मदेशना श्रुता, श्रुत्वा च संधारिता। सर्वे च मया ते तथागता आरागिता अभिराधिताः। तेषां च मे बुद्धानां भगवतां शासनं संधारितम्। सर्वेषां च मे तेषां तथागतानामन्तिकादेष 10 सर्वसत्त्वपरिपाकयथाशयसंचोदनकुशलमूलसंभवो बोधिसत्त्वविमोक्षः प्रतिलब्धो नानाप्रतिलाभनयनानाविमोक्षनयमुखैः॥

अथ खलु सर्वजगद्रक्षाप्रणिधानवीर्यप्रभा रात्रिदेवता तस्यां वेलायामेतं विमोक्षनयं परिदीपयन्ती संदर्शयमाना सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत—

अचिन्त्यमेतं परमं विमोक्षं 15
मां पृच्छसि त्वं खलु यत्प्रतीतः।
विनिर्दिशन्त्याः सुगतानुभावा-
च्छृणुष्व तन्मे निखिलं यथावत्॥ १२॥

कल्पाननन्तान् विपुलानचिन्त्यान्
क्षेत्रार्णवांश्चाप्रतिमानसंख्यान्। 20
सर्वानतिक्रम्य बभूव रम्या
रत्नप्रभा या खलु लोकधातुः॥ १३॥

तस्याममूत्सुप्रभनामधेयः
कल्पोऽमितानां प्रभवो जिनानाम्।
आरागितास्ते खलु मे मुनीन्द्रा 25
विमोक्षमेतं परिभावयन्त्या॥ १४॥

यस्यां रतिव्यूहसनामिकाभू-
द्दिव्यीगचित्रा वरराजधानी।
मुनिशुद्धचित्ता विषमप्रयोगाः
सत्त्वा हि यस्याममवंस्तदानीम्॥ १५॥ 30

जयप्रभोऽस्यां नृपतिर्बभूव
धर्मेण यत्नाननुशास्ति सत्त्वान्।

पुत्रोऽस्य नाम्ना विजिताग्निरासीत्
प्रासादिको लक्षणचित्रिताङ्गः ॥ १६ ॥

वधाय सृष्टानि नृपेण तेन
तदा सहस्राण्यपराधिनां हि ।
दृष्ट्वा कुमारः कृपया परीत-
स्तान् विप्रमोक्षाय नृपं ययाचे ॥ १७ ॥

श्रुत्वा नृपोऽमात्यगणं तदानी-
माहूय तेषां निखिलं तदाह ।
ते प्रोचुरेनं प्रणिपत्य सर्वे
त्वद्घातनायैष नृप प्रयोगः ॥ १८ ॥

विग्राहितस्तैर्नृपतिस्तथैवं
वधाय तं पुत्रमथोत्ससर्ज ।
अदीनवक्त्रः स्ववधानपेक्षो
वध्यानमुञ्चत् स राजसूनुः ॥ १९ ॥

श्रुत्वा वधोत्सृष्टमथास्य माता
सान्तःपुरार्ता नृपतिं ययाचे ।
मुञ्चार्धमासं नृपते कुमारं
दातुं प्रदानान्यखिलानि लोके ॥ २० ॥

दत्ताभ्यनुज्ञश्च नृपेण तेन
प्रादात्स दानानि यथोचितानि ।
रात्रिंदिवं दानमथार्धमासं
दत्त्वा दिशाभ्यः समुपागतानाम् ॥ २१ ॥

पाषण्डिनां यस्य यदीप्सितं तद्
तस्मै ददाति स्म वधाय सज्जः ।
मुक्तार्तनादाथ विनिर्जगाम
सा राजधान्या जनता समग्रा ॥ २२ ॥

सद्धर्मघोषाम्बरदीपराजो
बोधिद्रुमस्थः सुगतस्तदानीम् ।
पक्वानि ज्ञात्वा जगदिन्द्रियाणि
तं यज्ञवाटं कृपया जगाम ॥ २३ ॥

---

१ B मत्ता.

उपेत्य तस्यां परिषद्यथासौ
　तथागतव्यूहविकुर्वितेन ।
धर्मप्रदीपाम्बुदधर्मघोष-
　सूत्रान्तराजं सुगतो बभाषे ॥ २४ ॥
अनन्तमध्यां जनतां विनीय　　5
　स व्याकरोति स्म तदाग्रबोधौ ।
संप्रस्थितोऽसौ विजिताभ्युदग्रो
　राजात्मजश्चैव वराग्रबोधौ ॥ २५ ॥
आराग्य बुद्धं विपुलं च तस्मै
　विधाय पूजां मुदितो बभाषे ।　　10
द्वीपो भवेयं जगतां विनेता
　त्राणं शरण्यश्च परायणं च ॥ २६ ॥
स प्राव्रजत्तस्य मुनेः समीपे
　संबोधिमार्गं परिमार्गमाणः ।
धर्मस्वभावं सुपरीक्षमाणो　　15
　यत्र स्थितः कल्पशतानि चीर्णः ॥ २७ ॥
दुःखार्णवत्वे पतितामनाथां
　कृपायमाणो जनतामशेषाम् ।
संबोधिमार्गं परिभावयित्वा
　लभते तदानीं स विमोक्षमेतम् ॥ २८ ॥　　20
ये तत्र कल्पे सुगता बभूवु-
　राराग्य तानप्यखिलान् प्रसन्नः ।
पूजां च तेषामकरोदुदारां
　संधारयामास च धर्मचक्रम् ॥ २९ ॥
तदुत्तरे कल्पमहार्णवेषु　　25
　क्षेत्रार्णवाणुप्रतिमेष्वशेषाः ।
ये चोदयास्यन्तजिनास्तदानी-
　माराधयामास स तान् प्रपूज्य ॥ ३० ॥
अहं स आसं विजिताविनाभा
　दृष्ट्वा नरांधारकबन्धनस्थान् ।　　30
तद्विप्रमोक्षाय विसृज्य देहं
　लब्धो ममायं हि तदा विमोक्षः ॥ ३१ ॥

यो भावितः कल्पमहासमुद्रान्
क्षेत्रोदधीनां परमाणुसंख्यान् ।
प्रतिक्षणं चैव विवर्धितोऽमू-
दनन्तमध्यैरसमैर्नयैर्मिः ॥ ३२ ॥

5 दृष्टाश्च मे केचन ये मुनीन्द्राः
प्राप्तश्च यं मे निखिलेष्ववाप्तः ।
सुखैर्नयानामपरापरं च
संदर्शितोऽयं मम तद्विमोक्षः ॥ ३३ ॥

तेषामचिन्त्ये हि विमोक्षतत्त्वे
10 संशिक्षिताहं बहुकल्पकोटीः ।
प्रतिष्ठिता यत्र जिनैर्विमुक्तान्
सद्धर्ममेघान् युगपत्पिबन्ती ॥ ३४ ॥

क्षेत्राणि सर्वाण्यपि सर्वदिक्षु
स्फरन्ति कायेन असज्जमानाः ।
15 प्रतिक्षणं क्षेत्रपथेष्वचिन्त्या-
न्यथाभिधानान् प्रविशन्ति वंशान् ॥ ३५ ॥

अशेषतत्त्र्यध्वजिनार्णवाना-
मेकैकशश्चाभिमुखा भवन्ति ।
विदर्शयन्त्येव च ते जिनेषु
20 स्वकायमेघान् प्रतिबिम्बभूताः ॥ ३६ ॥

सर्वासु दिक्ष्वप्युपसंक्रमन्तो
विभान्ति ते सर्वतथागतानाम् ।
व्यूहानशेषानभिवर्षमाणाः
पूजां प्रकुर्वन्ति च ते जिनानाम् ॥ ३७ ॥

25 पृच्छन्त्यथो बुद्धसमुद्रसंख्यान्
प्रश्नोदधींस्ते विपुलाननन्तान् ।
संधारयन्त्यप्यमितान् जिनानां
ते धर्ममेघानभिवर्षमाणान् ॥ ३८ ॥

सर्वास्वशेषासु च दिक्षु यान्ति
30 चैक्षुप्पथे[1] ते जिनमण्डलेषु ।

1 B चक्षुष्पथे.

अनेकरूपासनसंनिषण्णा
नानाविकुर्वामुपदर्शयन्तः ॥ ३९ ॥
अनन्तवर्णैरपि चात्मभावैः
सहस्रशः सर्वदिशः स्फरन्ति ।
अनन्तमध्यानि विदर्शयन्ति 5
रूपाणि चाप्येकसमुच्छ्रयं ते ॥ ४० ॥
एकैकतो रोममुखादसंख्यान्
मुञ्चन्ति ते रश्मिमहासमुद्रान् ।
क्लेशाग्निदाहं शमयन्ति चैव
सर्वप्रजानां विविधैरुपायैः ॥ ४१ ॥ 10
यत्र स्थिता निर्मितकायमेघा-
नेकैकरोम्णः प्रविमुञ्चमानाः ।
तैरद्भुतैः सर्वदिशः स्फरित्वा
धर्माम्बुवर्षैर्विनयन्ति सत्त्वान् ॥ ४२ ॥
नयप्रवेशोऽयमचिन्त्यरूपः 15
समाश्रयः सर्वजिनात्मजानाम् ।
यत्र प्रतिष्ठाय चरन्ति चर्यां
क्षेत्रेषु सर्वेष्वपरान्तकल्पान् ॥ ४३ ॥
यथाशयं धर्ममुदीरयन्तः
ते दृष्टिजालाद्विनिवर्तयन्ति । 20
स्वर्गापवर्गे विनिवेश्य सत्त्वान्
सर्वज्ञभूमिं प्रविदर्शयन्ति ॥ ४४ ॥
लोकोपपत्तिष्वखिलास्वचिन्त्यै-
रनन्तवर्णैरपि चात्मभावैः ।
यथाशयं धर्ममुदाहरन्ति 25
ते सर्वसत्त्वप्रतिभासरूपाः ॥ ४५ ॥
एतांस्तथान्यानपि चाप्रमेयान्
क्षेत्रार्णवाणुप्रतिमानचिन्त्यान् ।
अच्छम्भि ते वर्णमहासमुद्रान्
विमोक्षमेतं प्रतिलभ्य शान्तम् ॥ ४६ ॥ 30

एतमहं कुलपुत्र सर्वसत्त्वपरिपाकयथाशयसंचोदनकुशलमूलसंभवं बोधिसत्त्वविमोक्षं जानामि । किं मया शक्यं सर्वलोकगतिसमतिक्रान्तानां बोधिसत्त्वानां सर्वलोकोपपत्तिप्रति-

भासप्राप्तानां सर्वज्ञज्ञानावरणपर्वतविकिरणप्रयुक्तानां सर्वधर्मस्वभावलक्षणप्रतिविद्धानां सर्वक्लेशावरणान्धकारविधमनप्रयुक्तानां सर्वधर्मप्रविचारणाभिनिर्हारकुशलमूलानां निरात्मधर्मज्ञानप्रत्यक्षाणां सर्वसत्त्वपरिपाकविनयाप्रतिप्रस्रब्धानामद्वयधर्मधातुनयसुप्रतिविद्धानां सर्ववाक्पथनयसागरानुप्रसृतबुद्धीनां चर्यां ज्ञातुं गुणसमुद्रान् वा अवतर्तुं ज्ञानविक्रमो परिज्ञातुं 5 चिन्तावस्थानं या प्रज्ञातुं समाधिवशिता वाधिगन्तुं विमोक्षविकुर्वितं वा समाज्ञातुम् ॥

गच्छ कुलपुत्र, इयमिहैव जम्बुद्वीपे लुम्बिनीवने सुतेजोमण्डलरतिश्रीर्नाम लुम्बिनीवनदेवता प्रतिवसति । तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वा जाता भवन्ति तथागतकुले? कथमालोककरा भवन्ति लोकानाम्? कथमपरान्तकोटीगतान् कल्पान् बोधिसत्त्वसंचारिकां चरन्तो न परिखिद्यन्ते?

10 अथ खलु सुधनः श्रेष्ठिदारकः सर्वजगद्रक्षाप्रणिधानवीर्यप्रभाया रात्रिदेवतायाः पादौ शिरसाभिवन्द्य सर्वजगद्रक्षाप्रणिधानवीर्यप्रभां रात्रिदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य वन्दित्वा नमस्कृत्य प्राञ्जलीकृतोऽवलोकयमानः सर्वजगद्रक्षाप्रणिधानवीर्यप्रभाया रात्रिदेवताया अन्तिकात्प्रक्रान्तः ॥ ३९ ॥



## ४२ सुतेजोमण्डलरतिश्रीः ।

अथ खलु सुधनः श्रेष्ठिदारकः सर्वजगद्रक्षाप्रणिधानवीर्यप्रभाया रात्रिदेवतायास्ता-मनुशासनीमनुस्मरन् तं सर्वसत्त्वपरिपाकनयाशयसंचोदनकुशलमूलसंभवबोधिसत्त्वविमोक्षं परिभावयन् विपुलीकुर्वन् अनुपूर्वेण येन लुम्बिनीवनं तेनोपजगाम । उपेत्य लुम्बिनीवनं प्रदक्षिणीकृत्य सुतेजोमण्डलरतिश्रियं लुम्बिनीवनदेवतां परिगवेषमाणोऽपश्यत्सुतेजोमण्डल- 5 रतिश्रियं लुम्बिनीदेवतां लुम्बिनीवनेषु सर्वरत्नद्रुमशाखामण्डलकूटागारे मणिपद्मगर्भसिंहासने निषण्णां विंशत्या वनदेवतानियुतशतसहस्रैः परिवृतां पुरस्कृतां धर्मं देशयमानां सर्वबोधि-सत्त्वजन्मसमुद्रनिर्देशं नाम सूत्रान्तं संप्रकाशयमानां तथागतगोत्राभिजातानां बोधिसत्त्वानां गुणसमुद्रवेगविवर्धनाम् । दृष्ट्वा च येन सुतेजोमण्डलरतिश्रीर्लुम्बिनीवनदेवता तेनोपजगाम । उपेत्य सुतेजोमण्डलरतिश्रीलुम्बिनीवनदेवतायाः पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः 10 स्थित्वा एवमाह—मया देवते अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि कथं बोधिसत्त्वा जाता भवन्ति तथागतकुले, कथं बोधिसत्त्वचारिकां चरन्तः सत्त्वानामालोककरा भवन्तीति ॥

एवमुक्ते सुतेजोमण्डलरतिश्रीर्लुम्बिनीवनदेवता सुधनं श्रेष्ठिदारकमेतदवोचत्—दशेमानि कुलपुत्र बोधिसत्त्वजन्मानि यैः समन्वागता बोधिसत्त्वा जाता भवन्ति तथागत- 15 कुलेषु । निर्याता बोधिसत्त्वाः प्रदक्षिणं बोधिसत्त्वकुशलैर्विवर्धन्ते, न वितिष्ठन्ते न विषी-दन्ति न विवर्तन्ते न प्रतिप्रस्रम्भ्यन्ते न परिखिद्यन्ते न संसीदन्ति न मुह्यन्ति नावलीयन्ते न परित्रस्यन्ति न प्रणश्यन्ति । अनुगच्छन्ति सर्वज्ञतादिगनुगमम् । अनुस्मरन्ति धर्मधातु-नयम् । परिपाकप्राप्ता भवन्ति बुद्धबोधौ । विपुलीकुर्वन्ति बोधिचित्तोत्पादम् । विवर्धन्ते सर्वपारमिताभिः । विवर्तन्ते सर्वलोकगतिभ्यः । संवर्तन्ते तथागतभूमौ । उत्तापयन्ति 20 ज्ञानाभिज्ञताः । आमुखीभवन्ति बुद्धधर्मेषु । अनुगतार्था भवन्ति सर्वज्ञताविषये । कतमानि दश? यदुत—सर्वबुद्धोपस्थानप्रणिधिप्रयोगगर्भं नाम प्रथमं बोधिसत्त्वजन्म । बोधिचित्ताङ्ग-परिनिष्पत्तिसंभवगर्भं नाम द्वितीयं बोधिसत्त्वजन्म । धर्मनयनिध्यप्तिप्रयोगाभिमुखसंभवगर्भं नाम तृतीयं बोधिसत्त्वजन्म । त्र्यध्वलोकाध्याशयविशुद्धिगर्भं नाम चतुर्थं बोधिसत्त्वजन्म । समन्तावभासप्रभागर्भं नाम पञ्चमं बोधिसत्त्वजन्म । सर्वतथागतकुलगोत्रसंभवगर्भं नाम षष्ठं 25 बोधिसत्त्वजन्म । बुद्धबलावभासालोकालंकारगर्भं नाम सप्तमं बोधिसत्त्वजन्म । समन्तज्ञान-मुखव्यवचारणपरिनिष्पत्तिसंभवगर्भं नामाष्टमं बोधिसत्त्वजन्म । धर्मधातुनिर्माणव्यूहगर्भं नाम नवमं बोधिसत्त्वजन्म । तथागतभूम्याक्रमणवेगगर्भं नाम दशमं बोधिसत्त्वजन्म ॥

तत्र कुलपुत्र कतमत् सर्वबुद्धोपस्थानप्रणिधिप्रयोगगर्भं नाम प्रथमं बोधिसत्त्वजन्म? इह कुलपुत्र बोधिसत्त्वः आदित एव बुद्धोपस्थानाय प्रयुज्यते सर्वबुद्धान् भगवतः सत्कुर्वन् 30 गुरुकुर्वन् मानयन् पूजयन् उपतिष्ठन् आराधयन् अविरागयन् तथागतदर्शनानिवृत्तो बुद्ध-सत्कारप्रयुक्तबुद्धप्रीतिवेगविवर्धितचेतास्तथागतदर्शनप्रसादवेगसंजातः । अनिवर्त्यया श्रद्धया

पुण्य समार्जयन् अतृप्त सर्वतथागतपूजासभारसमुदानयनप्रयुक्तोऽप्रतिप्रस्रब्धप्रयोगो भवति। इद कुलपुत्र बोधिसत्त्वाना सर्वबुद्धपूजोपस्थानप्रणिधिप्रयोगगर्भ नाम प्रथम बोधिसत्त्वजन्म सर्वज्ञतासभारकुशलमूलसभवसमार्जनतायै सवर्तते ॥

तत्र कुलपुत्र कतमद्बोधिचित्ताङ्गपरिनिष्पत्तिसभवगर्भ नाम द्वितीय बोधिसत्त्वजन्म[1] 5 इह कुलपुत्र बोधिसत्त्वोऽनुत्तराया सम्यक्सबोधौ चित्तमुत्पादयति। यदुत महाकरुणाचित्त सर्वसत्त्वपरित्राणाय। सर्वबुद्धारागणचित्तमत्यन्ताभिराधनतायै। सर्वबुद्धधर्मपर्येष्टिचित्त सर्व वस्त्वनपेक्षतायै। महाप्रस्थानचित्त सर्वज्ञताभिमुखतायै। महामैत्रीचित्त सर्वजगत्सग्रहप्रयोग स्फरणतायै। सर्वजगदपरित्यागचित्त सर्वज्ञतासनाहदृढतायै। अशाठ्यामायाचित्त यथा भूतज्ञानावभासप्रतिलम्भतायै। यथावादीतथाकारिचित्त बोधिसत्त्वमार्गप्रतिपधनतायै। सर्व 10 बुद्धाविसवादनचित्त सर्वतथागतप्रणिध्यनुपालनतायै। सर्वज्ञतामहाप्रणिधानचित्तमपरान्त कोटीगतसर्वसत्त्वपरिपाकविनयाप्रतिप्रस्रब्धये। एतत्प्रमुखैर्बुद्धक्षेत्रपरमाणुरज समैर्बोधि चित्ताङ्गसभारैरभिनिष्पन्न स बोधिसत्त्वो जातो भवति तथागतकुले। इद कुलपुत्र बोधि चित्ताङ्गपरिनिष्पत्तिसभवगर्भ नाम द्वितीय बोधिसत्त्वजन्म ॥

तत्र कुलपुत्र कतमद्बोधिसत्त्वाना धर्मनयनिध्यप्तिप्रयोगनेत्र्यभिमुखसभवगर्भ नाम 15 तृतीय बोधिसत्त्वजन्म[1] इह कुलपुत्र बोधिसत्त्व सर्वधर्मनयसभवनिध्यप्तिमुखचेता सर्व ज्ञतामार्गाकारप्रतिपूर्यभिमुखपरिणतचेता अनवद्यकर्मसमुदाचारसकल्पचेता सर्वबोधिसत्त्व समाधिनयसागरपरिशुद्ध्यभिमुखचेता सर्वबोधिसत्त्वगुणप्रतिपत्तिपरिनिष्पन्नचेता सर्वबोधि सत्त्वमार्गाङ्गव्यूहाभिनिर्हारचेता विपुलसर्वज्ञतारम्बणसमरकल्पोदाहृज्वलनकल्पाप्रतिप्रस्रब्ध वीर्यचेता सर्वजगत्परिपाकविनयप्रस्थानानन्तमध्यबोधिसत्त्वचर्याभिनिर्हारचेता सर्वाचार 20 शिक्षावृतप्रतिपन्नबोधिसत्त्वगुणपरिनिष्पत्तिषु सर्वभावविभावनयानुभावनयप्रविष्टचेता भवति। इद कुलपुत्र धर्मनयनिध्यप्तियोगनेत्र्यभिमुखसभवगर्भ नाम तृतीय बोधिसत्त्वजन्म ॥

तत्र कुलपुत्र कतमद्बोधिसत्त्वाना त्र्यध्वलोकाध्याशयविशुद्धिगर्भ नाम चतुर्थ बोधि- सत्त्वजन्म[1] इह कुलपुत्र बोधिसत्त्व परिशुद्धो भवत्यध्याशयधातौ। अवभासप्राप्तो भवति बुद्धबोधौ। अवतीर्णो भवति बोधिसत्त्वनयसमुद्रेषु। सारो भवति दृढाध्याशयवज्रधातु 25 सगृहीतचेता। विमुखीभवति सर्वभवगत्युपपत्तिषु। अभिमुखीभवति सर्वतथागत निर्वृतितपरिनिष्पत्तिषु। विशेषगामिनीप्राप्तो भवति बोधिसत्त्वतीक्ष्णेन्द्रियताविवर्धनतायै। कल्याणचित्तो भवत्यध्याशयप्रभास्वरतायै। अचलो भवति दृढमहाप्रणिधानविवर्धनतायै। सर्वतथागतसमन्वाहृतो भवति सर्वावरणपर्वतविकिरणतायै। प्रतिशरणभूतो भवति सर्वजग दुपजीव्य। इद कुलपुत्र बोधिसत्त्वाना त्र्यध्वलोकाध्याशयविशुद्धिगर्भ नाम चतुर्थ 30 बोधिसत्त्वजन्म ॥

---

1 B साधरो

तत्र कुलपुत्र कतमद्बोधिसत्त्वानां समन्तावभासप्रभागर्भं नाम पञ्चमं बोधिसत्त्वजन्म? इह कुलपुत्र बोधिसत्त्वः प्रयोगसंपन्नो भवति सर्वजगत्परिपाकविनयप्रतिपन्नः। सर्ववस्तुसंक्षोभचलितो भवति प्रमुक्तत्यागः। अत्यन्तविशुद्धो भवति अनन्तशीलः तथागतविषयसंवसनः। क्षान्तिसंपन्नो भवति सर्वबुद्धधर्मक्षान्त्यवभासप्रतिलब्धः। महावीर्यो भवति सर्वत उदाराणि शरणप्रतिपन्नः। ध्यानप्रमुक्तो भवति समन्तमुखसमाधिज्ञानमण्डलविशुद्धः। प्रज्ञावीर्यप्रभो 5 भवति सर्वधर्मावभासप्रतिलब्धः। असङ्गचक्षुर्भवति बुद्धदर्शनसमुद्रविज्ञप्त्यवतीर्णः। सर्वधर्मतत्त्वाभिमुखप्रभावितो भवति सर्वलोकं परितोषयिता। सुप्रयुक्तो भवति यथावद्धर्मनयप्रतिलाभेषु। इदं कुलपुत्र बोधिसत्त्वानां समन्तावभासप्रभागर्भं नाम पञ्चमं बोधिसत्त्वजन्म॥

तत्र कुलपुत्र कतमद्बोधिसत्त्वानां सर्वतथागतकुलगोत्रसंभवगर्भं नाम षष्ठं बोधिसत्त्वजन्म? इह कुलपुत्र बोधिसत्त्वो जातो भवति तथागतकुलेऽनुजातो भवति, तथागतवंशे 10 निष्पन्नो भवति सर्वबुद्धधर्मनयमुखेषु, विशुद्धो भवत्यतीतानागतप्रत्युत्पन्नतथागतमहाप्रणिधानेषु। एकधनकुशलमूलो भवति सर्वतथागतकुशलमूलेषु। एकशरीरो भवति सर्वबुद्धैः। लोकोत्तरगामी शुक्लधर्मैः। महात्मधर्मविहारी भवति बुद्धाधिष्ठानदर्शनसमाधौ। सत्त्वविशुद्धिधर्मप्रतिपन्नो भवति यथाकाले। अप्रतिप्रस्रब्धप्रतिभानो भवति बुद्धधर्मपरिपृच्छासु। इदं कुलपुत्र बोधिसत्त्वानां सर्वतथागतकुलगोत्रसंभवगर्भं नाम षष्ठं बोधिसत्त्वजन्म॥ 15

तत्र कुलपुत्र कतमद्बोधिसत्त्वानां तथागतबलावभासालोकालंकारगर्भं नाम सप्तमं बोधिसत्त्वजन्म? इह कुलपुत्र बोधिसत्त्वो बुद्धबलप्रवेशावभासे न निवर्तते बुद्धक्षेत्रगमनेषु। न प्रत्युदावर्तते नानाबोधिसत्त्वगुणसमुद्रोपस्थानाय। न परित्रस्यति सर्वधर्ममायागतयथाभूतज्ञानेन। स्वप्नोपमं सर्वलोकं प्रतिनिध्यायति। प्रतिभासोपमं सर्वरूपविज्ञप्त्यधिष्ठानमभिनिर्हरति। निर्मितोपमाभिज्ञाविकुर्वितवशिताप्राप्तो भवति। छायोपमं सर्वभवगत्युपपत्तिषु मुखं संदर्शयति। प्रतिश्रुत्कोपमानि सर्वतथागतधर्मचक्राणि प्रजानाति। धर्मधातुनयनिर्देशपरमपारमिताप्राप्तो भवति नानार्थोपायनयनिर्देशप्रयुक्तः। इदं कुलपुत्र बोधिसत्त्वानां तथागतबलावभासालोकालंकारगर्भं नाम सप्तमं बोधिसत्त्वजन्म॥ 20

तत्र कुलपुत्र कतमद्बोधिसत्त्वानां समन्तज्ञानमुखव्यवचारपरिनिष्पत्तिसंभवगर्भं नामाष्टमं बोधिसत्त्वजन्म? इह कुलपुत्र बोधिसत्त्वः कुमारभूत एव बोधिसत्त्वव्यवस्थानव्यवस्थितो भवति, यत्र प्रतिष्ठाय सर्वज्ञज्ञाननयं व्यवचारयति। एकैकत्र ज्ञाननयमुखेऽप्रमेयाः कल्पाः क्षयं व्रजेयुरप्रमेयं बोधिसत्त्वगोचरं निर्दिशतः। सर्वबोधिसत्त्वसमाधिषु च वशी भवति परमपारमिताप्राप्तः। प्रतिचित्तक्षणं सर्वचित्तक्षणेषु दशदिगनभिलाप्यबुद्धक्षेत्रगतानां तथागतानां पादमूलेषूपपद्यते। असभिन्नैश्चारम्बणैरसभिन्नान् समाधीन् समापद्यते। असभिन्नेषु च धर्मेषु असभिन्नज्ञानवशितां संदर्शयति। अपर्यन्तानि चारम्बणानि अनारम्बणे धातावयक्रामति। परीत्तैश्चारम्बणैरनन्तनिर्देशभूमिमवतरति। अप्रमेयां च धर्माणां परीत्तां मध्यतां वा प्रतिनिध्यायति। विज्ञप्तिसमं च सर्वलोकमवतरति। सर्वधर्मारम्बणानि 25 30

सर्वविज्ञप्तिपथाश्च भावनया अनुगच्छति। इदं कुलपुत्र बोधिसत्त्वानां समन्तज्ञानमुख व्यवचारणपरिनिष्पत्तिसंभवगर्भं नामाष्टमं बोधिसत्त्वजन्म॥

तत्र कुलपुत्र कतमद्बोधिसत्त्वानां धर्मधातुनिर्माणव्यूहगर्भं नाम बोधिसत्त्वजन्म? इह कुलपुत्र बोधिसत्त्वः सर्वत्र चित्तक्षणे नानाव्यूहानि बुद्धक्षेत्राणि अधितिष्ठति। सत्त्व
5 निर्माणे वैशारद्यपरमपारमिताप्राप्तश्च भवति। बुद्धनिर्माणकौशल्यप्राप्तश्च भवति। धर्म निर्माणवैशारद्यविशुद्धश्च भवति। असङ्गस्वरधर्मधातुगोचरश्च भवति। यथाशयसर्वकायविज्ञप्त्य-धिष्ठानकुशलश्च भवति। अचिन्त्यसत्त्वविनयकौशल्यगतश्च भवति। नानाचर्याभिसंबोधि संदर्शकश्च भवति। अनावरणसर्वज्ञतामार्गाभिनिर्हारकुशलश्च भवति। तदनन्तरं धर्मचक्र-प्रवर्तनकौशल्यं संदर्शयति। अनन्तमध्यसत्त्वविनयोपायाभिनिर्हारकुशलश्च भवति।
10 कालप्राप्ते सत्त्वविनये सदासमाहितश्च भवति वैरोचनज्ञानगर्भकोशः। इदं कुलपुत्र बोधि-सत्त्वानां धर्मधातुनिर्माणव्यूहगर्भं नाम नवमं बोधिसत्त्वजन्म॥

तत्र कुलपुत्र कतमद्बोधिसत्त्वानां तथागतभूम्याक्रमणवेगगर्भं नाम दशमं बोधिसत्त्व जन्म? इह कुलपुत्र बोधिसत्त्वो विविक्तो[1] भवति सर्वत्र्यध्वतथागतैकीभावविषये। सर्वलोक-धात्वानन्तर्यविषयं चावतरति। सर्वसत्त्वानां पूर्वान्तापरान्तच्युत्युपपत्तिषु चित्तानन्तर्योत्पादं
15 जानाति। सर्वबोधिसत्त्वानां चर्याज्ञानानन्तर्यविषयं प्रजानाति। अतीतानागतप्रत्युत्पन्नानां च सर्वबुद्धानामभिसंबोधानन्तर्यं प्रजानाति। सर्वधर्माणां चोपचारकौशल्यानन्तर्यं प्रजानाति। सर्वकल्पसंवर्तविवर्तकल्पानां च पूर्वान्तापरान्तप्रत्युत्पन्नानां सनाम्नां सोपदेशानामानन्तर्यं प्रजानाति। यथापरिपाचितेषु च सत्त्वेषु यथाकालप्राप्तेषु अभिसंबोधिव्यूहविकुर्वण विषयसंदर्शनाधिष्ठानज्ञानमभिनिर्हरति। सर्वबुद्धोपादेषु चाभिसंबोध्युपनयनधर्मचक्र-
20 प्रवर्तनकौशल्यनयानन्तर्यतां संदर्शयति अनन्तसत्त्वधातुविनयोपायाभिनिर्हारकौशल्येन। इदं कुलपुत्र बोधिसत्त्वानां तथागतभूम्याक्रमणवेगगर्भं नाम दशमं बोधिसत्त्वजन्म॥

इमानि कुलपुत्र बोधिसत्त्वानां दश बोधिसत्त्वजन्मानि येषु बोधिसत्त्वा जायन्ते उपपद्यन्ते समर्जयन्ति संवर्धयन्ति प्रतिपूरयन्ति संभवन्ति परिसंभवन्ति परिनिष्पद्यन्ते। सर्वक्षेत्रनिरवशेषानुबोधायैकव्यूहालंकारसमुदाचारानधितिष्ठन्ति। सत्त्वधातुनयाप्रतिप्रस्रम्भ
25 णाय अपरान्तकोटीगतकल्पाधिष्ठानानधितिष्ठन्ते। सर्वधर्मसमुद्रनानारम्बणानेकविचित्रनानापर परानिर्देशानन्तधर्मपरंपरास्रोतोऽभिसंबुध्यन्ते। अचिन्त्या बुद्धवृषभिता धर्मधातुपरमाकाश-धातुपर्यवसानां संदर्शयन्ति। अप्रमेयसत्त्वचर्यानानात्वसमुद्रेषु परिपाकविनयसंगृहीतेषु धर्मचक्रप्रवर्तनं संदर्शयन्ति। सर्वलोकधातून् बुद्धोत्पादाविरहितानधितिष्ठन्ति। सर्वधर्म मेघाननभिलाप्यस्वराङ्गसमुद्रविशुद्धिं सर्वारम्बणेषु प्रवर्तमाना विज्ञपयन्ति। अप्रमेयविहारिताया-
30 मनावरणगतिं गता सर्वधर्मरुचिरव्यूहानि बोधिसत्त्वमण्डलानि प्रभावयन्ति। यथाशयाधि-

---

1 S अभिषिक्तो

मुक्तिषु सत्त्वेषु अप्रमेयबुद्धभूम्यनुगतसर्वलोकपरिनिष्पादनार्थमनन्तमध्यं धर्मकोषं संप्रकाशयन्ति ॥

अथ खलु सुतेजोमण्डलरतिश्रीर्लुम्बिनीवनदेवता तस्यां वेलायामेतमेव बोधिसत्त्वजन्मार्यमभिद्योतयन्ती बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य सुधनं श्रेष्ठिदारकं गाथाभिरध्यभाषत— 5

अध्याशयेन विमलेन अनाविलेन
पश्यन्ति ये जिन न जातु भवन्ति तृप्ताः ।
सर्वान् जिनान अपरान्तवियूहमेघान्
प्रणिध्येन्ति ते प्रथमजन्मस्थिताः सुमेधाः ॥ १ ॥

सर्वेन्त्रियध्वगमशेष स्फरित्व लोकं 10
क्षेत्राणि सत्त्व तथ धर्म तथैव बुद्धान् ।
सत्त्वप्रमोक्षप्रणिधानवियूहचित्तं
जन्मं द्वितीयमिदमुक्तमचिन्तियानाम् ॥ २ ॥

ये धर्ममेघ पिबमान न जातु तृप्ताः
निध्यप्तिमानस त्रियध्वअसङ्गकायाः । 15
आकाशधातुविमला समचित्तकायाः
जन्मं तृतीयमिदमप्रतिमं हि तेषाम् ॥ ३ ॥

ये ते महाकरुणसागरमोतरन्ति
अध्याशयैर्वजिरसारसुमेरुकल्पैः ।
सर्वज्ञतानयसमुद्र विशाह्यमानाः 20
तेषां चतुर्थमिह जन्म नरर्षभाणाम् ॥ ४ ॥

ये मैत्रया दशसु दिक्षु जगत्स्फरित्वा
अभिनिर्हरन्त्यमलपारमितासमुद्रान् ।
परिपाचयन्ति जगु धर्मप्रभाभिरन्त
इमु जन्मु पञ्चमु महापुरुषाण तेषाम् ॥ ५ ॥ 25

धर्मस्वभावप्रतिविद्ध असङ्गचित्ताः
त्रैयध्विकाप्रतिमबुद्धकुलाभिजाताः ।
ये धर्मधातुनयसागरमोतरन्ति
षष्ठं इदं विपुल जन्म विदून तेषाम् ॥ ६ ॥

ये धर्मकाय परिशुद्ध असङ्गचित्ताः 30
क्षेत्राण्यशेषतु स्फरित्व स्वकैः शरीरैः ।

निःशेषबुद्धबलतानुगमप्रविष्टा
　　जन्माय सप्तममचिन्त्यमिदं बुधानाम् ॥ ७ ॥
ये ज्ञानसागरनये वशितानुयाता
　　सर्वज्ञतानयमुख व्यवचारयन्ति ।
सर्वे समाधिनयसागर ओतरन्ति
　　जन्माष्टम मतमिद तथताश्रयाणाम् ॥ ८ ॥
ये धर्मक्षेत्रप्रसरान् परिशोधयन्ति
　　ये सर्वसत्त्वपरिपाकनयप्रयुक्ता ।
बौद्धा विकुर्वितनियूह निदर्शयन्ति
　　तेषामिद नवमु जन्म महाशयानाम् ॥ ९ ॥
ये ते यथाबल जिनान तथा प्रविष्टाः
　　सर्वज्ञताविपुलवेगविवर्धमाना. ।
ये धर्मधातुतलभेदनयेष्वसङ्गा-
　　स्तेषामिद दशमु जन्मु जिनौरसानाम् ॥ १० ॥

एभि कुलपुत्र बोधिसत्त्वो दशभिर्जन्मभिस्तथागतकुले जात एवमालोककरो भवति सर्वसत्त्वानाम् । अपि तु खलु पुन कुलपुत्र अहमप्रमेयकल्पसर्वारम्बणबोधिसत्त्वजन्म विकुर्वितसदर्शनस्य बोधिसत्त्वविमोक्षस्य लाभिनी । आह—क एतस्य देवते अप्रमेयकल्प-सर्वारम्बणबोधिसत्त्वजन्मविकुर्वितसदर्शनस्य बोधिसत्त्वविमोक्षस्य विषय ? आह—अह कुलपुत्र सर्वबोधिसत्त्वजन्मसदर्शनोपसंक्रमणप्रणिधानपरिनिष्पन्ना । सा खल्वह कुलपुत्र भगवतो वैरोचनस्य विपुल जन्मसमुद्रमवतरामि । यदुत अस्या त्रिसाहस्रमहासाहस्राया लोकधातौ बोधिसत्त्वजन्म अवतरमाणा भगवत्या चातुर्द्वीपिकायामिह जम्बुद्वीपे लुम्बिनी-वने बोधिसत्त्वजन्मसदर्शने पूर्वप्रणिधानोपपन्ना । सा अहमिह बोधिसत्त्वजन्मानुस्मृतिं भावयमाना विहरामि । तस्या ममेह विहरन्त्या वर्षशतेन भगवांस्तुषितभवनाच्च्यविष्यतीति ॥

अथास्मिन् लुम्बिनीवने दश पूर्वनिमित्तानि प्रादुर्बभूवु । कतमानि दश ? यदुत—सर्वमिद लुम्बिनीवन सम सस्थितमपगतनिम्नोन्नतविषममपगतश्वभ्रप्रपातम् । इद प्रथम पूर्वनिमित्त प्रादुरभूत् । पुन सर्वमिद लुम्बिनीवनमुत्सन्नशर्करकठल्लमपगतस्थाणुकण्टक वज्रपृथिवीतलसस्थानमनेकरत्नाभिकीर्णं समवस्थितम् । इद द्वितीय पूर्वनिमित्त प्रादुरभूत् । पुन सर्वमिद लुम्बिनीवन सर्वरत्नद्रुमशालतालपङ्क्तिसुविभक्तालकार समवास्थिपत । इद तृतीय पूर्वनिमित्त प्रादुरभूत् । पुन सर्वमिद लुम्बिनीवन दिव्यसमतिक्रान्तगन्धाङ्कुरमकरन्द सर्वचूर्णकोशसमूत सर्वध्वजमेघपटलमण्डलजात गन्धमणिविग्रहवृक्षमूलपरिसस्थापितालकार समवास्थिपत । इद चतुर्थ पूर्वनिमित्त प्रादुरभूत् । पुन सर्वमिद लुम्बिनीवन विविधदिव्य-पुष्पमाल्याभरणकोशनिर्विचसर्वाभ्यन्तरपरिपूर्ण समवास्थिपत । इद पञ्चम पूर्वनिमित्त प्रादु-

रभूत् । पुन सर्वस्मिन्निह लुम्बिनीवने सर्ववृक्षेषु महामणिरत्नकोशा अभिनिर्वृत्ता । इद षष्ठ पूर्वनिमित्त प्रादुरभूत् । पुन सर्वस्मिन्निह लुम्बिनीवने सर्वनलिनीषु सर्वाणि जलजरत्नपुष्पाणि शुद्धीभूतानि धरणितलादभ्युद्गम्य वारिसमुद्गतानि समवास्थिपत । इद सप्तम पूर्वनिमित्त प्रादुरभूत् । पुनर्यावन्त इह लोकधातौ कामावचरा रूपावचराश्च देवपुत्रा नागयक्षगन्धर्वा-सुरगरुडकिन्नरमहोरगा लोकेन्द्रजगदिन्द्रा वा, तेऽप्यस्मिन् लुम्बिनीवने सर्वे कृताञ्जलिपुटा 5 स्थिता अभूवन् । इदमष्टम पूर्वनिमित्त प्रादुरभूत् । पुनर्यावन्त इह चातुर्द्वीपिकाया लोकधातौ देवकन्या वा नागकन्या वा यक्षगन्धर्वासुरगरुडकिन्नरमहोरगकन्या वा, ता सर्वा प्रमुदितमानसा सर्वपूजाविधिपरिगृहीतहस्ता प्लक्षशाखाभिमुखा प्रणतकाया स्थिता अभूवन् । इद नवम पूर्वनिमित्त प्रादुरभूत् । पुनर्दशभ्यो दिग्भ्य सर्वतथागताना नाभि मण्डलेभ्यो निश्चरमाणा बोधिसत्त्वजन्मविकुर्वितप्रदीपा नाम रश्मयो निश्चरित्वा सर्वमिद 10 लुम्बिनीवनमवभास्य तिष्ठन्ति स्म । तेषु च सर्वरश्मिमुखमण्डलेषु तेषा सर्वतथागताना जन्मविकुर्वितानि प्रतिभासप्राप्तानि सदृश्यन्ते स्म । सुप्रसवविकुर्विता सर्वबोधिसत्त्वगुणाश्च बुद्धस्वरसप्रयुक्तास्तेभ्यो रश्मिमुखमण्डलेभ्यो निश्चरमाणा श्रूयन्ते स्म । इद दशम पूर्वनिमित्त प्रादुरभूत् । इमानि दश पूर्वनिमित्तानि प्रादुर्भूतानि बोधिसत्त्वजन्मकालसमये प्रत्युपस्थिते, येषा प्रादुर्भावाद्विदितमभवत्[1] सर्वेषा देवेन्द्राणा बोधिसत्त्वो जनिष्यत इति । सा खलु पुनरह 15 कुलपुत्र एषा दशाना पूर्वनिमित्ताना दर्शनादचिन्त्य प्रीतिवेग प्रतिलभे ॥

पुनरपर कुलपुत्र मायादेव्या कपिलवस्तुनो महानगरान्निष्क्रमन्त्या इह लुम्बिनीवने दश महावभासपूर्वनिमित्तानि प्रादुरभूवन्, येषा प्रादुर्भावादप्रमेयाणा सत्त्वाना सर्वज्ञता धर्मालोकप्रीतिवेगा विवर्धिता । कतमे दश ? यदुत—वरणीतलगतेषु सर्वरत्नकूटागारगर्भेष्ववभास प्रादुर्भूत । सर्वगन्धकुसुममुकुलेष्ववभास प्रादुर्भूत । अशेषरत्नपद्ममुकुलेषु[2] निकसमानेषु 20 सर्वपत्रेभ्योऽवभास प्रादुर्भूत, मधुरश्च सुजातजातशब्द एभ्यो निश्चरति स्म । यश्च दशसु दिक्षु बोधिसत्त्वाना प्रथमचित्तोत्पादावभास, स इद लुम्बिनीवनमवभास्य अभ्युदित । यच्च दशसु दिक्षु बोधिसत्त्वाना सर्वबोधिसत्त्वभूम्याक्रमणावभासविकुर्वितम्, तदिह लुम्बिनीवने प्रादुरभूत् । यश्च दशसु दिक्षु बोधिसत्त्वाना सर्वपारमितापरिनिष्पत्तिज्ञानाधिगमालोकावभास, स इह लुम्बिनीवने प्रादुर्बभूव । यश्च दशसु दिक्षु बोधिसत्त्वाना सर्वप्रणिधानवशिताज्ञाना 25 लोकावभास, स इह लुम्बिनीवने प्रादुर्बभूव । यश्च दशसु दिक्षु सर्वबोधिसत्त्वाना परिपाकविनयज्ञानालोकावभास, स इह लुम्बिनीवने प्रादुर्बभूव । यश्च दशसु दिक्षु सर्वबोधिसत्त्वाना धर्मधातुनयज्ञानाधिगमालोकावभास, स इह लुम्बिनीवने प्रादुर्बभूव । यश्च दशसु दिक्षु सर्वबोधिसत्त्वाना बुद्धविकुर्वितजन्माभिनिष्क्रमणबोधिविबुध्यनज्ञानाधिगमा लोकावभास, स इह लुम्बिनीवने प्रादुर्बभूव । इमानि दश महावभासनिमित्तानि प्रादुर्बभूवु, 30 यैरनन्तमध्याना बोधिसत्त्वाना चित्ताशयगहनान्धकाराण्यवभासितानि ॥

१ B विदितमभवत् २ S °मुकुलेषु

तत्र कुलपुत्र मायाया देव्याः प्लक्षद्रुमनिलयगतायाः संनिपतितानां सर्वलोकेन्द्राणां सर्वकामधातुकानां च देवपुत्राणां साप्सरोगणदेवकन्यापरिवाराणां संनिपतितानां सर्वेषां च रूपावचराणां देवपुत्राणां निरामगन्धानां सर्वेषां च देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगाणां सपरिवाराणां संनिपतितानां बोधिसत्त्वपूजाप्रयुक्तानां मायादेव्यास्तेजसा श्रिया
5 वर्णेन रूपेण सर्वपूजाव्यूहाः कायाध्यामभासिता बभूवुः, अस्यां च त्रिसाहस्रमहासाहस्रायां लोकधातौ या प्रभा, सा अपि सर्वा मस्ताध्याभिभूताध्यामीभूवन्। सर्वरोमविवरनिसृताश्च मायादेव्याः प्रभावभासास्तदन्याभिः प्रभाभिरनुपहता अनावृता अप्रत्याहता असक्ताः सर्वदिशः स्फरित्वा सर्वाणि नैरयिकाणि दुःखानि सर्वाणि तैर्यग्योनिकानि दुःखानि सर्वाणि च यामलौकिकानि दुःखानि सर्वभवगतिपर्यापन्नानां च सत्त्वानां सर्वदुःखानि
10 संक्लेशांश्च प्रशमयित्वा तिष्ठन्ति भासन्ते तपन्ति विरोचन्ते स्म। इदं कुलपुत्र बोधिसत्त्वस्य लुम्बिनीवने प्रथमं जन्मविकुर्वितम्॥

पुनरपरं कुलपुत्र यस्मिन् समये मायाया देव्याः कुक्षौ सर्वाव्यतीय त्रिसाहस्रमहासाहस्रा लोकधातुरन्तर्गता प्रतिभासप्राप्ता संदृश्यते स्म, तस्यां च त्रिसाहस्रमहासाहस्रायां लोकधातौ कोटीशतचातुर्द्वीपिकानां लोकधातूनां सर्वे जम्बुद्वीपेषु नानानामधेयासु
15 राजधानीषु नानानामधेयेषु वनषण्डेषु नानावृक्षमूलेषु मायादेवी उपगता एवमेव संदृश्यते स्म सर्वलोकेन्द्रपरिवृता बोधिसत्त्वजन्मप्रत्युपस्थाना अचिन्त्येन बोधिसत्त्वजननीज्ञानविकुर्वितेन। इदं कुलपुत्र बोधिसत्त्वस्य लुम्बिनीवने द्वितीयं जन्मविकुर्वितम्॥

पुनरपरं कुलपुत्र मायाया देव्याः सर्वरोमविवरेभ्य एकैकस्माद्रोममुखाद्यावन्तो भगवता पूर्वं बोधिसत्त्वचर्यां चरता तथागता आरागिताः सत्कृता गुरुकृता मानिताः पूजिताः,
20 ते सर्वे संदृश्यन्ते स्म। यश्च तैस्तथागतैर्धर्मो देशितः, स सर्वेभ्यस्तेभ्यो रोमविवरेभ्यो बुद्धस्वराङ्गसप्रयुक्तो निखिलेन श्रूयते स्म। तद्यथापि नाम वारिराशौ रजसि वा कनकपरमाणुरजसि वा आदर्शमण्डले वा स्वच्छे सुप्रसन्ने वा उदके गगनमण्डलमादित्यचन्द्रज्योतिर्ग्रहगणप्रतिमण्डितं गम्भीरमेघपटलनिगर्जितनिर्घोषप्रतिभासप्राप्तं संदृश्यते स्म, एवमेव कुलपुत्र मायाया देव्याः सर्वरोममुखमण्डलेषु पूर्वतथागतविकुर्वितानि संदृश्यन्ते स्म सर्वधर्मदेशना
25 निर्घोषाणि। इदं कुलपुत्र बोधिसत्त्वस्य लुम्बिनीवने तृतीयं जन्मविकुर्वितम्॥

पुनरपरं कुलपुत्र मायाया देव्याः सर्वकायात्सर्वरोममुखमण्डलेभ्य एकैकस्माद्रोमविवराद्यावत्सु सर्वक्षेत्रेषु यावत्सु लोकधातुसमुद्रेषु यावत्सु लोकधातुवंशेषु यावत्सु लोकधातुसंज्ञागतेषु भगवान् बोधिसत्त्वचारिकामकार्षीत्। यत्प्रतिष्ठानेषु क्षेत्रेषु यत्संस्थानेषु यद्व्यूहेषु यत्परिशुद्धिषु यत्पर्वतान्धकारेषु यद्ग्रामनगरनिगमजनपदपट्टनान्धकारेषु यदुद्याननदीह्रदतडाग-
30 सागरान्धकारेषु यद्गगनमेघान्धकारेषु यत्सत्त्वनिलयेषु यद्यानर्निर्देशेषु यत्कल्पनामसंख्यासु यद्बुद्धोत्पादप्रभवेषु यद्विशुद्धिपरमेषु यथायुःप्रमाणसत्त्वेषु यथालोकजन्मोपपत्तिषु यथासत्त्वसमवधानेषु यथाकल्याणमित्रसंनिश्रयेषु यथाकुशलधर्मप्रयोगेषु यथाधर्मप्रतिपत्त्यभियोगेषु

बुद्धक्षेत्रेषु बोधिसत्त्वचारिकामचरन्, ते सर्वे बुद्धक्षेत्रप्रसरा मायाया देव्याः सर्वरोममुखेभ्य संदृश्यन्ते स्म । यावद्भिश्च कायैर्भगवान् पूर्वं बोधिसत्त्वचारिकामकार्षीदविवर्त्यस्थानप्राप्त, यैराकारैर्यैर्विहारैर्यै: परिभोगैर्यैः सुखदुःखप्रतिसंवेदीभिर्येषु जातिपरिवर्तेषु, तत्सर्वमेकैकस्मिन् रोमविवरे संदृश्यते स्म । सर्वेषु च तेषु तासु तासूपपत्तिषु मायादेवी बोधिसत्त्वस्य जननी बभूव । सर्वे च ते बोधिसत्त्वकाया मायाया देव्या रोमविवरेषु विकुर्वितप्रतिभासप्राप्ता 5 संदृश्यन्ते स्म । इद कुलपुत्र बोधिसत्त्वस्य लुम्बिनीवने चतुर्थं जन्मविकुर्वितम् ॥

पुनरपरं कुलपुत्र यावद्भिः कायैर्भगवान् पूर्वं बोधिसत्त्वचारिकामचरत्, यद्वर्णैर्यत्संस्थानैर्यदाकारैर्यत्परिभोगैर्यत्सुखदुःखप्रतिसंवेदीभिर्यज्जातिपरिवर्तै, ते सर्वे मायाया देव्या काये सर्वरोममुखेषु प्रतिभासप्राप्ता संदृश्यन्ते स्म । इद कुलपुत्र लुम्बिनीवने बोधिसत्त्वस्य पञ्चमं जन्मविकुर्वितम् ॥ 10

पुनरपरं कुलपुत्र यावन्तो भगवता पूर्वं बोधिसत्त्वचारिकां चरता दुष्करपरित्यागा परित्यक्ता, हस्तपादपरित्यागा वा कर्णनासापरित्यागा वा जिह्वादग्रपरित्यागा वा नयनोत्तमाङ्गपरित्यागा वा मांसशोणितपरित्यागा वा अस्थिमज्जापरित्यागा वा वक्षोहृदयपरित्यागा वा छविचर्मपरित्यागा वा बाह्याध्यात्मिकवस्तुपरित्यागा वा पुत्रदुहितृभार्यापरित्यागा वा आत्मभावपरित्यागा वा भोगरत्नपरित्यागा वा ग्रामनगरनिगमजनपदराष्ट्रराजधानीपरित्यागा 15 वा धनधान्यकोशकोष्ठागारपरित्यागा वा मणिमुक्तावैडूर्यशङ्खशिलाप्रवालजातरूपरजतपरित्यागा वा विविधरत्नाभरणपरित्यागा[1] वा शय्यासनपरित्यागा वा गृहविमानपरित्यागा वा सर्वोपभोगपरित्यागा वा, ते च दायकबोधिसत्त्वविग्रहकाये रूपे परित्यजन्ति स्म । ते च प्रतिग्राहककाये रूपे प्रतिगृह्णन्ति स्म । तानि च देशवस्तूनि यानि परित्यक्तानि, ते च देशप्रदेशा, ते च बोधिसत्त्वपरिवारा, सर्वे ते मायाया देव्या सर्वरोमविवरेभ्य प्रतिभासप्राप्ता संदृश्यन्ते स्म । इद कुलपुत्र लुम्बिनीवने बोधिसत्त्वस्य षष्ठ जन्मविकुर्वितम् ॥ 20

पुनरपरं कुलपुत्रे[1]                    लुम्बिनीवनषण्डे समवसृता अभिजात जगद्विज्ञाना प्रादुरभवत् । इद कुलपुत्र लुम्बिनीवने बोधिसत्त्वस्य सप्तमं जन्मविकुर्वितम् ॥

पुनरपरं कुलपुत्र यावन्त सर्वदेवेन्द्रभवनव्यूहपरिभोगसमतिक्रान्ता सर्वनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्येन्द्रभवनव्यूहपरिभोगसमतिक्रान्ता सर्वबोधिसत्त्वपरिभोगा, 25 यदुत सर्वमणिराजकूटागारपरिभोगा वा मणिराजविमानपरिभोगा वा मणिराजजालपरिभोगा वा मणिराजविग्रहपरिभोगा वा मणिराजविम्बपरिभोगा वा मणिराजव्यूहा वा सर्वाभरणपरिभोगा वा सर्वगन्धराजपरिभोगा वा शुभाप्रतिकूल्सर्वारम्बणपरिभोगा वा, ते सर्वे मायाया देव्या कुक्षेरन्योन्यासभिन्ना निश्चरित्वा इह लुम्बिनीवने समन्तव्यूहा समवास्थिषन्त । इद कुलपुत्र लुम्बिनीवने बोधिसत्त्वस्याष्टमं जन्मविकुर्वितम् ॥ 30

[1] Lacuna in B and S

पुनरपरं कुलपुत्र मायाया देव्याः कुक्षेः प्रथमतरं दशबुद्धक्षेत्रानभिलाप्यकोटी-
नियुतशतसहस्रपरमाणुरजःसमा बोधिसत्त्वा भगवतो वैरोचनस्य सदृशरूपवर्णसंस्थाना
सदृशलक्षणानुव्यञ्जनालंकारा सदृशप्रभा सदृशरश्मिप्रमुञ्चना सदृशलि(ङ्ग)लीला सदृश-
विक्रमा सदृशविरोचनविकुर्विता सदृशपरिवारा सदृशव्यूहा निश्चरन्ति स्म भगवतो
5 वर्णसमुद्रानुदीरयमाणाः । इदं कुलपुत्र लुम्बिनीवने बोधिसत्त्वस्य नवमं जन्मविकुर्वितम् ॥

पुनरपरं कुलपुत्र बोधिसत्त्वस्य जन्मकालसमये प्रवृत्ते मायाया देव्याः पुरस्ताद्धो-
वज्रतलान्महापृथिवीमभिनिर्भिद्य सर्वरत्नव्यूहगर्भं नाम महामणिरत्नपद्ममभ्युद्गतमभूदपरा-
जितमहावज्रमणिराजगर्भसर्वमणिराजकेसररश्मिव्यूहं दशबुद्धक्षेत्रपरमाणुरजःसमपत्रपङ्क्ति-
सुविभक्तं विविधमणिराजपत्रमण्डलं चिन्तामणिराजविशुद्धकर्णिकं सर्वरत्नवर्णाप्रमेयकेसरपङ्क्ति-
10 व्यूहम्, असंख्येयमणिराजरत्नव्यूहजालसंछन्नमभेद्यनारायणवज्रमणिराजेन्द्रकूटसंछादितं सर्व-
देवेन्द्रकायपरिवृतं सर्वनागेन्द्रगन्धमेघाभिप्रवर्षितं दिव्यपुष्पपाणिपुटप्रयुक्तसर्वयक्षेन्द्रपरिवृतं
सर्वगन्धर्वेन्द्रपूर्वबुद्धोत्पादस्थानमधुररुतसंगीतिनिर्घोषसंप्रयुक्तस्तुतिमेघाविष्कृतं निहतमानमद-
दर्पसर्वासुरेन्द्रप्रणतशरीरनमस्कृतं सर्वगरुडेन्द्राभिप्रलम्बितरत्नपट्टगगनमेघालंकारबोधिसत्त्व-
गणसंचोदनसंगीतिसंप्रयुक्तैः प्रीतिमनोभिः सर्वकिन्नरेन्द्रैः संप्रेक्षितं सर्वमहोरगेन्द्रप्रीतिसंभव-
15 प्रयुक्तवर्णरुचिरनिर्घोषव्यूहमेघाभिप्रवर्षितम् । इदं कुलपुत्र लुम्बिनीवने बोधिसत्त्वस्य दशमं
जन्मविकुर्वितम् ॥

इमानि कुलपुत्र लुम्बिनीवने बोधिसत्त्वस्य दश जन्मविकुर्वितानि प्रादुरभूवन् । तत-
पश्चाद्बोधिसत्त्वोऽचिन्त्याप्रमाणप्रभासेचनकदर्शनो मायाया देव्याः कुक्षेरभ्युद्गतः सूर्यमण्डल-
मिव गगनतलात्, विद्युत्कलाप इव मेघसंघातात्, साल्व इव महावनशैलशिखरान्तरात्,
20 महाप्रदीप इव तमोऽन्धकारात् । इत्येवं बोधिसत्त्वो मायाया देव्याः कुक्षेरभिनिष्क्रमणं
संदर्शयामास मायागतरूपविज्ञप्तिसंदर्शनधर्मतया अनागतधर्मतया अनुत्पादानिरोधलोक-
विज्ञप्तिसंदर्शनधर्मतया ॥

इत्येवमहं कुलपुत्र भगवतो वैरोचनस्य जन्मविकुर्वितसमुद्रानवतरामि इह लुम्बिनी-
वने विहरमाणा । यथा चाहं कुलपुत्र अस्यां भागवत्यां चातुर्द्वीपिकायां भगवतो वैरोचनस्य
25 जन्मविकुर्वितसमुद्रानवतरामि, तथा सर्वावत्यां त्रिसाहस्रमहासाहस्रायां लोकधातौ सर्वचातु-
र्द्वीपिकासु कोटीशतजम्बुद्वीपानां सर्वत्र भगवतो वैरोचनस्य जन्मविकुर्वितान्यवतरामि ।
यथा चाहं कुलपुत्र अस्यां त्रिसाहस्रमहासाहस्रायां लोकधातौ सर्वचातुर्द्वीपिकासु कोटीशत-
जम्बुद्वीपानां भगवतो वैरोचनस्य कोटीशतं जन्मविकुर्वितानामवतरामि, एवं सर्वत्रिसाहस्र-
महासाहस्रलोकधातुपर्यापन्नपरमाणुरजोऽन्तर्गतेषु सर्वबुद्धक्षेत्रपरमाणुरजःप्रवेशज्ञानानुगतेषु
30 प्रतिचित्तक्षणमेकैकेन चित्तप्रवेशेन बुद्धक्षेत्रपरमाणुरजःसमानि भगवतो वैरोचनस्य
जन्मविकुर्वितान्यवतरामि । तदनन्तरेण चित्तेन बुद्धक्षेत्रसहस्रपरमाणुरजोऽन्तर्गतेषु बुद्धक्षेत्रेषु
एकैकत्र बुद्धसमानि येव बोधिसत्त्वजन्मविकुर्वितान्यवतरामि । एतेन नयेन बुद्धक्षेत्रपरमाणु

रजोन्तर्गतेषु बुद्धक्षेत्रेष्वेकैकस्मिन् बुद्धक्षेत्रे सर्वाणि बोधिसत्त्वजन्मविकुर्वितान्यवतरामि, न च पर्यन्तमुपैमि । सर्वपरमाणुरजःसु एकैकस्मिन् परमाणुरजसि बुद्धक्षेत्रपरंपराणां न च पर्यन्तमुपैमि सर्वक्षेत्रेष्वेकैकस्मिन् बुद्धक्षेत्रे बुद्धसत्त्वजन्मपरंपराणाम् । यथा चेह लोकधातौ सर्वाणि बोधिसत्त्वजन्मविकुर्वितान्यवतरामि, तथा दशसु दिक्षु अनन्तमध्यासु लोकधातुषु सर्वपरमाणुरजःसु प्रतिचित्तक्षणमेकैकेन चित्तप्रवेशेन सर्वाकाराणि सर्वबोधिसत्त्वजन्मविकुर्वितान्यवतराम्यप्रतिप्रस्रब्ध्यधिष्ठानयोगेन ॥ 5

एवमुक्ते सुधनः श्रेष्ठिदारकः सुतेजोमण्डलरतिश्रियं लुम्बिनीवनदेवतामेवमाह–कियच्चिरप्रतिलब्धस्त्वयायं देवते अप्रमेयकल्पसर्वारम्बणबोधिसत्त्वजन्मविकुर्वितं संदर्शयमानो बोधिसत्त्वजन्मविमोक्षः ? आह–भूतपूर्वं कुलपुत्र अतीतेऽध्वनि बुद्धक्षेत्रकोटीपरमाणुरजःसमानां कल्पानां परेण परतरमीश्वरगुणापराजितध्वजो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि 10 विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् समन्तरत्नायां लोकधातौ समापद्यते कल्पेऽशीतिबुद्धकोटीनियुतशतसहस्रप्रभवे । तस्यां खलु कुलपुत्र समन्तरत्नायां लोकधातौ विचित्रव्यूहप्रभा नाम मध्यमा चातुर्द्वीपिकाभूत् । तस्यां खलु चातुर्द्वीपिकायां मध्ये जम्बुद्वीपस्य मेरुविशुद्धव्यूहध्वजा नाम राजधान्यभूत् । तस्यां खलु राजधान्यां रत्नार्चिनेत्रप्रभो नाम राजा अभूत् । राज्ञः खलु कुलपुत्र 15 रत्नार्चिनेत्रप्रभस्य राज्ञः सुहर्षितप्रभेश्वरा नाम भार्याभूत् । तद्यथापि नाम कुलपुत्र अस्यां भागवत्यां चातुर्द्वीपिकायामिह जम्बुद्वीपे मायादेवी भगवतो वैरोचनस्य जनेत्री, एवमेव कुलपुत्र तेन कालेन तेन समयेन तस्यां विचित्रव्यूहप्रभायां चातुर्द्वीपिकायां जम्बुद्वीपे सुहर्षितप्रभेश्वरा नाम तस्य भगवत ईश्वरगुणापराजितध्वजस्य तथागतस्य माता अभूत् । यथा तेषामशीतिबुद्धकोटीनियुतानां पूर्वंगमस्य प्राथमकल्पिकस्य भगवत ईश्वरगुणापराजित- 20 ध्वजस्य तथागतस्य माता अभूत् । सा खलु कुलपुत्र सुहर्षितप्रभेश्वरा देवी बोधिसत्त्वस्य जन्मकालसमये विंशत्या स्त्रीनियुतशतसहस्रैः सार्धं सुवर्णपुष्पाभमण्डलं नाम महोद्यानं निर्ययौ, यत्र तमीश्वरगुणापराजितध्वजं कुमारं जनयामास अचिन्त्येन बोधिसत्त्वविकुर्वितेन । तेन खलु पुनः समयेन सुवर्णपुष्पाभमण्डलस्य नाम महोद्यानस्य मध्ये शुभरत्नविचित्रकूटं नाम कूटागारमभूत् । तस्मिन् कूटागारे सर्वकामंददवृक्षशाखा- 25 मध्यालम्बतया सुहर्षितप्रभेश्वराया देव्याः स भगवानीश्वरगुणापराजितध्वजस्तथागतो जनितः । तेन खलु समयेन तस्य भगवतो जन्मकाले विमलसंभवप्रभा नाम धात्री प्रत्युपस्थिताभूत् । जातमात्रं च बोधिसत्त्वं लोकेन्द्रा विचित्रसुरभिमनोज्ञदिव्यपुष्पोत्करोत्सारिभिः परमसुरभिगन्धोदककलशैर्विस्नाप्य तदर्हाभिश्च अचिन्त्यासंख्येयाभिरुत्तमाभिः पूजाभिरभिपूज्य तस्या विमलसंभवप्रभाया धात्र्या अङ्के प्रायच्छन् । परिगृहीतमात्रे च 30 तस्मिन् बोधिसत्त्वे तया धात्र्या उभाभ्यां पाणिभ्यामंसे च, तत्क्षणमेव सा धात्री महाप्रीतिप्रामोद्यवेगप्रतिलब्धा समन्तचक्षुर्विषयं नाम बोधिसत्त्वसमाधिं प्रत्यलभत, यस्य समाधेः

सहप्रतिलाभात्तस्मादृशसु दिक्षु नानालोकधातुस्थिता अप्रमेयास्तथागताश्चक्षुप आभास-मगमन्। एष च अप्रमेयकल्पसर्वारम्बणबोधिसत्त्वजन्मविकुर्वितसंदर्शनो बोधिसत्त्वविमोक्षो-ऽवक्रान्तः सुसूक्ष्मः, तद्यथापि नाम तद्दिवसावक्रान्ते मातुः कुक्षौ गर्भविज्ञानम्, यस्य विमोक्षस्य प्रतिलम्भादनया सर्वतथागतजन्मविकुर्वितसंदर्शनमहाप्रणिधिरभिनिर्वृत्तः॥

5 तत्किं मन्यसे कुलपुत्र–अन्या सा तेन कालेन तेन समयेन विमलसंभवप्रभा नाम बोधिसत्त्वधात्र्यभूत्? न खलु पुनस्त्वया एवं द्रष्टव्यम्। अहं सा तेन कालेन तेन समयेन विमलसंभवप्रभा नाम बोधिसत्त्वधात्र्यभूवम्। तत्किं मन्यसे कुलपुत्र–अन्यानि तेन कालेन तेन समयेन विंशतिश्रीनियुतशतसहस्राण्यभूवन्? न खल्वेवं द्रष्टव्यम्। इमानि तानि विंशति-देवतानियुतशतसहस्राणि, यानीह लुम्बिनीवने प्रतिवसन्ति मम परिवाराः। तत्किं मन्यसे 10 कुलपुत्र–अन्या सा तेन कालेन तेन समयेन सुप्रहर्षितप्रभेश्वरा नाम देव्यभूदीश्वरगुणापरा-जितध्वजस्य कुमारस्य जनेत्री? न खल्वेवं द्रष्टव्यम्। इयं सा मायादेवी तेन कालेन तेन समयेन सुप्रहर्षितप्रभेश्वरा नाम देव्यभूत्। तत्किं मन्यसे कुलपुत्र–अन्यः स तेन कालेन तेन समयेन रत्नार्चिनेत्रप्रभो नाम राजा अभूत्। न खल्वेवं द्रष्टव्यम्। अयं स राजा शुद्धोदनः तेन कालेन तेन समयेन रत्नार्चिनेत्रप्रभो नाम राजा अभूत्। सा खल्वहं 15 कुलपुत्र तत उपादाय सर्वचित्तक्षणेष्वविरहिता अभूवं भगवतो वैरोचनस्य बोधिसत्त्वजन्म-विकुर्वितसागरावतरणतया सत्त्वनयवृषभिताविकुर्वितसागरावतरणतया॥

यथा चाहं कुलपुत्र अस्यां सहायां लोकधातौ भगवतो वैरोचनस्य महाप्रणिधान-समुद्रसागरसंभवानां तथागतानां सर्वचित्तक्षणेषु सर्वपरमाणुरजःप्रवेशसमवसृतेन ज्ञान-चक्षुषा सर्वपरमाणुरजःसु क्षेत्रसमुद्रानवतरामि, तेषु च क्षेत्रेषु तथागतोत्पादसागरानवतरामि। 20 यथा तेषां तथागतानां बोधिसत्त्वजन्मविकुर्वितमहासमुद्रानवतरामि, तथा दशसु दिक्षु अनन्त-मध्यानां तथागतानां सर्वचित्तक्षणेषु बोधिसत्त्वजन्मविकुर्वितसागरानवतरामि। यथा च अस्यां त्रिसाहस्रमहासाहस्रायां लोकधातौ सर्वपरमाणुरजःप्रसरपरंपरावतारेण सम्यक्सं-बुद्धबोधिसत्त्वजन्माभिमुखीभावगतान् बुद्धगुणानवतरामि, एवं दशसु दिक्षु बुद्धक्षेत्रानभि-लाप्यकोटीनियुतशतसहस्रपरमाणुरजःप्रसरान्तर्गतान् क्षेत्रसागरानवतरामि। तेषु च 25 विपुलान् बुद्धसमुद्रानवतरामि। तांश्च बुद्धान् भगवतो बोधिसत्त्वभूतजन्मविकुर्वितसंमुखी-भावगतान् पश्यामि। तथागतभूतानपि पूजयामि। तेषां च तथागतानां धर्मदेशनां शृणोमि, धर्मस्य च अनुधर्मं प्रतिपद्ये॥

अथ खलु सुतेजोमण्डलरतिश्रीर्लुम्बिनीवनदेवता एवमेवाप्रमेयसर्वकल्पसर्वावरण-बोधिसत्त्वजन्मविकुर्वितसंदर्शनबोधिसत्त्वविमोक्षं परिदीपयमाना बुद्धाधिष्ठानेन दश दिशो 30 व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत–

बुद्धपुत्र शृणु मह्य भाषित
यस्मि पृच्छसि जनित्व गौरवम्।

शान्त दुर्दृशु जिनान गोचरो
हेतुकारणनयैर्निदर्शितः ॥ १ ॥
क्षेत्रकोटिपरमाणुसादृशान्
पूर्वकल्प स्मरमी अचिन्तियान् ।
कल्प आदिरिव अनन्त नायको    5
यत्राशीतिनियुता जिनानभूत् ॥ २ ॥
ईश्वराजितगुणध्वजस्तदा
तेष्वभूत्प्रथमकस्तथागतः ।
जानमान मय दृष्टु नायकः
स्वर्णपुष्पप्रभवे वनोत्तमे ॥ ३ ॥    10
नामतो विमलसंभवप्रभा
तस्य आसि अहु धात्रि पण्डिता ।
लोकपाल मम अंसि तं स्थपी
जातमात्र कनकोत्तमप्रभम् ॥ ४ ॥
अंसि तं प्रह्विय अभ्युद्गतं    15
मूर्ध्निमस्य न प्रभोमि प्रेक्षितुम् ।
* * * * * * तं अचिन्तियं
प्रेक्षमाण न च अन्तु पश्यमि ॥ ५ ॥
लक्षणेभि प्रतिमण्डितं शुभं
कायमस्य विमलं सुदर्शनम् ।    20
दृष्ट मे रतनबिम्बसादृशं
प्रीतिवेग अतुला विवर्धिताः ॥ ६ ॥
चिन्तयित्व गुण तस्य मेऽमितान्
पुण्यसागर अमेय वर्धिताः ।
दृष्ट तस्य च विकुर्वितोदधीन्    25
बोधिचित्तविपुलं मि संभृतम् ॥ ७ ॥
प्रार्थयित्व जिनवर्णसागरान्
वर्धितः प्रणिधिसागरो मम ।
सर्वक्षेत्रप्रसरा विशोधिता
सर्वदुर्गतिपथा विवर्तिताः ॥ ८ ॥    30
पूजनाय सुगतानचिन्तियान्
सर्वक्षेत्रप्रसरेष्वनागतान् ।

सत्त्वदुःखितविमोचनाय च
  प्रोदितः प्रणिधिसागरो मम ॥ ९ ॥
श्रुत्व धर्ममय तस्य तायिनो
  लब्धिमं वरविमोक्ष[1]मण्डलम् ।
5 बोधि शोधितु चरित्व चारिकां
  कल्पक्षेत्ररजकोटिसादृशान् ॥ १० ॥
येषु यान्तकुपपन्न नायका
  ते अशेष मयि सर्वि पूजिताः ।
शासनं च मय तेषु धारितं
10 शोधना इमु विमोक्षसागरम् ॥ ११ ॥
क्षेत्रकोटिपरमाणुभिः समा
  येऽभवन् दशबला अतीतकाः ।
धर्मचक्रु मय तेष धारितं
  भावितं [ वैर[2] ]विमोक्षमण्डलम् ॥ १२ ॥
15 बुद्धक्षेत्रि रज यावतो इहो
  तान् रजाग्रप्रसराब्धि पश्यती ।
एकमेकि रजि क्षेत्रसागरान्
  पूर्व शोधित जिनेन पश्यती ॥ १३ ॥
तेषु क्षेत्रप्रसरेषु नायकान्
20 जायतो वनवरेषु पश्यमि ।
एकचित्तप्रसरे अचिन्तिया
  दर्शयन्त विपुला विकुर्विता ॥ १४ ॥
पश्यमि कचि च क्षेत्रि नायकान्
  प्रार्थयन्त वरबोधिमुत्तमाम् ।
25 तिष्ठतं तुषितलोक * * *
  क्षेत्रकोटिनयुतैरचिन्तियैः ॥ १५ ॥
जायमान विपुलैर्विकुर्वितैः
  क्षेत्रसागरशतेषु पश्यमि ।
नारिसंघवर संपुरस्कृता
30 भाषमाणु धर्म नायकान् ॥ १६ ॥

---

1 S lacuna for विमोक्ष° supplied from B. 2 S lacuna for [illegible] supplied from B.

क्षेत्रकोटिपरमाणुसादशा-
नेकचित्तक्षणे वीर पश्यमि।
दर्शयन्त जगतामनेकधा
एकि क्षणि शान्तनिर्वृतिम्॥ १७॥
जन्म यातुक जिनान पश्यमि 5
प्रेक्षमाण रजि क्षेत्रसागरान्।
जन्मि जन्मि बहुकायकोटिभिः
पूजि तेष करुणामुपागमि॥ १८॥
क्षेत्रसागरनयैरचिन्तनै-
रक्षया गतिप्रचार यातुकाः। 10
तेषु सर्वजगदामुखा अहं
धर्ममेघ विपुलान् प्रवर्षमि॥ १९॥
एतमहं जिनसुता अचिन्तियं
जानमी वरविमोक्षमण्डलम्।
कल्पकोटिनयुतैरचिन्तियै- 15
र्यं न शक्य अयु सर्व दर्शितुम्॥ २०॥

एतमहं कुलपुत्र अप्रमेयकल्पसर्वारम्बणबोधिसत्त्वजन्मविकुर्वितसंदर्शनं बोधिसत्त्वविमोक्षं जानामि। किं मया शक्यं बोधिसत्त्वानां चित्तक्षणे चित्तक्षणे सर्वकल्पप्रस्थानगर्भसंभूतचित्तानां सर्वधर्मनयनिध्यप्तिजातिनिदर्शकानां सर्वतथागतपूजाप्रणिधिसंभूताशयानां सर्वबुद्धधर्माभिसंबोधिप्रणिधिपरमाणां सर्वकुलगोत्रोपपत्तिगतिसंदर्शनप्रतिभासकल्पानां सर्वतथागतपादमूलपद्मगर्भोपपत्तीनां सर्वजगत्परिपाककालाभिज्ञानां सर्वविनयाभिमुखजन्मोपपत्तिविकुर्वितसंदर्शकानां सर्वक्षेत्रप्रसरविकुर्वितमेघसंदर्शकानां सर्वजगद्गतिजातिकुलप्रतिभासप्राप्तानां चर्यां ज्ञातुं गुणान् वा वक्तुम्॥ (S 20)

गच्छ कुलपुत्र, इयमिहैव कपिलवस्तुनि महानगरे गोपा नाम शाक्यकन्या प्रतिवसति। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वपरिपाकाय संसारे संसरितव्यम्॥ (25)

अथ खलु सुधनः श्रेष्ठिदारकः सुतेजोमण्डलरतिश्रियो लुम्बिनीवनदेवतायाः पादौ शिरसाभिवन्द्य सुतेजोमण्डलरतिश्रियं लुम्बिनीवनदेवतामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सुतेजोमण्डलरतिश्रियो लुम्बिनीवनदेवताया अन्तिकात्प्रक्रान्तः॥ ४०॥ (B 1)

## ४३ गोपा ।

अथ खलु सुधनः श्रेष्ठिदारकः सुतेजोमण्डलरतिश्रियो लुम्बिनीवनदेवताया अन्तिकादपक्रम्य येन कपिलवस्तु महानगरं तेनोपसंक्रम्य एतमेवाप्रमेयकल्पसर्वारम्बणबोधिसत्त्वजन्मनिर्वृत्तिसदर्शनं बोधिसत्त्वविमोक्षं भावयन् अवतरन् विपुलीकुर्वन् अनुतिष्ठन् उत्तापयन् परिजयन् परिचिन्तयन् प्रविचिन्वन् अनुपूर्वेण येन धर्मधातुप्रतिभासप्रभो बोधिसत्त्वसंगीतिप्रासादस्तेनोपसंक्रामत् । तस्योपसंक्रमणस्य अशोकश्रीर्नाम बोधिसत्त्वसंगीतिप्रासाददेवता दशभिर्गृहदेवतासहस्रैः सार्धं प्रत्युद्गम्य सुधनं श्रेष्ठिदारकमेवमाह—स्वागतं ते महापुरुष महाप्रज्ञाज्ञानविक्रामिन् अचिन्त्यबोधिसत्त्वविमोक्षभावनाव्यालम्बनप्रणिधिचित्तविपुलधर्मविमानगोचरचारिन् धर्मनगराभिमुख अनन्तबोधिसत्त्वोपायनयानतारणाप्रतिप्रस्रब्धतथागतगुणसागरावभासप्रतिलब्ध सर्वजगद्विनयप्रतिभासप्रतिभानज्ञानाभिमुख सर्वसत्त्वचर्याज्ञानकायमज्ञानुवर्तन चर्याभिमुखचित्त सर्वजगद्वेदनाप्रीतिसमुद्वेगविवर्धनप्रणिधान सर्वतथागतधर्मप्रतिवेधमार्गप्रतिपन्न । यथा त्वा पश्यामि अनिमिषनेत्रगम्भीरचर्येर्यापथविशुद्धगोचरम्, नचिरेण त्वमनुत्तरतथागतकायवाक्चित्तालंकारविशुद्धिं प्रतिलप्स्यसे लक्षणानुव्यञ्जनप्रतिमण्डितेन कायेन दशबलज्ञानालोकालंकृतेन चित्तेन लोके विचरिष्यसि । यादृशीं च ते दृढवीर्यपराक्रमता पश्यामि, नचिरेण त्वं सर्वत्र्यध्वतथागतसमुखीभावदर्शनसमङ्गी सर्वतथागतधर्ममेघान् संप्रतीच्छन् सर्वबोधिसत्त्वध्यानविमोक्षसमाधिसमापत्तिशान्तधर्मविमानरतिमनुभवन् गम्भीरं बुद्धविमोक्षमनुप्रवेक्ष्यसि । तथा हि त्वं कल्याणमित्रोपसंक्रमणदर्शनपर्युपासनानुशासनीं संप्रतीच्छन् तद्गुणप्रतिनयेषु प्रयुज्यमानो न परिखिद्यसे, न विनिवर्तसे, न परितपसि । न च ते कश्चिदन्तरायो वा आवरणं वा निवरणं वा प्रसहते, मारा वा मारकायिका वा देवता । तेन अचिरादेव त्वं सर्वसत्त्वानां प्रीतिकरो भविष्यसि ॥

एवमुक्ते सुधनः श्रेष्ठिदारकोऽशोकश्रियं बोधिसत्त्वसंगीतिप्रासाददेवतामेतदवोचत्—तथास्तु देवते यथा वदसि । अहं खलु देवते सर्वसत्त्वक्लेशसंतापव्युपशमेन परमां प्रीतिं विन्दामि । सर्वसत्त्वविषमकर्मविपाकविनिवर्तनेन सर्वसत्त्वसुखसंभवेन सर्वसत्त्वानवद्यकर्मप्रतिपत्त्या परमां प्रीतिं विन्दामि । यदा च देवते सत्त्वा विविधविषमकर्मक्लेशप्रयोगाक्षिप्तचित्ता दुर्गतिषु प्रपतन्ति सुगतिषु वा, विविधानि कायिकचैतसिकानि दुःखदौर्मनस्यानि प्रत्यनुभवन्ति, दुर्मनसस्तस्मिन् समये बोधिसत्त्वा भवन्ति परमदुर्मनसः । तद्यथापि नाम देवते पुरुषस्यैकान्ततृष्णाचरितस्य एकपुत्रको भवेत् प्रियो मनापः । स तस्याङ्गप्रत्यङ्गेषु च्छिद्यमानेषु एकान्ततृष्णाचरितत्वात् परमदुर्मनाः स्यादनात्तमनस्कः, एवमेव देवते बोधिसत्त्वो बोधिसत्त्वचारिकां चरन् सत्त्वान् कर्मक्लेशवशेन तिसृषु दुर्गतिषु पतितान् दृष्ट्वा दुर्मना भवति परमदुर्मनाः । यस्मिन् वा पुनः समये सत्त्वाः कायवाङ्मनःसुचरितसमादानहेतोः कायस्य भेदात् सुगतौ स्वर्गलोके देवेषूपपद्यन्ते, देवमनुष्यगतिषु च कायिकचैतसिकानि सुखानि प्रत्यनुभवन्ति, परमसुखी तस्मिन् समये बोधिसत्त्वो भवति सुमना आत्तमनस्कः प्रमुदितः

प्रीतिसौमनस्यजात । न खलु पुनर्देवते बोधिसत्त्वा आत्मार्थाय सर्वज्ञतामभिप्रार्थयन्ते । न विचित्रससाररतिसुखप्रभवनार्थं न कामधातुपर्यापन्न विविधरतिव्यूहप्रार्थनया सज्ञाचित्त दृष्टिविपर्यासवशेन न सयोजनबन्धनानुशयपर्यवस्थानवशगता । न तृष्णादृष्टिवशगता, न विविधसत्त्वससर्गरतिसज्ञाभिनिबद्धचेतस, न ध्यानरतिसुखास्वादपरिगृद्धा, न विविधावरणावृता ससारगतिषु परिवर्तन्ते।अपि तु खलु पुनर्देवते बोधिसत्त्वा भवसमुद्गतानामपरिमित- ५ दुःखप्रपीडिताना सत्त्वानामन्तिके महाकरुणा सजनयित्वा सर्वजगत्सग्रहमहाप्रणिधिमभिनिर्हरन्ति। ते महाकरुणाप्रणिध्यभिनिर्हारबलवेगेन सत्त्वपरिपाकविनयप्रयुक्ता ससारे बोधिसत्त्वचर्यां चरन्त सदृश्यन्ते। ते सर्वसत्त्वना सर्वावरणसर्वज्ञताज्ञान पर्येषमाणा सर्वतथागतपूजोपस्थानप्रणिधिमभिनिर्हरन्ति। ते तथागतपूजोपस्थानप्रणिधिवशैर्न परिखिद्यन्ते बोधिसत्त्वचर्यायाम्। ते बोधिसत्त्वचर्यां चरन्त सक्लिष्टानि क्षेत्राणि सपश्यन्त सर्वबुद्धक्षेत्रपरि- १० शोधनप्रणिधिमभिनिर्हरन्ति सक्लिष्टान् क्षेत्रसागरान् परिशोधयमाना सर्वसत्त्वानामायतननानात्व सपश्यमाना। अनानात्वानुत्तरधर्मकायपरिशुद्ध्यै प्रणिधिमभिनिर्हरन्ति सक्लिष्टकायवाक्चित्तता सत्त्वाना सपश्यमाना। सर्वसत्त्वकायवाक्चित्तालकारपरिशुद्ध्यै प्रणिधिमभिनिर्हरन्ति। निष्कलायतनानपरिशुद्धचेतस सर्वान् सपश्यमाना सर्वसत्त्वचित्तचरितानि परिशोधयमाना बोधिसत्त्वचर्यां चरन्तो न परिखिद्यन्ते। एव १५ हि देवते बोधिसत्त्वा अनन्तमध्या बोधिसत्त्वचर्यां चरन्तोऽपरिखिन्नचित्ता। एव चरन्तोऽलकारभूता भवन्ति सदेवकस्य लोकस्य देवमनुष्यसपत्तिसजननतया। मातापितृभूता भवन्ति बोधिसत्त्वोत्पादप्रतिष्ठापनतया। धात्रीभूता भवन्ति बोधिसत्त्वमार्गावतरणतया। नित्यानुबद्धसहजदेवता भवन्ति दुर्गतिप्रपातभयारक्षणतया। महादाशभूता भवन्ति ससारसमुद्रोत्तारणतया। शरणभूता भवन्ति सर्वमारक्लेशभयविनिवर्तनतया। परायण २० भूता भवन्ति अन्तपरमशीतिभावोपनयनतया। तीर्थभूता भवन्ति सर्वबुद्धसमुद्रावतरणया। समाहकभूता भवन्ति धर्मरत्नद्वीपोपनयनतया। पुष्पभूता भवन्ति सर्वबुद्धगुणसपुष्पितचित्ततया। अलकारभूता भवन्ति विपुलपुण्यज्ञानप्रभाप्रमुञ्चनतया। परमप्रीतिकरा भवन्ति समन्तप्रासादिकतया। अभिगमनीया भवन्ति अनवद्यकर्मप्रतिपत्त्या। समन्तभद्रा भवन्ति सर्वाकारवराङ्गसुपरिपूर्णकायतया। असेचनकरूपा भवन्ति अप्रतिकूलदर्शनतया। अव २५ भासकरा भवन्ति ज्ञानरश्मिप्रमुञ्चनतया। आलोककरा भवन्ति धर्मप्रदीपधारणतया। प्रद्योतकरा भवन्ति बोध्याशयपरिशोधनतया। सेनापतिभूता भवन्ति मारकर्मविनिवर्तनतया। सूर्यभूता भवन्ति प्रज्ञारश्मिजालप्रभाप्रमुञ्चनतया। चन्द्रभूता भवन्ति गगनबुद्धिचन्द्रोदागमनतया। मेघभूता भवन्ति सर्वजगन्महाधर्ममेघाभिप्रवर्षणतया। एव खलु देवते प्रतिपद्यमाना बोधिसत्त्वा प्रिया भवन्ति सर्वसत्त्वानाम्॥ ३०

अथ खलु अशोकश्रीर्बोधिसत्त्वसगीतिप्रासाददेवता सार्धं तैर्दशभि गृहदेवतासहस्रै सुधन श्रेष्ठिदारक दिव्यसमतिक्रान्तै मनोमयै पुष्पमाल्यगन्धचूर्णविक्षेपनरत्नाभरणवर्षै प्रवृष्य अनुपरिवार्य बोधिसत्त्वभवन प्रविश्य तमाभिर्गाथाभिरभ्यभाषत्—

१ S संसाररविषु

उत्पद्यन्ते जिना लोके कदाचि ज्ञानभास्वरा ।
सबोधौ चित्तमुत्पाद्य सर्वसत्त्वानुकम्पया ॥ १ ॥
बहुभि कल्पनयुतै दुर्लभ तव दर्शनम् ।
अविद्यान्धस्य लोकस्य ज्ञानसूर्यो महानसि ॥ २ ॥
दृष्ट्वा लोक विपर्यस्तमज्ञानतिमिरावृतम् ।
महाकृपा सजनय्य प्रस्थितोऽसि स्वयभुताम् ॥ ३ ॥
विशुद्धेनाशयेन त्व बुद्धबोध्यर्थमुद्यत ।
कल्याणमित्र भजसेऽनपेक्ष कायजीविते ॥ ४ ॥
न निश्रयस्ते लोकेऽस्मिन्न निकेतो न सस्तव ।
असाध्योऽस्य सर्वीर्णो वि सङ्ग गगनाशय ॥ ५ ॥
बोधिचर्यां चरस्यग्रा पुण्यमण्डलसुप्रभ ।
उदयास्तमिते लोके ज्ञानरश्मिप्रमुञ्चन ॥ ६ ॥
लोकान्न चैवोद्वजसि लोकधर्मैर्न लिप्यसे ।
असङ्गश्चरसे लोके मारुतो गगने यथा ॥ ७ ॥
कल्पोद्दाहे यथा वह्नि प्रदीप्त सततोद्यत ।
अग्निकल्पेन वीर्येण चरसे बोधिचारिकाम् ॥ ८ ॥
सिंहकल्प महावीर दृढवीर्यपराक्रम ।
ज्ञाननिर्भयसपन्नश्च चरस्यपराजित ॥ ९ ॥
धर्मधातुसमुद्रेऽस्मिन् ये केचिन्नयसागरा ।
सन्मित्रसेवया शूर त्व तानवतरिष्यसे ॥ १० ॥

अथ खल्वशोकश्रीर्बोधिसत्त्वसगीतिप्रासाददेवता सुधन श्रेष्ठिदारकमाभिर्गाथाभि रभिष्टुत्य गच्छन्त पृष्ठत समनुबध्नाति स्म धर्मकामतया। अथ खलु सुधन श्रेष्ठिदारको धर्मधातुप्रतिभासप्रभबोधिसत्त्वसगीतिप्रासादमुपसक्रम्य अनुप्रविश्य समन्तादनुविलोकयामास गोपाया शाक्यकन्याया दर्शनकाम। सोऽपश्यद्गोपा शाक्यकन्या धर्मधातुप्रतिभासप्रभस्य बोधिसत्त्वसगीतिप्रासादस्य मध्ये सर्वबोधिसत्त्वस्य गृहासनप्रतिभासमणिपद्मगर्भासननिषण्णा स्त्रीणा चतुरशीत्या सहस्रै परिवृता सर्वासा पार्थिवकुलसभवाना पूर्वबोधिसत्त्वचर्यासभाग कुशलमूलाना पूर्वदानसग्रहसगृहीताना श्लक्ष्णमधुरवचनसमुदाचाराणा सर्वज्ञतार्थाभिमुख सुखसगृहीताना बुद्धबोधिसत्त्वसमुदागमसमानार्थतया सुसगृहीताना महाकरुणापूर्वंगमपुत्र दारपरिग्रहसुसपरिगृहीताना महामैत्र्युपेतस्वदारानुवर्तनपरिशोधिताना पूर्वबोधिसत्त्वाविलो पायकौशल्यपरिपरिपाचितानाम्। सर्वाणि च तानि चतुरशीतिस्त्रीसहस्राण्यवैवर्तिकान्यनुत्तरायां सम्यक्सबोधौ बोधिसत्त्वपारमितानयावतीर्णानि सर्वबोधिसत्त्वशिक्षासु अपरप्रणेयाणि सर्वग्रह- निगतचितानि सर्वसंसाररतिनिरतमानसानि असङ्गधर्मधातुनयपरिशुद्धानि सर्वज्ञताभिमुख

चित्तभेगानि सर्वनिवरणावरणजालविगतानि सर्वाङ्गपथसमतिक्रान्तानि धर्मकायसुनिर्मितविचाराणि सर्वलोकपरिपाकविनयाभिमुखानि विपुलपुण्यसमुद्रसभूतचित्तानि समन्तभद्रबोधिसत्त्व चर्याप्रणिधाननिर्यातानि विपुलबोधिसत्त्ववल्लभेगसवर्धितानि ज्ञानसूर्यमण्डलचित्तप्रदीपानि ॥

अथ खलु सुधन श्रेष्ठिदारको येन गोपा शाक्यकन्या तेनोपसक्रम्य गोपाया. शाक्यकन्याया क्रमतलयो सर्वशरीरेण प्रणिपत्य उत्थाय पुरत प्राञ्जलि स्थित्वा एवमाह— 5 मया आर्ये अनुत्तराया सम्यक्सबोधौ चित्तमुत्पादितम्। न च जानामि कथ बोधिसत्त्वा ससारे ससरन्ति, ससारदोषैश्च न लिप्यन्ते। सर्वधर्मसमतास्वभाव चावबुध्यन्ते। श्रावकप्रत्येकबुद्धभूमौ न च प्रतिष्ठन्ते। बुद्धधर्मावभासप्रतिलब्धाश्च भवन्ति। बोधिसत्त्वचर्यां न च व्यवच्छिन्दन्ति। बोधिसत्त्वभूमौ च प्रतिष्ठिता भवन्ति। सर्वतथागतविषय च सदर्शयन्ति। सर्वलोकगतिसमतिक्रान्ताश्च भवन्ति। सर्वलोकगतिषु चोपविचरन्ति। 10 धर्मकायपरिनिष्पन्नाश्च भवन्ति। अनन्तवर्णांश्च रूपकायानभिनिर्हरन्ति। अलक्षणधर्मकायपरायणाश्च भवन्ति। सर्वजगद्वर्णसस्थानाश्च कायानादर्शयन्ति। अनभिलाप्याश्च सर्वधर्मानवरन्ति। सर्ववाक्पथनिरुक्त्युदाहारैश्च सत्त्वाना धर्म देशयन्ति। नि सत्त्वाश्च सर्वधर्मान् प्रजानन्ति। सत्त्वधातुविनयप्रयोगाच्च न विनिवर्तन्ते। अनुत्पादानिरोधाश्च सर्वधर्मानवतरन्ति। सर्वतथागतपूजोपस्थानप्रयोगाच्च न विनिवर्तन्ते। अकर्मविपाकाश्च सर्वधर्मा- 15 नवतरन्ति। कुशलकर्माभिसस्कारप्रयोगाच्च न विनिवर्तन्ते ॥

एवमुक्ते गोपा शाक्यकन्या सुधन श्रेष्ठिदारकमेतदवोचत्—साधु साधु कुलपुत्र, यस्त्व बोधिसत्त्वानामिमामेवरूपा चर्यां धर्मता परिप्रष्टव्या मन्यसे, यथापि तत्समन्तभद्रप्रणिधानचर्याभिमुखस्य अय प्रश्नोदाहार। तेन हि कुलपुत्र शृणु, साधु च सुष्ठु च मनसि कुरु, भाषिष्ये बुद्धानुभावेन। दशभि कुलपुत्र धर्मै समन्वागता बोधिसत्त्वा 20 इमामेवरूपामिन्द्रजालतलोपमा समन्तज्ञानप्रभा बोधिसत्त्वचर्यां परिपूरयन्ति। कतमैर्दशभि ? यदुत उदारकल्याणमित्रसनिश्रयेण विपुलाधिमुक्तिप्रतिलाभेन उदारकल्याणाशयविशुद्ध्या विपुलपुण्यज्ञानसमुद्रोपस्तब्धचित्ततया बुद्धोत्पत्तिसभवमहाधर्मनिर्देशश्रवणप्रतिलाभेन त्र्यध्वतथागताधिमुक्तिचेतनासत्रासेन सर्वबोधिसत्त्वचर्यामण्डलसमतानुगमेन सर्वतथागताधिष्ठानप्रतिलाभेन प्रकृतिमहाकरुणाध्याशयविशुद्ध्या सर्वससारचक्रोपच्छेदचित्तबलाधानप्रतिलाभेन। 25 एभि कुलपुत्र दशभिर्धर्मै समन्वागता इमामेवरूपामिन्द्रजालतलोपमा समन्तज्ञानप्रभा बोधिसत्त्वचर्यां परिपूरयन्ति ॥

तत्र कुलपुत्र अविवर्त्यवीर्या बोधिसत्त्वा एतान् धर्मान् प्रतिलभ्य अक्षयाकाराभिनिर्हारेण भावयन्तो बहुलीकुर्वन्त कल्याणमित्राण्याराग्य दशभिराकारैरभिराधयन्ति। कतमैर्दशभि ? यदुत कायजीवितानपेक्षतया ससारोपकरणानर्थिकतया सर्वधर्मस्वभावसमता- 30 नुगमेन सर्वज्ञताप्रणिधानाविवर्त्यतया सर्वधर्मधातुनयाभ्यवलोकनतया सर्वभवसमुद्रोच्चलितमानसतया अनाल्यधर्मगगनप्रतिष्ठानाल्यतया सर्वबोधिसत्त्वप्रणिधानानावरणतया सर्वक्षेत्र-

सागरप्रसरणतया अनावरणबोधिसत्त्वज्ञानमण्डलसुपर्यवदापिततया। एभिः कुलपुत्र दशभि राकारैर्बोधिसत्त्वाः कल्याणमित्राण्यारागयित्वा अभिराधयन्ति॥

अथ खलु गोपा शाक्यकन्या एतमेवार्थमथ संदर्शयमाना बुद्धाधिष्ठानेन दश दिशो व्यवलोक्य तस्यां वेलायामिमा गाथा अभाषत--

ये प्रस्थिताः कल्पविद्यार्थ्यावबुधप्रार्थाः
सत्त्वसंग्रहेण परा गतशाठ्यमायाः।
शास्तृत्वसंप्रतिलब्ध अखिलवीर्या-
श्चर्येन्द्रजालसदृशी चरतेष लोके॥ ११॥
अधिमुक्ति येष विपुला गगनप्रकाशा
यस्यां समोसरति सर्वत्रियध्वलोकः।
क्षेत्राथ सत्त्व तथ धर्म तथैव बुद्धा-
स्तेषामियं चरिय ज्ञानप्रभंकराणाम्॥ १२॥
येषाशयो गगनकल्प अनन्तमध्यः
संक्लेशनिर्मलतया परम विशुद्धः।
येऽस्मिंश्चवन्ति गुण सर्वतथागतानां
चर्येन्द्रजालतलभेदसमाहितानाम्॥ १३॥
सर्वज्ञज्ञानविपुलैरमितैरचिन्त्यै-
रुपलब्ध ये गुणमहोदधिभिः सुमेधा।
ते पुण्यसागरशरीरविशुद्धगर्भा
लोके चरन्ति न च लोकमलेन लिप्ताः॥ १४॥
सर्वस्वराङ्गरुतघोषनयैर्जिनानां
ये धर्मगर्जित शृणोन्ति न यान्ति तृप्तिम्।
धर्मे नयानुगतप्रज्ञप्रभप्रदीपा-
स्तेषामियं जगप्रदीपकराण चर्या॥ १५॥
ये ते दशादिशि तथागत अप्रमेयान्
सर्वत्र चित्तक्षणि ओतरि अन्यमन्यान्।
सर्वांस्तथागतसमुद्र विचिन्तयन्ति
बुद्धाशयानुगतानमय प्रवेशः॥ १६॥
पश्यन्ति ये परिषदो विपुला जिनानां
तेषु समाधिनयसागरमोतरन्ति।
प्रणिधानसागरनय च अनन्तमध्य
तेषामिदं चरितमिन्द्रतलोपमानाम्॥ १७॥

येऽधिष्ठिता दशसु दिक्षु जिनैरशेषैः
कल्पांश्चरन्त्यनपरान्तसमन्तभद्राः ।
सर्वत्र क्षेत्रप्रसरे प्रतिभासप्राप्ता-
स्तेषामियं चरिय धर्मप्रभंकराणाम् ॥ १८ ॥

ये ते महाकरुणमण्डलज्ञानसूर्या 5
दृष्ट्वा जगद्व्यसनप्राप्तमुदेन्ति धीराः ।
धर्माभया जगति मोह विधूय * *
तेषामियं चरि दिवाकरसादृशानाम् ॥ १९ ॥

दृष्ट्वा प्रजां भवगतौ परिवर्तमानां
संसारस्रोतप्रविलोमस्थिताः सुमेधाः । 10
सद्धर्मचक्रममितं समुदानयन्त-
श्चर्यासमन्तवरभद्रमतिं चरन्ति ॥ २० ॥

ते ऽत्र शिक्षित नयेहि अनन्तमध्यान्
कायान् यथाशय जगत्युपदर्शयित्वा ।
प्रतिभासबिम्बसदृशैरपि तैः स्वकायैः 15
परिपाचयन्ति जनतां भवसागरेषु ॥ २१ ॥

मैत्रीनयैः सुविपुलैर्जनतां स्फरित्वा
नानाधिमुक्तिषु जनेषु चरिं विदर्श्य ।
धर्मं यथाशय जगत्यभिवर्षमाणा
बोधाय सत्त्वनयुतान् विनयन्ति धीराः ॥ २२ ॥ 20

अथ खलु गोपा शाक्यकन्या इमा गाथा भाषित्वा सुधनं श्रेष्ठिदारकमेतदवोचत्—अहं खलु कुलपुत्र सर्वबोधिसत्त्वसमाधिसागरनयव्यवलोकनविषयस्य बोधिसत्त्वविमोक्षस्य लाभिनी । सुधन आह—क एतस्य आर्ये सर्वबोधिसत्त्वसमाधिसागरनयव्यवलोकनविषयस्य बोधिसत्त्वविमोक्षस्य विषयः? आह—एतमहं कुलपुत्र बोधिसत्त्वविमोक्षं समापन्ना इह लोकधातावनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् कल्पानवतरामि । तेषु ये सत्त्वाः सर्वगति- 25 पर्यापन्नाः, तान् प्रजानामि । यावन्ति च तेषां सत्त्वानां च्युत्युपपत्तिमुखानि, तानि प्रजानामि । यावन्त्यभिनिर्वृत्तिमुखानि, यावत्यः कर्माभिसंस्कारसमापत्तयः, यावत्यः कर्मविपाकविचित्रताः, ता अपि प्रजानामि । कुशलमप्येषां कर्मसमादानं प्रजानामि । अकुशलमपि नैर्याणिकमपि अनैर्याणिकमपि नियतमपि अनियतमपि मिथ्यात्वनियतमपि B सानुशयमपि निरनुशयमपि कुशलमूलसंपन्नमपि कुशलमूलविपन्नमपि कुशलमूलपरिगृहीतमपि 30

[1] S missing this line, which is supplied from B.

अकुशलमूलपरिगृहीतमपि कुशलाकुशलपरिगृहीतमपि समुदानीतकुशलमूलमपि असमुदानीतपापधर्ममपि एषा कर्मसमादान प्रजानामि ॥

तेषु च अनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमेषु कल्पेषु ये बुद्धा भगवन्त उत्पन्ना, तेषा नामसमुद्रानवतरामि । तेषा च बुद्धाना भगवता प्रथमचित्तोत्पादसमुद्रानपि प्रजानामि । 5 सर्वज्ञताप्रस्थाननयसमुद्रानपि प्रजानामि । सर्वप्रणिधिसागराभिनिर्हारानपि प्रजानामि । पूर्वबुद्धोत्पादप्रस्थानसमुद्रानपि प्रजानामि । पूर्वबुद्धपूजोपस्थानप्रयोगसमुद्रानपि प्रजानामि । पूर्वबोधिसत्त्वचर्यापरिपूरिसमुद्रानपि प्रजानामि । निर्याणव्यूहसमुद्रानपि प्रजानामि । तेषां च बुद्धाना भगवता सत्त्वपरिपाकविनयसमुद्रानपि प्रजानामि । अभिसबोधिसमुद्रानपि प्रजानामि । धर्मचक्रप्रवर्तनवृषभितानिर्विकुर्वितान्यपि प्रजानामि । सर्वबुद्धविकुर्वितसमुद्रानपि 10 प्रजानामि । तेषा च बुद्धाना भगवता पर्षन्मण्डलविभक्तीरपि प्रजानामि । तेषु च पर्षन्मण्डलेषु ये श्रावकास्तेषा निर्याणनयमपि प्रजानामि । पूर्वकुशलमूलान्यपि प्रजानामि । मार्गभावनानानात्वमपि प्रजानामि । ज्ञानप्रतिलाभसपद्विशुद्धप्रभेदमपि प्रजानामि । ये च प्रत्येकबोधौ सत्त्वा प्रत्येकबोधौ प्रतिष्ठापितास्तानपि प्रजानामि । यानि च तेषा प्रत्येकबुद्धाना पूर्वकुशलमूलानि तान्यपि प्रजानामि । ये च तेषा प्रत्येकबुद्धाना प्रत्येकबोध्यधि- 15 गमास्तानपि प्रजानामि । यानि च तेषा प्रत्येकबुद्धाना शान्तविहारविकुर्वितविमोक्षसुखानि तान्यपि प्रजानामि । यानि च तेषा प्रत्येकबुद्धाना विविधविकुर्वितानि तान्यपि प्रजानामि । यश्च तेषा प्रत्येकबुद्धाना सत्त्वपरिपाकस्तमपि प्रजानामि । या च तेषा प्रत्येकबुद्धाना धर्मदेशना, तामपि प्रजानामि । यानि च तेषा प्रत्येकबुद्धानामनन्तसमाधिविहारविविधविमोक्षविक्रीडितानि तान्यपि प्रजानामि । यच्च तेषा बुद्धाना भगवता परिनिर्वाण तदपि प्रजानामि । 20 ये च बुद्धाना भगवता बोधिसत्त्वपर्षन्मण्डलसमुद्रास्तानपि प्रजानामि । तेषा च बोधिसत्त्वाना प्रथमकुशलमूलावरोपणान्यपि प्रजानामि । प्रथमचित्तोत्पादप्रणिधानान्यपि प्रजानामि । प्रणिधानविमात्रतामपि सर्वबोधिसत्त्वचर्यानिर्याणव्यूहाभिनिर्हारविमात्रतामपि प्रजानामि । पारमितामार्गाङ्गसभारविशुद्धिविमात्रतामपि प्रजानामि । बोधिसत्त्वमार्गप्रतिपत्तिव्यूहविमात्रतामपि प्रजानामि । बोधिसत्त्वभूम्याक्रमणसभारविमात्रतामपि प्रजानामि । 25 बोधिसत्त्वभूम्याक्रमणवेगविमात्रतामपि प्रजानामि । बोधिसत्त्वभूमिसक्रमसमाधिमण्डलविमात्रतामपि प्रजानामि । बोधिसत्त्वभूम्याक्रमणविकुर्वितान्यपि प्रजानामि । बोधिसत्त्वभूम्याक्रमणविहारानपि प्रजानामि । बोधिसत्त्वभूमिप्रतिष्ठानान्यपि प्रजानामि । बोधिसत्त्वभूमिभावनाविचारानपि प्रजानामि । बोधिसत्त्वभूमिपरिशोधननयानपि प्रजानामि । बोधिसत्त्वभूमिसवासानपि प्रजानामि । बोधिसत्त्वभूमिनिमित्तान्यपि प्रजानामि । बोधि- 30 सत्त्वभूमिवशितामपि प्रजानामि । बोधिसत्त्वभूम्याक्रमणज्ञानमपि प्रजानामि । बोधिसत्त्वसग्रहज्ञानमपि प्रजानामि । बोधिसत्त्वपरिपाकज्ञानमपि प्रजानामि । बोधिसत्त्वव्यवस्थानसवासमपि प्रजानामि । बोधिसत्त्वचर्यामण्डलविस्तारानपि प्रजानामि । बोधिसत्त्वचर्या

विकुर्वितान्यपि प्रजानामि । बोधिसत्त्वसमाधिसागरानपि प्रजानामि । बोधिसत्त्वविमोक्षनय-समुद्रानपि प्रजानामि । तेषां च बोधिसत्त्वानां प्रतिचित्तक्षणं नानासमाधिसमुद्रप्रतिलाभानपि प्रजानामि । सर्वज्ञतावभासनप्रतिलाभानपि प्रजानामि । सर्वज्ञताविद्युदालोकमेघानपि प्रजानामि । बोधिसत्त्वक्षान्तिप्रतिलाभनयानपि प्रजानामि । सर्वज्ञतावगाहनविक्रमानपि प्रजानामि । तेषां बोधिसत्त्वानां क्षेत्रसमुद्रानुगमानपि प्रजानामि । धर्मसमुद्रनयावतारानपि प्रजानामि । सर्वसमुद्रलक्षणनानात्वमपि प्रजानामि । सर्वबोधिसत्त्वविहारनयविकुर्वितान्यपि प्रजानामि । नानाप्रणिधाननयसमुद्रानपि प्रजानामि । विविधविकुर्वितसमुद्रविमात्रतामपि प्रजानामि ॥

यथा च अहं कुलपुत्र अस्यां लोकधातौ अतीतवर्तमानान् कल्पसमुद्रान् नानाविधा-नवतरामि, एवमपरान्तपरंपराव्यवच्छिन्नाननागतान् कल्पसमुद्रान् प्रजानामि । यथा च सहायां लोकधातौ प्रजानामि, तथा सहालोकधातुसमवसरणासु सर्वलोकधातुपरंपरासु प्रजानामि । यथा च सहालोकधातुसमवसरणासु सर्वलोकधातुपरंपरासु प्रजानामि, एवं सहालोकधातुपरमाणुरजोन्तर्गतास्वपि सर्वलोकधातुपरंपरासु प्रजानामि । यथा च सहा-लोकधातुपरमाणुरजोन्तर्गतासु सर्वलोकधातुपरंपरासु प्रजानामि, एवं सहालोकधातुदशदिगा-नन्तर्यस्थितास्वपि लोकधातुषु प्रजानामि । यथा च सहालोकधातुदशदिगानन्तर्यस्थितासु सर्वलोकधातुषु प्रजानामि, एवं सहालोकधातुदशदिगानन्तर्यपरंपरास्थितास्वपि सर्वलोक-धातुषु प्रजानामि । यथा च सहालोकधातुदशदिगानन्तर्यपरंपरास्थितासु सर्वलोकधातुषु प्रजानामि, एवं समन्तदिक्प्रभासवैरोचनलोकधातुवंशपर्यापन्नास्वपि सर्वलोकधातुषु प्रजानामि । यथा समन्तदिक्प्रभासवैरोचनलोकधातुवंशपर्यापन्नास्वपि लोकधातुषु प्रजानामि, एवं समन्तदिक्प्रभासवैरोचनलोकधातुवंशदिगानन्तर्यपरंपरास्थितासु सर्वलोकधातुषु प्रजानामि । यथा चास्य समन्तदिक्प्रभासवैरोचनस्य लोकधातुवंशस्य दशदिगानन्तर्यपरंपराव-स्थितासु सर्वलोकधातुषु प्रजानामि, एवमिह सर्वान्ति कुसुमतलगर्भव्यूहालंकारेषु लोक-धातुसुमेरुषु लोकधातुसमुद्रान्तर्गतेषु लोकधातुप्रसरेषु प्रजानामि । एवं लोकधातुनयेषु लोकधातुचक्रेषु लोकधातुमण्डलेषु लोकधातुविभागेषु लोकधातुनदीषु लोकधात्वावर्तेषु लोकधातुपरिवर्तेषु लोकधातुसुमेरुषु लोकधातुसमुद्गतेषु लोकधातुपथेषु लोकधातुवृक्षेषु लोकधातुपञ्जरकेषु लोकधातुसंज्ञागतेष्वपि प्रजानामि ॥

यथा च अस्मिन् कुसुमतलगर्भव्यूहालंकारे लोकधातुसमुद्रे प्रजानामि, एवं दशसु दिक्षु अनन्तपर्यन्तेषु धर्मधातुपरमेषु आकाशधातुपर्यवसानेषु सर्वलोकधातुसमुद्रेषु वैरोचनस्य पूर्वप्रणिधानसागरान् प्रजानामि अवतरामि अनुस्मरामि । पूर्वयोगसमुद्रानप्यवतरामि । पूर्वसमुदागमनसागरानप्यवतरामि । अनन्तमध्यकल्पबोधिसत्त्वचर्यासंवासमप्यवतरामि । क्षेत्र-परिशुद्धिनयानप्यवतरामि । सत्त्वपरिपाकोपायनयानप्यवतरामि । पूर्वतथागतारागणोपसं-क्रमणविकुर्वितानप्यवतरामि । पूर्वतथागतपूजोपस्थानप्रयोगनयानप्यवतरामि । पूर्वतथागतधर्म-

देशनासंप्रतीच्छननयानप्यवतरामि। पूर्वबोधिसत्त्वसमाधिप्रतिलाभनयानप्यवतरामि। पारिष्कारवशिताप्रतिलाभनयानप्यवतरामि। पूर्वतथागतगुणसमुद्रप्रतिपत्तिनयानप्यवतरामि। दानपारमितानयसमुद्रानप्यवतरामि। बोधिसत्त्वशीलव्रतमण्डलपरिशुद्ध्यभिनिर्हरणनयानप्यवतरामि। बोधिसत्त्वक्षान्तिप्रतिलाभनयानप्यवतरामि। बोधिसत्त्ववीर्यवेगसमुद्रानप्यवतरामि। सर्वध्यानाङ्गपरिनिष्पत्तिनयसागरानप्यवतरामि। प्रज्ञामण्डलपरिशुद्धिनयसमुद्रानप्यवतरामि। सर्वलोकोपपत्तिकायप्रतिभाससंदर्शनोपायनयानप्यवतरामि। समन्तभद्रचर्याप्रणिधानमण्डलपरिशुद्धिनयानप्यवतरामि। सर्वक्षेत्रसागरस्फरणतामप्यवतरामि। सर्वक्षेत्रपरिशुद्धिनयसमुद्रानप्यवतरामि। सर्वतथागतज्ञानावभाससमुद्रानप्यवतरामि। सर्वबुद्धबोध्याक्रमणविकुर्वितसागरानप्यवतरामि। सर्वतथागतज्ञानावभासप्रतिलाभनयानप्यवतरामि। सर्वज्ञताधिगमावतारनयसमुद्रानप्यवतरामि। अभिसंबोधिविकुर्वितसमुद्रानप्यवतरामि। धर्मचक्रप्रवर्तनवृषभितानिर्क्रीडितनयसमुद्रानप्यवतरामि। नानापर्षन्मण्डलसमुद्रानप्यवतरामि। तेषु च सर्वपर्षन्मण्डलेषु सर्वबोधिसत्त्वानां पूर्वकुशलसमुद्रानप्यवतरामि। प्रथमप्रणिधाननयसमुद्रानप्यवतरामि। सत्त्वपरिपाकविनयोपायनयसमुद्रानप्यवतरामि। ये च भगवता पूर्वं बोधिसत्त्वचर्यां चरता सत्त्वसमुद्राः परिपाचितास्तानप्यवतरामि। तेषां च बोधिसत्त्वानां प्रतिचित्तक्षणं कुशलमूलनिर्वर्तनोपायनयसमुद्रानप्यवतरामि। समाधिप्रतिलाभनयसमुद्रानप्यवतरामि। धारणीमुखसमुद्रप्रतिलाभनयसागरानप्यवतरामि। प्रतिभानज्ञानमण्डलविशुद्धिनयसमुद्रानप्यवतरामि। सर्वबोधिसत्त्वभूम्याक्रमणविकुर्वितनयसमुद्रानप्यवतरामि। चर्याजालाभिनिर्हारनयसमुद्रानप्यवतरामि। अनुपूर्वसमुद्रानप्यवतरामि। अनुपूर्वसमुदागमदिक्प्रवेशज्ञाननयसमुद्रानप्यवतरामि। तेषां च सर्वेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्तिविकुर्वितसमुद्रानप्यवतरामि॥

यथा च भगवतो वैरोचनस्य सर्वस्मिन् धर्मधातौ बोधिसत्त्वचरितसमुद्रानप्यवतरामि प्रजानामि अभिनिर्हरामि, एवं सर्वतथागतानां दशसु दिक्षु धर्मधातुपरमेष्वाकाशधातुपर्यवसानेषु सर्वलोकधातुसमुद्रेष्वसंभिन्नसर्वबोधिसत्त्वचरितसमुद्रानप्यवतरामि प्रजानामि अभिनिर्हरामि। एवं सर्वतथागतानां दशसु दिक्षु धर्मधातुपरमेष्वाकाशधातुपर्यवसानेषु सर्वलोकधातुसमुद्रेष्वसंभिन्नसर्वबोधिसत्त्वचरितप्रवेशमनन्तमायाजालप्रवेशगगनं तथर्मधातुस्फरणमनन्तमुखनिर्देशमपर्यन्तकल्पाधिष्ठानप्रवेशनिर्देशमवतरामि प्रजानामि अभिनिर्हरामि। तत्कस्य हेतोः? एष हि कुलपुत्र अस्य सर्वबोधिसत्त्वसमाधिनयसागरव्यवलोकनविषयस्य बोधिसत्त्वविमोक्षस्य विषय, यदेत समापन्ना सर्वसत्त्वचित्तचरितनयान् प्रजानामि। सर्वसत्त्वकुशलसंचयान् प्रजानामि। सर्वसत्त्वसंक्लेशव्यवदाननयान् प्रजानामि। सर्वसत्त्वकर्मनानात्वं प्रजानामि। सर्वश्रावकसमाधिद्वाराणि प्रजानामि। सर्वश्रावकसमाधिभूमिं प्रजानामि। सर्वप्रत्येकबुद्धशान्तविमोक्षविकुर्वितमवतरामि। सर्वबोधिसत्त्वसमाधिसमुद्रनयान् प्रजानामि। सर्वबोधिसत्त्वविमोक्षनयसागरावतारं प्रजानामि। सर्वतथागतविमोक्षनयसागरावतारमपि प्रजानामि॥

अथ खलु सुधनः श्रेष्ठिदारको गोपां शाक्यकन्यामेतदवोचत्—कियच्चिरप्रतिलब्धस्त्वयायमार्ये बोधिसत्त्वसमाधिविनयसागरव्यवलोकनविषयो बोधिसत्त्वविमोक्षः ? आह—भूतपूर्वं कुलपुत्र अतीतेऽध्वनि बुद्धक्षेत्रशतपरमाणुरजःसमानां कल्पानां परेण अभयंकरा नाम लोकधातुरभूत् । तस्यां खलु लोकधातौ गतिप्रवरो नाम कल्पोऽभूत् । तस्याः खलु पुनर्लोकधातोर्मध्ये क्षेमावती नाम चातुर्द्वीपिका अभूत् । तस्यां खलु चातुर्द्वीपिकायां मध्ये जम्बुद्वीपस्य द्रुममेरुश्रीर्नाम राजधान्यभूच्चतुरशीतिर्नगरकोटीसहस्राणां प्रमुखा । सा खलु पुनर्द्रुममेरुश्री राजधानी। तानि चतुरशीतिनगरकोटीसहस्राणि प्रत्येकं नीलवैडूर्यभूमिभागसंस्थापितानि सप्तरत्नमयप्राकारपरिक्षिप्तानि विचित्रवर्णप्रभाजालशुभगन्धशकटचक्रप्रमाणोत्पलपद्मकुमुदपुण्डरीकसंछन्नकनकवालिकासंस्तृततलगन्धोदकपरिपूर्णसप्तपरिखापरिक्षिप्तानि रत्नमयसप्तवेदिकाजालसप्ततालपङ्क्तिपरिवृतानि सप्तरत्नमयवृक्षमालापरिक्षिप्तानि उपरि मेघजालसंछादि- 10
तानि रत्नाष्टापदसुनिभक्तविचित्ररत्नभक्तिविराजितभूमिभागानि सिद्धगणविचरितानि अभिजातपक्षिसंघमनोज्ञरुतरवितनिर्घोषनिकूजितानि उद्यानकोटीशतसहस्रोपशोभितानि ऋद्धिस्फीतानि प्रमुदितनरनारीगणशतसहस्राकीर्णानि शुभाभिलषणीयमारुतेरितानुपरतपुष्पवृष्टिसहस्राभिप्रवृष्टानि पार्थिवेन्द्रशतसहस्राभ्युपेतानि । तेषां खलु पुनर्महानगराणां सर्वरत्नवृक्षहेमजालालंकारादिभ्यो वातसंघट्टितेभ्यो बहुतूर्यनिर्घोषसमरुतनिश्चरितेभ्योऽयमेवंरूप 15
आनन्दशब्दो निश्चरति स्म—स्नात, पिबत, खादत, धर्मं चरत, बोधिचित्तमुत्पादयत, अविनिवर्तनीयभूमिरदितानधिगच्छत । भद्रमस्तु वः । इति ॥

तस्यां खलु द्रुममेरुश्रियां राजधान्यां धनपतिर्नाम राजा अभूत् मण्डलिकः । तस्य चतुरशीतिस्त्रीसहस्राण्यन्तःपुरमभूत् । पञ्च च अमात्यशतान्यभूवन् । राज्ञः खलु पुनर्धनपतेः पञ्च पुत्रशतान्यभूवन् सर्वेषां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानां 20
प्रासादिकानां दर्शनीयानां परमशुभवर्णपुष्कलतया समन्वागतानाम् । राज्ञः खलु पुनर्धनपतेः पद्मश्रीगर्भसंभवा नाम अग्रमहिषी अभूत् तेषां चतुरशीतेः स्त्रीसहस्राणां प्रमुखा । तस्यां तेजोधिपतिर्नाम पुत्रोऽभूदभिरूपः प्रासादिको दर्शनीयः द्वात्रिंशन्महापुरुषलक्षणसमलंकृतकायः । तस्येमानि द्वात्रिंशन्महापुरुषलक्षणान्यभूवन् । यदुत—सुप्रतिष्ठितपाणिपादः तेजोधिपतिराजकुमारोऽभूत् । समं महापृथिव्यां पादतलमुत्क्षिपति, समं निक्षिपति, निक्षिपंश्च 25
सर्वाङ्गपादतलाभ्यां समं महापृथिवीं संस्पृशति । पादतलयोश्चास्य चक्राणि जातानि सहस्राराणि सनाभीनि सनेमिकानि सर्वाकारपरिपूर्णानि सुरुचिराणि दर्शनीयानि । उच्छङ्खपादता चास्य अभिनिर्वृत्ताभूत्, सुव्यक्तपरमोपशोभिना उपरि पादपृष्ठेन कुसुमगर्भाभिरक्तप्रभासरा । उभे चास्य हस्तपादतले जालिनी अभूतां विचित्रसुविभक्ताङ्गुलिप्रातिश्लिष्टिनी, तद्यथा पूर्वराजस्य हंसराजस्य । आयतपादपार्ष्णिना अन्वाभिनिर्वृत्ता- 30 8
भूत्सरिस्फुटा प्रभासरा सर्वरत्नवर्णावभासप्रमुक्ता । दीर्घा अस्याङ्गुल्योऽभूवन् वृत्ताः समायतनगोपाः । न ताः समं पृथिव्यां प्रतिष्ठापयमानाः, स्फुरन्ति स्म । मृदूनि चास्य

हस्तपादतलान्यभूवन् काचिलिन्दिकातिरेकसुखसंस्पर्शानि । स तैर्यान् स्पृशति स्त्रियं वा पुरुषं वा दारकं वा दारिकां वा, सर्वे ते प्रीतिमनसोऽभूवन् परमसुखसौमनस्यसमर्पिताः । ऐणेयजङ्घता चास्य अभिनिर्वृत्ताभूत् । तस्य जङ्घे अनुपूर्वसमुद्गते अभूतां रचिते वृत्ते सुजाते ऐणेयस्येव मृगराज्ञः । नैनं कश्चित्समर्थोऽनुजवितुमनुप्राप्तुं वा, न च व्रजन् क्लममापद्यते
5 स्म । समोत्सदः खलु पुनः स तेजोधिपतिराजकुमारोऽभूत् । तस्य द्वयोः पादयोर्द्वावुत्सदौ जातावभूतां वृत्तौ सुजातौ सुपरिपूर्णौ ग्रदस्यसंधी सुरचितौ दर्शनीयौ, द्वौ हस्तयोर्द्वावंस कूटयोः पृष्ठतो ग्रीवायामेकः । कोशगतवस्तिगुह्यता चास्य महापुरुषलक्षणमभिनिर्वृत्तमभूत् । सुगुह्यमस्य कोशवस्तिगुह्यमभूनिमग्नं सच्छादितम्, तद्यथा हस्त्याजानेयस्य वा अश्वाजानेयस्य वा । नास्य कश्चित्स्त्री वा पुरुषो वा दारको वा दारिका वा वृद्धो वा मध्यो वा
10 दहरो वा गुरुर्वा गुरुस्थानीयो वा निर्वसनस्याप्यपश्यदन्यत्र स्वपरिभोगेन नैमित्तिकेन वा कामोपचितेन । सिंहपूर्वार्धकायः खलु पुनः स तेजोधिपतिराजकुमारोऽभूत् । अनुपूर्वोद्गतशरीरः उपविस्तीर्णवृतोरस्कोऽभिजातमृगराजातिरेकसुसंस्थितसमुच्छ्रयः । चितान्तरांसः खलु पुनरभवत् सुपचितशरीरः सुविभक्तसमुच्छ्रयः सर्वकायसमभागप्रतिष्ठितः अनूनगात्रः अनुन्नतगात्रोऽपरिणतगात्रो मणिफलकनिसृष्टातिरेकद्युतिगात्रः । सवृत्तस्कन्धः खलु पुन
15 रभवत् । वृत्तावस्य स्कन्धावभूतां पीनौ शुभौ सुपरिपुष्टौ । प्रलम्बबाहुतामहापुरुषलक्षणप्रतिलब्धः स खलु पुनरभवत् । सोऽनवनमन्नेनोभाभ्यां पाणिभ्यां जानुमण्डले परिमार्जति, परामृशति समभागस्थितेन शरीरेण । बृहदृजुगात्रमहापुरुषलक्षणप्रतिलब्धः स खलु पुनरभवत् सर्वावरोपितपरमाणुसमगात्रः प्रशमगात्रो गुरुगात्रः प्रसन्नगात्रः प्रह्लादगात्रः । कम्बुग्रीवतामहापुरुषलक्षणप्रतिलब्धः स खलु पुनरभवत् अदीनकण्ठश्च । तस्य यावन्तो
20 ग्रीवासामन्तकेन मुखसामन्तकेन च रसहरण्यः, ताः सर्वाः समा अभूवन् समन्ताः सुपरिपूर्णाः । सिंहहनुतामहापुरुषलक्षणप्रतिलब्धः स खलु पुनरभवत्, सुनिष्पीडितहनुः सुपरिपूर्णमुखमण्डलः सुजातपरिशुद्धमुखमण्डलः स्वायतमुखद्वारोऽप्रविवरः । समचत्वारिंशद्दन्ततामहापुरुषलक्षणप्रतिलब्धः स खलु पुनरभूत् अनूनदशनः । तस्य किंचिद्भक्तपरिभोगेषु एकवारमपि मुखभक्तं परिवर्तमानमसंभिन्नमभ्यवहारमगमत् अन्तशः एकोदनबिन्दुरपि ।
25 अविरलाविषमदन्ततामहापुरुषलक्षणप्रतिलब्धः स खलु पुनरभवत् । अविरला अविषमा अस्य दन्ता अभूवन् अच्छिद्रसंधयः समाः सुविमलाः, यैरस्याहारं परिभुञ्जानस्य नाभूत्सङ्गो वा परिसङ्गोपरेहङ्गो(?) वा उपक्लेदो वा अभिष्यन्दो वा पर्यवनाहो वा अतिसर्जनं वा । समदन्ततामहापुरुषलक्षणप्रतिलब्धः खलु पुनरभवत् समदन्तो नोनदन्तो नाधिकदन्तो नोन्नदन्तो न सनदन्तो न सभिन्नदन्तः समन्तमभ्युदन्तोऽनु-
30 न्नदन्तो अविनिर्भिन्नदन्तः । सुशुक्लदंष्ट्रश्च कुमारोऽभूत् निरुपक्लेशदंष्ट्रः सुप्रसन्नदंष्ट्रः सुपरिशुद्धदंष्ट्रः सुसंस्थितनिचितदंष्ट्रः । सुप्रभूतजिह्वतामहापुरुषलक्षणप्रतिलब्धः खलु पुन-

१ B om सुजातपरिशुद्धमुखमण्डल २ B परिष्वङ्गो

रमत्। प्रभूता चास्य जिह्वा अभूत् तन्वी मृद्वी सुकुमारा कर्मण्या कननीया त्वुपरिवर्तिनी मुखमण्डलसंछादनी तथ्यपथ्यार्थव्यञ्जनपदनिरुक्तविष्ठानसंप्रयुक्ता । ब्रह्मस्वरश्च स कुमारोऽभूदभिरुचिरस्वरः सर्वतूर्यनिर्नादगीतवाद्यघोषमनोज्ञतरमिताल्पसंलापवाक्कर्मप्रव्याहारः । वाक्पथाभिरतिसंजननीं सर्वलोकाभिनन्दिनीं वाचमुदीरयति स्म । ब्रह्मातिरेकेण स्वरेण च पर्षन्मण्डलमभिनामति, सर्वं च अनुरवति । अभिनीलनेत्रश्च स कुमारोऽ- 5 भूदच्छनेत्रः परिशुद्धनेत्रः प्रभास्वरनेत्रः विप्रसन्ननेत्रोऽभिरूपनेत्रो दर्शनीयनेत्रः सुरुचिरनेत्रः प्रेहस्मितनेत्रः । गोपक्ष्मो स कुमारोऽभूत्पद्मरागमनुविशुद्धचक्षुरायतनः समनेत्ररङ्गः समसदृशनेत्ररङ्गः सुजातनेत्ररङ्गः आयतनेत्ररङ्गः परिपूर्णनेत्ररङ्गः सुप्रतिष्ठितनेत्ररङ्गः । भ्रुवोन्तरे चास्य ऊर्णा जाताभून्मृद्वी कर्मण्या सुकुमाराकुड्डसंस्पर्शा स्वच्छा शुद्धा प्रभास्वरा हिमगुडिकानुपारवर्णा सुशुक्लरश्मिमण्डलप्रभासमासा । मूर्ध्नि च अस्योष्णीषमभिनिर्वृत्तमभूत् सुजातं समन्त- 10 परिमण्डलं मध्याभिव्यक्तकेशालंकारं कोटीशतसहस्रपत्रपद्मसंदर्शितं समन्तात्सनभागप्रतिष्ठितमपरिमितमहार्घ्यताप्रधानमव्ययम् । सूक्ष्मच्छविश्च स कुमारोऽभूत् । नास्य काये रजो वा मलो वा क्लेदो वा जालं वा वली वा शैथिल्यं वा भङ्गो वा प्रसरणं वा विसरणं वा असमं वा अस्थित । सुवर्णवर्णच्छविश्च स कुमारोऽभूज्जाम्बूनदहेमनिर्भासः समन्तव्यामप्रभः काञ्चनैकनालप्रभामण्डलोपशोभितः सर्वरोमकूपप्रमुक्तगन्धरश्मिवितिमिरप्रभास्वरशरीराल- 15 कारः । एकैकरोमा च स कुमारोऽभूत् । एकैकरोमस्य एकैकस्मिन् रोमकूपे रोम जातमभूनीलवैदूर्यवर्णप्रदक्षिणावर्तकुण्डलजातं सुपरिसंचितं सुनिविष्टं सुप्रतिष्ठितम् । ऊर्ध्वाङ्गरोमा च स कुमारोऽभूदसिनिवर्तनीयरोमा अप्रयुदावर्तनीयरोमा अनलुप्तरोमा । इन्द्रनीलवर्णकेशानामहापुरुषलक्षणप्रतिलब्धः स कुमारोऽभूत् । तस्य नीलाः केशा अभूवन् वैरोचनमणिरत्ननीलवर्णनिर्भासाः स्निग्धा मृदवः सुकुञ्चिताः प्रदक्षिणावर्तकुण्डलिनः सुजातमूला अनुद्धताः 20 निष्पीडिता असंलुलिताः समसदृशस्थानसंस्थिताः । न्यग्रोधपरिमण्डलतामहापुरुषलक्षणप्रतिलब्धः स खलु पुनः तेजोगुप्तिनी राजकुमारोऽभूत् समन्तभद्रपरिमण्डलः समन्तभद्रः समन्तप्रासादिकः । स पुनरोऽप्यवतृप्तिकरचारुदर्शनोऽभूत् । पृष्ठतोऽपि दक्षिणतोऽपि वामतोऽपि गच्छतापि तिष्ठतापि निषण्णोऽपि भाषमाणोऽपि तूष्णीभूतोऽपि अवतितमनापचारुदर्शनोऽभूत् । एभिः कुलपुत्र द्वात्रिंशता महापुरुषलक्षणैः समलंकृतकाय. स तेजोगुप्तिनी राज- 25 कुमारोऽभूत् सर्वसत्त्वाप्रतिकूलदर्शनः सर्वाभिप्रायपरिपूरिकदर्शनः सर्वसत्त्वरतिकरदर्शनः॥

स खलु कुलपुत्र तेजोगुप्तिनी राजकुमारोऽपरेण समयेन पित्राभ्यनुज्ञातो द्रुमस्रेखवती राजधान्या नन्दाकुरमन्तेर नानीचालत्, तत्र भूमिदर्शनाय अभिनिर्यातो विशाला मन्त्रालङ्कारैः सार्धं महता पुष्पवेषसंहतीभीमतपरिशुद्धितव्यूहेन नरनारीगणैः समन्तादभिनन्दमानो जाम्बूनदसुवर्णरूपमाल्य महाश्वरत्नचतुष्कं नारायणवज्रमयदण्डाभ्याभ्युद्यतपङ्कजसुपरि- 30 निष्ठितप्रतिष्ठितैव सर्वरत्नमणिराजजालाभिच्छन्नर सर्वरत्नकुन्दकुसुमविचित्रोपशोभितमृदं सर्व-

१ S om सुरोपेत. २ S अनुकूल.

रत्नजालसंछादितव्यूहं महामणिरत्नराजव्यूहगर्भमध्यप्रतिष्ठापितसिंहासनं पञ्चकन्याशतरत्नसूत्रदामपरिगृहीतं गगनासक्तवायुसमजवाजानेयाश्वसहस्रयुक्तम् अनुपूर्वपरिणतचारुदर्शनेन श्वेतवैडूर्यमणिराजमयप्रच्छदनेन विमलाप्रमाणप्रभेण अचिन्त्याद्भुतसर्वरत्नविरचनाभक्तिविन्यासचित्रसर्वाकारव्यूहोपशोभितेन नीलवैडूर्यमणिराजोद्विद्धदण्डेन महता रत्नच्छत्रेण ध्रियता बहु-
5 प्राणिशतसहस्रपरिवृतदिव्यमधुरमनोज्ञनिर्घोषैस्तूर्यशतसहस्रैः प्रवाद्यमानैः महद्भिः पुष्पमेघैरभिप्रवर्षद्भिः सुरभिदिव्यगन्धधूपघटिकानियुतशतसहस्रैः प्रधूप्यमानैः । तस्य तथा व्रजतोऽष्टवर्त्मा मार्गः समवस्थितः निम्नोन्नतविगतोऽपगतशर्करकठल्लोत्सदो जातरूपरजतसर्वरत्नराजधातुसंचितभूमितलप्रतिष्ठानः सुवर्णवालिकासंस्तीर्णो विचित्ररत्नपुष्पाभिकीर्ण उभयतो रत्नवृक्षपङ्क्तिसमलंकृतविचित्ररत्नवेदिकापरिवृतः । उपरि रत्नकिङ्किणीजालसंछन्नो
10 विविधरत्नचित्रितप्रतिमण्डितोऽनेकरत्नध्वजपताकापट्टशतसहस्राभिप्रलम्बितोपशोभितव्यूहः उभयतो नानारत्नव्योमकपङ्क्तिविरचितव्यूहः ॥

तत्र केषुचिद्रत्नव्योमकेषु विविधरत्नपरिपूर्णानि रत्नभाजनानि स्थापितान्यभूवन् याचनकसत्त्वप्रतिपादनकार्थम् । केषुचिद्व्योमकेषु सर्वरत्नाभरणविधयः स्थापिता अलंकारार्थिना याचकानामलंकरणार्थम् । केषुचिद्व्योमकेषु चिन्तामणिरत्नानि स्थापितानि सर्वसत्त्वानां
15 सर्वाभिप्रायपरिपूरणार्थम् । केषुचिद्व्योमकेषु सर्वाकारविविधान्नपानरसपरिपूर्णानि भोजनानि स्थापितानि, यस्य येनार्थः तस्य तत्प्रतिपादनार्थम् । केषुचिद्व्योमकेषु सर्वाकारपरमस्वादुमनोज्ञवर्णगन्धरसस्पर्शा दिव्यभक्तविधयः स्थापिताः । केषुचिद्व्योमकेषु विचित्ररसास्वादा दिव्यसर्वफलविधयः स्थापिताः । केषुचिद्व्योमकेषु विविधोज्ज्वलविचित्ररङ्गरक्तानि नानाचित्रभक्तिविन्यासविराजितानि परममहार्हाणि सूक्ष्माणि सुकुमारकान्तवर्णानि दिव्यवस्त्रकोटी-
20 शतसहस्राणि स्थापितानि वस्त्रार्थिनां यथाभिप्रायपरिभोगार्थम् । केषुचिद्व्योमकेषु सर्वाकारविविधदिव्यमनोज्ञवर्णगन्धाः सर्वगन्धविधयः स्थापिता अभूवन् विलेपनार्थिनां यथाभिप्रायपरिभोगार्थम् । केषुचिद्व्योमकेषु सर्वोपकरणराशयः स्थापिता अभूवन् सत्त्वानां यथाशयाभिप्रायपरिभोगार्थम् । केषुचिद्व्योमकेषु नार्योऽभिरूपाः प्रासादिका दर्शनीया विविधचारुरूपवेषा विचित्रमनोज्ञवस्त्रवसिता सर्वाभरणालंकृता विविधविलेपनभक्तिविन्यासप्रति-
25 मण्डितोपशोभितशरीरा सर्वस्त्रीशिल्पमायाकलाविधिज्ञाः स्थापिता अभूवन् ॥

तेन खलु पुनः समयेन तस्यामेव द्रुमेश्रिया राजधान्या सुदर्शना नाम अग्रगणिकाभूद्राजपरिभोग्या । तस्याः सुचलितरतिप्रभासश्रीर्नाम दारिकाभूदभिरूपा प्रासादिका दर्शनीया नातिदीर्घा नातिह्रस्वा नातिस्थूला नातिकृशा नातिगौरा नातिश्यामा अभिनीलनेत्रा अभिनीलकेशी अभिरामवक्त्रा ब्रह्मस्वरा मधुरप्रियवादिनी प्राज्ञा सर्वकला-
30 विधिज्ञा सर्वशास्त्रकोविदा दक्षा अनलसा सगौरवा सप्रसादा मैत्रचित्ता अप्रतिघातबहुला अतृप्तिकरमनापदर्शना मन्दरागदोषमोहा ह्यपत्राप्यसंपन्ना मार्दवा ऋज्वी अशाठ्या अमाया

१ S विपक्ता. २ B व्यामक throughout ३ B om चिन्तामणि.

विनीता। सा मात्रा सार्धमनेककन्यापरिवृता रत्नरथाभिरूढा द्रुमभेरुश्रियो राजधान्या निष्क्रम्य तेजोधिपते राजकुमारस्य पुरतः तेजोधिपतिं राजकुमारं परिमार्गयमाणा राजाज्ञा-नियोगाद्गच्छन्ती तेजोधिपतिं राजकुमारं दृष्ट्वा तीव्रं रागचित्तमुत्पादयामास। सा तेजोधिपते राजकुमारस्यान्तिकेऽधिमात्रं संजातस्नेहानुबद्धा अस्वतन्त्रचित्ता मातरं सुदर्शनामेतदवोचत्—यत्खलु अम्ब जानीयाः—सचेन्मां तेजोधिपते राजकुमारस्य न दास्यसि, मरणं वोपगमिष्यामि 5 मरणमात्रकं वा दुःखम्। सा प्राह—मैवं दारिके चेतनामुत्पादय। एष हि कुमारश्चक्रवर्ति-लक्षणसमन्वागतः। स्थानमेतद्विद्यते—यदेष पितुर्धनपतेरत्ययाचक्रवर्तिराज्यमध्यावसिष्यति। स राजा भविष्यति चक्रवर्ती। ततोऽस्य स्त्रीरत्नं प्रादुर्भविष्यति वैहायसंगमम्। अपि तु खलु पुनर्दारिके गणिका वयं सर्वलोकरतिकराः। न वयमेकसत्त्वं प्रतिनियमेन यावज्जीव-मुपतिष्ठामहे। वयं हि राज्ञो धनपतेराज्ञया तेजोधिपतेः कुमारस्योपस्थानाय निर्याताः। 10 मैनां चेतनां दृढीकुरुष्व। दुर्लभमेतत्स्थानम्॥

तेन चेह समयेन सूर्यगात्रप्रवरो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। तस्य खलु पुनर्गन्धाङ्कुरशिखरप्रभमेघस्योद्यानस्यानन्तरे धर्ममेघोद्गतप्रभासो नाम बोधिमण्डोऽभूत्। तत्र स भगवान् सूर्यगात्रप्रवरस्तथागतः प्रथमसप्ताहाभिसंबुद्धो व्याहार्षीद्[1]। 15 स तया दारिकया रथाभिरूढयैव प्रचलायमानया स्वप्नान्तरे दृष्टः। प्रतिविबुद्धायाश्च पुराणज्ञातिसालोहितया देवतया आरोचितम्—एष दारिके सूर्यगात्रप्रवरस्तथागतो धर्म-मेघोद्गतप्रभासे बोधिमण्डे विहरति प्रथमसप्ताहाभिसंबुद्धो बोधिसत्त्वगणपरिवृतो देवनाग-यक्षगन्धर्वासुरगरुडकिंनरमहोरगदेवेन्द्रब्रह्माभास्वराकनिष्ठदेवगणपुरस्कृतः। तत्रैव च सर्वाः पृथ्वीदेवताः संनिपतिताः। आकाशदेवता अब्देवता ज्वलनदेवता वायुदेवताः सागरदेवता 20 नदीदेवताः पर्वतदेवता रात्रिदेवता अरुणोद्गतदेवता वनदेवता वृक्षदेवता औषधिदेवताः सस्यदेवता नगरदेवताः पदगामिनीदेवता बोधिमण्डदेवताः शरीररश्मिदेवताः सत्त्वनिकाय-देवता गगनदेवता सर्वदिग्देवताश्च संनिपतिताः तस्य भगवतः सूर्यगात्रप्रवरस्य तथागतस्य दर्शनायेति॥

सा तेन तथागतदर्शनेन तथागतगुणश्रवणेन च निशारदा भूत्वा अवकाशप्रति- 25 लब्धा तेजोधिपते राजकुमारस्य पुरतस्तस्यां वेलायामिमा गाथा अभाषत—

रूपवरेणङ्ग लोकि विशिष्टा
विश्रुत सर्वदिशासु गुणेभिः।
अज्ञबलेन न मे सदृशास्ति
सर्वकलारतिमायविधिज्ञा॥ १॥ 30

---

[1] B om. व्याहार्षी...संबुद्धो.

प्राणशता बहु नैकसहस्रा
ये मम प्रेक्षिपु रागवशेन।
नापि च रंज्यति मह्य कुमारा
कस्यचिदन्तिकि मानसु लोके ॥ २ ॥

5 नो च मम प्रतिहन्यति चित्त
नाप्यनुनीयति कुत्रचि सत्त्वे।
नापि च मे क्वचि वैरु न दोषः
सर्वहितेऽभिरत मम चित्तम् ॥ ३ ॥

यद् मि त्वमपि दृष्ट कुमारो
10 रूपबलप्रवरो गुणधारी।
तद इन्द्रिय प्रीणित सर्वे
प्रीत ममो विपुला उपजाता ॥ ४ ॥

शुद्धविरोचनरत्नसुवर्णो
केशभिनील सुवल्लित तुभ्यम्।
15 सुभ्रुललाट सुनासा एव
निवेदयमी तव आत्मा ॥ ५ ॥

वरलक्षणधारि सुतेजा
काञ्चनपर्वतसंनिभरूपः।
पुरतो न विराजमि तुभ्य
20 श्यामकृता मपिविग्रहतुल्या ॥ ६ ॥

स्वभिनीलमहायतनेत्रा
सिंहहन्यो (१) परिपूर्ण सुवक्त्रः।
न च ते प्रतिहन्यति वाच्य
अप्रकृत प्रतिगृह्णमि मह्यम् ॥ ७ ॥

25 वदने तव जिह्व प्रभूता
ताम्रतनू विपुला रतनाभा।
वरब्रह्मस्वराङ्गसुघोषा
तोषयसे जगदाल्पमानः ॥ ८ ॥

वदने सहितास्तव दन्ता
30 शङ्खनिभा विमला सुविभक्ता।

---

१ S रज्य मह्य कुमारा २ S जगदारपमान.

स्मितु येहि विदर्शयमानः
　तोषयसे जनतां नरवीर ॥ ९ ॥
तव लक्षणशोभन काय-
　स्त्रिंश दुवेव प्रभासुर शुद्धः ।
समलंकृतु येहि सुरूपः　　5
　चक्रधरो भवितासि नरेन्द्रा ॥ १० ॥

अथ खलु तेजोधिपती राजपुत्रः सुचलितरतिप्रभासश्रियं दारिकामेतदवोचत्-कस्य त्वं दारिके, को वा तवारक्षकः? न मम दारिके कल्पते परपरिगृहीतेषु दारेषु ममतां कर्तुम्। तस्यां वेलायामिमा गाथा अभाषत-

सुदर्शने रूपगुणैरुपेते　　10
　सुलक्षणे पुण्यविशुद्धकाये ।
पृच्छामि ते ब्रूहि ममैतमर्थं
　परिग्रहस्त्वं वरगात्रि कस्य ॥ ११ ॥
माता पिता वा तव कश्चिदस्ति
　भर्तापि वा स्वामि परिग्रहो वा ।　　15
सत्त्वोऽपि चान्यः खलु येन संज्ञा
　कृता ममेति त्वयि सौम्यरूपे ॥ १२ ॥
कच्चिन्न हिंसाभिरतं मनस्ते
　हरस्यदत्तं खलु मा परेषाम् ।
मा काममिथ्याचरणे रतिस्ते　　20
　मा वा मृषाद्य प्रसृतं मनस्ते ॥ १३ ॥
मा मित्रभेदप्रसृता मतिस्ते
　मा मर्मभेदीनि वचांसि वक्षि ।
मा तेऽपरस्वेषु धनेष्वभिध्या
　व्यापादचित्तं जनतासु चापि ॥ १४ ॥　　25
मा दृष्टिकान्तारपथि स्थितासि
　मा कर्मवंशोद्धुरचेतना वा ।
मायाविनी शाठ्यवशानुगा वा
　मा बाधसे त्वं विषमेण लोकम् ॥ १५ ॥
मातापिताज्ञातिसुहृद्गुरूणां　　30
　कच्चित्प्रियत्वं तव गौरवं वा ।

---

१ B om. this line.

दरिद्रभूतेषु च संग्रहाय
कच्चित्प्रदातुं प्रसृतं मनस्ते ॥ १६ ॥
प्रेमास्ति कल्याणसुहृत्सु यो वा
धर्मेण काले च वदन्ति ये त्वाम्।
5 कायस्य चित्तस्य च कल्यतां ते
कर्मण्यतां वा जनयन्ति सम्यक् ॥ १७ ॥
बुद्धेषु ते गौरवमस्ति कच्चित्
प्रेमापि वा बुद्धसुतेषु तीव्रम्।
कच्चित्प्रजानासि तमग्रधर्मं
10 यतः प्रसूतिः सुगतात्मजानाम् ॥ १८ ॥
कच्चित्परे तिष्ठसि धर्मवशे
न चाप्यधर्मे चरितुं मतिस्ते।
अनन्तवर्णे च गुणार्णवे ते
कच्चित्परं प्रेम च गौरवं च ॥ १९ ॥
15 अनाथभूतेषु जनेषु कच्चित्
मैत्रं मनस्तेऽपरिणायकेषु।
आयायिके कर्मणि च प्रवृत्ता
कच्चिद्दशार्ता करुणायसे त्वम् ॥ २० ॥
परेषु संपत्तिमुदीक्ष्य चाग्रा
20 कच्चित्परां तुष्टिमुपैषि च त्वम्।
क्लेशासतन्त्रेषु जनेषु कच्चित्
प्रज्ञाबलात्सजनयस्युपेक्षाम् ॥ २१ ॥
अज्ञानसुप्तां जनतामुदीक्ष्य
कच्चिद्दृढां प्रार्थयसेऽप्रबोधिम्।
कल्पाननन्तान् चरमाण चर्यां
25 कच्चिन्न ते प्रार्थनयास्ति खेदः ॥ २२ ॥

अथ खलु सुदर्शना अग्रगणिका सुचलितरतिप्रभासश्रियो दारिकाया माता तेजोधिपतिं राजकुमारमेतदवोचत्—ममैषा कुमार दारिका उपपादुका पद्मगर्भसंभूता नाभिनिष्क्रान्तपूर्वा गृहात्। तस्यां च वेलायामिमा गाथा अभाषत—

मां भाषमाणां शृणु राजपुत्र
30 यद्दारिका ते परिपृच्छ्यतेयम्।
वक्ष्येऽनुपूर्व्या तव दारिकेयं
जाता यथा सौम्य निवर्धिता च ॥ २३ ॥

निशाक्षये यत्र भवान् प्रसूतः
तत्रैव जाता मम दारिकेयम् ।
उपपादुका निर्मलपद्मगर्भे
सर्वाङ्गपूर्णा सुविशालनेत्रा ॥ २४ ॥
वसन्तकाले प्रवरे ऋतूनां
संभूतसस्योपधिसंप्ररोहे ।
सालप्रभोद्यानवरे मदीये
चिरं मया तत्र विनिर्गताहम् ॥ २५ ॥
प्रमुक्तशाखाग्रविचित्रकोशे
प्रफुल्लवृक्षे घनमेघवर्णे ।
नानाद्विजोन्नादितवृक्षषण्डे
वने विशोका मुदिता रमामि ॥ २६ ॥
कन्याशतैरष्टभिरन्विताहं
विभूषिताभिः सुमनोहराभिः ।
विचित्ररत्नाम्बरधारिणीभिः
गीते च वाद्ये च सुशिक्षिताभिः ॥ २७ ॥
विचित्रगन्धध्वजपुण्डरीके
वापीतटेऽभूवमहं निषण्णा ।
पुष्पाभिकीर्णे धरणीप्रदेशे
सुशिक्षितस्त्रीगणसंप्रपूर्णे ॥ २८ ॥
तत्राम्बुमध्येऽथ सहस्रपत्रं
प्रादुर्बभूवोत्तमरत्नपद्मम् ।
वैडूर्यदण्डं मणिराजपत्रं
विशुद्धजाम्बूनदकर्णिकं च ॥ २९ ॥
सुगन्धवरोत्तमकेसराढ्यं
जम्बुध्वजोद्भूतमहाप्रभासम् ।
आसंस्तदा संशयिता जनौघा
शब्दो किलाम्बुजेन एव गर्भः ॥ ३० ॥
महर्षीन्द्रानजनीअपेऽस्माद्
प्रबोध्यमाना रविजुः प्रभाभिः ।
सुप्तेऽमरासो मधुरश्च शब्द-
प्रव्याहतः पूर्णनिमित्तचन्द्राः ॥ ३१ ॥

5

10

15

20

25

30

स्त्रीरत्नमेतद्धि मनुष्यलोके
प्रादुर्बभूवोत्तमशीलशुद्ध्या ।
न कर्मणो ह्यस्ति कृतस्य नाशः
पूर्वे सुचीर्णस्य विपाक एषः ॥ ३२ ॥

सुनीलकेश्युत्पलनीलनेत्रा
ब्रह्मस्वरा काञ्चनशुद्धवर्णा ।
आमुक्तमालाभरणा सुवेशा
पद्मोद्भवा श्रीरिव निर्मलाभा ॥ ३३ ॥

विशुद्धगात्री सममागकाया
संपूर्णगात्रा सुविभक्तदेहा ।
सुवर्णबिम्बं मणिनेव मृष्टं
विरोचते सर्वदिशोऽवभास्य ॥ ३४ ॥

गोत्रोद्भवश्चन्दनराजगन्धः
प्रवाति चास्याभिदिशः स्फरित्वा ।
रुतं च दिव्यं मधुरं रुवत्या
गन्धो मुखाद्वाति यथोत्पलस्य ॥ ३५ ॥

स्मितं यदैषा प्रकरोति चैव
दिव्यं तदा तूर्यरवं विरौति ।
स्त्रीरत्नमेतत्खलु जातु लोके
न प्राकृतानां वशमभ्युपैति ॥ ३६ ॥

मनुष्यलोके न हि विद्यतेऽसौ
भर्ता हि योऽस्यास्त्वदृते परः स्यात् ।
सल्लक्षणैश्चित्रितचारुरूपः
कन्यां प्रतीच्छस्व यतस्त्वमेताम् ॥ ३७ ॥

ह्रस्वा न चेयं हि न चातिदीर्घा
स्थूला न चैषा न कृशातिमात्रम्[1] ।
चापोदरी पीनपयोधरा च
तवानुरूपेयमनिन्दिताङ्गी ॥ ३८ ॥

संख्यालिपिज्ञाननये तथैव
मुद्राविधौ शास्त्रनयेष्वभिज्ञा ।

[1] S कृशातिमात्रम्.

शिल्पानि यावन्ति च सर्वलोके
　पारंगतेयं निखिलेषु तेषु ॥ ३९ ॥
इष्वस्त्रविज्ञान परं विधिज्ञा
　सत्त्वान युक्तौ सुविनिश्चिता च ।
आकर्षणे शत्रुमनःप्रसादे
　सर्वत्र पारं परमं गतेयम् ॥ ४० ॥
विशुद्धरश्मोत्तमसर्वगात्र-
　मुक्तप्रभामण्डलराजितेयम् ।
स्वलंकृता पूर्वकृतैः स्वपुण्यैः-
　स्तवानुरूपा परिचारिकेयम् ॥ ४१ ॥
ये व्याधयः केचन जीवलोके
　तेषां समुत्थाननये निधिज्ञा ।
तेषामशेषप्रशमं च संप-
　द्भैषज्यसम्यक्प्रविचारणे च ॥ ४२ ॥
जम्बुध्वजे येऽपि च सर्वमन्त्र-
　निरुक्तिभेदा निखिला जनानाम् ।
सर्वत्र लोकव्यवहारसंधौ
　चित्रे गतेयं परमां गतिं च ॥ ४३ ॥
स्वराङ्गनिर्ह्रादनयाश्च येऽपि
　तेषां प्रभेदेषु नये प्रविष्टा ।
गीतानि नृत्यानि च यानि लोके
　तेष्वप्यशेषेषु परं विधिज्ञा ॥ ४४ ॥
तूर्येषु वाद्येषु रतिप्रयोगे
　हास्ये च लास्ये च गतिं गतेयम् ।
एकेष्वरक्तेषु नरेष्वभिज्ञा
　नरानुनीता प्रतिघान्विता वा ॥ ४५ ॥
स्त्रीणां रुतानीह च यानि लोके
　विशेषतस्तान्यखिलान्यवैति ।
ये चाप्रमेया वनिताजनस्य
　दोषा न तेषां निखिलेन सन्ति ॥ ४६ ॥
निरीक्षिते चार्धनिरीक्षिते च
　अङ्गप्रदानेऽङ्गविदर्शने च ।

१ S वाय.

निष्ठां गता सर्वकलासु चैव
मनोरथानां परिपूरणी ते ॥ ४७ ॥
अमत्सरा चेयमनीर्षुका च
न कामलोला न * पानगृद्धा ।
5 क्षेमार्जवमार्दवसूरता च
अक्रोधना चापरुषा सुविज्ञा ॥ ४८ ॥
उत्थानशीलाप्रतिकूलवाक्या
नित्यं गुरूणामनुवर्तिनी च ।
सगौरवा किंकुशलैषिणी च
10 तवानुयोग्या चरितानुवृत्तौ ॥ ४९ ॥
जीर्णेषु वृद्धेषु च रोगवत्सु
दरिद्रभूतेषु सुदुःखितेषु ।
चक्षुर्विहीनेष्वपरायणेषु
कारुण्यमेषं जनयत्यजस्रम् ॥ ५० ॥
15 परार्थचिन्ताभिरता सदैषा
न चिन्तयत्यात्महितानि चैव ।
सर्वस्य लोकस्य हितैषिणी च
स्वलंकृता चित्तगुणैरुदारैः ॥ ५१ ॥
नित्याप्रमत्ता स्मृतिसंप्रजन्ये
20 स्थिता निषण्णा शयिता व्रजन्ती ।
तूष्णीं प्रभाषत्यपि च स्मृतैव
लोकस्य चैवाभिमता सदैषा ॥ ५२ ॥
समन्ततः पुण्यवती विभाति
सदैव च प्रेमकरी जनानाम् ।
25 एतामुदीक्षन्न हि तृप्तिमेति
लोके न चास्याः क्वचिदस्ति सक्तिः ॥ ५३ ॥
कल्याणमित्रेषु सगौरवेयं
त्वद्दर्शने नित्यसमुत्सुका च ।
दीर्घानुदर्शिन्यविदुष्टचेष्टा
30 सुमेरुकल्पस्थिरशुद्धचित्ता ॥ ५४ ॥
सदा स्वपुण्यैः समलंकृतैषा
न विद्यतेऽस्याः क्वचिदप्यमित्रम् ।

ज्ञाने न चास्याः सदृशास्ति योषि-
देषानुरूपा तव राजपुत्र ॥ ५५ ॥

अथ खलु तेजोधिपती राजपुत्रो गन्धाङ्कुरशिखरप्रभमेघमुद्यानं प्रविश्य सुचलितरति-प्रभासश्रियो दारिकाया मातुरग्रगणिकायाः सुदर्शनायाः समक्षं सुचलितरतिप्रभासश्रियं दारिकामेतदवोचत्—अहं खलु दारिके अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थितः। तेन मया 5 अपरिमाणाः सर्वज्ञतासंभाराः समुदानयितव्याः। अनन्तमध्यान् कल्पान् बोधिसत्त्वचर्यां चरता सर्वपारमिताः परिशोधयितव्याः। अपरान्तकोटीगतान् कल्पांस्तथागताः पूजयितव्याः। सर्वबुद्धशासनानि संधारयितव्यानि। सर्वबुद्धक्षेत्राणि परिशोधयितव्यानि। सर्वतथागत-वंशा न व्यवच्छेत्तव्याः। सर्वसत्त्ववंशाः परिपाचयितव्याः[1]। सर्वसत्त्वसंसारदुःखानि विनिवर्त-यितव्यानि। अत्यन्तसुखे सत्त्वाः प्रतिष्ठापयितव्याः। सर्वसत्त्वानां ज्ञानचक्षुः परिशोधयितव्यम्। 10 सर्वबुद्धबोधिसत्त्वसमुदागमे प्रयोक्तव्यम्। सर्वबोधिसत्त्वसमतायां स्थातव्यम्। सर्वबोधि-सत्त्वभूमयो निष्पादयितव्याः। सर्वसत्त्वधातुः परिशोधयितव्यः। सर्वसत्त्वदारिद्र्यव्यवच्छेदाय सर्वस्वपरित्यागिना भवितव्यम्। अपरान्तकोटीगतान् कल्पान् दानपारमितायां चरता अन्नपानदानेन सत्त्वाः संतर्पयितव्याः। सर्वोपकरणवस्तुपरित्यागेन सर्वयाचनकसंघः संतर्प-यितव्यः। तेन मया सर्वस्वपरित्यागितायां प्रतिपद्यमानेन नास्ति तदाध्यात्मिकं बाह्यं वा 15 वस्तु यन्न परित्यक्तव्यम्। तेन मया पुत्रदुहितृभार्या दातव्याः। चक्षुःशिरोहस्तपादसर्वाङ्ग-प्रत्यङ्गानि परित्यक्तव्यानि। सा त्वं मम तदा परेषु प्रतिपद्यमाना दानान्तरायं करिष्यसि। प्रियेषु पुत्रेषु परित्यज्यमानेष्वनात्तमना भविष्यसि। बहु कायिकचैतसिकं दुःखं प्रत्यनु-भविष्यसि। मम सर्वस्वपरित्यागचित्ते प्रत्युपस्थिते मात्सर्यचित्तमुत्पादयिष्यसि। ममाङ्ग-प्रत्यङ्गानि छित्त्वा याचनकेभ्यः परित्यज्यमानस्य दुःखिता दुर्मनस्विनी भविष्यसि। 20 भविष्यति च स कालो यदहं त्वां परित्यज्य तथागतशासने प्रव्रजिष्यामि। सा त्वं तस्मिन् समयेऽनात्तमना भविष्यसि॥

अथ खलु तेजोधिपती राजपुत्रः तस्यां वेलायां सुचलितरतिप्रभासश्रियं दारिकां गाथाभिरध्यभाषत— 25

संबोधिसंभारमहासमुद्रा
मयाप्रमेयाः परिपूरणीयाः।
यतः कृपां सर्वजगत्सु कृत्वा
संप्रस्थितोऽहं सुचिराय बोधौ ॥ ५६ ॥
कल्यार्णवैः सम्यगनन्तमध्यैः
व्योमाप्रमाणैः प्रणिधिर्विशोध्यः। 30
प्रस्थानभूमेश्च तथागतानां
कल्पाननन्तान् परिकर्म कार्यम् ॥ ५७ ॥

---

[1] S परिपालयितव्याः.

त्र्यध्वस्थितानां च मया जिनानां
संशिक्षिता पारमितापथेषु ।
विशोधनीयो वरबोधिमार्गो
निरुत्तरज्ञानमहानयेन ॥ ५८ ॥
5 क्षेत्राणि सर्वाण्यपि सर्वदिक्षु
क्लिष्टानि शोध्यानि मयाखिलानि ।
सर्वाक्षणा दुर्गतयश्च सर्वा
व्यावर्तनीयाः खलु सर्वलोके ॥ ५९ ॥
सर्वे च सत्त्वा निखिला विशोध्याः
10 क्लेशावृता मोहतमोन्धभूताः ।
प्रपाचयित्वा विविधैरुपायैः
सर्वज्ञतामार्गनये निवेश्याः ॥ ६० ॥
भूमीरसङ्ख्याश्च मया विशोध्या
कल्पार्णवांश्चैव जिनाः प्रपूज्याः ।
15 मैत्रीं च सजन्य जगत्यशेषे
देयानि दानान्यखिलानि लोके ॥ ६१ ॥
समागतान् याचनकानुदीक्ष्य
सर्वप्रदानाभिरतस्य नित्यम् ।
मा लीनदीना कृपणा तदानीं
20 भूया[1] मम त्व विसभागचित्ता ॥ ६२ ॥
शिरोर्थिनो मेऽर्थमुदीक्ष्य धीमान्
चर्यामुदारा च रतस्तदानीम् ।
भविष्यसि त्व मृशदु खतप्ता
श्रुत्वैवमर्थं स्थिततामुपैहि ॥ ६३ ॥
25 त्वं दौर्मनस्य मम हस्तपाद-
च्छेदान् प्रदास्याम्यपि याचकानाम् ।
कटूनि वक्ष्यस्यवलार्तरूपा
श्रुत्वैतमर्थं परिचिन्तयस्व ॥ ६४ ॥
प्रियाणि वस्तूनि तथैव पुत्रान्
30 दास्यामि च स्वामहमर्थिकः सन् ।
श्रुत्वैतमर्थं यदि ते न स्यादः
सर्वं तथैवास्तु यथा तवेष्टम् ॥ ६५ ॥

[1] S भूयो.

एवमुक्ते सुचलितरतिप्रभासश्रीर्दारिका तेजोधिपतिं राजपुत्रमेतदवोचत्–तथा भवतु कुमार यथा वदसि । अहं ते यथाकामं करणीया यथेच्छापरिभोग्या येनकामंगमा सर्वत्रात्यन्तानुगामिनी नित्यानुबद्धा सर्वकार्योत्सुका आशयानुकूलोपचारा सम्यक्पराक्रमा अविपमप्रतिपत्तिप्रयोगोपचारा भविष्यामि ॥

अथ खलु सुचलितरतिप्रभासश्रीर्दारिका तेजोधिपतिं राजपुत्रं गाथाभिरध्यभाषत– 5

कायो हि यन्मे नरकाग्निनायं
संताप्यमानो विलयं प्रयायात् ।
जन्मार्णवानप्यहमुत्सहामि
चर्यासमागा परिचारिका ते ॥ ६६ ॥

जातिष्वनन्तास्वपि जातजात- 10
च्छिद्येत कायो यदि मेऽतिमात्रम् ।
तदुत्सहेऽहं स्थिरधीरचित्ता
भर्ता भव त्वं मम साधुरूप ॥ ६७ ॥

कल्पाननन्तानपि चक्रवालाः
केचिच्छिरो मे परिचूर्णयेयुः । 15
आक्रान्तचित्तापि तदुत्सहेऽहं
स्वामी भव त्वं मम साध्वचिन्त्य ॥ ६८ ॥

जात्यन्तराण्यप्यमितानि च त्वं
छित्त्वाङ्गमात्मानि परस्य देहि ।
चेतोवशित्वं मयि संनिवेद्य 20
दृढं प्रतिष्ठापय मां स्वधर्मे ॥ ६९ ॥

अत्यन्तमेव प्रतिपादयामि
कार्यं तवेमं नरदेवपुत्र ।
चर्यां चरन् कल्पमहासमुद्रान्
प्रयच्छ मामर्थिजनाय हृष्टाम् ॥ ७० ॥ 25

संप्रस्थितस्त्वं प्रवराग्रबोधौ
सत्त्वेषु संजन्य कृपामनन्ताम् ।
अशेषसत्त्वार्णवसंग्रहाय
गृह्णीष्व मामप्यनुकम्पयातः ॥ ७१ ॥

न भोगहेतोर्न धनस्य हेतो- 30
र्न कामचर्यारतिसंभवार्थम् ।

१ S अथ. २ S कश्चित्स्थिरा. ३ S प्रतिष्ठापयाभाय धर्मे.

इच्छाम्यहं स्वामिनमप्रमत्त
समागचर्याचरणाय तु त्वाम् ॥ ७२ ॥
शुद्धाभिनीलेक्षण मैत्रचित्ता
यथेक्षसे त्वं खलु सर्वलोके।
आरक्तचित्तं करुणायमानो
निःसंशयं त्वं भविता मुनीन्द्रः ॥ ७३ ॥
यथा क्रमात्क्रमतो मही ते
रजोज्ज्वला तिष्ठति निर्मलेयम्।
सल्लक्षणालंकृत चक्रवर्ती
निःसंशयं त्वं भविता भूलोके ॥ ७४ ॥
स्वप्नान्तरेऽपश्यमहं रजन्यां
सुधर्ममेघप्रभबोधिमण्डे।
द्रुमेन्द्रमूले सुगतं निषण्णं
पुरस्कृतं बुद्धसुतैरनेकैः ॥ ७५ ॥
तं सूर्यगात्रप्रवरं जिनेन्द्रं
जाम्बूनदोत्तप्तमहाद्रिकल्पम्।
स्वप्नान्तरे मूर्ध्न्यस्पृशत्स मेऽथ
पाणिं प्रबुद्धा मुदिता ततोऽहम् ॥ ७६
रतिप्रभा नाम विशुद्धकाया
पुराणसालोहितदेवता मे।
आरोचयत्सेयं तथागतोऽस्मिन्
सबोधिमण्डे चिरमुदारे ॥ ७७ ॥
अभूत्पुरा मे खलु चेतनैव
मीक्षेय तेजोधिपतिं कुमारम्।
आरोचितं देवतया कुमार
त्वं द्रक्ष्यसीत्यद्य निशान्तरे मे ॥ ७८ ॥
स्वप्नान्तरे मे सुगतोऽथ दृष्टः
त्वं चैव दृष्टः परिशुद्धसत्त्वः।
सार्धं त्वयाहं तमनोरथाहं
तं पूजयिष्यामि मुनीन्द्रमद्य ॥ ७९ ॥

अथ खलु तेजोधिपती राजपुत्रः सूर्यगात्रप्रवरस्य तथागतस्य नामधेयं श्रुत्वा बुद्धदर्शनानन्तराप्रतिलब्धो महाप्रीतिप्रसादवेगसंजातः सुचन्द्ररतिप्रभासश्रियं दारिकां

पञ्चभिर्मणिरत्नशतैरभ्यवकीर्य श्रीगर्भप्रभासं नाम चूडामणिरत्नमस्याः प्रादात्। अग्निवर्णेन चैनां महामणिरत्नचित्रेण वस्त्ररत्नेनाच्छादयामास। सैवं सत्कृता न हृष्यति नोत्प्लवति न चरति वा प्रमादं वागमत् अन्यत्र कृताञ्जलिपुटा अनिमिषनयना तेजोधिपतेः कुमारस्य वदनं प्रेक्षमाणा स्थिताभूत्॥

अथ खलु सुदर्शना अग्रगणिका तेजोधिपतिं राजकुमारं गाथाभिरध्यभाषत— 5

दद्यामिमां ते खलु दारिकां ह्-
मिलेयमासीन्मम दीर्घरात्रम्।
सेयं प्रदत्ता तव चारुरूपा
स्वलंकृता पुण्यगुणैरुपेता॥ ८०॥
मनुष्यलोके सदृशी न कन्या 10
संविद्यतेऽस्याः क्वचिदुत्तमा या।
शीलेन बुद्ध्याथ गुणैस्तथान्यैः
स्त्रीणां वरेयं खलु सर्वलोके॥ ८१॥
पद्मोद्भवेयं न हि जातिवादः
संदूषणामर्हति निर्मलत्वात्। 15
अशेषदोषानुपलिप्तचित्ता
चर्यासभागा तव संबभूव॥ ८२॥
सर्वोत्तमस्पर्शसुखावहानि
गात्राणि चास्याः परमं मृदूनि।
व्याध्यातुराः संस्परिशेन येषा- 20
मरोगतां तत्क्षणमेव यान्ति॥ ८३॥
योऽस्याः शुभो वाति हि गात्रगन्धो
वरांस्तदन्यानभिभूय गन्धान्।
तं गन्धमाघ्राय विशुद्धशील-
प्रतिष्ठिता सर्वनरा भवन्ति॥ ८४॥ 25
अस्या हि कायः कनकप्रकाशो
विरोचते निर्मलपद्मगर्भः।
क्रुद्धा यमुद्वीक्ष्य हि मैत्रचित्ता
भवन्ति सर्वे निखिलेन सत्त्वाः॥ ८५॥
स्निग्धं वचोऽस्या मधुरं मनोज्ञं 30
कान्तं जनानां श्रवणाभिरामम्।

१ B यस्याः. २ S च नानाश्रवणाभिरामम्.

श्रुत्वैव यद्दोषतमोनिघाति
कर्माशुभं नाभिलषन्ति कर्तुम् ॥ ८६ ॥

शुद्धाशया निर्मलमानसेयं
सर्वत्र शाठ्यं न हि विद्यतेऽस्याः ।
5 यद्वापते चेतसि तत्तथैव
यतो जगत्तोषयति स्वरेण ॥ ८७ ॥

न मायया मोहयते च सत्त्वान्
निर्लोभयत्येव च नार्थहेतोः ।
लज्जावती संवृतमानसेयं
10 सगौरवा वृद्धजनेषु नित्यम् ॥ ८८ ॥

न जातिगोत्रेण न रूपमत्ता
तथैव नेयं परिवारमत्ता ।
मदेन मानेन च विप्रयुक्ता
नम्रा जिनेषु प्रणता सदैव ॥ ८९ ॥

15 अथ खलु तेजोधिपती राजपुत्रः सपरिवारया सुचलितरतिप्रभासश्रिया दारिकया विंशत्या कन्यासहस्रैः परिवारेण च सार्धं ततो गन्धाङ्कुरशिखरप्रभमेघादुद्यानान्निष्क्रम्य येन धर्मोद्गतप्रभासो बोधिमण्डो येन च भगवान् सूर्यगात्रप्रवरः तथागतः, तेनोपसंक्रान्तोऽभूत् भगवतः सूर्यगात्रप्रवरस्य तथागतस्य दर्शनाय वन्दनाय पूजनाय पर्युपासनाय। स यावद्यानस्य भूमिस्तावद्यानेन गत्वा यानादवतीर्य पद्भ्यामेव भगवतः सूर्यगात्रप्रवरस्य तथागतस्यान्तिकमुप
20 संक्रामन् अद्राक्षीत्तेजोधिपती राजपुत्रो भगवन्तं सूर्यगात्रप्रवरं तथागतमर्हन्तं सम्यक्संबुद्धं दूरत एव प्रासादिकं दर्शनीयं शान्तेन्द्रियं शान्तमानसं गुप्तेन्द्रियं नागमिव सुदान्तं ह्रदमिवाच्छमनाविलं विप्रसन्नम्। दृष्ट्वा चास्य चित्तमभिप्रसन्नम्। प्रसन्नचित्तो बुद्धदर्शनमहाप्रीतिप्रसादवेगान् संवर्धयामास। महाप्रीतिवेगप्रसादप्रामोद्यपरिस्फुटेन चित्तेन तं भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य तस्य भगवतः पादौ शिरसाभिवन्द्य सार्धं सुचलितरति
25 प्रभासश्रीदारिकाप्रमुखेन सर्वपरिवारेण पञ्चभिर्महामणिरत्नपद्मशतसहस्रैः तं भगवन्तमभिच्छादयामास। पञ्च च विहारशतानि सर्वगन्धमणिरत्नमयानि सर्वमणिरत्नराजविचित्राणि तस्य भगवतः कारयामास। एकैकं च विहारं पञ्चभिर्महामणिरत्नराजशतसहस्रैः प्रतिमण्डयामास॥

अथ खलु कुलपुत्र स भगवान् सूर्यगात्रप्रवरस्तथागतः तेजोधिपते राजकुमारस्य
30 अध्याशयं विदित्वा समन्तनेत्रद्वारप्रदीपं नाम सूत्रान्तं संप्रकाशयामास। स तं श्रुत्वा सर्वधर्मनयेषु दश समाधिमुखसमुद्रान् प्रत्यलभत। यदुत–सर्वतथागतप्रणिधानसागरसमवसरणभासं नाम समाधिमुखं प्रत्यलभत। त्र्यध्वावभासगर्भं च नाम समाधिमुखं

प्रत्यलभत। सर्वबुद्धमण्डलाभिमुखनिर्याणं च नाम समाधिमुखं प्रत्यलभत। सर्वसत्त्वप्रवरावभासप्रवेशं च नाम समाधिमुखं प्रत्यलभत। सर्वलोकसमुदयज्ञानावभासप्रतिपन्नं च नाम समाधिमुखं प्रत्यलभत। सर्वसत्त्वेन्द्रियसमुद्रावभासप्रदीपं च नाम समाधिमुखं प्रत्यलभत। सर्वजगत्परित्राणज्ञानमेघं च नाम समाधिमुखं प्रत्यलभत। सर्वसत्त्वजगत्परिपाकविनयाभिमुखप्रदीपं च नाम समाधिमुखं प्रत्यलभत। सर्वतथागतधर्मचक्रनिर्घोष- 5 विज्ञपनं च नाम समाधिमुखं प्रत्यलभत। समन्तभद्रचर्यामण्डलपरिशुद्धिप्रणिधिमेघं च नाम समाधिमुखं प्रत्यलभत। इमानि दश समाधिमुखानि प्रमुखं कृत्वा सर्वधर्मनयेषु दशसमाधिमुखसमुद्रान् प्रत्यलभत। सुचन्द्रितरतिप्रभासश्रीश्च दारिका दुर्योधनज्ञानसागरगर्भं च नाम चित्तनिष्पत्तिं प्रत्यलभत, अवैवर्तिका चाभूदनुत्तरायां सम्यक्संबोधौ॥

अथ खलु तेजोधिपती राजपुत्रो भगवतः सूर्यगात्रप्रवरस्य तथागतस्य पादौ शिर- 10 साभिवन्द्य तं भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य सुचन्द्रितरतिप्रभासश्रिया दारिकया सर्वपरिवारेण च सार्धं तस्य भगवतोऽन्तिकात्प्राक्रामत्। स यत्र द्रुममेरुश्री राजधानी, येन च पिता राजा धनपतिस्तेनोपजगाम। उपेत्य पितुर्धनपते राज्ञः पादौ शिरसाभिवन्द्य एतमर्थमारोचयामास—यत्खलु देव जानीयाः—सूर्यगात्रप्रवरो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनु 15 ष्याणां बुद्धो भगवान्। इहैव तत्र निर्जिते धर्ममेघोद्गतप्रभासे बोधिमण्डे विहरत्यचिराभिसंबुद्धः। अथ खलु राजा धनपतिस्तेजोधिपतिं कुमारमेतदवोचत्—केन ते कुमार अयमर्थ आरोचितो देवेन वा मनुष्येण वा? स प्राह—सुचन्द्रितरतिप्रभासश्रिया दारिकयेति॥

अथ खलु राजा धनपतिर्बुद्धोत्पादश्रवणेन महानिधानप्रतिलम्भसंज्ञी सुदुर्लभबुद्धरत्नपरिलाभसंज्ञी तथागतदर्शने सर्वदुर्गतिप्रपातभयविनिवर्तनसंज्ञी सर्वक्लेशव्याधिप्रशमनमहा 20 वैद्यराजप्रतिलाभसंज्ञी सर्वसंसारदुःखपरिमोचकसंज्ञी अत्यन्तयोगक्षेमप्रतिष्ठापकसंज्ञी वितिमिरज्ञानालोकदर्शकसंज्ञी अविद्यान्धकारविध्वंसनमहोल्काप्रादुर्भावसंज्ञी अनायकस्य लोकस्य धर्मनयविनायकप्रतिलाभसंज्ञी अपरिणायकस्य सर्वज्ञतायानपरिणायकसमुत्पादसंज्ञी महाप्रीतिप्रसादप्रामोद्यप्रतिलब्धो बुद्धोत्पादं श्रुत्वा क्षत्रियब्राह्मणनैगमजानपदामात्यपुरोहितकुमार कोट्टराजानौ दौवारिकपार्षद्यांश्च संनिपात्य बुद्धोत्पादानन्दशब्दान्वेदिनस्तेजोधिपतेः कुमारस्य 25 तद्राज्यं धर्माच्छादं प्रादात्। स तं कुमारं राज्येऽभिषिच्य सार्धं दशभिः प्राणिसहस्रैर्येन भगवान् सूर्यगात्रप्रवरस्तथागतस्तेनोपजगाम। उपेत्य तस्य भगवतः पादौ शिरसाभिवन्द्य तं भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य तस्य भगवतः पुरस्तान्न्यषीदत् सार्धं स्वकेन परिवारेण॥

अथ खलु कुलपुत्र स भगवान् सूर्यगात्रप्रवरस्तथागतो धनपतिं राजानं सर्वावतीं च 30 पर्षन्मण्डलमवलोक्य तस्या ऊर्णायामूर्णाकोशान्महाजगच्चित्तप्रदीपं नाम रश्मिं प्रामुञ्चत्। सा दशसु दिक्षु सर्वलोकधातुमवभास्य सर्वलोकेन्द्राणामभिमुखं परिसंस्थाप्य अचिन्त्यानि बुद्ध-

विकुर्वितानि संदर्श्य बुद्धवैनयिकानां सत्त्वानामाशयान् विशोध्य तस्यां वेलायामचिन्त्येन बुद्धाधिपतेयेन सर्वलोकाभ्युद्गतेन बुद्धकायेन सर्वस्वराङ्गसागरसंप्रयुक्तेन बुद्धघोषेण सर्वधर्मवितिमिरार्थप्रदीपं नाम धारणीमुखं संप्रकाशयामास बुद्धक्षेत्रपरमाणुरजःसमधारणीमुखपरिवारम्। अथ राज्ञो धनपतेस्तद्धारणीमुखं श्रुत्वा सर्वधर्मेषु महान् धर्मावभासः प्रादुरभूत्।
5 तस्यां च पर्षदि जम्बुद्वीपपरमाणुरजःसमानां बोधिसत्त्वानां सर्वधर्मवितिमिरार्थप्रदीपाया धारण्याः प्रतिलम्भोऽभूत्। षष्टेश्च प्राणिनियुतानामनुपादाय आस्रवेभ्यश्चित्तानि विमुक्तानि। दशानां च प्राणिसहस्राणां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्। अपरिमाणानामनुत्पन्नपूर्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पन्नम्। दशसु दिक्षु अचिन्त्यबुद्धविकुर्वितसंदर्शनेनानन्तमध्यः सत्त्वधातुर्विनयमगमत् त्रिभिर्यानैः॥

10 राज्ञश्च धनपतेर्महाधर्मावभासप्रतिलब्धस्य एतदभवत्—न शक्यमगारमध्यावसता इमा एवंरूपा धर्मा अधिमोक्तुम्, एवंरूपं च ज्ञानं निष्पादयितुम्। यन्नवहं भगवतोऽन्तिके प्रव्राजयेयम्। अथ खलु राजा धनपतिस्तं भगवन्तमेतदवोचत्—लभेयाहं भगवतोऽन्तिके प्रव्रज्यामुपसंपदं भिक्षुभावम्। आह—यस्येदानीं महाराज कालं मन्यसे॥

अथ खलु राजा धनपतिः सूर्यगात्रप्रवरस्य तथागतस्यान्तिके प्राव्रजत् सार्धं दशभिः
15 प्राणिसहस्रैः। तेन अचिरेण प्रव्रजितेन सर्वधर्मवितिमिरार्थप्रदीपं धारणीमुखं सपरिवारं निष्पादितं भाविनम्, तावन्त्येव च समाधिमुखानि प्रतिलब्धानि। दश च बोधिसत्त्वाभिज्ञाः प्रतिलब्धाः। अनन्तमध्यं च प्रतिसंविन्नयसागरामवतीर्णः। असङ्गगोचरा च नाम कायपरिशुद्धिः दशदिक्तथागतोपसंक्रमणेषु प्रतिलब्धा। स तस्य भगवतो धर्मचक्रं प्रतीप्छितवान् संधारितवान्, कथापुरुषत्वं च कारयामास। महाधर्मभाणकत्वं च अकरोत्।
20 शासनपरिग्रहं चाकार्षीत्। अभिज्ञाप्रतिलाभबलेन च सर्वावतीं लोकधातुं स्फरित्वा यथाशयानां सत्त्वानां कायं संदर्श्य एतं बुद्धोत्पादं प्रभावयन् तां सर्वतथागतसमुदयधर्मतामभिद्योतयन् तां पूर्वयोगसंपदं संप्रकाशयन् तं बुद्धविकुर्वितप्रभावं संवर्णयमानः शासनपरिग्रहमकार्षीत्॥

तेजोधिपतिना च राजपुत्रेण तत्रैव दिवसे पूर्णायां पूर्णमास्यां सप्त रत्नानि प्रति-
25 लब्धानि। तस्योपरिप्रासादतलगतस्य स्त्रीगणपरिवृतस्य पुरस्तादप्रतिहतवेगं नाम शतसहस्रारं सर्वरत्नसमलंकृतं दिव्यं जाम्बूनदसुवर्णमयं समन्तप्रभं सर्वाकारवरोपेतं महाचक्ररत्नं प्रादुरभूत्। वज्ररत्नगिरितेजश्च नाम महाहस्तिरत्नं प्रादुरभूत्। नीलगिर्यनिलवेगं च नाम अश्वरत्नं प्रादुरभवत्। आदित्यगर्भप्रभमेघराजं च नाम महामणिरत्नं प्रादुरभवत्। सा च सुचलितरतिप्रभासश्री दारिका स्त्रीरत्नं प्रादुरभवत्। प्रभूतधनस्कन्धं च नाम गृहपतिरत्नं
30 प्रादुरभवत्। विमलनेत्रं च नाम परिणायकरत्नं सप्तमं प्रादुरभवत्। स सप्तरत्नसमन्वागतो राजाभवच्चक्रवर्ती चतुर्द्वीपेश्वरो धार्मिको धर्मराजो विजितावी जनपदस्थामवीर्यप्राप्तः। पूर्णं खलु पुनरस्य सहस्रं पुत्राणामभूच्छूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम्। स

इमा महापृथिवीं ससागरगिरिपर्यन्तामखिलामकण्टकामनीतिकामनुपद्रवामृद्धां स्फीतां क्षेमां सुभिक्षां रमणीयामाकीर्णबहुजनमनुष्यां धर्मेणाभिनिर्जित्य अध्यावसति स्म ॥

स तस्मिन् जम्बुद्वीपे चतुरशीतिराजधानीसहस्रेषु एकैकस्यां राजधान्यां पञ्च विहारशतानि कारयामास सर्वाकारवरोपेतानि सर्वोपभोगपरिभोगोपचारसपन्नानि सर्वोद्यानप्रासादचङ्क्रमनिर्याणसुखपरिभोग्यवनराजीविभूषितानि। एकैकस्मिंश्च विहारे तथागतचैत्यं कारयामास विपुलोद्विद्धमत्यन्तरानेकाकाररत्नव्यूहं सर्वमणिरत्नराजविचित्रम्। सर्वासु च तासु राजधानीषु तं भगवन्तं सूर्यगात्रप्रवरं तथागतं सपरिवारमुपनिमन्त्रयामास नगरप्रवेशाय। सर्वासु राजधानीषु तं तथागतं सर्वाकारया अचिन्त्यया तथागतपूजया पूजयन् प्रवेशयामास। स बुद्धनगरप्रवेशप्रातिहार्यविकुर्वितेन अप्रमाणानां सत्त्वानां कुशलमूलानि संजनयामास। तत्राप्रसन्नचित्ताः सत्त्वाः प्रसादं प्रत्यलभन्त। प्रसन्नचित्ताः सत्त्वाः बुद्धदर्शनप्रीतिवेगान् विवर्धयामासुः। प्रीतिवेगविवर्धिताः सत्त्वाः बोध्याशयविशुद्धिं प्रत्यलभन्त। बोध्याशयविशुद्धाः सत्त्वाः महाकरुणाचेतनामुत्पादयामासुः। सत्त्वहितप्रतिपन्नाः सत्त्वाः सर्वबुद्धधर्मपर्येष्ट्यभियुक्ता अभूवन्। बुद्धधर्मनयविधिज्ञाः सत्त्वाः सर्वधर्मस्वभावनिध्यप्तये चित्तमभिनिर्णामयामासुः। धर्मसमतावतीर्णाः सत्त्वाः त्र्यध्वसमतावताराय चित्तमभिनिर्णामयामासुः। त्र्यध्वज्ञानावभासप्रतिलब्धाः सत्त्वाः सर्वबुद्धपरंपराविज्ञप्तये ज्ञानालोकमवतरन्ति स्म। विचित्रतथागतविज्ञप्त्यवक्रान्ताः सत्त्वाः सर्वजगत्संग्रहाय चित्तमभिनिर्णामयामासुः। सर्वजगत्संग्रहप्रयुक्ताः सत्त्वाः बोधिसत्त्वमार्गविशुद्धये प्रणिधानमुत्पादयामासुः। मार्गसमतावतीर्णाः सत्त्वाः सर्वतथागतधर्मचक्राभिनिर्हाराय ज्ञानालोकमुत्पादयामासुः। धर्मसागरविनयाभिमुखाः सत्त्वाः सर्वक्षेत्रजालस्वकायस्फरणतायै चित्तमभिनिर्णामयामासुः। क्षेत्रसमतावतीर्णाः सत्त्वाः सर्वसत्त्वेन्द्रियसमुद्रपरिज्ञायै प्रणिधानमकार्षुः। सर्वजगदिन्द्रिययथाधिमुक्तिविचारप्रयुक्ताः सत्त्वाः सर्वज्ञताधिगमाय अध्याशयं विशोधयामासुः। इत्येवंरूपाणां सत्त्वानामिमामेवंरूपार्थसिद्धिं संप्रवेश्य तेजोधिपती राजा सर्वासु राजधानीषु तं सूर्यगात्रप्रवरं तथागतं प्रवेशयामास अचिन्त्येन बुद्धविकुर्वितप्रातिहार्यसंदर्शनेन तेषां सत्त्वानां परिपाकविनयाय ॥

तत्किं मन्यसे कुलपुत्र–अन्यः स तेन कालेन तेन समयेन तेजोधिपतिर्नाम राजपुत्रोऽभूत्? न खलु पुनस्त्वयैवं द्रष्टव्यम्। अथ स भगवान् शाक्यमुनिस्तथागतस्तेन कालेन तेन समयेन तेजोधिपतिर्नाम राजपुत्रोऽभूत्, येन तच्चक्रवर्तिराज्यं प्रतिलब्धम्, स च सूर्यगात्रप्रवरो नाम तथागत आरागितः। तत्किं मन्यसे कुलपुत्र–अन्यः स तेन कालेन तेन समयेन धनपतिर्नाम राजा अभूत् तेजोधिपतेः कुमारस्य पिता? न खल्वेवं द्रष्टव्यम्। रत्नकुसुमप्रभो नाम तथागतस्तेन कालेन तेन समयेन धनपतिर्नाम राजा अभूत्, य एतर्हि पूर्वस्यां दिशि लोकधातौ सागरपरमाणुरजःसमानां लोकधातूनतिक्रम्य परेण धर्मधातुगगनप्रतिभाससमेघनाम्नि लोकधातुसमुद्रे त्र्यध्वप्रतिभासमणिराजसमुद्रकुलमध्ये लोकधातुवरे बुद्धप्रभामण्डलश्रीप्रदीपायां लोकधातौ सुचन्द्रकायप्रतिभासध्वजे बोधिमण्डे

अनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमबोधिसत्त्वपरिवृतो धर्मं देशयति । तेन च भगवता रत्नकुसुमप्रभेण तथागतेन पूर्वं बोधिसत्त्वचर्यां चरता सर्वधर्मधातुगगनप्रतिभासमेघो लोकधातुसमुद्रः परिशोधितः । यावन्तश्च तस्मिन् लोकधातुसमुद्रे तथागता उत्पन्नाश्च उत्पद्यन्ते च उत्पत्स्यन्ते च, ते सर्वे च भगवता रत्नकुसुमप्रभेण 5 तथागतेन पूर्वबोधिसत्त्वचर्यांश्चरता अनुत्तरायां सम्यक्संबोधौ परिपाचिताः ॥

तत्किं मन्यसे कुलपुत्र—अन्या सा तेन कालेन तेन समयेन पद्मश्रीगर्भसंभवा नाम राजभार्या अभूत् तेजोधिपतेः कुमारस्य माता चतुरशीतिस्त्रीसहस्राणां प्रमुखानाम्? न खल्वेवं द्रष्टव्यम् । एषा सा कुलपुत्र मायादेवी भगवतो माता बोधिसत्त्वजननी समन्तावभासानावरणविमोक्षप्रतिष्ठिता असंख्येयसर्वतथागतसमुदागमप्रत्यक्षा सर्वबोधिसत्त्वजन्मसं-10 दर्शनविधिज्ञा तेन कालेन तेन समयेन पद्मश्रीगर्भसंभवा नाम राज्ञो धनतेरग्रमहिष्यभूत् । तत्किं मन्यसे कुलपुत्र—अन्या सा तेन कालेन तेन समयेन सुदर्शना नाम अग्रगणिका अभूत्? न खल्वेवं द्रष्टव्यम् । एषा सा सुनेत्रा नाम दण्डपाणेः शाक्यस्य भार्या मम माता तेन कालेन तेन समयेन सुदर्शना नाम अग्रगणिकाभूत् । तत्किं मन्यसे कुलपुत्र—अन्या सा तेन कालेन तेन समयेन सुचलितरतिप्रभासश्रीर्नाम गणिकादारिकाभूत्? 15 न खल्वेवं द्रष्टव्यम् । अहं सा तेन कालेन तेन समयेन सुचलितरतिप्रभासश्रीर्गणिकादारिका अभूत् । तत्किं मन्यसे कुलपुत्र—अन्यः स तेन कालेन तेन समयेन तेजोधिपते राज्ञः परिवारोऽभूत्? न खल्वेवं द्रष्टव्यम् । इमे ते बोधिसत्त्वाः सर्वे समन्तभद्रबोधिसत्त्वचर्याप्रणिधानपरिपूर्या भगवता प्रतिष्ठापिता अस्मिन्नेव पर्षन्मण्डले संनिपण्णाः सर्वलोकधातुप्रतिभासप्रसृतेन कायेन सर्वबोधिसत्त्वसमाधिविहारासंभिन्नेन चित्तेन सर्वतथागत-20 संमुखभावदर्शनविज्ञप्तेन चक्षुषा सर्वतथागतगगनस्वराङ्गमेघचक्रनिगर्जितनिर्घोषविज्ञप्तेन श्रोत्रेण सर्वधर्मविहारवशवर्तिना आश्वासप्रश्वासेन सर्वबुद्धक्षेत्रानुचलितेन निर्घोषेण सर्वतथागतपर्षन्मण्डलोपसंक्रमणाप्रतिप्रस्रब्धेन बोधिसत्त्वकायेन बोधिसत्त्वयथाशयाभिमुखेन परिपाकविनयानुकूलेन आत्मभावाभिनिर्हारेण अशेषसर्वदिग्जालप्रसृतेन नानागतसर्वकल्पाव्यवच्छिन्नेन समन्तभद्रबोधिसत्त्वचर्याप्रणिधानपरिपूरिसमुदागमेन समन्वागता भगवतः पर्ष-25 न्मण्डले संनिपण्णाः । स खलु कुलपुत्र सूर्यगात्रप्रवरस्तथागतस्तेजोधिपतिना चक्रवर्तिना च मया च यावज्जीवमुपस्थितोऽभूत् चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः ॥

तस्य खलु पुनः कुलपुत्र सूर्यगात्रप्रवरस्य तथागतस्य परिनिर्वृतस्यानन्तरं तस्यामेव लोकधातौ प्रसन्नगात्रो नाम तथागतो लोक उदपादि । सोऽप्यस्माभिराराागितः सत्कृतो गुरुकृतो मानितः पूजितः । तस्यानन्तरं सर्वगात्रज्ञानप्रतिभासचन्द्रो नाम तथागतो लोक 30 उदपादि । सोऽप्यस्माभिर्देवेन्द्रभूतैराराागितः । तस्यानन्तरं जाम्बूनदतेजोराजो नाम तथागत आरागितः । तस्यानन्तरं लक्षणभूषितगात्रो नाम तथागत आरागितः । तस्यानन्तरं विचित्ररश्मिज्वलनचन्द्रो नाम तथागत आरागितः । तस्यानन्तरं सुविलोकितज्ञानकेतुर्नाम तथागत

आरागितः । तस्यानन्तरं विपुलमहाज्ञानरश्मिराजो नाम तथागत आरागितः । तस्यानन्तरं नारायणवज्रवीर्यो नाम तथागत आरागितः । तस्यानन्तरमपराजितज्ञानस्थामो नाम तथागत आरागितः । तस्यानन्तरं समन्तविलोकितज्ञानो नाम तथागत आरागितः । तस्यानन्तरं विमलश्रीमेघो नाम तथागत आरागितः । तस्यानन्तरं सिंहविजृम्भितप्रभो नाम तथागत आरागितः । तस्यानन्तरं ज्ञानरश्मिज्वलनचूडो नाम तथागत आरागितः । तस्यानन्तरं गुणरश्मिध्वजो ५ नाम तथागत आरागितः । तस्यानन्तरं ज्ञानभास्करतेजो नाम तथागत आरागितः । तस्यानन्तरं रत्नपद्मप्रफुल्लितगात्रो नाम तथागत आरागितः । तस्यानन्तरं पुण्यप्रदीपध्वजो नाम तथागत आरागितः । तस्यानन्तरं ज्ञानरश्मिमेघप्रभो नाम तथागत आरागितः । तस्यानन्तरं समन्तवैरोचनचन्द्रो नाम तथागत आरागितः । तस्यानन्तरं आभरणच्छत्रनिर्घोषो नाम तथागत आरागितः । तस्यानन्तरं समन्तज्ञानालोकविक्रमसिंहो नाम तथागत 10 आरागितः । तस्यानन्तरं धर्मधातुविषयमतिचन्द्रो नाम तथागत आरागितः । तस्यानन्तरं सत्त्वगगनचित्तप्रतिभासबिम्बो नाम तथागत आरागितः । तस्यानन्तरं प्रशमगन्धसुनाभो नाम तथागत आरागितः । तस्यानन्तरं समन्तानुरवितशान्तनिर्घोषो नाम तथागत आरागितः । तस्यानन्तरं सुदृढज्ञानरश्मिजालबिम्बस्कन्धो नाम तथागत आरागितः । तस्यानन्तरं अमृतपर्वतप्रभातेजो नाम तथागत आरागितः । तस्यानन्तरं धर्मसागरनिगर्जितघोषो नाम तथागत आरागितः । तस्यानन्तरं बुद्धगगनप्रभासचूडो नाम तथागत आरागितः । तस्यानन्तरं रश्मिचन्द्रो नाम तथागत आरागितः । तस्यानन्तरं रश्मिचन्द्रोर्णमेघो नाम तथागत आरागितः । तस्यानन्तरं सुपरिपूर्णज्ञानमुखवक्त्रो नाम तथागत आरागितः । तस्यानन्तरं सुविशुद्धज्ञानकुसुमावभासो नाम तथागत आरागितः । तस्यानन्तरं रत्नार्चिःपर्वतश्रीतेजोराजो नाम तथागत आरागितः । तस्यानन्तरं विपुलगुणज्योतिःप्रभो 20 नाम तथागत आरागितः । तस्यानन्तरं समाधिमेर्वभ्युद्गतज्ञानो नाम तथागत आरागितः । तस्यानन्तरं रत्नचन्द्रध्वजो नाम तथागत आरागितः । तस्यानन्तरमर्चिर्मण्डलगात्रो नाम तथागत आरागितः । तस्यानन्तरं रत्नाग्रप्रभतेजो नाम तथागत आरागितः । तस्यानन्तरं समन्तज्ञानचर्याविलम्बो नाम तथागत आरागितः । तस्यानन्तरं अर्चिःसमुद्रसुखवेगप्रदीपो नाम तथागत आरागितः । तस्यानन्तरं धर्मविमाननिर्घोषराजो नाम तथागत आरागितः । 25 तस्यानन्तरमसदृशगुणकीर्तिध्वजो नाम तथागत आरागितः । तस्यानन्तरं प्रलम्बबाहुर्नाम तथागत आरागितः । तस्यानन्तरं पूर्वप्रणिधिनिर्माणचन्द्रो नाम तथागत आरागितः । तस्यानन्तरमाकाशज्ञानार्थप्रदीपो नाम तथागत आरागितः । तस्यानन्तरं धर्मोद्गतनभेश्वरो नाम तथागत आरागितः । तस्यानन्तरं वैरोचनश्रीगर्भराजो नाम तथागत आरागितः । तस्यानन्तरं धर्मनारायणकेतुर्नाम तथागत आरागितः । तस्यानन्तरं ज्ञानकेतुर्नाम तथागत 30 आरागितः । तस्यानन्तरं धर्मसागरपद्मो नाम तथागत आरागितः । इति हि कुलपुत्र एतांस्तथागतान् प्रमुखान् कृत्वा तस्यां लोकधातौ परिशुद्धकोटीनियुतशतसहस्राण्युत्तराणि

अभूवन्, यान्यस्माभिराराागितानि सत्कृतानि गुरुकृतानि मानितानि पूजितानि चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः ॥

तेषां खलु कुलपुत्र षष्टेर्बुद्धकोटीनियुतशतसहस्राणां सर्वपश्चिमो विपुलधर्माधिमुक्तिसंभवतेजो नाम तथागत उत्पन्नोऽभूत् । तस्य भगवतो नगरे प्रविष्टस्य मया राजभार्याभूतया ५ सार्धं स्वामिना सर्वाकारपूजामुखं प्रयुक्तया तथागतपूजया पूजां कृत्वा सर्वतथागतोत्पत्तिसंभवप्रदीपो नाम तथागतधर्मपर्यायस्तस्य भगवतोऽन्तिकात् श्रुतः, यस्य सहश्रवणान्मया ज्ञानचक्षुः प्रतिलब्धम् । एष च सर्वबोधिसत्त्वसमाधिनयसागरव्यवलोकनविषयो बोधिसत्त्वविमोक्षः प्रतिलब्धः ॥

सा खल्वहं कुलपुत्र एतं विमोक्षं भावयमाना बुद्धक्षेत्रशतपरमाणुरजःसमान् १० कल्पानागतान् बोधिसत्त्वेन सार्धं बोधिसत्त्वचर्यां चरमाणा । तेषु च मे बुद्धक्षेत्रपरमाणुरजःसमेषु कल्पेषु अनन्तमध्यास्तथागता आरागिताः । क्वचित् कल्पे कल्पस्थोऽपि एकतथागत आरागितः । क्वचित् कल्पे द्वौ तथागतावारागितौ । क्वचित् कल्पे यावदनभिलाप्यास्तथागता आरागिताः । क्वचित् कल्पे बुद्धक्षेत्रपरमाणुरजःसमास्तथागता आरागिताः । न च मे जातु बोधिसत्त्वस्य कायो ज्ञातः—किंप्रमाणः कीदृक्संस्थानः कीदृग्वर्णः । न कायकर्म १५ ज्ञातं न वाक्कर्म न मनस्कर्म ज्ञातं न ज्ञानदर्शनं न ज्ञानगोचरं न ज्ञानसमाधिविषयो ज्ञातः । ये खलु पुनः कुलपुत्र सत्त्वा बोधिसत्त्वं बोधिसत्त्वचारिकां चरन्तं दृष्ट्वा बोधिसत्त्वस्यान्तिकेऽनुनयचित्तमुत्पादयामासु, नानासत्क्रैर्नानासंवासैश्च प्रसादं जनयामासु, सर्वे ते बोधिसत्त्वेन लौकिकलोकोत्तरैर्विविधैरुपायैः संगृहीता बोधिसत्त्वस्य परिवारा भवन्ति स्म । ते बोधिसत्त्वस्य बोधिसत्त्वचर्यां चरतः परिवारसंवासे न अवैवर्तिका भवन्ति स्म २० अनुत्तरायां सम्यक्संबोधौ ॥

साहं कुलपुत्र विपुलधर्माधिमुक्तिसंभवतेजसस्तथागतस्य सहदर्शनादिमं सर्वबोधिसत्त्वसमाधिसागरव्यवलोकनविषयं बोधिसत्त्वविमोक्षं प्रतिलभ्य बोधिसत्त्वेन सार्धं बुद्धक्षेत्रशतपरमाणुरजःसमान् कल्पानागता एतं विमोक्षं संभावयमाना । ये च तेषु बुद्धक्षेत्रपरमाणुरजःसमेषु कल्पेषु तथागता उत्पन्ना, सर्वे ते मया तथागता आरागिताः पूजिता उपस्थिताः । २५ सर्वेषां च मे तेषां तथागतानां धर्मदेशना श्रुता, श्रुत्वा उद्गृहीता संधारिता । सर्वेषां च मया तेषां बुद्धानां भगवतामन्तिकादेष विमोक्षः प्रतिलब्धो नानानयैर्नानासूत्रान्तनयनिर्घोषैर्नानाविमोक्षशरीरैर्नानाविमोक्षद्वारैर्नानाविमोक्षविचारैर्नानाध्वजप्रवेशैः नानाबुद्धक्षेत्रसागरावतारैः नानाबुद्धदर्शनसमुद्रविज्ञप्तिभिः नानातथागतपर्षन्मण्डलावतारैः नानाबोधिसत्त्वप्रणिधानसागरनयपथैः नानाबोधिसत्त्वचर्याप्रसरैः नानाबोधिसत्त्वचर्याभिनिर्हारैः नानाबोधिसत्त्वप्रसरैः । न च ३० बोधिसत्त्वस्य समन्तभद्रविमोक्षनयमवतरामि । तत्कस्य हेतोः? आकाशतलप्रवेशप्रमाणा हि कुलपुत्र समन्तभद्राणां बोधिसत्त्वानां विमोक्षनयाः सर्वसत्त्वसंज्ञागततलप्रमाणाः त्र्यध्व-

परिवर्तसागरतलाप्रमाणा दिक्समुद्रतलाप्रमाणा धर्मधातुनयसागरतलाप्रमाणा । तथागत-विषयसमशरीरा हि कुलपुत्र समन्तभद्राणा बोधिसत्त्वाना विमोक्षनया ॥

सा अह कुलपुत्र बुद्धक्षेत्रपरमाणुरज समान् कल्पान् बोधिसत्त्वशरीर प्रेक्षमाणा अतृप्तैव दर्शनेन । तद्यथापि नाम कुलपुत्र एकान्तरागचरितयो स्त्रीपुरुषयोरन्योन्यसमागमे सकेतकृतयोरप्रमाणा अयोनिशोमनसिकारप्रभवा शुभसज्ञावितर्कसमोहसभवाक्षिप्तोत्पादा 5 उत्पद्यन्ते, एवमेव कुलपुत्र मम बोधिसत्त्वस्य शरीर प्रेक्षमाणाया एकैकस्माद्रोमविवरादनन्त-मध्याप्रमाणनिर्देशा लोकधातुवशप्रसरा नानाप्रतिष्ठाना नानासधिव्यूहा नानासस्थाना नानापर्वतव्यूहा नानापृथिवीतलव्यूहनिर्देशा नानागगनमेघसछन्नालकारा नानाकल्पनाम-सख्यानिर्देशा नानाबुद्धोत्पादतथागतवशप्रभवा नानाबोधिमण्डालकारा नानातथागतधर्म-चक्रप्रवर्तनविकुर्विता नानातथागतपर्षन्मण्डलव्यूहा नानासूत्रान्तनयनिर्देशनिर्घोषा नाना 10 याननयनिर्हारप्रभवा नानापरिशुद्धप्रभालोकावभासा अदृष्टपूर्वनिमित्ता प्रतिचित्तक्षण चक्षुष आभासमागच्छन्ति । एकैकस्माद्रोमविवरादनन्तमध्या बुद्धसमुद्राश्चक्षुष आभासमागच्छन्ति। नानाबोधिमण्डालकारा नानाधर्मचक्रप्रवर्तनविकुर्विता नानासूत्रान्तनिर्घोषविकुर्विता अप्रतिप्रस्रब्धयोगेन प्रतिचित्तक्षण चक्षुष आभासमागच्छन्ति। एकैकस्माद्रोमविवरादनन्तमध्या सत्त्वसमुद्रा नानाभवनारामपर्वतविमाननदीसमुद्रनिलया नानारूपकाया नानापरिभोगविषया 15 नानाचारयोगचारप्रयोगा नानेन्द्रियपरिनिष्पत्तिसस्थाना प्रतिचित्तक्षण चक्षुष आभास-मागच्छन्ति । एकैकस्माद्रोमविवरादनन्तमध्यात्र्यध्वसागरप्रवेशनया अवभासमागच्छन्ति । अनन्तमध्या बोधिसत्त्वप्रणिधानसमुद्रा विशुध्यन्ते। अनन्तमध्या बोधिसत्त्वभूमिचर्याविमात्रता-समुद्रा आभासमागच्छन्ति । अनन्तमध्या बोधिसत्त्वपारमितानयसागरपरिशुद्धयोऽवभास मागच्छन्ति। अनन्तमध्या बोधिसत्त्वपूर्वयोगसमुद्रा आभासमागच्छति। अनन्तमध्या बुद्धक्षेत्र 20 परिशोधननयसमुद्रा आभासमागच्छन्ति । अनन्तमध्या बोधिसत्त्वमहामैत्रीनयसमुद्रा सर्व सत्त्वमहामैत्रीनयसमुद्रा सर्वसत्त्वपरिपाकविनयपराक्रमप्रयोगसागरा अवक्रामन्ति । अनन्त-मध्या बोधिसत्त्वमहाकरुणामेघनयसागरा समवन्ति । अनन्तमध्या बोधिसत्त्वमहाप्रीतिवेग-सागरा विवर्धन्ते । प्रतिचित्तक्षणमनन्तमध्या सर्वसत्त्वसग्रहप्रयोगसागरा निष्पद्यन्ते ॥

सा अह कुलपुत्र तेषु बुद्धक्षेत्रशतपरमाणुरज समेषु कल्पेषु बोधिसत्त्वस्य एकैकस्मा 25 द्रोमविवरात्प्रतिचित्तक्षणमनन्तमध्यान् धर्मनयसागरानवतरमाणा पर्यन्त नाधिगच्छामि। न च अवतीर्णपूर्वमवतरामि । न प्रतिलब्धपूर्वं प्रतिलभे यावदन्त पुरमध्यगतस्याप्यह कुलपुत्र सर्वार्थसिद्धस्य स्त्रीगणपरिवृतस्य नानाविमोक्षनयसागरानवतारे । एकैकस्माद्रोम विवरादनन्तमध्यात्र्यध्वनयसागरानवतारामि धर्मधात्ववतारनयसमुद्रावतारेण ॥

एतमह कुलपुत्र सर्वबोधिसत्त्वसमाधिसागरव्यवलोकनविषय बोधिसत्त्वविमोक्ष 30 प्रजानामि, समापद्ये । किं मया शक्य बोधिसत्त्वानामनन्तमध्योपायनयसागरप्रसृताना सर्वसत्त्वसमसदृशसस्थानसस्थितकायविज्ञप्तिसदर्शकाना सर्वजगदाशयानुकूलचर्यासदर्शकानाम्

अनन्तमध्यवर्णनिर्मितमेघसमुद्रसर्वरोमसुखप्रमुञ्चकानां सर्वशरीरधर्मतास्वभावप्रकृतिपरिशुद्धानामाकाशलक्षणजगत्प्रकल्पवत्बोधनिर्विकल्पानां सर्वत्रानुगतबुद्धिविनिश्चयतथागतसमविकुर्वितपरमाणाम् अनन्तमध्यविमोक्षविषयविकुर्वितनिर्यातानां विपुलधर्मधातुचित्तोत्पादप्रवेशविहारवशवर्तिनां समन्तमुखसर्वधर्मभूमिविमोक्षसागरविक्रीडितानां चर्यां ज्ञातुं गुणान् 5 वा वक्तुम्, निखिलान् वा गुणनिधीन् संदर्शयितुम् ॥

गच्छ कुलपुत्र, इहैव भगवतो वैरोचनस्य पादमूले त्रिविधरत्नव्यूहमहामणिराजपद्मगर्भासननिषण्णा बोधिसत्त्वजनेत्री माया नाम देवी। तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वा बोधिसत्त्वचर्यां चरन्तोऽनुपलिप्ता भवन्ति सर्वलोकधर्ममलैः। अप्रतिप्रस्रब्धा भवन्ति तथागतपूजाप्रयोगेषु। अवैवर्तिका भवन्ति सर्वबोधिसत्त्वकर्मान्तेभ्यः। सर्वावरणविगता भवन्ति 10 बोधिसत्त्वविमोक्षावतारेषु। अपरप्रत्यया भवन्ति सर्वबोधिसत्त्वविहारेषु। संमुखीभावगता भवन्ति सर्वतथागतानाम्। न विवर्तन्ते सर्वसत्त्वसंग्रहप्रयोगेभ्यः, न निवर्तन्तेऽपरान्तकोटीगतकल्पसर्वबोधिसत्त्वचर्यासंवासेभ्यः। न प्रत्युदावर्तन्ते महायानप्रणिधानात्। न संसीदन्ति जगत्कुशलमूलसंधारणविवर्धनतया ॥

अथ खलु गोपा शाक्यकन्या एतमेव विमोक्षमुखनयं संदर्शयन्ती बुद्धाधिष्ठानेन 15 तस्यां वेलायामिमा गाथा अभाषत—

संबोधिचर्याचरणप्रयुक्तं[1]
पश्यन्ति सत्त्वाः खलु येऽप्रसत्त्वम्।
प्रसन्नचित्ताः प्रतिघातिनो वा
भजन्ति ते संग्रहमस्य सर्वे ॥ ९० ॥

20 यावन्ति हि क्षेत्रशते रजांसि
स्मरामि कल्पानिह तावतोऽहम्।
मेरुप्रभाभूद्रत्नलोकधातु-
स्ततः परं व्यूहसनाम्नि कल्पे ॥ ९१ ॥
षड्विंशतिः कोट्ययुतानि तस्मिन्
25 सहस्रसंख्या ह्यभवन्मुनीनाम्।
तेषामभूच्चरमो मुनीन्द्रो
धर्मध्वजो नाम जगत्प्रदीपः ॥ ९२ ॥
श्रीतेजनामा नृपतिस्तदानीं
तस्मिन् मुनीन्द्रे परिनिर्वृतेऽथ।
30 जम्बुध्वजेऽस्मिन्निहतारिचक्रः
सोऽभ्याहताज्ञः परमेश्वरोऽभूत् ॥ ९३ ॥

1 B सर्वोधिसत्त्वं चरण°.

शूराणि वीराण्यथ रूपवन्ति
पञ्चाभवन् पुत्रशतानि तस्य ।
सर्वाङ्गसंपूर्णविशुद्धकाया-
न्यनुत्तमश्रीप्रतिमण्डितानि ॥ ९४ ॥
राजा सपुत्रः सुगते प्रसन्नः 5
पूजामकार्षीद्विपुलां जिनस्य ।
नित्यं च सद्धर्मपरिग्रहोऽसौ
धर्माभियुक्तोऽभवदप्रकम्प्यः ॥ ९५ ॥
सुरश्मिनामा च नृपस्य तस्य
विशुद्धसत्त्वोऽयमभूत्कुमारः । 10
सुदर्शनीयश्च मनोज्ञरूपः
त्रिंशद्वरालंकृतलक्षणाङ्गः ॥ ९६ ॥
राज्यं परित्यज्य नृणां स पञ्च-
कोटीवृतः प्रव्रजितस्तदानीम् ।
स प्रव्रजित्वा दृढवीर्ययुक्तः 15
संधारयामास जिनस्य धर्मम् ॥ ९७ ॥
द्रुमावती नाम पुरी वृताभूत्
कोटीसहस्रैर्नगरोत्तमानाम् ।
आसीद्वनं तत्र विचित्रशाखं
प्रशान्तनिर्घोषमनुत्तरश्रियम् ॥ ९८ ॥ 20
यतः सुरश्मिर्विजहार तस्मिन्
विशारदो धीप्रतिभानशुद्धः ।
स द्योतयामास जिनस्य धर्मं
संक्लिष्टसत्त्वौघविशोधनाय ॥ ९९ ॥
पिण्डाय धीमान् स पुरं विवेश 25
प्रासादिकेर्यापथशान्तवेषः ।
अनुत्क्षिप्तचक्षुः स्मृतिमान् प्रजानन्
गम्भीरचेष्टः स्थिरधीरगामी ॥ १०० ॥
नन्दीध्वजोऽभूत्प्रवरः पुराणां
श्रेष्ठी तदानीं सुविघुष्टकीर्तिः । 30
तस्याहमासं दुहिता मनापा
भानुप्रभा नाम सुचारुरूपा ॥ १०१ ॥

द्वारेऽथ तस्योत्तरमन्दिरस्य
दृष्टो मयाभूत्सगणः सुरश्मिः।
प्रासादिको लक्षणचित्रिताङ्गः
तत्राभवन्मे सुमहान् प्रसादः ॥ १०२ ॥

यदा गृहद्वारगतो ममाभूत्
पात्रे प्रदत्तोऽस्य मणिस्तदा मे।
मुक्त्वा च सर्वाभरणानि मैत्र-
चित्तानुनीताहमदात्तदास्मै ॥ १०३ ॥

सरागचित्तेन विधाय पूजां
सुरश्मिकेतोः सुगतात्मजस्य।
अर्धतृतीयानि शतानि नार्या
कल्पोत्तमाया खलु जालपायान् ॥ १०४ ॥

देवेषु देवेन्द्रकुलेषु जाता
नरेन्द्रपुत्री मनुजेषु चाहम्।
अनन्तवर्णेन समुच्छ्रयेण
सर्वत्र चादास्सहदर्शनं मे ॥ १०५ ॥

अर्धतृतीयेषु गतेषु कल्प-
शतेषु जातास्म्यभयंकराणाम्।
सुदर्शनाया गणिकोत्तमायाः
सचालिताख्या दुहिता तदानीम् ॥ १०६ ॥

दृष्ट्वाथ तेजोधिपतिं कुमारं
पूजामकार्षं मुदिताहमस्य।
आत्मानमस्यैव निवेदयित्वा
भूतास्मि वश्या खलु तस्य भार्या ॥ १०७ ॥

संपूजितस्तेन मया सहाभूत्
स सूर्यगात्रप्रवरो महर्षिः।
प्रसन्नया चैव तमीक्ष्य बुद्ध-
मुत्पादितं मे वरबोधिचित्तम् ॥ १०८ ॥

पूर्णा जिनानां खलु षष्टिकोट्य-
स्तत्रैव कल्पे [1]सुसमुत्थितानाम्।

[1] B समुपस्थितानाम्.

वभूव तेषां चरमो जिनानां
　बुद्धस्तदानीमधिमुक्तितेजाः ॥ १०९ ॥

तस्मिन् विशुद्धं मम धर्मचक्षु-
　र्धर्मस्वभावश्च मयावबुद्धः ।
अयोनिशोऽत्यन्तविकल्प शान्ता　　5
　लब्धावभासास्म्यभवं ततोऽर्वाक् ॥ ११० ॥

समाधिभूमिं च विलोकयामि
　ततःप्रभृत्येव जिनौरसानाम् ।
क्षेत्रार्णवानेकमनःक्षणेन
　चिन्ताव्यतीतांश्च दिशामि दिक्षु ॥ १११ ॥　　10

नानाविशुद्धानि च सर्वदिक्षु
　क्षेत्राणि पश्याम्यमिताद्भुतानि ।
दृष्ट्वा मनस्तेषु न सज्जते मे
　क्लिष्टेषु नैव प्रतिहन्यते च ॥ ११२ ॥

क्षेत्रेषु तेष्वेव च बोधिमण्डे　　15
　पश्यामि बुद्धान् निखिलेष्वशेषान् ।
प्रभासमुद्रानमितांश्च तेषां
　एकेन चित्तेन विलोकयामि ॥ ११३ ॥

तथैव तेषां च पर्षत्समुद्रां-
　श्चित्तक्षणेनावतराम्यसङ्गान् ।　　20
तेषां समाधीनखिलानवैमि
　सर्वान् विमोक्षानपि चाप्रमेयान् ॥ ११४ ॥

चर्यां च तेषां विपुलां धरेमि
　भूमीनयांश्चावतराम्यशेषान् ।
प्रणिध्यसंख्येयमहासमुद्रान्　　25
　प्रतिक्षणं चावतराम्यनन्तान् ॥ ११५ ॥

संप्रेक्षती सत्पुरुषस्य कायं
　कल्पाननन्तांश्चरती च चर्याम् ।
एकैकरोम्णोऽस्य विकुर्वितानां
　नैवेह पर्यन्तमुपैमि जातु ॥ ११६ ॥　　30

संख्याव्यतीतानपि चैव रोम्णि
क्षेत्रोदधीनप्यवलोकयामि।
समारुतस्कन्धमहाजलौघा-
नग्निप्रपूर्णान् पृथिवीशरीरान्॥ ११७॥

नानाप्रतिष्ठानविकल्परूपान्
विचित्रसंस्थाननयप्रवेशान्।
नानाविधान् धातुशरीरभेदै-
रनन्तमप्याकृतविग्रहांश्च॥ ११८॥

क्षेत्रोदधिष्वमितेष्वलाप्यान्
धातून् पृथग् यानवलोकयामि।
धर्माभिधानैर्जनतां विनीतां
तेष्वेव पश्यामि जिनान् प्रयुक्तान्॥ ११९॥

न कायकर्मास्य मयावबुद्धं
न वाग्न चित्तं न वयोश्च कर्म।
ऋद्धिर्न नैवास्य पृथग्विकुर्वा
कल्पांश्चरन्त्या विपुला सुचर्याम्॥ १२०॥

अथ खलु सुधनः श्रेष्ठिदारको गोपायाः शाक्यकन्यायाः पादौ शिरसाभिवन्द्य गोपां शाक्यकन्यामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य गोपायाः शाक्यकन्याया अन्तिकात् प्रक्रान्तः॥ ४१॥



## ४४ माया।

अथ खलु सुधनस्य श्रेष्ठिदारकस्य मायाया देव्याः सकाशं गमनाभिमुखस्य बुद्धगोचरविचारज्ञानप्रतिपन्नस्य एतदभवत्—केनोपायेन मया शक्यं सर्वलोकोच्चलितषडायतनानामप्रतिष्ठितानां कल्याणमित्राणां सर्वसङ्गसमतिक्रान्तकायानामसङ्गगतिगामिनीप्रतिपदाप्रतिपन्नानां धर्मकायसुविशुद्धानां कायकर्ममायासुनिर्मितशरीराणां ज्ञानमायागतलोकविचाराणां प्रणिधिरूपकायानां बुद्धाधिष्ठानमनोमयशरीराणामनुत्पन्नानिरुद्धकायानामसत्यामृषकायानामसंक्रान्तविनष्टकायानामसंभवाविभवकायानाम् अलक्षणैकलक्षणकायानाम् अद्वयसङ्गविनिर्मुक्तकायानाम्, अनालयनिलयकायानाम्, अनक्षतकायानां प्रतिभाससमनिर्विकल्पकायानां स्वप्नसमविचारकायानाम्, आदर्शमण्डलसमसदृशाक्रान्तकायानां दिक्समप्रशान्तप्रतिष्ठकायानां सर्वदिक्स्फरणनिर्माणकायानां त्र्यध्वासंभिन्नकायानामशरीरचित्तनिर्विकल्पकायानां सर्वलोकचक्षुष्पथसमतिक्रान्तकायानां समन्तभद्रचक्षुःप्रसरविज्ञेयविनयकायानाम् असङ्गगगनगोचराणां कल्याणमित्राणां दर्शनमारागयितुं संमुखीभावतामनुप्राप्तुं समवधानं चाप्तुं निमित्तं चोद्ग्रहीतुं घोषमण्डलं वा विज्ञातुं मन्त्रव्यवचारान् वा आज्ञातुमनुशासनीं चोद्ग्रहीतुम् ॥

तमेवं चिन्तामनसिकारप्रयुक्तं रत्ननेत्रा नाम नगरदेवता गगनदेवतागणपरिवृता गगनतलगतमात्मानमुपदर्श्य नानाविभूषणविभूषितशरीरा अनेकाकारवर्णदिव्यकुसुमपुटपरिगृहीता संमुखमभ्यवकीरमाणा सुधनं श्रेष्ठिदारकमेतदवोचत्—चित्तनगरपरिपालनप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वसंसारविषयरत्यसंवसनतया। चित्तनगरालंकारप्रयुक्तेन ते कुलपुत्र भवितव्यं दशतथागतबलाध्यालम्बनतया। चित्तनगरपरिशोधनप्रयुक्तेन ते कुलपुत्र भवितव्यमीर्ष्यामात्सर्यशाठ्यापनयनतया। चित्तनगरसंतापप्रशमाभियुक्तेन ते कुलपुत्र भवितव्यं सर्वधर्मनिध्यप्त्या। चित्तनगरविवर्धनाभियुक्तेन ते कुलपुत्र भवितव्यं सर्वज्ञतासंभारमहावीर्यवेगविवर्धनतया। चित्तनगरभवनकोशव्यूहारक्षाप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वसमाधिसमापत्तिध्यानविमोक्षविपुलधर्मविनयमानविहारवशवर्तितया। चित्तनगरावभासप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वतथागतपर्षन्मण्डलसमुदयसमन्तभूमिप्रज्ञापारमिताप्रतिलम्भप्रतीच्छनतया। चित्तनगरोपस्तम्भप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वतथागतसंभवोपायमार्गस्वचित्तनगरसमवसरणतया। चित्तनगरदृढप्राकाराभिनिर्हारप्रयुक्तेन ते कुलपुत्र भवितव्यं समन्तभद्रबोधिसत्त्वचर्याप्रणिधानाभिनिर्हारचित्तविशुद्धये। चित्तनगरदुर्योधनदुरासदताभिनिर्हारप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वक्लेशमारकायिकपापमित्रमारचक्रानवमृद्यतया। चित्तनगरावभासनप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वसत्त्वतथागतज्ञानावभासप्रतिपद्यमानतया। चित्तनगराभिनिष्पन्दनप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वतथागतधर्ममेघसंप्रतीच्छनतया। चित्तनगरोपस्तम्भनप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वतथागतपुण्यसमुद्रस्वचित्ताशयसंप्रतीच्छनतया। चित्तनगरप्रनिस्तरणप्रयुक्तेन ते कुलपुत्र भवितव्यं महामैत्रीसर्वजगत्स्फरणतया। चित्तनगरसंप्रतिच्छादनप्रयुक्तेन ते कुलपुत्र भवितव्यं विपुलधर्मच्छत्रसर्वाकुशलधर्मप्रतिपक्षाभिनिर्हरणतया।

चित्तनगरप्रतिस्यन्दनप्रयुक्तेन ते कुलपुत्र भवितव्यं विपुलमहाकरुणासर्वजगदनुकम्पनतया। चित्तनगरद्वारविवरणप्रयुक्तेन ते कुलपुत्र भवितव्यमाध्यात्मिकबाह्यवस्तुसर्वजगत्सप्रापणतया। चित्तनगरविशोधनप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वससारविषयरतिपराङ्मुखतया। चित्तनगरदृढस्थामाभिनिर्हारप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वकुशलधर्मसंस्तृतसंभवनतया। 5 चित्तनगरवीर्यप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वज्ञतासंभारसमार्जनवीर्याभिनिर्वर्तनतया। चित्तनगरप्रभासनप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वत्र्यध्वतथागतमण्डलस्फुटत्वभासनतया। चित्तनगरविचयविधिज्ञेन ते कुलपुत्र भवितव्यं सर्वतथागतधर्मचक्रसूत्रान्तविविधधर्मद्वारप्रविचयश्रुताभिज्ञतया। चित्तनगरनियामविधिज्ञेन ते कुलपुत्र भवितव्यं सर्वजगदभिमुखसर्वज्ञताद्वारमार्गनिविधसदर्शनतया। चित्तनगराधिष्ठानविधिज्ञेन ते कुलपुत्र भवितव्यं सर्वत्र्यध्व-10 तथागतप्रणिधाननिर्हारविशुद्धये। चित्तनगरसंभारबलविवर्धनविधिज्ञेन ते कुलपुत्र भवितव्यं सर्वधर्मधातुविपुलपुण्यज्ञानसंभारविवर्धनतया। चित्तनगरसमन्तप्रभासप्रमुञ्चनविधिज्ञेन ते कुलपुत्र भवितव्यं सर्वसत्त्वचित्ताशयेन्द्रियाधिमुक्तिसंक्लेशव्यवदानज्ञानाभिज्ञतया। चित्तनगरवशवर्तनविधिज्ञेन ते कुलपुत्र भवितव्यं सर्वधर्मधातुनयसमवसरणतया। चित्तनगरप्रभास्वराभियुक्तेन ते कुलपुत्र भवितव्यं सर्वतथागतस्फुटत्वभासनतया। चित्तनगरस्वभावपरिज्ञाभि-15 युक्तेन ते कुलपुत्र भवितव्यमशरीरसर्वधर्मनयप्रतिविध्यनतया। चित्तनगरमायोपमप्रत्यवेक्षणाभियुक्तेन ते कुलपुत्र भवितव्यं सर्वज्ञताधर्मनगरगमनतया। एवं चित्तनगरपरिशुद्ध्यभियुक्तेन ते कुलपुत्र बोधिसत्त्वेन शक्यं सर्वकुशलसमार्जनमनुप्राप्तुम्। तत्कस्य हेतोः? तथा हि बोधिसत्त्वस्य एवं चित्तनगरपरिशुद्धस्य सर्वावरणानि पुरतो न सतिष्ठन्ते बुद्धदर्शनावरणं वा धर्मश्रवणावरणं वा तथागतपूजोपस्थानावरणं वा सत्त्वसंग्रहप्रयोगावरणं वा बुद्धक्षेत्रपरि-20 शुद्ध्यावरणं वा। सर्वावरणविगतेन हि कुलपुत्र चित्ताध्याशयेन कल्याणमित्रपर्येष्ट्यभियुक्तस्य बोधिसत्त्वस्य अल्पकृच्छ्रेण कल्याणमित्राण्याभासमागच्छन्ति। कल्याणमित्राधीना च कुलपुत्र बोधिसत्त्वानां सर्वज्ञता॥

तत्र धर्मपद्मश्रीकुशला शरीरकायिकदेवता ह्रीश्रीमञ्जरिप्रभावा अपरिमाणदेवतागणपरिवृता मायाया देव्या वर्णमुदीरयमाणा बोधिमण्डान्निष्क्रम्य सुधनस्य श्रेष्ठिदारकस्याभिमुखं 25 गगनतले स्थिता स्वकस्वकेभ्योऽनेकरत्नवर्णानि रश्मिजालानि अनेकगन्धधूपविमलार्चिर्वर्णानि चित्ताशयप्रसादनवर्णानि चित्तप्रीतिवेगविवर्धनवर्णानि कायपरिदाहप्रह्लादनवर्णानि कायपरिशुद्धिसंदर्शनवर्णानि असङ्ख्यायविक्रमसमवविषयाणि रश्मिजालानि प्रामुञ्चत्। तानि विपुलानि क्षेत्राण्यवभास्य सुधनस्य श्रेष्ठिदारकस्य सर्वत्रानुगत्य समन्ताभिमुखं सर्वतथागतकायसंदर्शयित्वा सर्वावन्तं लोकं प्रदक्षिणीकृत्य सुधनस्य श्रेष्ठिदारकस्य मूर्धसंधौ निपतन्ति स्म। 30 तानि मूर्धानमुपादाय सर्वरोमकूपेष्वनुप्रविश्य अनुप्रसरन्ति स्म। समनन्तरस्पृष्टश्च सुधनश्रेष्ठिदारकस्ताभिर्देवतारश्मिभिः, अथ तावदेव विरजप्रभासं नाम चक्षुः प्रतिलेभे, यद् सर्वतमोऽन्धकारेण सार्धं न सवसति। वितिमिरं च नाम चक्षुः प्रतिलेभे, येन सत्त्वस्वभाव-

मवतरति । विरजःपतिं च नाम चक्षुः प्रतिलेभे, येन च सर्वधर्मस्वभावमण्डलं व्यवलोकयति । विशुद्धगतिं च नाम चक्षुः प्रतिलेभे, येन सर्वक्षेत्रप्रकृतिं व्यवलोकयति । वैरोचनप्रभं च नाम चक्षुः प्रतिलेभे, येन तथागतधर्मशरीरं व्यवलोकयति । विशुद्धगतिं च नाम चक्षुः प्रतिलेभे, येनाचिन्त्यां तथागतरूपकायपरिनिष्पत्तिं व्यवलोकयति । समन्तप्रभं च नाम चक्षुः प्रतिलेभे, येनाचिन्त्यां तथागतरूपकायपरिनिष्पत्तिमर्कि व्यवलोकयति । 5 असङ्गप्रभं च नाम चक्षुः प्रतिलेभे, येन सर्वक्षेत्रसागरप्रसरलोकधातुसंभवविभक्तिं व्यवलोकयति । समन्तावभासं च नाम चक्षुः प्रतिलेभे, येन सर्वतथागतधर्मेषु सूत्रान्तनयनिर्हारदिशं व्यवलोकयति । समन्तविषयं च नाम चक्षुः प्रतिलेभे, येनानन्तमध्यबुद्धविकुर्वितसत्त्वविनयाधिष्ठानं व्यवलोकयति । समन्तदर्शं च नाम चक्षुः प्रतिलेभे, येन सर्वक्षेत्रसमुत्पत्तिप्रसृतं बुद्धोत्पादं व्यवलोकयति ॥ 10

अथ खलु सुनेत्रो नाम राक्षसेन्द्रो बोधिसत्त्वसंगीतिप्रासादद्वारपालो दशानां राक्षससहस्राणां प्रमुखः सभार्यः सपुत्रः सस्वजनपरिवारः सुधनं श्रेष्ठिदारकं नानावर्णमनोज्ञगन्धैः कुसुमैरभ्यवकीर्य एवमाह—दशभिः कुलपुत्र धर्मैः समन्वागतो बोधिसत्त्व आसन्नो भवति सर्वकल्याणमित्राणाम् । कतमैर्दशभिः? यदुत मायाशाठ्यापगतेन सुपरिशुद्धेनाशयेन, सर्वजगत्परिग्रहासंभिन्नया महाकरुणया, सर्वसत्त्वनिःसत्त्वस्वभावनिध्यप्त्या प्रत्यवेक्षया, 15 सर्वज्ञतागमनावैवर्त्येनाध्याशयबलेन, तथागतमण्डलाभिमुखेनाधिमुक्तिबलेन, सर्वधर्मस्वभावविमलविशुद्धेन चक्षुषा, सर्वसत्त्वमण्डलासंभिन्नया महामैत्र्या, सर्वावरणविकिरणेन ज्ञानालोकेन, सर्वसंसारदुःखप्रतिपक्षच्छत्रभूतेन महाधर्ममेघेन, सर्वधर्मधातुश्रोत्रसमन्तप्रसृतेन कल्याणमित्रगमनाभिमुखेन ज्ञानचक्षुषा । एभिः कुलपुत्र दशभिर्धर्मैः समन्वागतो बोधिसत्त्व आसन्नो भवति सर्वकल्याणमित्राणाम् । दशभिश्च समाधिनिध्यप्तिमुखैर्व्यवलोकयन् बोधि- 20 सत्त्वः संमुखीभावं प्रतिलभते सर्वकल्याणमित्राणाम् । कतमैर्दशभिः? यदुत धर्मगगनविरजोविचारमण्डलेन च समाधिनिध्यप्तिमुखेन, सर्वदिक्समुद्राभिमुखचक्षुषा च समाधिनिध्यप्तिमुखेन, सर्वारम्बणाविकल्पाविचारेण च समाधिनिध्यप्तिमुखेन, सर्वदिक्तथागतमेघसंभवेन च समाधिनिध्यप्तिमुखेन, सर्वज्ञज्ञानपुण्यसमुद्रोपचयगर्भेण च समाधिनिध्यप्तिमुखेन, सर्वचित्तोत्पादाविरहितकल्याणमित्रसंभवासवेन च समाधिनिध्यप्तिमुखेन, सर्वतथा- 25 गतगुणकल्याणमित्रसुखसंभवेन च समाधिनिध्यप्तिमुखेन, सर्वकल्याणमित्रात्यन्ताविप्रवासेन च समाधिनिध्यप्तिमुखेन, सर्वकल्याणमित्रसमतासदासमन्तोपसंक्रमणप्रयोगेन च समाधिनिध्यप्तिमुखेन, सर्वकल्याणमित्रोपायचरितेष्वक्रान्तप्रयोगेन च समाधिनिध्यप्तिमुखेन । एभिः कुलपुत्र दशभिः समाधिनिध्यप्तिमुखैः समन्वागतो बोधिसत्त्वः संमुखीमात्रं प्रतिलभते सर्वकल्याणमित्राणाम् । सर्वतथागतधर्मचक्रकल्याणमित्रमुखनिर्घोषं च नाम समाधिनिमोक्षं 30

---

१ S om. विशुद्ध...व्यवलोकयति. २ B °निष्पत्ति for निध्यप्ति throughout.

प्रतिलभते, यत्र प्रतिपद्यमानो बोधिसत्त्वोऽसंभिन्नाः सर्वबुद्धसमतामवतरति, असंभिन्नानि च सर्वत्रानुगतानि कल्याणमित्राणि प्रतिलभते ॥

एवमुक्ते सुनेत्रेण राक्षसेन्द्रेण सुधन श्रेष्ठिदारको गगनतलमवलोक्य एवमाह—साधु साधु आर्य, अनुकम्पकोऽस्माकमनुग्रहप्रवृत्त कल्याणमित्राणां दर्शयिता। तत्साध्ववमारु
5 सम्यगुपायमुपसमुपदिशन् कथं परिक्रमामि? कतमां दिशमभिमुखं निर्जगामि? कस्मिन्नधिष्ठाने परिमार्गयामि? कतमदारम्बणमुपनिध्यायामि कल्याणमित्रदर्शनाय? आह—तेन हि कुलपुत्र समन्तदिक्प्रणिपतितेन शरीरेण सर्वारम्बणेन कल्याणमित्रस्मृत्युपनिबद्धेनाशयेन समन्तनिर्जवेन समाध्यनुगमेन स्वप्नोपमेन चित्तजवेन प्रतिभासोपमेन मनःशरीरनिचारगमनेन कल्याणमित्रसकाशमुपसंक्रमितव्यम् ॥

10 अथ खलु सुधन. श्रेष्ठिदारको यथानुशिष्टं सुनेत्रेण राक्षसेन्द्रेण प्रतिपद्यमानोऽद्राक्षीत्पुरतो धरणितलान्महारत्नपद्मसमुद्गतं सर्ववज्रशरीरदण्डं सर्वजगत्सागरमणिराजगर्भं सर्वमणिराजपत्रपङ्क्तिवैरोचनमणिराजकर्णिकं सर्वरत्नवर्णगन्धमणिराजकेसरमसंख्येयरत्नजालसंछादितम्। तस्याश्च महारत्नराजपद्मकर्णिकाया धर्मधातुदिक्समवसरणगर्भं नाम कूटागारमपश्यच्चित्रं दर्शनीयं वज्रवैरोचनधरणितलसंस्थानं सर्वमणिराजमयपरिपूर्णस्तम्भसहस्रोपशोभितं सर्व
15 रत्नसंघट्टितायामं जाम्बूनदविमलकनकदिव्यविन्यस्तपट्टमसंख्येयनानामुक्ताहारजालोपनिबद्धं मणिरत्नराजविचित्रभक्तिविन्यासं जम्बूध्वजमणिरत्नसमन्तव्यूहमसंख्येयरत्नवेदिकापरिवृतं समन्तदिग्मणिराजसोपानसुविभक्तम्। तस्य कूटागारस्य मध्ये चिन्ताराजमणिरत्नपद्मगर्भमासनमद्राक्षीत् सर्वलोकेन्द्रसंस्थानमणिविग्रहबिम्बप्रतिष्ठितं सर्वमणिरत्नविग्रहवर्णमिन्द्रध्वजप्रद्योतसंस्थानं वज्रमणिचक्रभूमितलप्रतिष्ठितं नानामणिराजपङ्क्तिव्यूहमनेकरत्नवेदिकापरिवृतं
20 ज्योतिर्ध्वजमणिराजसुप्रकल्पितं नानारत्नव्यूहोपशोभितं दिव्यातिक्रान्तमणिराजवस्त्रसुप्रज्ञप्तमनेकवर्णविचित्रवस्त्ररत्नसुसंस्तृतं सर्वरत्नवस्त्रवितानविततगगनालंकारं सर्वरत्नजालसंछादितं समन्तदिक्सुविभक्तवज्रध्वजनिर्घोषं सर्वरत्नपट्टध्वजसुसमीरितनिर्घोषितं सर्वगन्धमणिराजध्वजविन्यस्तसमतालंकारं सर्वपुष्पधूपविचित्रकुसुमौघसंप्रवर्षणं सर्वरत्नकिङ्किणीध्वजसुसमीरितश्रवणमनःसुखमधुरनिर्घोषं नानारत्नभवनमुखद्वारप्रयुक्तं नानारत्नमणिविग्रहमुखानेक-
25 वर्णगन्धोदकप्रवृद्धवैरोचनमणिराजविग्रहगजेन्द्रमुखपद्मजालप्रयुक्तं नानावज्रसिंहमुखानन्तवर्णधूप[1]मेघप्रयुक्तं ब्रह्मसंस्थानवैरोचनमणिराजमुखमहामैत्रीनयब्रह्मघोषनिर्नादप्रमुक्तं नानारत्नरजतमुखशुकपक्षोद्द्योतनमधुरनिर्नादरुतवर्णं ध्यानबुद्धनामकनकघण्टामालामधुररुतप्रमुक्तनिर्घोषं सर्वबुद्धधर्मचक्रमहामणिराजघण्टामालामनोज्ञरुतरवणं सर्वबोधिसत्त्वप्रणिधिनानावज्रघण्टानिश्चरितनिर्घोषं चन्द्रध्वजमणिराजपङ्क्तिसर्वबुद्धप्रतिभासनिचितनामनिर्नादविज्ञपनं शुद्धगर्भमणि-
30 राजपङ्क्तिं सर्वत्र्यध्वतथागतजन्मपरंपराप्रतिभासविज्ञपनमादित्यगर्भमणिराजपङ्क्तिं सर्वनिर्वृतिप्रतिपत्त्याकाशधातुपरमदशदिक्सर्वबुद्धक्षेत्रविषयरश्मिसंदर्शनम् अवभासध्वजमणिराजपङ्क्ति

1 S 'ध्वज' for 'धूप'.

सर्वतथागतप्रभामण्डलावभासप्रमुखैर्वैरोचनमणिराजपङ्क्ति सर्वजगदिन्द्रसदृशनिर्माणमेघतथागतपूजोपस्थानप्रमुखैः चिन्तामणिराजपङ्क्ति समन्तभद्रबोधिसत्त्वविकुर्वितप्रतिक्षणसर्वधर्मधातुस्फरणं मेरुध्वजमणिराजपङ्क्ति सर्वदेवेन्द्रभवनमेघाप्सरोरुतनिगर्जितनिर्घोषं सर्वारम्बणतथागतस्तुतिमेघप्रमुखैश्चाचिन्त्यगुणवर्णनिर्देशं च तदासनमद्राक्षीत् अचिन्त्यरत्नव्यूहासनपरिवारम् ॥

तस्मिंश्चासने मायादेवीं निषण्णामद्राक्षीत् त्रैलोक्यसमतिक्रान्तेन रूपेण, सर्वलोकाभिमुखेन सर्वभवगत्युद्गतेन रूपेण, यथाशयजगद्विज्ञप्तेन सर्वलोकानुपलिप्तेन रूपेण, विपुलपुण्यसंभूतेन सर्वजगत्सदृशेन रूपेण, सर्वसत्त्वसुखोपदर्शनेन सर्वजगत्परिपाकविनयानुकूलेन रूपेण, सर्वसत्त्वाभिमुखप्रलम्बितेन सर्वकालगगनजगद्विज्ञप्त्यसंभिन्नेन रूपेण, सर्वजगन्निष्ठाविज्ञप्त्याधिष्ठानेन अगतिकेन रूपेण, सर्वलोकगतिकेन रूपेण, सर्वलोकगतिनिरुद्धेन अनागतिकेन रूपेण, सर्वजगदसंभूतेन अनुत्पन्नेन रूपेण, अनुत्पत्तिसमधर्मनिरतेन 10 अनिरुद्धेन रूपेण, सर्वलोकव्यवहारपरमेण असत्येन रूपेण, यथावत्प्रतिलब्धेन अमृषेण रूपेण, यथालोकविज्ञप्तेन अक्रान्तेन रूपेण, च्युत्युपपत्तिविनिवृत्तेन अविनष्टेन रूपेण, धर्मधातुप्रकृत्यविनाशेन अलक्षणेन रूपेण, त्र्यध्ववाक्पथपरमेण एकलक्षणेन रूपेण, अलक्षणसुलक्षणनिर्यातेन प्रतिभासकल्पेन रूपेण, सर्वजगच्चित्तयथाशयविज्ञप्तेन मायाकल्पेन रूपेण, ज्ञानमायापरिनिष्पन्नेन मरीचिकल्पेन रूपेण, प्रतिक्षणजगत्संज्ञाधिष्ठानपरमेण 15 च्छायोपमेन रूपेण, प्रणिधानसर्वजगदनुवृद्धेन स्वप्नोपमेन रूपेण, यथाशयजगद्विज्ञप्त्यसंभिन्नेन सर्वधर्मधातुपरमेण रूपेण, आकाशधातुप्रकृतिपरिशुद्धेन महाकरुणानिर्यातेन रूपेण, सत्त्ववशपरिपालनप्रयुक्तेन असङ्गमुखनिर्यातेन रूपेण, प्रतिक्षणधर्मधातुस्फरणेन अनन्तमध्येन रूपेण, अनालिप्तसर्वजगन्निश्रितेन अप्रमाणेन रूपेण, सर्ववाक्पथसमतिक्रान्तेन सुप्रतिष्ठितेन[1] रूपेण, सर्वजगद्विनयाधिष्ठाननिर्वृत्तेन अनधिष्ठितेन रूपेण, अधिष्ठान 20 जगत्कायप्रयुक्तेन असंवृतेन[2] रूपेण, प्रणिधानमायापरिनिष्पन्नेन अनभिभूतेन रूपेण, सर्वलोकाभ्युद्गतेन अयथागतेन रूपेण, शमयालोकविज्ञप्तेन असंभवेन रूपेण, यथाकर्मजगदनुवृद्धेन चिन्तामणिराजकल्पेन रूपेण, यथाशयसर्वसत्त्वाभिप्रायपरिपूर्णप्रणिधिपरिपूर्णेन अविकल्पेन रूपेण, सर्वजगत्परिकल्पोपस्थितेन अधिकल्पेन रूपेण, सर्वजगद्विज्ञप्त्यकल्पेन अधिष्ठानेन रूपेण, संसारविनिवृत्तिपरमेण विशुद्धेन रूपेण तथतासमविनिर्विकल्पेन । 25 इत्येवंप्रकारेण रूपेण सुधन श्रेष्ठिदारको मायादेवीमद्राक्षीदरूपेण रूपप्रतिभासेन अवेदनेन रूपेण लोकदुःखवेदनाप्रशान्तिपरमेण, सर्वसत्त्वसंज्ञागतोच्चालितेन रूपेण परसत्त्वसंज्ञागतविज्ञप्तेन, अनभिसंस्कारधर्मतानिर्यातेन रूपेण मायागतकर्मविनिवृत्तेन, विज्ञानविषयसमतिक्रान्तेन रूपेण बोधिसत्त्वप्रणिधिज्ञानसंभवेन, अस्वभावेन रूपेण सर्वजगद्वाक्पथपरमेण B शरीरेण, संसारे संतापनिरुद्धेन रूपेण धर्मकायपरमशीतीभावोपगतेन यथाशयजगद्रूपकाय- 30 संदर्शनीं सत्त्वाशयवशेन सर्वजगत्सदृशं सर्वजगद्रूपकायातिरेकं रूपकायं संदर्शयमानाम् ।

१ B अप्रतिष्ठितेन २ S असंभूतेन

तत्र केचित्सत्त्वा मारकन्यारूपेण मारकन्यातिरेकरूपां मायादेवीमद्राक्षुः । केचित्सत्त्वा
वशवर्त्यप्सरोतिरेकरूपां केचित्सुनिर्मिताप्सरोतिरेकरूपां केचित्सतुषिताप्सरोतिरेकरूपां
केचित्सुयामाप्सरोतिरेकरूपां केचित्त्रायस्त्रिंशाप्सरोतिरेकरूपां केचिच्चातुर्महाराजिकाप्सरोति
रेकरूपां केचित्कुम्भाण्डेन्द्रकन्यातिरेकरूपां केचिन्महोरगेन्द्रकन्यातिरेकरूपाम् । केचित्सत्त्वा
5 मनुष्येन्द्रकन्यातिरेकरूपां मायादेवीमपश्यन् ॥

अथ खलु सुधनः श्रेष्ठिदारकः सर्वजगद्रूपसंज्ञापगतः परसत्त्वाशयानवतरन् सर्वसत्त्व
चित्ताशयगतेषु मायादेवीमपश्यत् सर्वजगदुपजीव्यपुण्यां सर्वज्ञतापुण्योपचितशरीरामसंभिन्न-
दानपारमिताप्रयोगां सर्वजगत्समताप्रतिपन्नां महाकरुणागोष्ठसर्वसत्त्वसमवसरणां सर्वतथागत
गुणप्रतिपत्तिनिर्यातां सर्वक्षान्तिनयसागरावतीर्णां सर्वज्ञतावीर्यवेगविवर्धितचेतनां सर्वधर्म
10 मण्डलपरिशुद्ध्यविवर्त्यवीर्यां सर्वधर्मस्वभावनिध्यप्तिनिर्यातां सर्वध्यानाङ्गनयनिष्पत्तिचित्तामसं
भिन्नध्यानाङ्गविषयासाधारणतथागतध्यानमण्डलावभासप्रतिलब्धां सर्वसत्त्वक्लेशसागरोच्छोषण-
निश्चयनानानिध्यप्तिपरमां सर्वतथागतधर्मचक्रप्रविचयविधिज्ञां सर्वधर्मनयसमुद्रव्यवचारणप्रज्ञां
सर्वतथागतदर्शनावितृप्तां त्र्यध्वतथागतपरंपराव्यवलोकनाप्रतिप्रस्रब्धां सर्वबुद्धदर्शनद्वाराभि-
मुखां सर्वतथागतसमुदागममार्गपरिशुद्धिविमात्रताविधिज्ञां सर्वतथागतगगनगोचरां सर्वसत्त्व
15 संग्रहोपायविधिज्ञामनन्तमध्ययथाशयजगत्परिपाकविनयप्रतिभासप्राप्तां सर्वबुद्धकायविशुद्धि
विमात्रतावतीर्णां सर्वक्षेत्रसागरपरिशुद्धिप्रणिधानसमन्वागतां सर्वसत्त्वधातुविनयाधिष्ठानपर्यव
सानप्रणिधानपरिशुद्धां सर्वतथागतविषयपूजास्फरणचित्तां सर्वबोधिसत्त्वविकुर्वितवीर्यनिर्याता-
मनुत्तरधर्मकायपरिशुद्धामनन्तरूपकायसंदर्शनीं सर्वमारबलप्रमर्दनीं विपुलकुशलमूलबलोपपन्नां
धर्मबलसंजातबुद्धिबुद्धबलावभासप्रतिलब्धां सर्वबोधिसत्त्ववशितावलपरिनिष्पन्नां सर्वज्ञता
20 वेगबलसंजातां सर्वतथागतज्ञानविद्युदवभासितप्रज्ञामनन्तमध्यसत्त्वचित्तसमुद्रविचरणज्ञानां
विपुलजगदाशयावतीर्णां परसत्त्वेन्द्रियविमात्रताज्ञाननयविधिज्ञामनन्तसत्त्वाधिमुक्तिविमात्रता-
ज्ञानकौशल्यानुगतां दशदिगप्रमाणक्षेत्रसमुद्रकायस्फरणां सर्वलोकधातुविमात्रताज्ञाननयविधिज्ञां
सर्वक्षेत्रसंभेदविधिज्ञाननयकौशल्यानुगतां सर्वदिक्सागरप्रसृतज्ञानदर्शनां सर्वाध्वसागरानु-
प्रसृतबुद्धिं सर्वबुद्धसागराभिमुखप्रणिपतितकायां सर्वबुद्धधर्ममेघसमुद्रसंप्रतीच्छनाभिमुखचित्तां
25 सर्वतथागतगुणप्रतिपूरणप्रतिपत्तिनिर्याणप्रयुक्तां सर्वबोधिसंभारसंभवानुप्रसृतबुद्धिं सर्वबोधि-
सत्त्वप्रस्थानविचारविक्रान्तां सर्वबोधिचित्तोपादाङ्गपरिनिष्पन्नां सर्वसत्त्वपरिपालनप्रयुक्तां
सर्वबुद्धवर्णमेघालोकप्रभावनां सर्वबोधिसत्त्वजिनजनेत्रीप्रणिधाननिर्याताम् । एवंप्रमुखैर्जम्बु
द्वीपपरमाणुरजःसमैर्दर्शननयैः सुधनः श्रेष्ठिदारको मायादेवीमपश्यत् । स तां दृष्ट्वा यत्प्रमाणा
मायादेवी तत्प्रमाणं स्वकायमधिष्ठाय समन्तदिगभिमुखां मायादेवीं सर्वत्रानुगतेन कायेन
30 प्रणिपतितः । तस्य प्रणिपतमानस्य अनन्तमध्यानि समाधिमुखानि अवक्रान्तानि । स तानि
समाधिमुखानि व्यवलोकयन् अनिमित्तीकृत्वा प्रभावयित्वा सारीकृत्वा अनुस्मृत्य स्फरित्वा
प्रसरित्वा अवगाहयित्वा विपुलीकृत्वा अभिनिर्हृत्य मुद्रयित्वा तेभ्यः समाधिमुखेभ्यो व्युत्थाय

मायादेवीं सपरिवारां सभवनासनां प्रदक्षिणीकृत्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—अहमार्ये मञ्जुश्रिया कुमारभूतेन अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य कल्याणमित्रपर्युपासनेन समादापितम्। सोऽहं कल्याणमित्रं पर्युपासमानोऽनुपूर्वेण यावत्तव सकाशमुपसंक्रान्तः। तद्वदतु मे आर्या—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षमाणः परिनिष्पन्नो भवति सर्वज्ञतायाम्। सा अवोचत्—अहं कुलपुत्र महाप्रणिधानज्ञानमायागतव्यूहस्य बोधिसत्त्व- 5 विमोक्षस्य लाभिनी। साहं कुलपुत्र अनेन विमोक्षेण समन्वागता यावन्ति इह लोकधातुसमुद्रे भगवतो वैरोचनस्य सर्वलोकधातुषु सर्वजम्बुद्वीपेषु चरमभविकबोधिसत्त्वजन्मविकुर्वितानि प्रवर्तन्ते, सर्वेषां च तेषां चरमभविकानां बोधिसत्त्वानामहं जननी। सर्वे ते बोधिसत्त्वा मम कुक्षौ संभवन्ति। मम दक्षिणात्पार्श्वान्निष्क्रमन्ति। इहैव तावदहं कुलपुत्र भागवत्यां चातुर्द्वीपिकायां कपिलवस्तुनि महानगरे राज्ञः शुद्धोदनस्य कुलवद्धकल्पेन सिद्धार्थं 10 बोधिसत्त्वं जनित्रवती महताचिन्त्येन बोधिसत्त्वजन्मविकुर्वितेन॥

सा खल्वहं कुलपुत्र तदा राज्ञः शुद्धोदनस्य गृहगता भवामि। अथ बोधिसत्त्वस्य तुषितभवनाच्च्यवनकालसमये प्रत्युपस्थिते सर्वरोममुखेभ्य एकैकस्माद्रोममुखादनभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाः सर्वबोधिसत्त्वजननीगुणनयव्यूहाः सर्वतथागतजननीगुणमण्डलप्रभवप्रभासा नाम रश्मयो निश्चरित्वा सर्वावन्तं लोकधातुमवभास्य मम शरीरे निपत्य 15 मूर्धानमुपादाय सर्वरोमकूपेष्वनुप्राविशन्। समनन्तरप्रविष्टाभिश्च कुलपुत्र ताभिर्बोधिसत्त्वरश्मिभिरनेकनामधेयाभिर्नानाबोधिसत्त्वजननीविकुर्वितव्यूहप्रमुखनीभिः, अथ तावदेव मम काये बोधिसत्त्वरश्मिमुखमण्डलाभिविज्ञप्ताः सर्वबोधिसत्त्वजन्मविकुर्वितनयव्यूहाः संदृश्यन्ते स्म अन्तर्गतेन परिवारेण। समनन्तरप्रविष्टाभिश्च कुलपुत्र मम काये ताभिर्बोधिसत्त्वरश्मिभिः, अथ तावदेव येषां बोधिसत्त्वानां तानि बोधिसत्त्वरश्मिमुखमण्डलानि विज्ञप्तानि जन्मनय- 20 विकुर्वितानि प्रवर्तन्ते, सर्वे ते मम चक्षुष आभासमगमन्, यदुत बोधिमण्डवराग्रगता बुद्धसिंहासननिषण्णा बोधिसत्त्वपर्षन्मण्डलपरिवृता लोकेन्द्राभिपूजिता धर्मचक्रं प्रवर्तयमानाः। ये च तैस्तथागतैः पूर्वबोधिसत्त्वचर्यां चरद्भिस्तथागता आरागिताः, तेऽपि सर्वे मम चक्षुष आभासमगमन्। प्रथमचित्तोत्पादजन्मविकुर्विताः साभिसंबोधिधर्मचक्रप्रवर्तनपरिनिर्वाणविकुर्विताः सर्वबुद्धक्षेत्रविशुद्धव्यूहाः, यानि च तेषां तथागतानां निर्माणमण्डलानि 25 प्रतिचित्तक्षणं सर्वधर्मधातुं स्फरन्ति, तान्यपि सर्वाणि मम चक्षुष आभासमगमन्। तस्या मम कुलपुत्र काये ताभिर्बोधिसत्त्वरश्मिभिरनुप्रविष्टाभिः सर्वजगदभ्युद्गतः कायः संस्थितोऽभूत्, आकाशधातुविपुलश्च कुक्षिः, न च मनुष्याश्रयप्रमाणादतिक्रान्तः। यावन्तश्च दशसु दिक्षु बोधिसत्त्वगर्भावासभवनव्यूहाः, ते सर्वे मम कायेऽन्तर्गता अनुप्रविष्टाः सर्वे संदृश्यन्ते॥

समनन्तरप्रादुर्भूतस्य च मम कुलपुत्र काये बोधिसत्त्वगर्भावासभवनव्यूहपरिभोगस्य,अथ 30 तावदेव बोधिसत्त्वः सार्धं दशबुद्धक्षेत्रपरमाणुरजःसमैर्बोधिसत्त्वैरेकप्रणिधानैः सभागचरितैरेक-

1 S बोधिसत्त्वानां प्रत्येकमहं जननी. 2 B जननी भवति.

कुशलमूलैरेकव्यूहैरेकविमोक्षविहारिभिरेकज्ञानभूमिसमासिभिरेकनिर्वृत्तिनिर्यातैरेकप्रणिधान-समुदागतैरेकचर्यानिर्यातैर्धर्मकायपरिशुद्धैरनन्तमध्यरूपकायाधिष्ठानैः समन्तभद्रबोधिसत्त्वचर्याप्रणिधिनिर्वृत्तिनिर्यातैर्नागेन्द्रगर्भमणिकूटागारगतैः सागरनागराजपूर्वंगमैरशीत्या नागेन्द्रसहस्रैः सर्वलोकेन्द्रसहस्रैश्चाभिपूज्यमानो महता बोधिसत्त्वनिर्वृत्तेन सर्वतुषितभवनच्युतिसंदर्शनेन
5 एकैकस्मात्तुषितभवनात् सर्वलोकधातुप्रसृतचातुर्द्वीपोपपत्तिप्रतिलाभसंदर्शनेन अचिन्त्यसत्त्व-परिपाकोपायकौशल्यानुगतेन प्रमत्तसर्वसत्त्वसंचोदनेन सर्वाभिनिवेशोच्चालनेन महारश्मि-जालप्रमुञ्चनेन सर्वलोकान्धकारविधमनेन सर्वापायदुःखव्युपशमनेन सर्वनिरयगतिनिवर्तनेन सर्वसत्त्वपूर्वकर्मसंचोदनेन सर्वसत्त्वधातुपरित्रायणेन सर्वसत्त्वाभिमुखकायसंदर्शनेन तुषितभवनाच्च्युत्वा सार्धं सपरिवारेण मम कुक्षौ प्राविशत् ॥

10 ते सर्वे मम कुक्षौ त्रिसाहस्रलोकधातुविपुलेन यावदनभिलाप्यबुद्धक्षेत्रपरमाणुरजः-समलोकधातुविपुलेन आक्रमविक्रमेण अनुविचरन्ति स्म । सर्वाणि च दशसु दिक्षु सर्वलोकधातुप्रसरेषु सर्वतथागतपादमूलेषु सर्वबोधिसत्त्वपर्षन्मण्डलानि प्रतिचित्तक्षणमनभिलाप्यानि मम कुक्षौ समवसरन्ति स्म बोधिसत्त्वगर्भावासनिर्वृत्तिं द्रष्टुम् । चत्वारश्च महाराजाः शक्रसुयामसंतुषितसुनिर्मितवशवर्तिनश्च देवेन्द्रा ब्रह्मेन्द्राश्च गर्भावासोपगतबोधिसत्त्वमुप-
15 संक्रामन्ति स्म दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय साकच्यानुभावनाय । न चाय मम कुक्षिस्तावन्ति पर्षन्मण्डलानि प्रतीच्छन् विपुलीभवति । न चास्मान्मनुष्याश्रयादयं मम कायो विशिष्टतरः संतिष्ठते । तानि च तावन्ति पर्षन्मण्डलानि संप्रतीच्छति । सर्वे च ते देवमनुष्या नानाबोधिसत्त्वपरिभोगपरिशुद्धिव्यूहानपश्यन् । तत्कस्य हेतोः ? यथापि तदस्यैव महाप्रणिधानमायागतस्य बोधिसत्त्वविमोक्षस्य सुभावितत्वात् ॥

20 यथा चाहं कुलपुत्र अस्यां भागवत्यां चातुर्द्वीपिकायां जम्बुद्वीपे बोधिसत्त्वं कुक्षिणा संप्रतीच्छामि, एवं त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वचातुर्द्वीपिकाजम्बुद्वीपेषु संप्रतीच्छामि अनेन च निर्वृत्तिव्यूहेन । न चायं मम कायो द्वयीभवति नाद्वयीभवति, न चैकत्वे संतिष्ठते न बहुत्वे, यथापि नाम तदस्यैव महाप्रणिधानज्ञानमायागतस्य बोधिसत्त्वविमोक्षस्य सुभावितत्वात् । यथा चाहं कुलपुत्र अस्य भगवतो वैरोचनस्य माता अभूवम्, तथा पूर्व-
25 काणामपि तथागतानामनन्तमध्यानां माता अभूवम् । यत्र बोधिसत्त्वो लोके उपपादुक उपपद्यते पद्मगर्भे, तत्राहं नलिनीदेवता[1] भूत्वा बोधिसत्त्वं संप्रतीच्छामि । लोकश्च मां बोधिसत्त्वजननीति संजानीते । यत्रोत्सङ्गे प्रादुर्भवति, तत्राहमस्य जनन्यभूवम् । यत्र बुद्धक्षेत्रे प्रादुर्भवति, तत्राहं बोधिमण्डदेवता भवामि । इति हि कुलपुत्र यावद्भिरुपायमुखैश्चरमभविका बोधिसत्त्वा लोक उपपत्तिं संदर्शयन्ति, तावद्भिरुपायमुखैरहं बोधिसत्त्वजननी भवामि ॥

30 यथा अहं कुलपुत्र इह लोकधातौ अस्य भगवतः सर्वबोधिसत्त्वजन्मनिर्वृत्तिसंदर्शनेषु जनेत्र्यभूवम्, तथा भगवतः क्रकुच्छन्दस्यापि तथागतस्य, कनकमुनेः काश्यपस्य तथागतस्य

[1] B reads दुम्बिनीति संजानाति for नलिनी जननीति

जनेत्र्यभूवम्। तथा सर्वेषां भद्रकल्पिकानामनागतानां तथागतानां जनेत्री भविष्यामि। तद्यथा मैत्रेयस्य बोधिसत्त्वस्य तुषितभवनगतस्य च्युतिसंदर्शनकाले प्रवृत्ते सर्वबोधिसत्त्वोपपत्तिसंभवगर्भसंवासविकुर्वितसंदर्शनप्रभासायां रश्म्यामुत्सृष्टायां प्रभासितेषु सर्वधर्मधातुनयतलेषु यावन्ति मम धर्मधातुनयतलानि चक्षुषोऽवभासमागमिष्यन्ति, येषु मैत्रेयेण बोधिसत्त्वेन मनुष्यलोके मनुष्येन्द्रकुलेषु जन्मोपपत्तिसंदर्शनेन सत्त्वा विनयितव्याः, तेष्वहं सर्वत्र 5 बोधिसत्त्वजननी भविष्यामि। यथा च मैत्रेयस्य बोधिसत्त्वस्य, तथा सिंहस्य यो मैत्रेयस्यानन्तरमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते, तथा प्रद्योतस्य केतोः सुनेत्रस्य कुसुमस्य कुसुमश्रियः तिष्यस्य पुष्यस्य सुमनसो वज्रस्य विरजसः चन्द्रोल्काधारिणो यशसो वज्रशुद्धस्य एकार्थदर्शिनो सिताङ्गस्य पारंगतस्य रत्नार्चिःपर्वतस्य महोल्काधारिणः पद्मोत्तरस्य विघुष्टशब्दस्य अपरिमितगुणधर्मस्य दीपश्रियो विभूषिताङ्गस्य सुप्रयाणस्य मैत्रश्रियो निर्मितस्या- 10 निकेतस्य ज्वलिततेजसोऽनन्तघोषस्य अनिनेमस्य अनिनेत्रस्य विमतिविकिरणस्य परिशुद्धस्य सुविशालाभस्य यशःशुद्धोदितस्य मेघश्रियो विचित्र[1]भूतस्य सर्वरत्नविचित्रवर्णमणिकुण्डलस्य सागरमतेः शुभरत्नस्य अनिहतमल्लस्य परिपूर्णमनोरथस्य महेश्वरस्य इन्द्रश्रियोऽग्निश्रियः चन्दनमेघस्य सितविशालाक्षस्य श्रेष्ठमतेर्विभावितमतेरवरोपणराजस्योत्तापनराजमतेर्विभूषितस्य विभूतेः केशरनन्दिन ईश्वरदेवस्य ईश्वरस्य उष्णीषश्रियो वज्रज्ञानपर्वतस्य श्रीगर्भस्य कनकजाल- 15 कायविभूषितस्य सुविभक्तस्य ईश्वरदेवस्य महेन्द्रदेवस्य अनिलश्रियो विशुद्धनन्दिनोऽर्चिष्मतो वरुणश्रियो विशुद्धमतेरप्रयानस्य निहितगुणोदितस्य अरिगुप्तस्य वाक्यनुदस्य वशीभूतस्य गुणतेजस्य वैरोचनकेतोर्विभवगन्धस्य विभोवनगन्धस्य[2] विभक्ताङ्गस्य सुविशाखस्य सर्वगन्धार्चिमुखस्य वज्रमणिविचित्रस्य प्रहसितनेत्रस्य निहतरागरजसः प्रवृद्धकायराजस्य वासुदेवस्य उदारदेवस्य निरोधनिम्नस्य विधुदेर्धूतरजसः अर्चिर्महेन्द्रस्य उपशमवतो विशाखदेवस्य 20 वज्रगिरो ज्ञानार्चिज्वलितशरीरस्य क्षेमंकरस्य औपगमस्य शार्दूलस्य परिपूर्णशुभस्य रुचिरभद्रयशसः पराक्रमविक्रमस्य परमार्थविक्रामिणः शान्तरश्मेरंकोत्तरस्य गम्भीरेश्वरस्य भूमिमतेरसितस्य घोषश्रियो विशिष्टस्य विभूतपतेर्विभूतभूतस्य वैद्योत्तमस्य गुणचन्द्रस्य प्रहर्षिततेजसो गुणसंचयस्य चन्द्रोद्गतस्य भास्करदेवस्य भीष्मयशसो रश्मिमुखस्य शालेन्द्रस्कन्धस्य यशसः ओषधिराजस्य रत्नवरस्य वज्रमतेः सितश्रियो निर्धौतालयस्य मणिराजस्य महायशसो वेग- 25 धारिणोऽमिताभस्य महासनार्चिषो मोहधर्मेश्वरस्य निहतधीरस्य देवशुद्धस्य दृढप्रभस्य विश्वामित्रस्य विमुक्तिघोषस्य विनर्दितराजस्य वाक्यच्छेदस्य चम्पकविमलप्रभस्य अनवद्यस्य विशिष्टचन्द्रस्य उल्काधारिणो विचित्रगात्रस्य अनभिलाप्योद्गतस्य जगन्मित्रस्य प्रभूतरश्मेः स्वराङ्गशूरस्य करुणावृक्षस्य धृतमतितेजसः कुन्दश्रियोऽर्चिश्चन्द्रस्य अनिहितमतेरनुनयविगतस्य अनिलम्भमतेरुपचितस्कन्धस्य अपायप्रमथनस्य अदीनकुसुमस्य सिंहविनर्दितस्य 30 अनिहानार्थस्य अनावरणदर्शिनः परगणमथनस्य अनिलनेमस्य अकम्पितसागरस्य शोभन-

[1] B विचित्रवृत्तस्य द्रुमराजस्य. [2] B om. विभावनगन्धस्य.

सागरस्य अपराजितमेरोरनिल्यज्ञानस्य अनन्तासनस्य अयुधिष्ठिरस्य चर्यागतस्य उत्तरदत्तस्य
अत्यन्तचन्द्रमसोऽनुग्रहचन्द्रस्य अचलस्कन्धस्य अग्रसानुमतेरनुग्रहमतेरभ्युद्गरस्य अर्चित-
नमस्यानुपगमनाम्नो निहततेजसो निश्चरर्णस्य अनिमित्तप्रज्ञस्य अचलदेवस्य अचिन्त्यश्रियो
निमोक्षचन्द्रस्य अनुत्तरराजस्य चन्द्रस्कन्धार्चितब्रह्मणोऽकम्प्यनेत्रस्य अनुनयगात्रस्य अभ्यु
5 द्गतकर्मणोऽनुवर्ममतेरनुत्तरश्रियो ब्रह्मदेवस्य अचिन्त्यगुणानुत्तरधर्मगोचरस्य अपर्यन्तभद्रस्य
अनुरूपस्वरस्य अभ्युच्चदेवस्य बोधिसत्त्वस्य। इति हि कुलपुत्र एतान् मैत्रेयप्रमुखाननना
गतास्तथागतान् प्रमुखान् कृत्वा सर्वेषा भद्रकल्पिकाना तथागतानामर्हता सम्यक्सबुद्धाना
महमेव जननी भविष्यामि अस्या त्रिसाहस्रमहासाहस्राया लोकधातौ। यथा च इह लोक
धातौ, तथा दशसु दिक्षु अपरिमाणेषु लोकधातुषु अनन्तमध्यान् धर्मधातुनयानवतरमाणा यथा
10 च मैत्रेयस्य तथागतस्य अनभिलाप्यैर्गुणविशेषैर्जननी भविष्यामि, एवमनभिलाप्यगुणविशेषै
सिंहस्य एव यावद्रोचमस्य तथागतस्य जननी भविष्यामि। यथा च भद्रकल्पिकाना
तथागतानाम्, एवमस्मिन् सर्वावति कुसुमतलगर्भव्यूहालकारे लोकधातुसमुद्रे सर्वलोकधातु
वशेषु सर्वलोकधातुप्रसरेषु सर्वलोकधातुषु सर्वजम्बुद्वीपेष्वपरान्तकोटीगतान् कल्पान् समन्त
भद्राया बोधिसत्त्वचर्याया चरमाणा सर्वकल्पेषु सर्वसत्त्वपरिपाकविनयमधिष्ठाय सर्वेषामना
15 गताना तथागताना बोधिसत्त्वभूताना जननी भविष्यामि॥

एवमुक्ते सुधन श्रेष्ठिदारको मायादेवीमेतदवोचत्—कियच्चिरप्रतिलब्धस्त्वया
अयमार्ये महाप्रणिधानज्ञानमायागतव्यूहो बोधिसत्त्वविमोक्ष [1] आह—भूतपूर्वं कुलपुत्र
अतीतेऽध्वनि अचिन्त्याना चित्तविषयसमतिक्रान्तानामभिजातबोधिसत्त्वचक्षुष्पथविज्ञाना
विज्ञानगणनासमतिक्रान्ताना परेण शुभप्रभो नाम कल्पोऽभूत्। तस्मिन् खलु पुन शुभप्रभे
20 कल्पे मेरूद्गतश्रीर्नाम लोकधातुरभूद्विशुद्धसक्लिष्टानेकरत्नमयी सचक्रवालसुमेरुसागरा पञ्चगति
प्रचारा चित्रा दर्शनीया। तस्या खलु मेरूद्गतश्रिया लोकधातौ दश चातुर्द्वीपिककोटी
शतान्यभूवन्। तेषा खलु दशाना चातुर्द्वीपिककोटीशताना मध्ये सिंहध्वजाग्रतेजो नाम
मध्यमा चातुर्द्वीपिकाभूत्, यस्यामशीतिराजधानीकोटीशतान्यभूवन्। तेषा खलु अशीतीना
राजधानीकोटीशताना मध्ये ध्वजाग्रवती नाम मध्यमराजधान्यभूत्। तस्या महातेज
25 पराक्रमो नाम राजा अभूच्चक्रवर्ती। तस्या खलु पुनर्ध्वजाग्रवत्या राजधान्या चित्रमञ्जरि
प्रभासो नाम बोधिमण्डोऽभूत्। तत्र नेत्रश्रीर्नाम बोधिमण्डदेवता अभूत्। तस्मिन् खलु
पुनश्चित्रमञ्जरिप्रभासे बोधिमण्डे विमलध्वजो नाम बोधिसत्त्वो निषण्णोऽभूत् सर्वज्ञताधर्मा
धिगमाय। तस्य सर्वज्ञताधर्माधिगमान्तरायाय सुवर्णप्रभो नाम मारो महासैन्यपरिवारोऽन्त
र्हितकाय उपक्रान्तोऽभूत्। स च महातेजपराक्रमश्चक्रवर्ती बोधिसत्त्ववशिताप्रतिलब्धोऽ-
30 भूत् महर्द्धिविकुर्वितनिर्यात। स ततो महासैन्याद्विपुलतरमुग्रतर च महान्त बलकायमभि
निर्माय त बोधिमण्ड समन्तादनुपरिवारयामास मारसैन्यपराजयाय। तेन हि महती मारसेना

1 [illegible] यावद्रोमवनस्य

निर्कीर्णा । तेन च भगवता विमलध्वजेन तथागतेन अनुत्तरा सम्यक्संबोधिरभिसंबुद्धा । अथ खलु नेत्रश्रीबोधिमण्डदेवता महातेजःपराक्रमस्य चक्रवर्तिनोऽन्तिके पुत्रसंज्ञामुत्पाद्य तस्य तथागतस्य चरणयोः प्रणिपत्य प्रणिधानमकार्षीत्—यत्र यत्राहं भगवन् उत्पद्येयम्, तत्र तत्रैव मे महातेजःपराक्रमश्चक्रवर्ती पुत्रो भवेत् । यदा चैषोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येत, तदाप्यहमेतस्य जननी भवेयम् । सैवं प्रणिधानं कृत्वा तस्मिन्नेव चित्रमञ्जरिप्रभासे 5 बोधिमण्डे तस्मिन्नेव शुभप्रभे कल्पे दश नयुतानि तथागतानामारागयामास ॥

तत्किं मन्यसे कुलपुत्र—अन्या सा तेन कालेन तेन समयेन नेत्रश्रीर्नाम बोधिमण्डदेवता अभूत्? न खलु पुनस्ते कुलपुत्र एवं द्रष्टव्यम् । अहं सा तेन कालेन तेन समयेन नेत्रश्रीर्नाम बोधिमण्डदेवता अभूवम् । तत्किं मन्यसे कुलपुत्र—अन्यः स तेन कालेन तेन समयेन महातेजःपराक्रमो नाम चक्रवर्त्यभूद्बोधिसत्त्ववशिताप्रतिलब्धो महर्द्धिक- 10 निकुर्वितनिर्यातो येन सा महती मारसेना निर्कीर्णा? न खल्वेवं द्रष्टव्यम् । अथ स भगवान् वैरोचनस्तथागतोऽर्हन् सम्यक्संबुद्धः तेन कालेन तेन समयेन महातेजःपराक्रमो नाम राजा चक्रवर्त्यभूत् । सा अहं कुलपुत्र तत उपादाय यत्रतत्रोपपन्ना, सर्वत्र एष मम पुत्रत्वमुपागतः सर्वबुद्धक्षेत्रेषु बोधिसत्त्वचर्यां चरन् सर्वगतिमुखेषु सर्वोपपत्तिमुखेषु सर्वकुशलमूलमुखेषु सर्वबोधिसत्त्वचर्याविचारपराक्रमेषु सर्वजातकनयेषु सर्वदेवेन्द्रजन्मसु 15 सर्वलोकेन्द्रगतेषु सर्वेश्वरभूमिषु सर्वगतिप्रभागेषु । यत्र यत्रोपपद्यते सत्त्वपरिपाकहेतोः, सर्वत्र अहमेवास्य जनन्यभूवम् । चरमे च भवेऽस्य अहमेव सर्वत्रानुगता जनन्यभूवम् । सर्वबोधिसत्त्वजन्ममुखेषु क्षणे क्षणे यानन्ति बोधिसत्त्वजन्मविकुर्वितान्यादर्शयामास, सर्वत्राहमेवास्य माता अभूवम् । अतीतानामपि तथागतानाम्, अनन्तमध्यानामपरिमाणानामहं जनन्यभूवम् । प्रत्युत्पन्नानामपि दशसु दिक्षु अनन्तमध्यानामपरिमाणानां तथागतानां 20 महमेव जननीत्वं प्रत्यनुभवामि । यावता च तथागतानामहं चरमे भवे बोधिसत्त्वमाता अभूवम्, सर्वेषां च तेषां तथागतानां नाभिमण्डलेभ्यो रश्मयो निश्चरित्वा महाकायमासनं चावभासयामासुः । एतमहं कुलपुत्र महाप्रणिधानज्ञानमायागतव्यूहं बोधिसत्त्वविमोक्षं प्रजानामि । किं मया शक्यं महाकरुणागर्भाणां बोधिसत्त्वानां सर्वज्ञतापरिपाकविनयापरितृप्तकुक्षीणां सर्वतथागतविकुर्वितरोममुखविनिर्यातनिदर्शनवशवर्तिनां चर्यां ज्ञातुं गुणान् वा 25 वक्तुम् ॥

गच्छ कुलपुत्र, इयमिहैव त्रिदशेन्द्रभवने सुरेन्द्राभा नाम देवकन्या स्मृतिमतो देवपुत्रस्य दुहिता । तामुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको मायाया देव्याः पादौ शिरसाभिवन्द्य मायादेवीमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य मायादेव्या अन्तिकात्प्रक्रान्तः ॥ ४२ ॥ 30

## ४५ सुरेन्द्राभा ।

अथ खलु सुधनः श्रेष्ठिदारको येन त्रिदशेन्द्रभवनं येन च सुरेन्द्राभा
देवकन्या स्मृतिमतो देवपुत्रस्य दुहिता, तेनोपजगाम । उपेत्य सुरेन्द्राभाया देवकन्यायाः
पादौ शिरसाभिवन्द्य सुरेन्द्राभा देवकन्यामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य सुरेन्द्राभाया
5 देवकन्यायाः पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्ये अनुत्तरायां सम्यक्संबोधौ
चित्तमुत्पादितम् । न च जानामि–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं
प्रतिपत्तव्यम् । श्रुतं च मे आर्या बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदस्व मे
देवते, कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

एवमुक्ते सुरेन्द्राभा नाम देवकन्या सुधनं श्रेष्ठिदारकमेतदवोचत्–अहं कुलपुत्र
10 असङ्गस्मृतिविशुद्धव्यूहस्य बोधिसत्त्वविमोक्षस्य लाभिनी । सा अहं कुलपुत्र अभिजानामि–
उत्पलको नाम कल्पोऽभूत् । तत्र मे गङ्गानदीवालुकासमास्तथागता आरागिताः ।
अभिनिष्क्रामतां चैषामारक्षा कृता, पूजा कृता, आरामाश्च कृताः परिभोगाय । यैश्च
तैर्बुद्धैर्भगवद्भिर्बोधिसत्त्वभूतैर्मातुः कुक्षिगतैर्जायमानैः सप्त पदानि प्रक्रामद्भिर्महासिंहनादं
नदद्भिः कुमारभूमिस्थितैरन्तःपुरमध्यगतैर्वा अभिनिष्क्रामद्भिर्वा बोधिमभिसंबुध्यमानैर्वा
15 धर्मचक्रं प्रवर्तयमानैः सर्वबुद्धविकुर्वितं वा संदर्शयद्भिः सत्त्वपरिपाकविनयः कृतः, तत्सर्वं
प्रथमचित्तोत्पादाय यावत्सद्धर्मपर्यन्तनिष्ठं प्रजानामि स्मरामि अनुस्मरामि धारयामि संधारयामि
उपधारयामि अनुसरामि । सुभूतिर्नाम कल्पोऽभूत् । तत्र मे दश गङ्गानदीवालुकासमास्तथागता
आरागिताः । सुभगो नाम कल्पोऽभूत्तत्र मे बुद्धक्षेत्रपरमाणुरजःसमास्तथागता आरागिताः ।
अनिलम्भो नाम कल्पोऽभूत्, तत्र मे चतुरशीतिर्बुद्धकोटीनियुतशतसहस्राण्यारागितानि ।
20 सुप्रभो नाम कल्पोऽभूत्, तत्र मे जम्बुद्वीपपरमाणुरजःसमास्तथागता आरागिताः ।
अतुल्यप्रभो नाम कल्पोऽभूत्, तत्र मे विंशतिगङ्गानदीवालुकासमास्तथागता आरागिताः ।
उत्तमश्रीर्नाम कल्पोऽभूत्, तत्र मे गङ्गानदीवालुकासमास्तथागता आरागिताः । सूर्योदयो
नाम कल्पोऽभूत्, तत्र मेऽशीतिगङ्गानदीवालुकासमास्तथागता आरागिताः । जयगमो नाम
कल्पोऽभूत्, तत्र मे षष्टिगङ्गानदीवालुकासमास्तथागता आरागिताः । सुचन्द्रो नाम
25 कल्पोऽभूत्, तत्र मे सप्ततिर्गङ्गानदीवालुकासमास्तथागता आरागिताः । इति हि कुलपुत्र
अनेनोपायेन गङ्गानदीवालुकासमान् कल्पाननुस्मरामि, यदहं सततसमितमविरहिताभूवं
तथागतैरर्हद्भिः सम्यक्संबुद्धैः । सर्वेषां च मे तेषां तथागतानामन्तिकादयमसङ्गस्मृतिविशुद्ध-
व्यूहो बोधिसत्त्वविमोक्षः श्रुतः । श्रुत्वा च आरागितः, यथोक्तं च प्रतिपन्नः । एवं चाहं
विमोक्षं सततसमितमनुप्रविष्टा यच्च तेषां सर्वतथागतानां बोधिसत्त्वभूमिमुपादाय यावत्सद्धर्म-
30 स्थितिपर्यन्तनिष्ठं बुद्धविकुर्वितं तत्सर्वमनेन असङ्गस्मृतिविशुद्धव्यूहेन बोधिसत्त्वविमोक्षेणानु-
स्मरामि धारयामि संधारयामि उपधारयामि अनुस्मरामि । एतमहं कुलपुत्र बोधिसत्त्वविमोक्षं
जानामि । किं मया शक्यं बोधिसत्त्वानां विगततमोन्धकाराणां संसाररात्रिप्रभावितानां

विगतनिवरणानामनिद्रागमानां विगतस्त्यानमिद्धानां प्रस्रब्धकायसंस्काराणां सर्वधर्मस्वभावानुबोधसुविशुद्धानां दशबलविशुद्धिबोधयितॄणां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, कपिलवस्तुनि महानगरे विश्वामित्रो नाम दारकाचार्यः प्रतिवसति । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारकः तुष्ट उदग्र आत्तमनाः प्रीतिसौमनस्यजातोऽचिन्त्यकुशलमूलवेगसंवर्धितः सुरेन्द्राभाया देवकन्यायाः पादौ शिरसाभिवन्द्य सुरेन्द्राभां देवकन्यामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सुरेन्द्राभाया देवकन्याया अन्तिकात् प्रक्रान्तः ॥ ४३ ॥



## ४६ विश्वामित्रः ।

अथ खलु सुधनः श्रेष्ठिदारको त्रिदशेन्द्रभवनादवतीर्य अनुपूर्वेण येन कपिलवस्तुनि महानगरे विश्वामित्रो दारकाचार्यस्तेनोपजगाम । उपेत्य विश्वामित्रस्य दारकाचार्यस्य पादौ शिरसाभिवन्द्य विश्वामित्रं दारकाचार्यमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य विश्वामित्रस्य 5 दारकाचार्यस्य पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । एवमुक्ते विश्वामित्रो दारकाचार्यः सुधनं श्रेष्ठिदारकमेतदवोचत्–अयं कुलपुत्र शिल्पाभिज्ञो नाम 10 श्रेष्ठिदारको बोधिसत्त्वाल्लिपिज्ञानं शिक्षितः । एतमुपसंक्रम्य परिपृच्छ । एष ते निर्देक्ष्यति यथा बोधिसत्त्वचर्यायां शिक्षितव्यम्, यथा प्रतिपत्तव्यम् ॥ ४४ ॥



## ४७ शिल्पाभिज्ञः।

अथ खलु सुधनः श्रेष्ठिदारको येन शिल्पाभिज्ञो श्रेष्ठिदारकस्तेनोपसंक्रम्य शिल्पाभिज्ञस्य श्रेष्ठिदारकस्य पादौ शिरसाभिवन्द्य शिल्पाभिज्ञस्य श्रेष्ठिदारकस्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो 5 बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

सोऽवोचत्—अहं कुलपुत्र शिल्पाभिज्ञावतो बोधिसत्त्वविमोक्षस्य लाभी। तस्य मे कुलपुत्र मातृकां वाचयमानस्य अकारमक्षरं परिकीर्तयतो बोधिसत्त्वानुभावेन असंभिन्नविषयं नाम प्रज्ञापारमितामुखमवक्रान्तम्। रकारं परिकीर्तयतोऽनन्ततलसभेदं नाम 10 प्रज्ञापारमितामुखमवक्रान्तम्। पकारं परिकीर्तयतो धर्मधातुतलसभेदं नाम प्रज्ञापारमितामुखमवक्रान्तम्। चकारं परिकीर्तयतः समन्तचक्रविभक्तिच्छेदनं नाम प्रज्ञापारमितामुखमवक्रान्तम्। नकारं परिकीर्तयतोऽनिलयप्रतिलब्धं नाम प्रज्ञापारमितामुखमवक्रान्तम्। लकारं परिकीर्तयतो विगतानालयविमलं नाम प्रज्ञापारमितामुखमवक्रान्तम्। दकारं परिकीर्तयतोऽवैवर्त्यप्रयोगं नाम प्रज्ञापारमितामुखमवक्रान्तम्। बकारं परिकीर्तयतो वज्रमण्डलं नाम 15 प्रज्ञापारमितामुखमवक्रान्तम्। डकारं परिकीर्तयतः समन्तचक्रं नाम प्रज्ञापारमितामुखमवक्रान्तम्। सकारं परिकीर्तयतः सागरगर्भं नाम प्रज्ञापारमितामुखमवक्रान्तम्। वकारं परिकीर्तयतः समन्तविरूढविठपनं नाम प्रज्ञापारमितामुखमवक्रान्तम्। तकारं परिकीर्तयतो ज्योतिर्मण्डलं नाम प्रज्ञापारमितामुखमवक्रान्तम्। यकारं परिकीर्तयतः सभेदकूटं नाम प्रज्ञापारमितामुखमवक्रान्तम्। ष्टकारं परिकीर्तयतः समन्तदाहप्रशमनप्रभासं नाम प्रज्ञापार- 20 मितामुखमवक्रान्तम्। ककारं परिकीर्तयतोऽसंभिन्नमेघं नाम प्रज्ञापारमितामुखमवक्रान्तम्। षकारं परिकीर्तयतो अभिमुखप्रवर्षणप्रलम्बं नाम प्रज्ञापारमितामुखमवक्रान्तम्। मकारं परिकीर्तयतो महावेगविविचित्रवेगशिखरं नाम प्रज्ञापारमितामुखमवक्रान्तम्। गकारं परिकीर्तयतः समन्ततलविठपनं नाम प्रज्ञापारमितामुखमवक्रान्तम्। थकारं परिकीर्तयतः तथतासभेदगर्भं नाम प्रज्ञापारमितामुखमवक्रान्तम्। जकारं परिकीर्तयतो जगत्संसारविशुद्धिविगाहनं 25 नाम प्रज्ञापारमितामुखमवक्रान्तम्। स्वकारं परिकीर्तयतः सर्वबुद्धस्मृतिव्यूहं नाम प्रज्ञापारमितामुखमवक्रान्तम्। धकारं परिकीर्तयतो धर्ममण्डलविचारविचयं नाम प्रज्ञापारमितामुखमवक्रान्तम्। शकारं परिकीर्तयतः सर्वबुद्धानुशासनीचक्ररोचं नाम प्रज्ञापारमितामुखमवक्रान्तम्। खकारं परिकीर्तयतोऽभिसंस्कारहेतुभूमिज्ञानगर्भं नाम प्रज्ञापारमितामुखमवक्रान्तम्। क्षकारं परिकीर्तयतः कर्मनिशान्तसागरकोशविचयं नाम प्रज्ञापारमितामुखमवक्रान्तम्। 30 स्तकारं परिकीर्तयतः सर्वक्लेशविकिरणविशुद्धिप्रभं नाम प्रज्ञापारमितामुखमवक्रान्तम्। ञकारं परिकीर्तयतो लोकसंभवविज्ञप्तिमुखं नाम प्रज्ञापारमितामुखमवक्रान्तम्। थकारं परिकीर्तयतः संसारप्रतिचक्रज्ञानमण्डलं नाम प्रज्ञापारमितामुखमवक्रान्तम्। भकारं परिकीर्तयतः सर्व-

भवनमण्डलनिज्ञप्तिव्यूह नाम प्रज्ञापारमितामुखमवक्रान्तम्। छकार परिकीर्तयत उपचयगर्भ
प्रयोग चारित्रच्छत्रमण्डलभेद नाम प्रज्ञापारमितामुखमवक्रान्तम्। स्मकार परिकीर्तयत
सर्वबुद्धदर्शनदिगभिमुखावर्त नाम प्रज्ञापारमितामुखमवक्रान्तम्। ह्वकार परिकीर्तयत सर्व
सत्त्वाभव्यावलोकनबलसजातगर्भ नाम प्रज्ञापारमितामुखमवक्रान्तम्। त्सकार परिकीर्तयत
5 सर्वगुणसागरप्रतिपत्त्यवतारनिगाहन नाम प्रज्ञापारमितामुखमवक्रान्तम्। घकार परिकीर्तयत
सर्वधर्ममेघसधारणदृढसागरगर्भ नाम प्रज्ञापारमितामुखमवक्रान्तम्। ठकार परिकीर्तयत
सर्वबुद्धप्रणिधानदिगभिमुखगमन नाम प्रज्ञापारमितामुखमवक्रान्तम्। णकार परिकीर्तयत
चक्राक्षराकारकोटिवचन नाम प्रज्ञापारमितामुखमवक्रान्तम्। फकार परिकीर्तयत सर्वसत्त्वपरि
पाककोटीगतमण्डल नाम प्रज्ञापारमितामुखमवक्रान्तम्। स्ककार परिकीर्तयतो भूमिगर्भा
10 सङ्गप्रतिसविल्प्रभाचक्रस्फरण नाम प्रज्ञापारमितामुखमवक्रान्तम्। स्यकार परिकीर्तयत
सर्वबुद्धधर्मनिर्देशनिपय नाम प्रज्ञापारमितामुखमवक्रान्तम्। श्चकार परिकीर्तयत सत्त्वगगन
धर्मघननिगर्जितनिर्नादस्फरण नाम प्रज्ञापारमितामुखमवक्रान्तम्। टकार परिकीर्तयत
सत्त्वार्थनैरात्म्यपर्यात्यन्तपरिनिष्ठाप्रदीप नाम प्रज्ञापारमितामुखमवक्रान्तम्। ढकार परिकीर्त
यतो धर्मचक्रसमेदगर्भ नाम प्रज्ञापारमितामुखमवक्रान्तम्॥

15 इति हि कुलपुत्र मम मातृका वाचयत एतानि द्वाचत्वारिंशत् प्रज्ञापारमितामुख
प्रमुखान्यप्रमेयासख्येयानि प्रज्ञापारमितामुखान्यवक्रान्तानि। एतस्य अह कुलपुत्र शिल्पा
भिज्ञावतो बोधिसत्त्वविमोक्षस्य लाभी। एतमह जानामि। किं मया शक्य सर्वलौकिक
लोकोत्तरशिल्पस्थानपारमिताप्राप्ताना बोधिसत्त्वाना चर्या ज्ञातु गुणान् वा वक्तुम् [1] यथा
सर्वशिल्पस्थानप्रवेशेषु सर्वलिपिसख्यागणनानिक्षेपप्रवेशेषु सर्वमन्त्रौषधिविधिज्ञानप्रयोगप्रति
20 वेधेषु सर्वभूतग्रहज्योतिपापस्मारकाखोर्दवेतालप्रतिष्ठानेषु सत्त्वधातुचिकित्साभैषज्यसयोग
ज्ञानेषु धातुतन्त्रसयोगप्रयोगेषु सुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवाललोहितकसुसारगल्वकेशर
श्रीगर्भारत्नगर्भसर्वरत्नसभवोत्पत्तिगोत्राकरमूल्यज्ञानेषु उद्यानतपोवनग्रामनगरनिगमराष्ट्रराज
धान्यभिनिर्हारेषु मृगचक्राङ्कविद्यासर्वलक्षणनिमित्तभूमिचालदिग्दाहोल्कापातक्षेमाक्षेमसुभिक्ष
दुर्भिक्षसर्वलौकिकावर्तनिवर्तप्रवेशेषु सर्वलोकोत्तरधर्मविभक्तिसूचनादिनिर्देशप्रवेशतत्त्वानुगम-
25 ज्ञानेषु नास्त्यावरण वा विमर्शो वा निमतिर्वा सदेहो वा सशयो वा समोहो वा धधायितत्व
वा व्याकाधिक वा अवसादन वा अज्ञान वा अनभिसमयो वा॥

गच्छ कुलपुत्र, इयमिहैव मगधविषये केयलके जनपदे वर्तनके नगरे भद्रोत्तमा
नामोपासिका प्रतिवसति। तामुपसक्रम्य परिपृच्छ—कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया
शिक्षितव्यम्, कथ प्रतिपत्तव्यम्॥

30 अथ खलु सुधन श्रेष्ठिदारक शिल्पाभिज्ञस्य श्रेष्ठिदारकस्य पादौ शिरसाभिवन्द्य
शिल्पाभिज्ञ श्रेष्ठिदारकमनेकशतसहस्रकृत्व प्रदक्षिणीकृत्य पुन पुनरवलोक्य शिल्पाभिज्ञस्य
श्रेष्ठिदारकस्यान्तिकात्प्रक्रान्त ॥ ४५ ॥

---

1 B °विचर्य

## ४८ भद्रोत्तमा ।

अथ खलु सुधनः श्रेष्ठिदारको येन केवल्लके जनपदे वर्तनकं नगरम्, येन च भद्रोत्तमोपासिका, तेनोपजगाम । उपेत्य भद्रोत्तमाया उपासिकायाः पादौ शिरसाभिवन्द्य भद्रोत्तमामुपासिकामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य भद्रोत्तमाया उपासिकायाः पुरतः प्राञ्जलिः स्थित्वा एवमाह--मया आर्ये अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि--कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्या बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्या--कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

सा अवोचत्--अहं कुलपुत्र अनालयमण्डलं नाम धर्मपर्यायं जानामि देशयामि । अधिष्ठानश्च मे समाधिः प्रतिलब्धः । न तत्र समाधौ कस्यचिद्धर्मस्याधिष्ठानम् । तत्र सर्वज्ञताचक्षुः प्रवर्ततेऽधिष्ठानं सर्वज्ञताश्रोत्रम् । अधिष्ठानं सर्वज्ञताघ्राणम्, अधिष्ठानं सर्वज्ञताजिह्वा, अधिष्ठानः सर्वज्ञताकायः, अधिष्ठानं तत्र सर्वज्ञतामनः प्रवर्तते, अधिष्ठाना सर्वज्ञतोर्मिः, अधिष्ठाना सर्वज्ञताविद्युत्, अधिष्ठानाः सर्वज्ञतावेगाः प्रवर्तन्ते जगद्रोचनामण्डलाः । एतमहं कुलपुत्र, अनालयमण्डलं धर्मपर्यायं जानामि । किं मया शक्यमसङ्गबोधिसत्त्वचर्या सकला ज्ञातुम् ?

गच्छ कुलपुत्र दक्षिणापथे । तत्र मरुकच्छं नाम नगरम् । तत्र मुक्तासारो नाम हैरण्यकः[1] प्रतिवसति । तमुपसंक्रम्य परिपृच्छ--कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु सुधनः श्रेष्ठिदारको भद्रोत्तमाया उपासिकायाः पादौ शिरसाभिवन्द्य भद्रोत्तमामुपासिकामनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य भद्रोत्तमाया उपासिकाया अन्तिकात्प्रक्रान्तः ॥ ४६ ॥

---

१ B हैरण्यिकः throughout.

## ४९ मुक्तासारः ।

अथ खलु सुधनः श्रेष्ठिदारकोऽनुपूर्वेण दक्षिणापथं गत्वा येन भरुकच्छे नगरे मुक्तासारो हैरण्यकः, तेनोपसंक्रम्य मुक्तासारहैरण्यकस्य पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । न च जानामि 5 कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् । श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति । तद्वदतु मे आर्यः–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

सोऽवोचत्–अहं कुलपुत्र असङ्गस्मृतिव्यूहं नाम बोधिसत्त्वविमोक्षं जानामि । अप्रतिप्रस्रब्धा च मे दशसु दिक्षु सर्वतथागतपादमूलेषु धर्मपर्येष्टिः । एतमहं कुलपुत्र असङ्ग- 10 स्मृतिव्यूहं बोधिसत्त्वविमोक्षं जानामि, प्रजानामि । किं मया शक्यं बोधिसत्त्वानामच्छम्भितसिंहनादनादिनां महापुण्यज्ञानप्रतिष्ठितानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

गच्छ कुलपुत्र, अयमिहैव भरुकच्छे नगरे सुचन्द्रो नाम गृहपतिः प्रतिवसति । तदयमासितमस्य गृहम् । तमुपसंक्रम्य परिपृच्छ–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

15 अथ खलु सुधनः श्रेष्ठिदारको मुक्तासारस्य हैरण्यकस्य पादौ शिरसाभिवन्द्य मुक्तासारं हैरण्यकमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य मुक्तासारस्य हैरण्यकस्यान्तिकात्प्रक्रान्तः ॥ ४७ ॥



## ५० सुचन्द्रः ।

अथ खलु सुधनः श्रेष्ठिदारको येन सुचन्द्रो गृहपतिः, तेनोपसंक्रम्य सुचन्द्रस्य गृहपतेः पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्यः—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥ 5

आह—मया कुलपुत्र विमलज्ञानप्रभो नाम बोधिसत्त्वविमोक्षः प्रतिलब्धः। एतमहं कुलपुत्र विमलज्ञानप्रभं बोधिसत्त्वविमोक्षं जानामि। किं मया शक्यमप्रमाणविमोक्षप्रतिलब्धानां बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुम्॥ 10

गच्छ कुलपुत्र, इदमिहैव दक्षिणापथे रोरुकं नाम नगरम्। तत्र अजितसेनो नाम गृहपतिः प्रतिवसति। तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारकः सुचन्द्रस्य गृहपतेः पादौ शिरसाभिवन्द्य सुचन्द्रं गृहपतिमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य सुचन्द्रस्य गृहपतेरन्तिकात् प्रक्रान्तः॥ ४८॥ 15



## ५१ अजितसेनः ।

अथ खलु सुधनः श्रेष्ठिदारकोऽनुपूर्वेण रोरकं नगरं गत्वा येन अजितसेनो नाम गृहपतिस्तेनोपसंक्रम्य अजितसेनस्य गृहपतेः पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि–कथं 5 बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो बोधिसत्त्वानामववादानुशासनीं ददातीति। तद्वदतु मे आर्यः–कथं बोधिसत्त्वेन बोधिसत्त्व चर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

आह–मया कुलपुत्र अक्षयलक्षणो नाम बोधिसत्त्वविमोक्षः प्रतिलब्धः, यस्य सहप्रतिलम्भादक्षयबुद्धदर्शननिधानप्रतिलाभो भवति॥

10 गच्छ कुलपुत्र इयमिहैव दक्षिणापथे धर्मग्रामे शिवरागो नाम ब्राह्मणः प्रतिवसति। तमुपसंक्रम्य परिपृच्छ–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारकोऽजितसेनस्य गृहपतेः पादौ शिरसाभिवन्द्य अजितसेनं गृहपतिमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य अजितसेनस्य गृहपतेरन्तिकात् प्रक्रान्तः॥ ४९॥

---

१ S °विधान°. २ B शिवरामो

## ५२ शिवराग्रः ।

अथ खलु सुधनः श्रेष्ठिदारकोऽनुपूर्वेण धर्मग्रामं गत्वा येन शिवराग्रो ब्राह्मणः, तेनोपसंक्रम्य शिवराग्रस्य ब्राह्मणस्य पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह–मया आर्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यो बोधिसत्त्वानामव- 5 वादानुशासनीं ददातीति। तद्वदतु मे आर्यः–कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

सोऽवोचत्—अहं कुलपुत्र सत्याधिष्ठानेन चरामि। येन सत्येन सत्यवचनेन त्र्यध्वसु न कश्चिद्बोधिसत्त्वोऽनुत्तरायाः सम्यक्संबोधेर्विनिवृत्तः, न विवर्तते, न विवर्तिष्यति, तेन सत्यवचनाधिष्ठानेन इदं च मे कार्यं समृध्यत्विति। तन्मे यथाभिप्रायं सर्वं समृध्यति। 10 एतेनाहं कुलपुत्र सत्यवचनाधिष्ठानेन सर्वकार्याणि साधयामि। एतमहं कुलपुत्र सत्याधिष्ठानं जानामि। किं मया शक्यं सत्यानुपरिवर्तनी वाक्प्रतिलब्धानां बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुम्॥

गच्छ कुलपुत्र, इयमिहैव दक्षिणापथे सुमनामुखं नाम नगरम्। तत्र श्रीसंभवो नाम दारकः प्रतिवसति, श्रीमतिश्च नाम दारिका। तावुपसंक्रम्य परिपृच्छ कथं बोधिसत्त्वेन 15 बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्॥

अथ खलु सुधनः श्रेष्ठिदारको महाधर्मगौरवमुत्पाद्य शिवराग्रस्य ब्राह्मणस्य पादौ शिरसाभिवन्द्य शिवराग्रं ब्राह्मणमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनःपुनरवलोक्य शिवराग्रस्य ब्राह्मणस्यान्तिकात्प्रक्रान्तः॥ ५०॥



## ५३ श्रीसंभवः श्रीमतिश्च ।

अथ खलु सुधनः श्रेष्ठिदारकोऽनुपूर्वेण सुमनामुखनगरं गत्वा येन श्रीसंभवो दारकः श्रीमतिश्च दारिका, तावुपक्रम्य तयोः पादौ शिरसाभिवन्द्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—मया आर्यौ अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। न च जानामि—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। श्रुतं च मे आर्यौ बोधिसत्त्वानामववादानुशासनीं दत्त इति। तद्वदता मे आर्यौ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम् ॥

अथ खलु श्रीसंभवो दारकः श्रीमतिश्च दारिका सुधनं श्रेष्ठिदारकमेतदवोचताम्—इह आवाभ्यां कुलपुत्र मायागतो नाम बोधिसत्त्वविमोक्षः प्रतिलब्धः साक्षात्कृतः । तावावां कुलपुत्र अनेन विमोक्षेण समन्वागतौ मायागतं सर्वलोकं पश्यावो हेतुप्रत्ययमायासंभूतम् । मायागतान् सर्वसत्त्वान् विजानीवः । कर्मक्लेशमायाज्ञानेन मायागतं सर्वजगत्पश्यावः । अविद्याभवतृष्णामायासंभवान् मायागतान् सर्वधर्मान् पश्यावः । अन्योन्यप्रत्ययमायानिर्वृत्तं मायागतं सर्वत्रैधातुकं पश्यावः अभिनिर्हृतमचिन्त्यविषयमायाबोधिविपर्याससमायासंभूतम् । मायागतान् सर्वसत्त्वान् च्युत्युपपत्तिजातिजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासान् पश्यावः । असद्भूतसंकल्पमायाजनितानि मायाजनितानि सर्वक्षेत्राणि पश्यावः । संज्ञाचित्तदृष्टिविपर्यासमायाभावद्रव्यसंज्ञासमोहप्रभवान् मायागतान् सर्वश्रावकप्रत्येकबुद्धान् पश्यावः । ज्ञानप्रहाणमायासंकल्पजनिता मायागता सर्वबोधिसत्त्वचर्याप्रणिधानसत्त्वपरिपाकविनयपरंपरां प्रजानीवः । मायानिर्हाराभिनिर्वृत्तनिर्मितचर्याविनयमायास्वभावान् मायागतं सर्वबुद्धबोधिसत्त्वमण्डलं पश्यावः प्रणिधानज्ञानमायाभिनिर्हृतमचिन्त्यविषयमायास्वभावम् । एतमावां कुलपुत्र मायागतं बोधिसत्त्वविमोक्षं प्रजानीवः । किमावाभ्यां शक्यमनन्तकर्ममायाविठपजालानुगतानां बोधिसत्त्वानां चर्यां ज्ञातुं गुणान् वा वक्तुम् ॥

अथ खलु श्रीसंभवो दारकः श्रीमतिश्च दारिका सुधनं श्रेष्ठिदारकमचिन्त्येन कुशलमूलवेगेन अभिष्यन्दयित्वा स्वं च विमोक्षविषयं श्राव्य एतदवोचताम्—गच्छ कुलपुत्र, अयमिहैव दक्षिणापथे समुद्रकच्छो नाम दिग्मुखप्रत्युद्देशः । तत्र महाव्यूहं नामोद्यानम् । तत्र वैरोचनव्यूहालंकारगर्भो नाम महाकूटागारो बोधिसत्त्वकुशलमूलविपाकाभिनिर्वृत्तो बोधिसत्त्वचेतनामनसिकारसंभूतो बोधिसत्त्वप्रणिधानसमुद्गतो बोधिसत्त्ववशितासमुच्छ्रितो बोधिसत्त्वाभिज्ञानबलाभिनिर्मितो बोधिसत्त्वोपायकौशल्यसंभूतो बोधिसत्त्वपुण्यज्ञानबलपरिनिष्पन्नो बोधिसत्त्वमहाकरुणासत्त्वविनयसंदर्शनो बोधिसत्त्वाधिष्ठानव्यूहोपचितो बोधिसत्त्वाचिन्त्यविमोक्षविहारालंकारः । तत्र मैत्रेयो नाम बोधिसत्त्वो महासत्त्वः प्रतिवसति जन्मभूमिकानां मनुष्याणामनुग्रहाय । मातापितृज्ञातिसंबन्धिनां परिपाकाय । सत्त्वोपपन्नानां समागचरितानां सत्त्वानां महायानदृढीकरणाय । तदन्येषामपि सत्त्वानां यथाभूमिषु कुशलमूलपरिपाचनाय । स्वस्य च विमोक्षनयावतारस्य संदर्शनाय ।

सर्वत्रानुगतां च बोधिसत्त्वोपपत्तिवशितां प्रभावयन् सर्वसत्त्वजन्मसंदर्शनाभिमुखतया च सत्त्वपरिपाकारिक्वनतायै । सर्वजगत्परिग्रहजुगुप्सनतया च बोधिसत्त्वमहाकरुणाबलोद्भावनाय । सर्वनिकेतस्थानोच्चलितं च बोधिसत्त्वविहारमवबोधनाय। अनिकेतपरमं च सर्वभवोपपत्तिसंवाससंदर्शनाय । तमुपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्या परिप्रष्टव्या, कथं बोधिसत्त्वेन बोधिसत्त्वमार्गः परिशोधयितव्यः, कथं बोधिसत्त्वेन बोधिसत्त्व- 5 शिक्षासु प्रतिपत्तव्यम्, कथं बोधिसत्त्वेन बोधिचित्तं प्रतिशोधयितव्यम्, कथं बोधिसत्त्वेन बोधिसत्त्वप्रणिधानमभिनिर्हर्तव्यम्, कथं बोधिसत्त्वेन बोधिसत्त्वसंभाराः समुत्थापयितव्याः, कथं बोधिसत्त्वेन बोधिसत्त्वभूमय आक्रमितव्याः, कथं बोधिसत्त्वेन बोधिसत्त्वपारमिताः परिपूरयितव्याः, कथं बोधिसत्त्वेन बोधिसत्त्वक्षान्तयोऽवतरितव्याः, कथं बोधिसत्त्वेन बोधिसत्त्वप्रतिपत्तिगुणेषु स्थातव्यम्, कथं बोधिसत्त्वेन कल्याणमित्राणि पर्युपासितव्यानि । 10 तत्कस्य हेतोः? स हि कुलपुत्र मैत्रेयो बोधिसत्त्वोऽवतीर्णः सर्वबोधिसत्त्वचर्यासु गतिंगतः । सर्वबोधिसत्त्वचित्ताशयेषु सोऽनुप्रविष्टः । सर्वसत्त्वचर्यासु सोऽभिमुखः सर्वसत्त्वपरिपाकविनयेषु । तेन परिपूरिताः सर्वपारमिताः। सुप्रतिष्ठिताः सर्वबोधिसत्त्वभूमिषु । तेन प्रतिलब्धाः सर्वबोधिसत्त्वक्षान्तयः । सोऽवक्रान्तो बोधिसत्त्वनियामम् । तेन प्रतीष्टानि सर्वव्याकरणानि । स विक्रीडितः सर्वबोधिसत्त्वविमोक्षेषु । तेन संधारितानि सर्वबुद्धाधिष्ठानानि । सोऽभिषिक्तः 15 सर्वतथागतैः सर्वज्ञज्ञानविषयाभिषेकेण । स ते कुलपुत्र कल्याणमित्रोऽभिष्यन्दयिष्यति सर्वकुशलमूलानि विवर्धयिष्यति । बोधिचित्तोत्पादं दृढीकरिष्यति । अध्याशयधातुमुत्तापयिष्यति । सर्वकुशलमूलानि विवर्धयिष्यति। बोधिसत्त्वेन्द्रियवेगान् संदर्शयिष्यति। अनावरणधर्मदिशं प्रवेशयिष्यति । समन्तभद्रभूम्यनुगमे निवेशयिष्यति । सर्वबोधिसत्त्वप्रणिधाननिर्याणमुखेषु संवर्णयिष्यति । सर्वबोधिसत्त्वचर्याप्रणिधानगुणपरिनिष्पत्तिमाख्यास्यति 20 समन्तभद्रबोधिसत्त्वचर्याश्रवणपर्यायद्वारम् । न च ते कुलपुत्र एककुशलमूलतन्मयेन भवितव्यं नैकधर्ममुखालोकावभासपरमेण नैकचर्यापरिसंतुष्टेन नैकप्रणिधानाभिनिर्हारपरमेण नैकव्याकरणेन, न निष्ठाप्रतिप्रस्रब्धेन, न त्रिक्षान्त्यवतारपरमसंज्ञिना, न षट्पारमितापरिपूरिप्रस्रब्धेन, न दशभूमिप्रतिलाभनिष्ठागतेन, न प्रामाणिकबुद्धक्षेत्रपरिग्रहपरिशुद्धिप्रणिधानेन, न प्रमाणीकृतकल्याणमित्रागणपर्युपासनसंतुष्टेन भवितव्यम् । तत्कस्य हेतोः? अप्रमाणानि 25 हि कुलपुत्र बोधिसत्त्वेन कुशलमूलानि समुदानेतव्यानि । अप्रमाणा बोधिसत्त्वसंभारा उत्थापयितव्याः । अप्रमाणा बोधिचित्तहेतवः समार्जयितव्याः । अप्रमाणा नयाः शिक्षितव्याः । अप्रमाणः सत्त्वधातुः परिनिर्वापयितव्यः । [1]अप्रमाणा सत्त्वाशयधातुरनुप्रवेष्टव्या । अप्रमाणानि सत्त्वेन्द्रियाणि परिज्ञातव्यानि । अप्रमाणा सत्त्वाधिमुक्तिरनुवर्तयितव्या। अप्रमाणाः सत्त्वधातुचर्या अनुबोधव्याः । अप्रमाणसत्त्वविनयः कर्तव्यः । अप्रमाणाः क्लेशानुशयाः 30 समुद्घाटयितव्याः । अप्रमाणानि कर्मावरणानि परिशोधयितव्यानि । अप्रमाणानि दृष्टिगतानि

1 B om. अप्रमाणाः...समुद्घाटयितव्याः .
ms. ४६

निवर्तयितव्यानि । अप्रमाणाश्चित्तसंक्लेशा अपनयितव्याः । अप्रमाणाश्चित्तविशुद्धय उत्पाद-
यितव्याः । अप्रमाणा दुःखशल्याः समुद्धारयितव्याः । अप्रमाणः सत्त्वतृष्णार्णवः समु-
च्छोषितव्यः । [1]अप्रमाणमविद्यान्धकारं विधमितव्यम् । अप्रमाणाः पर्वताः प्रपातयितव्याः ।
अप्रमाणानि संसारबन्धनानि निर्दारयितव्यानि । अप्रमाणो जन्मसमुद्रः शोषयितव्यः ।
5 अप्रमाणो भवौघस्तारितव्यः । अप्रमाणाः सत्त्वाः कामपङ्कसक्ता अभ्युद्धर्तव्याः । अप्रमाणा-
स्त्रैधातुकपुरनिरुद्धाः सत्त्वा निष्कामयितव्याः । अप्रमाणाः सत्त्वा आर्यमार्गे प्रतिष्ठापयितव्याः ।
अप्रमाणा रागद्वेषमोहाः प्रशमयितव्याः । अप्रमाणा मारपाशाः समतिक्रमयितव्याः ।
अप्रमाणानि मारकर्माणि विनिवर्तयितव्यानि । अप्रमाणो बोधिसत्त्वाध्याशयधातुः परि-
शोधयितव्यः । अप्रमाणा बोधिसत्त्वप्रयोगा विवर्धयितव्याः । अप्रमाणानि बोधिसत्त्वेन्द्रियाणि
10 संजनयितव्यानि । अप्रमाणा बोधिसत्त्वाविमुक्तयो विशोधयितव्याः । अप्रमाणा बोधिसत्त्व-
समता अवतारयितव्याः । अप्रमाणो बोधिसत्त्वचर्याविशेषोऽनुसर्तव्यः । अप्रमाणा बोधिसत्त्व-
गुणाः परिशोधयितव्याः । अप्रमाणा बोधिसत्त्वचारित्रचर्याः प्रतिपूरयितव्याः । अप्रमाणानि
लोकचारित्राण्यनुवर्तयितव्यानि । अप्रमाणा लोकानुवर्तनाः संदर्शयितव्याः । अप्रमाणं
श्रद्धाबलं संजनयितव्यम् । अप्रमाणं वीर्यबलमुपस्तम्भयितव्यम् । अप्रमाणं स्मृतिबलं
15 परिशोधयितव्यम् । अप्रमाणं समाधिबलं परिशोधयितव्यम् । अप्रमाणं प्रज्ञाबलमुत्पाद-
यितव्यम् । अप्रमाणमधिमुक्तिबलं दृढीकर्तव्यम् । अप्रमाणं पुण्यबलं समुपार्जयितव्यम् ।
अप्रमाणं ज्ञानबलं विवर्धयितव्यम् । अप्रमाणं बोधिसत्त्वबलं समुत्थापयितव्यम् । अप्रमाणं
बुद्धबलं परिपूरयितव्यम् । अप्रमाणानि धर्ममुखानि प्रविचेतव्यानि । अप्रमाणा धर्मदिशः
प्रवेष्टव्याः । अप्रमाणानि धर्मद्वाराणि परिशोधयितव्यानि । अप्रमाणा धर्मालोकाः
20 संजनयितव्याः । अप्रमाणो धर्मावभासः कर्तव्यः । अप्रमाणा इन्द्रियवंशा अवभासयितव्याः ।
अप्रमाणाः क्लेशव्याधयः परिशोधयितव्याः । अप्रमाणानि धर्मभैषज्यानि समुदानेतव्यानि ।
अप्रमाणः क्लेशव्याध्यातुरः सत्त्वधातुः चिकित्सितव्यः । अप्रमाणा अमृतसंभाराः
समुदानेतव्याः । अप्रमाणानि बुद्धक्षेत्राण्याक्रमितव्यानि । अप्रमाणास्तथागताः
पूजयितव्याः । अप्रमाणानि बोधिसत्त्वपर्षन्मण्डलान्यवगाहयितव्यानि । अप्रमाणानि
25 तथागतशासनानि संधारयितव्यानि । अप्रमाणानि सत्त्वद्रोहिण्यानि सोढव्यानि । अप्रमाणा
अक्षणापायपथाः समुच्छेत्तव्याः । अप्रमाणानि सत्त्वसुखान्युपसंहर्तव्यानि । अप्रमाणाः
सत्त्वसंग्रहाः कर्तव्याः । अप्रमाणानि धारणीमुखानि परिशोधयितव्यानि । अप्रमाणानि
प्रणिधानमुखान्यभिनिर्हर्तव्यानि । अप्रमाणानि महामैत्रीमहाकरुणाबलानि परिभावयि-
तव्यानि । अप्रमाणानि धर्मपर्येष्ट्यभियोगानि न प्रतिप्रश्रम्भयितव्यानि । अप्रमाणानि
30 निध्यप्तिबलान्यनुसर्तव्यानि । अप्रमाणा अभिज्ञाभिनिर्हारा उत्पादयितव्याः । अप्रमाणा
विद्याज्ञानालोका विशोधयितव्याः । अप्रमाणा सत्त्वगतिरनुगन्तव्या । अप्रमाणा भवोत्पत्तिः

[1] S om. अप्रमाणा...शोषयितव्याः.

परिग्रहीतव्या । अप्रमाणा कायविभक्तिः संदर्शयितव्या । अप्रमाणा मन्त्रविभक्तिः परिज्ञातव्या । अप्रमाणाः सर्वचित्तविमात्रता अनुप्रवेष्टव्याः । विस्तीर्णो बोधिसत्त्वगोचरोऽनुप्रवेष्टव्यः । विपुलं बोधिसत्त्वभवनमनुविचरितव्यम् । गम्भीरो बोधिसत्त्वविहारो व्यवलोकयितव्यः । दुरनुबोधो बोधिसत्त्वविषयोऽनुबोद्धव्यः । दुर्गमा बोधिसत्त्वगतिर्गन्तव्या । दुरासदा बोधिसत्त्ववेगाः संधारयितव्याः । दुरवक्रामो बोधिसत्त्वनियामोऽवक्रमितव्यः । विचित्रा बोधिसत्त्वचर्या अनुबोद्धव्या । सर्वत्रानुगतं बोधिसत्त्वविकुर्वणं संदर्शयितव्यम् । अभिसमिन्ना बोधिसत्त्वेन धर्ममेघाः संप्रत्येष्टव्याः । अनन्तमध्यं बोधिसत्त्वचर्याजालं प्रविस्तरितव्यम् । अपर्यन्ता बोधिसत्त्वेन पारमिताः परिपूरयितव्याः । अप्रमेयाणि बोधिसत्त्वेन व्याकरणानि संप्रत्येष्टव्यानि । असंख्येयानि बोधिसत्त्वेन क्षान्तिमुखान्यवतर्तव्यानि । असंख्येया बोधिसत्त्वेन भूमयः परिशोधयितव्याः । असमन्तानि बोधिसत्त्वेन धर्ममुखानि पर्यवदापयितव्यानि । अनभिलाप्यानि बोधिसत्त्वेन बुद्धक्षेत्राणि परिशोधयितव्यानि । अपर्यन्तान् बोधिसत्त्वेन कल्पान् संनाहः संनद्धव्यः । [1]अमाप्या बोधिसत्त्वेन तथागताः पूजयितव्याः । अचिन्त्या बोधिसत्त्वेन प्रणिधानाभिनिर्हारा अभिनिर्हर्तव्याः । संक्षिप्तेन कुलपुत्र सर्वसत्त्वसमोक्ता बोधिसत्त्वानां चर्या सत्त्वपरिपाचनतया । सर्वकल्पसमोक्ता सर्वकल्पसंवसनतया । सर्वोपपत्तिसमोक्ता सर्वत्रजन्मसंदर्शनेन । सर्वाध्वसमोक्ता त्र्यध्वज्ञानानुबोधाय । सर्वधर्मसमोक्ता तत्प्रतिपत्त्या । सर्वक्षेत्रसमोक्ता तत्परिशोधनेन । सर्वप्रणिधानसमोक्ता तत्परिपूरणतया । सर्वबुद्धसमोक्ता तत्पूजाभिनिर्हारेण । सर्वबोधिसत्त्वसमोक्ता तत्प्रणिधानैकत्वेन । सर्वकल्याणमित्रसमोक्ता बोधिसत्त्वानां चर्या तदारागणतया ॥

तस्मात्तर्हि कुलपुत्र न ते परिखेद उत्पादयितव्यः कल्याणमित्रपरिमार्गणासु । न परितृप्तिरुत्पादयितव्या कल्याणमित्रसंदर्शनेषु । न परितुष्टिरापत्तव्या कल्याणमित्रपरिपृच्छासु । नाशयो निनिवर्तयितव्यः कल्याणमित्रसंसर्गेषु । न प्रयोगः प्रतिप्रस्रम्भयितव्यः कल्याणमित्रगौरवोपस्थानेषु । न विलोमग्राहिणा भवितव्यं कल्याणमित्रानुवादानुशासनीषु । न संशय उत्पादयितव्यः कल्याणमित्रगुणप्रतिलम्भेषु । न [2]विचिकित्सा करणीया कल्याणमित्रनिर्याणमुखसंदर्शनेषु । न दोषोत्पादनं करणीयं कल्याणमित्रोपायसंधिलोकानुवर्तनप्रतिचारेषु । न कायचित्तविनिवर्तनं करणीयं कल्याणमित्रप्रसादविवर्धनेषु । तत्कस्य हेतोः ? कल्याणमित्राधीनाः कुलपुत्र बोधिसत्त्वानां सर्वबोधिसत्त्वचर्याश्रयाः । कल्याणमित्रप्रभवाः सर्वबोधिसत्त्वगुणपरिनिष्पत्तयः । कल्याणमित्रप्रभवाणि सर्वबोधिसत्त्वप्रणिधानस्रोतांसि । कल्याणमित्रजनितानि सर्वबोधिसत्त्वकुशलमूलानि । कल्याणमित्रोपायिताः सर्वबोधिसत्त्वसंभाराः । कल्याणमित्रनिर्याताः सर्वबोधिसत्त्वधर्ममुखालोकाः । कल्याणमित्रसंभूताः सर्वबोधिनिर्याणमुखविशुद्धयः । कल्याणमित्रप्रतिबद्धाः सर्वबोधिसत्त्वशिक्षाप्रतिपत्तयः । कल्याणमित्रप्रतिष्ठिताः सर्वबोधिसत्त्वगुणधर्माः । कल्याणमित्रमूलाः सर्वबोधिसत्त्वाप्यायप-

1 S नमित°. 2 B °चर्याश्रयाः.

निवर्तयितव्यानि । अप्रमाणाश्चित्तसंक्लेशा अपनयितव्याः । अप्रमाणाश्चित्तविशुद्धय उत्पादयितव्याः । अप्रमाणा दुःखशल्याः समुद्धारयितव्याः । अप्रमाणः सत्त्वतृष्णार्णवः समुच्छोषितव्यः । [1]अप्रमाणमविद्यान्धकारं विधमितव्यम् । अप्रमाणाः पर्वताः प्रपातयितव्याः । अप्रमाणानि संसारबन्धनानि निर्हारयितव्यानि । अप्रमाणो जन्मसमुद्रः शोषयितव्यः । 5 अप्रमाणो भवौघस्तारितव्यः । अप्रमाणाः सत्त्वाः कामपङ्कसक्ता अभ्युद्धर्तव्याः । अप्रमाणास्त्रैधातुकपुरनिरुद्धाः सत्त्वा निष्क्रामयितव्याः । अप्रमाणाः सत्त्वा आर्यमार्गे प्रतिष्ठापयितव्याः । अप्रमाणा रागद्वेषमोहाः प्रशमयितव्याः । अप्रमाणा मारपाशाः समतिक्रमयितव्याः । अप्रमाणानि मारकर्माणि विनिवर्तयितव्यानि । अप्रमाणो बोधिसत्त्वाध्याशयधातुः परिशोधयितव्यः । अप्रमाणा बोधिसत्त्वप्रयोगा विवर्धयितव्याः । अप्रमाणानि बोधिसत्त्वेन्द्रियाणि 10 संजनयितव्यानि । अप्रमाणा बोधिसत्त्वाधिमुक्तयो विशोधयितव्याः । अप्रमाणा बोधिसत्त्वसमता अवतारयितव्याः । अप्रमाणो बोधिसत्त्वचर्याविशेषोऽनुसर्तव्यः । अप्रमाणा बोधिसत्त्वगुणाः परिशोधयितव्याः । अप्रमाणा बोधिसत्त्वचारित्रचर्याः प्रतिपूरयितव्याः । अप्रमाणानि लोकचारित्राण्यनुवर्तयितव्यानि । अप्रमाणा लोकानुवर्तनाः संदर्शयितव्याः । अप्रमाणं श्रद्धाबलं संजनयितव्यम् । अप्रमाणं वीर्यबलमुपस्तम्भयितव्यम् । अप्रमाणं स्मृतिबलं 15 परिशोधयितव्यम् । अप्रमाणं समाधिबलं परिशोधयितव्यम् । अप्रमाणं प्रज्ञाबलमुत्पादयितव्यम् । अप्रमाणमधिमुक्तिबलं दृढीकर्तव्यम् । अप्रमाणं पुण्यबलं समुपार्जयितव्यम् । अप्रमाणं ज्ञानबलं विवर्धयितव्यम् । अप्रमाणं बोधिसत्त्वबलं समुत्थापयितव्यम् । अप्रमाणं बुद्धबलं परिपूरयितव्यम् । अप्रमाणानि धर्ममुखानि प्रविचेतव्यानि । अप्रमाणा धर्मदिशः प्रवेष्टव्याः । अप्रमाणानि धर्मद्वाराणि परिशोधयितव्यानि । अप्रमाणा धर्मालोकाः 20 संजनयितव्याः । अप्रमाणो धर्मावभासः कर्तव्यः । अप्रमाणा इन्द्रियवंशा अवभासयितव्याः । अप्रमाणाः क्लेशव्याधयः परिशोधयितव्याः । अप्रमाणानि धर्मभैषज्यानि समुदानेतव्यानि । अप्रमाणः क्लेशव्याध्यातुरः सत्त्वधातुः चिकित्सितव्यः । अप्रमाणा अमृतसंभाराः समुदानेतव्याः । अप्रमाणानि बुद्धक्षेत्राण्याक्रमितव्यानि । अप्रमाणास्तथागताः पूजयितव्याः । अप्रमाणानि बोधिसत्त्वपर्षन्मण्डलान्यवगाहयितव्यानि । अप्रमाणानि 25 तथागतशासनानि संधारयितव्यानि । अप्रमाणानि सत्त्वद्रोहिण्यानि सोढव्यानि । अप्रमाणा अक्षणापायपथाः समुच्छेत्तव्याः । अप्रमाणानि सत्त्वसुखान्युपसंहर्तव्यानि । अप्रमाणाः सत्त्वसंग्रहाः कर्तव्याः । अप्रमाणानि धारणीमुखानि परिशोधयितव्यानि । अप्रमाणानि प्रणिधानमुखान्यभिनिर्हर्तव्यानि । अप्रमाणानि महामैत्रीमहाकरुणाबलानि परिभावयितव्यानि । अप्रमाणानि धर्मपर्येष्ट्यभियोगानि न प्रतिप्रस्रम्भयितव्यानि । अप्रमाणानि 30 निध्यप्तिबलान्यनुसर्तव्यानि । अप्रमाणा अभिज्ञाभिनिर्हारा उत्पादयितव्याः । अप्रमाणा विद्याज्ञानालोका विशोधयितव्याः । अप्रमाणा सत्त्वगतिरनुगन्तव्या । अप्रमाणा भवोपपत्तिः

[1] S om. अप्रमाण...शोषयितव्यः.

परिग्रहीतव्या। अप्रमाणा कायविभक्तिः संदर्शयितव्या। अप्रमाणा मन्त्रविभक्तिः परिज्ञातव्या। अप्रमाणाः सत्त्वचित्तविमात्रता अनुप्रवेष्टव्याः। विस्तीर्णो बोधिसत्त्वगोचरोऽनुप्रवेष्टव्यः। विपुलं बोधिसत्त्वभवनमनुविचरितव्यम्। गम्भीरो बोधिसत्त्वविहारो व्यवलोकयितव्यः। दुरनुबोधो बोधिसत्त्वविषयोऽनुबोद्धव्यः। दुर्गमा बोधिसत्त्वगतिर्गन्तव्या। दुरासदा बोधिसत्त्ववेगाः संधारयितव्याः। दुरवक्रामो बोधिसत्त्वनियामोऽवक्रमितव्यः। 5 विचित्रा बोधिसत्त्वचर्या अनुबोद्धव्या। सर्वत्रानुगतं बोधिसत्त्वविकुर्वणं संदर्शयितव्यम्। अभिसंभिन्ना बोधिसत्त्वेन धर्ममेधाः संप्रत्येष्टव्याः। अनन्तमध्यं बोधिसत्त्वचर्याजालं प्रविस्तरितव्यम्। अपर्यन्ता बोधिसत्त्वेन पारमिताः परिपूरयितव्याः। अप्रमेयाणि बोधिसत्त्वेन व्याकरणानि संप्रत्येष्टव्यानि। असंख्येयानि बोधिसत्त्वेन क्षान्तिमुखान्यवतर्तव्यानि। असंख्येया बोधिसत्त्वेन भूमयः परिशोधयितव्याः। असमन्तानि बोधिसत्त्वेन धर्ममुखानि 10 पर्यवदापयितव्यानि। अनभिलाप्यानि बोधिसत्त्वेन बुद्धक्षेत्राणि परिशोधयितव्यानि। अपर्यन्तान् बोधिसत्त्वेन कल्पान् संनाहः संनद्धव्यः।[1] अमाप्या बोधिसत्त्वेन तथागताः पूजयितव्याः। अचिन्त्या बोधिसत्त्वेन प्रणिधानाभिनिर्हारा अभिनिर्हर्तव्याः। संक्षिप्तेन कुलपुत्र सर्वसत्त्वसमोक्ता बोधिसत्त्वानां चर्या सत्त्वपरिपाचनतया। सर्वकल्पसमोक्ता सर्वकल्पसंवसनतया। सर्वोपपत्तिसमोक्ता सर्वत्रजन्मसंदर्शनेन। सर्वाध्वसमोक्ता त्र्यध्वज्ञानानुबोधाय। सर्वधर्मसमोक्ता 15 तत्प्रतिपत्त्या। सर्वक्षेत्रसमोक्ता तत्परिशोधनेन। सर्वप्रणिधानसमोक्ता तत्परिपूरणतया। सर्वबुद्धसमोक्ता तत्पूजाभिनिर्हारेण। सर्वबोधिसत्त्वसमोक्ता तत्प्रणिधानैकत्वेन। सर्वकल्याणमित्रसमोक्ता बोधिसत्त्वानां चर्या तदारागणतया॥

तस्मात्तर्हि कुलपुत्र न ते परिखेद उत्पादयितव्यः कल्याणमित्रपरिमार्गणासु। न परितृप्तिरुत्पादयितव्या कल्याणमित्रसंदर्शनेषु। न परितुष्टिरापत्तव्या कल्याणमित्रपरिपृच्छासु। 20 नाशयो निनिवर्तयितव्यः कल्याणमित्रसंसर्गेषु। न प्रयोगः प्रतिप्रस्रम्भयितव्यः कल्याणमित्रगौरवोपस्थानेषु। न विलोमग्राहिणा भवितव्यं कल्याणमित्राववादानुशासनीषु। न संशय उत्पादयितव्यः कल्याणमित्रगुणप्रतिलाभेषु। न विचिकित्सा करणीया कल्याणमित्रनिर्याणमुखसंदर्शनेषु। न दोषोत्पादनं करणीयं कल्याणमित्रोपायसंधिलोकानुवर्तनप्रतिचारेषु। न कायचित्तविनिवर्तनं करणीयं कल्याणमित्रप्रसादविवर्धनेषु। तत्कस्य हेतोः? 25 कल्याणमित्राधीनाः कुलपुत्र बोधिसत्त्वानां सर्वबोधिसत्त्वचर्याश्रयाः[2]। कल्याणमित्रप्रभवाः सर्वबोधिसत्त्वगुणपरिनिष्पत्तयः। कल्याणमित्रप्रभवाणि सर्वबोधिसत्त्वप्रणिधानस्रोतांसि। कल्याणमित्रजनितानि सर्वबोधिसत्त्वकुशलमूलानि। कल्याणमित्रोत्थापिताः सर्वबोधिसत्त्वसंभाराः। कल्याणमित्रनिर्याताः सर्वबोधिसत्त्वधर्ममुखालोकाः। कल्याणमित्रसंभूताः सर्वबोधिनिर्याणमुखविशुद्धयः। कल्याणमित्रप्रतिबद्धाः सर्वबोधिसत्त्वशिक्षाप्रतिपत्तयः। 30 कल्याणमित्रप्रतिष्ठिताः सर्वबोधिसत्त्वगुणधर्माः। कल्याणमित्रमूलाः सर्वबोधिसत्त्वाध्याशय-

१ S सन्नद्ध°. २ B °चर्याश्रयाः.

परिशुद्धयः। कल्याणमित्रसंजाता सर्वबोधिसत्त्वचित्तोत्पाददृढता। कल्याणमित्रनेत्रिकाः
सर्वबोधिसत्त्वसमुद्रधारणीप्रतिभानमुखालोकाः। कल्याणमित्रसंधारिताः सर्वबोधिसत्त्वविशुद्धि-
मुखकोशाः। कल्याणमित्रसंजनिताः सर्वबोधिसत्त्वज्ञानालोकाः। कल्याणमित्रहस्तगता
सर्वबोधिसत्त्वप्रणिधानवैशेषिकता। कल्याणमित्रप्रधान एकोतीभावः। कल्याणमित्रगोत्राः
5 सर्वबोधिसत्त्वसमुदागमवैशेषिकश्रद्धाः। कल्याणमित्रकोशगतानि सर्वबोधिसत्त्वगुह्यस्थानानि।
कल्याणमित्राकराः सर्वबोधिसत्त्वधर्माकराः। कल्याणमित्रविवर्धिताः सर्वबोधिसत्त्वेन्द्रियवेगा-
ङ्कुराः। कल्याणमित्रविवर्धिताः सर्वबोधिसत्त्वज्ञानसागराः। कल्याणमित्रप्रतिपालिताः
सर्वबोधिसत्त्वनिधानकोशाः। कल्याणमित्ररक्षिताः सर्वबोधिसत्त्वपुण्योपचयाः। कल्याण-
मित्रजनिताः सर्वबोधिसत्त्वजन्मविशुद्धयः। कल्याणमित्रमुखागताः सर्वबोधिसत्त्वधर्ममेघाः।
10 कल्याणमित्रकोष्ठगताः सर्वबोधिसत्त्वनिर्याणपथप्रवेशाः। कल्याणमित्राराधनप्रतिलब्धा सर्व-
बुद्धबोधिः। कल्याणमित्रसंगृहीताः सर्वबोधिसत्त्वचर्याः। कल्याणमित्रोद्द्योतिताः सर्वबोधि-
सत्त्वगुणोद्भावनाः। कल्याणमित्रसंदर्शिताः सर्वबोधिसत्त्वदिगनुगमाः। कल्याणमित्रसंवर्णिता
सर्वबोधिसत्त्वचित्ताध्याशयमहात्मता। कल्याणमित्रसंभूतं बोधिसत्त्वानां महामैत्रीबलम्।
कल्याणमित्रसंजनितं बोधिसत्त्वानां महाकरुणाबलम्। कल्याणमित्रसंगृहीतानि सर्वबोधि-
15 सत्त्वाधिपत्यानि। कल्याणमित्रसंजनितानि सर्वबोध्यङ्गानि। कल्याणमित्रसंभवाः सर्वबोधि-
सत्त्वहितोपसंहाराः। कल्याणमित्रसंधारिताः कुलपुत्र बोधिसत्त्वा न पतन्ति दुर्गतिषु।
कल्याणमित्रपरिगृहीता बोधिसत्त्वा न निवर्तन्ते महायानात्। कल्याणमित्रसमन्वाहृता
बोधिसत्त्वा नातिक्रामन्ति बोधिसत्त्वशिक्षाम्। कल्याणमित्रसंरक्षिता बोधिसत्त्वा न
गच्छन्ति पापमित्रवशम्। कल्याणमित्रपरिपालिता बोधिसत्त्वा न परिहीयन्ते बोधिसत्त्व-
20 धर्मेभ्यः। कल्याणमित्रसंगृहीता बोधिसत्त्वा अतिक्रामन्ति पृथग्जनभूमिम्। कल्याणमित्रानु-
शिक्षिता बोधिसत्त्वा नावक्रामन्ति श्रावकप्रत्येकबुद्धनिपातम्। कल्याणमित्रप्रतिच्छन्ना
बोधिसत्त्वा अभ्युद्गता भवन्ति लोकात्। कल्याणमित्रसंवर्धिता बोधिसत्त्वा अनुपलिप्ता
भवन्ति लोकधर्मैः। कल्याणमित्रपर्युपासिता बोधिसत्त्वा असंप्रमोषचारिणो भवन्ति
सर्वचर्यासु। कल्याणमित्रोत्थापिता बोधिसत्त्वा न निवर्तन्ते सर्वारम्भेभ्यः। कल्याणमित्र-
25 परिगृहीता बोधिसत्त्वा दुर्धर्षा भवन्ति कर्मक्लेशैः। कल्याणमित्रबलोपस्तब्धा बोधिसत्त्वा
अनवमर्द्या भवन्ति सर्वमारैः। कल्याणमित्रोपनिश्रयविहारिणो बोधिसत्त्वा विवर्धन्ते
सर्वबोध्यङ्गैः। तत्कस्य हेतोः? विशोधकानि कुलपुत्र कल्याणमित्राण्यावरणीयानां विनिवर्त-
कानि। कल्याणमित्राण्यपायेभ्यः संबोधनानि। कल्याणमित्राण्यकरणीयानां संनिवारकाणि
प्रमादस्थानेभ्यः। विधमितारोऽविद्यान्धकारस्य। निर्दारयितारो दृष्टिबन्धनानाम्। निष्काश-
30 यितारः संसारात्। उत्खाटयितारो लोकनिकेतात्। निर्मोचयितारो मारपाशेभ्यः।
समावृंहयितारो दुःशल्यानाम्। परिमोचयितारः अज्ञानगहनात्। समतिक्रामयितारो
दृष्टिकान्तारात्। उत्तारयितारो भवौघेभ्यः। उद्धर्तारः कामपङ्कात्। विनिवर्तयितारः

पत्तिषु क्षेत्रदिग्गमनसंज्ञोत्पादयितव्या। आत्मनि च ते कुलपुत्र पारगसंज्ञोत्पादयितव्या, कल्याणमित्रेषु नाविकसंज्ञा, अनुशासनीषु तीर्थसंज्ञा, प्रतिपत्तिषु नौसंज्ञोत्पादयितव्या। आत्मनि च ते कुलपुत्र कर्षकसंज्ञोत्पादयितव्या, कल्याणमित्रेषु भुजगेन्द्रसंज्ञा, अनुशासनीषु वर्षसंज्ञा, प्रतिपत्तिषु शस्यनिष्पत्तिसंज्ञोत्पादयितव्या। आत्मनि च ते
5 कुलपुत्र दरिद्रसंज्ञोत्पादयितव्या, कल्याणमित्रेषु वैश्रवणसंज्ञा, अनुशासनीषु धनसंज्ञा, प्रतिपत्तिषु दारिद्र्यापनयनसंज्ञोत्पादयितव्या। आत्मनि च ते कुलपुत्र अन्तेवासिकसंज्ञोत्पादयितव्या, कल्याणमित्रेष्वाचार्यसंज्ञा, अनुशासनीषु शिल्पसंज्ञा, प्रतिपत्तिष्वधिगमनसंज्ञोत्पादयितव्या। आत्मनि च ते कुलपुत्र अभीरुसंज्ञोत्पादयितव्या, कल्याणमित्रेषु शूरसंज्ञा, अनुशासनीषु प्रहरणसंज्ञा, प्रतिपत्तिषु शत्रुनिर्घातनसंज्ञोत्पादयितव्या। आत्मनि च ते
10 कुलपुत्र वणिक्संज्ञोत्पादयितव्या, कल्याणमित्रेषु कर्णधारसंज्ञा, अनुशासनीषु रत्नसंज्ञा, प्रतिपत्तिषु रत्नग्रहणसंज्ञोत्पादयितव्या। आत्मनि च ते कुलपुत्र सुपुत्रसंज्ञोत्पादयितव्या, कल्याणमित्रेषु मातापितृसंज्ञा, अनुशासनीषु कुलवृत्तिसंज्ञा, प्रतिपत्तिषु हृदयनिप्रणाशसंज्ञोत्पादयितव्या। आत्मनि च ते कुलपुत्र राजकुमारसंज्ञोत्पादयितव्या, कल्याणमित्रेषु धर्मराजाग्रामात्यसंज्ञा, अनुशासनीषु राजशिक्षा, प्रतिपत्तिषु ज्ञानराजमकुटालंकारधर्मपट्टशिरो
15 बन्धनधर्मराजनगरव्यवलोकनसंज्ञोत्पादयितव्या। एवं चित्तसंज्ञामनसिकारपरिभावितेन कुलपुत्र कल्याणमित्राण्युपसंक्रमितव्यानि। तत्कस्य हेतोः? एवं कल्याणमित्राण्याशयपरिशुद्धा हि कुलपुत्र बोधिसत्त्वाः कल्याणमित्राज्ञासु प्रतिपद्यमाना विवर्धन्ते सर्वकुशलमूलैः हिमवत्संनिश्रिता इव तृणगुल्मौषधिवनस्पतयः। भाजनीभवन्ति सर्वबुद्धधर्माणां महासागर इव जलस्य। आकरीभवन्ति सर्वगुणानां महासमुद्र इव रत्नानाम्। उत्तापयन्ति बोधि
20 चित्तं सुवर्णमिवाग्निसंतापे। अभ्युद्गता भवन्ति लोकात्, सुमेरुरिव सागरात्। अनुपलिप्ता भवन्ति लोकधर्मैः, पद्ममिव जलेन। संवसन्ति सर्वदुश्चरितैः, महासागर इव पूतिकुणपेन। विवर्धन्ते शुक्लधर्मैः, चन्द्र इव शुक्लपक्षे। अवभासयन्ति धर्मधातुं सूर्य इव जम्बुद्वीपम्। प्रवर्धयन्ति बोधिसत्त्वप्रणिधानशरीराणि कुमारका इव मातापितृनिश्रिताः। संक्षिप्तेन कुलपुत्र कल्याणमित्रानुशासनीषु प्रतिपन्ना बोधिसत्त्वा दशानभिलाप्यगुणकोटीनियुतशत
25 सहस्राणि प्रतिगृह्णन्ति। दशाध्याशयकोटीनियुतशतसहस्राणि परिशोधयन्ति। दश बोधिसत्त्वेन्द्रियकोटीनियुतशतसहस्राणि विवर्धयन्ति। दशाधिष्ठानकोटीनियुतशतसहस्राणि विशोधयन्ति। धारणीधर्मासंख्येयशतसहस्राणि परिशोधयन्ति। दश मारासंख्येयशतसहस्राणि समतिक्रामन्ति। दश धर्ममुखद्वारासंख्येयशतसहस्राणि प्रतिवसन्ति। दशसंभारविशुद्धिगुणासंख्येयकोटीनियुतशतसहस्राणि परिपूरयन्ति। दश चर्यासंख्येयशतसहस्राणि परिपूर-
30 यन्ति। दश चर्यासंख्येयशतसहस्राणि पर्यवदापयन्ति। दश महाप्रणिधानासंख्येयशतसहस्राण्यभिनिर्हरन्ति। संक्षिप्तेन कुलपुत्र सर्वबोधिसत्त्वचर्या सर्वबोधिसत्त्वपारमिताः सर्वबोधिसत्त्वभूमयः सर्वबोधिसत्त्वसमाधिमुखानि सर्वबोधिसत्त्वाभिज्ञाज्ञानविकुर्वितानि सर्वबोधि

सत्त्वधारणीप्रतिभानालोकाः, सर्वबोधिसत्त्वपरिणमनाज्ञानाभिज्ञाप्रमाणताः, सर्वबोधिसत्त्वप्रणिधानाभिनिर्हाराः, सर्वबुद्धधर्मप्रतिलम्भपरिनिष्पत्तयः कल्याणमित्राधीनाः कल्याणमित्रमूलाः कल्याणमित्रप्रभवाः कल्याणमित्रयोनिकाः कल्याणमित्रायद्वाराः कल्याणमित्रसंजाताः कल्याणमित्रसंवर्धिताः कल्याणमित्रप्रतिष्ठानाः कल्याणमित्रहेतुकाः कल्याणमित्रप्रभूताः ॥

अथ खलु सुधनः श्रेष्ठिदारकः इमामेवंरूपां कल्याणमित्रगुणवर्णानुशासनीं बोधिसत्त्वचर्याप्रमाणतां बुद्धधर्मविस्तीर्णतां च श्रुत्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः श्रीसंभवस्य दारकस्य श्रीमत्याश्च दारिकायाः पादौ शिरसाभिवन्द्य श्रीसंभवं दारकं श्रीमतीं दारिकां च अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य श्रीसंभवस्य दारकस्य श्रीमत्याश्च दारिकाया अन्तिकात्प्रक्रान्तः ॥ ५१ ॥ ५२ ॥



## ५४ मैत्रेयः ।

अथ खलु सुधन श्रेष्ठिदारक कल्याणमित्रानुशासन्यभिष्यन्दितचित्तो येन समुद्रकच्छो
जनपदस्तेनोपसंक्रान्त तामेव बोधिसत्त्वचर्यानुशासनीमनुविचिन्तयन्, सम्यक्चर्याणि समर्थ-
पूर्वान्तकोटीगतकायप्रणामसमन्वाहारेण कायबल दृढीकुर्वाण, पूर्वान्तकोटीगतकायचित्तपरि-
5 शुद्धिनिष्कारणसांसारिकचित्तप्रचारसमन्वाहारेण चित्तमनसिकार गृह्णन्, पूर्वान्तकोट्यसत्कर्म-
लौकिककार्यप्रयुक्त निष्प्रयोजनपरिष्यन्दसमन्वाहारेण प्रत्युत्पन्नप्रयोजनमहासामर्थ्यं विचिन्त-
यन्, पूर्वान्तभूतपरिकल्पसमुत्थितवितथसंकल्पसंदर्शितमनसिकारसमन्वाहारेण सर्वबोधि-
सत्त्वचर्यासम्यक्संकल्पाभिसंस्कारबल समुत्थापयन्, अतीतात्मभावात्मार्थप्रयोगारम्भविषमता-
समन्वाहारेण सर्वसत्त्वार्थारम्भवैशेषिकतया अध्याशयबल दृढीकुर्वाण, अतीतकायपर्येष्टिसमु-
10 दाचारास्वादतासमन्वाहारेण सर्वबुद्धधर्मप्रतिलम्भप्रयोगमहाश्वासप्रतिलम्भेन इन्द्रियवेगान्
विवर्धयमान, अतीताध्वविपर्याससप्रयुक्तमिथ्यामययोगप्रयोगसमन्वाहारेण प्रत्युत्पन्नाध्वसम्य-
क्संदर्शनाविपर्याससप्रयुक्तेन बोधिसत्त्वप्रणिधानेन संततिं परिशोधयन्, पूर्वान्तगतवीर्यारम्भ-
कार्यापरिनिष्पन्नसमन्वाहारेण प्रत्युत्पन्नसर्वबुद्धधर्मसमुदागमप्रत्युपस्थानेन महावीर्यारम्भनिष्क्रमेण
कायचित्तसंप्रहर्ष जनयन्, पूर्वान्तकोटीपञ्चगत्यपायनिक्षिप्तात्मभावनिरूपणाप्य निरुपजीव्य-
15 समुच्छ्रयमपरान्तकोटीगतकल्पपरिग्रहप्रयुक्तस्य समन्वाहारेण सर्वबुद्धधर्मोत्थापकसर्वजगदुप-
जीव्यसर्वकल्याणसमर्थात्मभावपरिग्रहेण विपुलप्रीतिप्रामोद्यवेगान् विवर्धयमान, प्रत्युत्पन्न
जन्माभिनिर्वृत्त जराव्याधिमरणशोककारभूत संयोगवियोगनिधानभूत समुच्छ्रयमपरान्तकोटी-
गतकल्पबोधिसत्त्वचर्याचरणप्रयुक्तस्य सत्त्वपरिपाचनबुद्धधर्मपरिग्रहप्रयुक्तस्य तथागतदर्शनसर्व-
क्षेत्रानुचरणसर्वधर्मभाणकोपस्थानसर्वतथागतशासनसंधारणप्रयुक्तस्य सर्वधर्मपर्येष्टिसहायभूतस्य
20 सर्वकल्याणमित्रदर्शनसर्वबुद्धधर्मसमुदानयनप्रयुक्तस्य बोधिसत्त्वप्रणिधानशरीरस्य हेतुप्रत्यय-
भूतमवलोक्य अचिन्त्यकुशलमूलेन्द्रियवेगान् विवर्धयमान । एवचित्त एवमनसिकार एव-
योनिश प्रयुक्त सर्वबोधिसत्त्वप्रसादसमारोपितया श्रद्धया सर्वबोधिसत्त्वाशयसमारोपितेन प्रेम्णा
सर्वबोधिसत्त्वाशयसमारोपितेन गौरवेण सर्वबोधिसत्त्वेन्द्रियप्रसादसमारोपितेन चित्रीकारेण
सर्वबोधिसत्त्वाशयाधिमुक्तिसमुत्थितैरिन्द्रियप्रसादवेगै सर्वबोधिसत्त्वगौरवनिर्यातेन चित्तप्रसा-
25 देन सर्वबोधिसत्त्वश्रद्धासमुत्थितै कुशलमूलसंभारै, सर्वबोधिसत्त्वाभिसंस्कारसमुत्थिताभि
पूजाविमात्रताभि, सर्वबोधिसत्त्वसंमेराश्रये कृताञ्जलिपुटै सर्वजगच्छरीरसमताभिश्चक्षुर्विमात्र-
तावलोकनताभि, सर्वजगत्संज्ञाजगत्समारोपिताभि सर्वबोधिसत्त्वस्वराङ्गविशुद्धिसमुत्थितवर्णो-
दाहारव्यूहाभिनिर्हारै, पूर्वान्तप्रत्युत्पन्नकोटीगतसर्वबोधिसत्त्वाधिष्ठानपरिपूर्णेन तथागतविहारा-
भिमुखीभावगतेन संज्ञागतेन सर्वत्रानुगतेन तथागतबोधिसत्त्वविकुर्वणासंबोधेन एकवालपथा-
30 व्यतिरिक्तेन सर्वबुद्धबोधिसत्त्वकायस्फरणानुगतेन सर्वबोधिसत्त्वचक्षुष्पथपरिशुद्धिसमारोपिता-
भिज्ञाज्ञानालोकविज्ञप्तिभि, सर्वदिग्जालसंभेदानुगतेन मनआयतनेन धर्मधातुतलभेदस्फरणेन
प्रणिध्यभिनिर्हारबलेन आकाशधातुपरमपर्यवसानेन सर्वत्रानुगतेन त्र्यध्वासंभिन्नेन अप्रतिप्र-

सम्भेन सर्वधर्मावतारमुखेन सर्वकल्याणमित्रानुशासन्यवभासदिक्प्रसृतेन श्रद्धाधिमुक्तिप्रवेश-
बलेन। इति हि सुधनः श्रेष्ठिदारकः एवं गौरवचित्रीकारपूजास्तवप्रणिपातोदीक्षमाणाधिष्ठान-
प्रणिधानसंज्ञानुगतमानसः एवमप्रमाणज्ञानगोचरभूमिप्रसृतेन ज्ञानचक्षुषा वैरोचनव्यूहालं-
कारगर्भस्य महाकूटागारस्य पुरस्ताद्द्वारमूले सर्वशरीरेण प्रणिपतितः। स इममेवंरूपमभिनिर्हार-
प्रयोगं मुहूर्तं विचार्य अधिमुक्तिश्रद्धासमुत्थितेन अध्याशयप्रणिध्यभिनिर्हारबलेन अप्रतिप्रस्रब्ध-
मात्मानमभ्यतिष्ठत् सर्वतथागतपादमूलेषु, एवं सर्वबोधिसंमुखीभावेषु सर्वकल्याणमित्रभवनेषु
सर्वतथागतचैत्येषु सर्वतथागतविग्रहेषु सर्वबोधिसत्त्वेषु सर्वबुद्धावासेषु सर्वधर्मरत्नस्थानेषु सर्व-
श्रावकप्रत्येकबुद्धाश्रयचैत्यसंमुखीभावेषु सर्वार्यगणदक्षिणीयगुरुमातापितृपर्यन्तेषु अप्रतिप्रस्रब्ध-
मात्मानमभ्यतिष्ठत् सर्वजगत्कायसंमुखीभावेषु सर्वत्रानुगतेन ज्ञानशरीरासंभेदनयप्रवेशानुगतेन
संज्ञाधिष्ठानज्ञानमनसिकारेण। यथा च वैरोचनव्यूहालंकारगर्भस्य महाकूटागारस्य पुरस्तात्,
एवं पूर्वपरिकीर्तितेषु सर्वारम्बणेषु सर्वधर्मधातुस्फरणं प्रणिपातमभ्यतिष्ठत्। एवमपरान्तकोटी-
गतान् कल्पानप्रतिप्रस्रब्धमधिष्ठाय आकाशधातुपर्यन्तप्रमाणसमतया धर्मधात्वनावरणसमतया
सर्वत्रानुगतभूतकोटीसमतया तथागताविकल्पसमतया छायागतज्ञानसंज्ञास्फरणतया स्वप्नसम-
विचारसमतया प्रतिभाससमसर्वलोकजगद्विज्ञप्तिसमतया प्रतिश्रुत्कासमहेतुप्रत्ययसमुत्थानसम-
तया अनुत्पादसमतया संभवविभवसमतया अभावसमप्रत्ययप्रतीत्यावर्तनसमतया यथाकर्म-
समुत्थितं विपाकमधिमुच्यमानो यथाहेतुसमुत्थितं फलमधिमुच्यमानो यथोपचयसमुत्थितां सर्व-
क्रियामधिमुच्यमानः श्रद्धासमुत्थितं सर्वतथागतोत्पादमधिमुच्यमानो यथाधिमुक्तिसमुत्थितानि
सर्वबुद्धपूजानिर्माणान्यधिमुच्यमानो गौरवसमुत्थितानि सर्वतथागतनिर्माणान्यधिमुच्यमानः
कुशलमूलोपचयसमुत्थितां सर्वबुद्धधर्मतामधिमुच्यमानः प्रज्ञोपायसमुत्थितान् सर्वमनोमयव्यूहो-
पचयांनधिमुच्यमानः प्रणिधिसमुत्थितान् सर्वबुद्धधर्मानधिमुच्यमानः परिणामनासमुत्थितान्
सर्वबोधिसत्त्वचर्यासर्वज्ञतानिष्पथधर्मधातुविठपनस्फरणालंकारव्यूहानधिमुच्यमानः उच्छेदसंज्ञा-
विगतेन परिणामनाज्ञानेन शाश्वतसंज्ञाविभूतेन अनुत्पादज्ञानेन हेतुक्रियादृष्टिविगतेन सम्यक्-
क्रियादृष्टिविगतेन समक्रियादृष्टिविगतेन समक्रियावतारहेतुपचयज्ञानेन, विपर्यासदृष्टिविगतेन
अपरप्रत्ययज्ञानेन, आत्मपरसंज्ञादृष्टिविगतेन प्रतीत्यावतारज्ञानेन, अन्तग्राहदृष्टिविगतेन
अनन्तमध्यधर्मधातुप्रवेशज्ञानेन, संक्रान्तिदृष्टिविगतेन प्रतिष्ठासमताभिनिर्वृत्तिज्ञानेन, भव-
विभवदृष्टिविगतेन अनुत्पादनिरोधज्ञानेन, सर्वदृष्टिविगतेन शून्यतानुत्पादज्ञानेन, अनैश्वर्यधर्म-
शाप्रतिवद्धेन प्रणिध्यभिनिर्हारज्ञानबलेन सर्वनिमित्तसंज्ञापनीतेन अनिमित्तकोटीमुखज्ञानेन
बीजाङ्कुराविनाशधर्मतया मुद्राप्रतिमुद्रासमुत्थानसमधर्मतया प्रतिबिम्बदर्शनसमधर्मतया प्रति-
श्रुत्कानादसघोषविज्ञप्तिधर्मतया स्वप्नसमविचारविज्ञप्तिधर्मतया प्रतिभासदर्शनसमधर्मतया
मायागतसमकर्मसमुत्थानधर्मतया चित्तकल्पितलोकोपपादनधर्मतया यथाप्रत्ययहेतूपचयफल-
धर्मतया, यथाकर्मोपचयविपाकसमधर्मतया उपायपौरुष्यनिष्ठपनधर्मतया धर्माधर्मसमवि-
सम्भाभिष्यन्दिताधर्मतया। एवं ज्ञानप्रवेशाभिनिर्हृतेन सज्ञानमनिसकारेण सुधनः श्रेष्ठिदारको

---

१ B °भिपूर्वेन.

वैरोचनव्यूहालंकारगर्भस्य महाकूटागारस्य पुरस्तात् प्रणिपतितः । सुचिरमतिनमय्य
अचिन्त्यकुशलमूलवेगाभिष्यन्दितसंतानः प्रह्लादितकायचित्तः तत कूटागारद्वारमूलादुत्थाय
मुहूर्तमनिमिषाभ्यां नेत्राभ्यां वैरोचनव्यूहालंकारगर्भं महाकूटागारं संप्रेक्ष्य कृताञ्जलिपुटोऽ-
नेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य एवंसंज्ञामनसिकारसंप्रेषितचित्तो वाचमभाषत—अयं स
शून्यतानिमित्ताप्रणिहितविहारविहारिणामावासः । अयं स सर्वधर्माविकल्पविहारविहारिणा-
मावासः । धर्मधातुसंभेदविहारविहारिणां सत्त्वधात्वनुपलम्भविहारविहारिणां सर्वधर्मानुत्पाद-
विहारविहारिणां सर्वलोकानिकेतविहारविहारिणां सर्वजगदालयानिलयविहारविहारिणां सर्वो-
पसंश्लिष्टविहारविहारिणां सर्वोपाश्रयानिश्रितविहारविहारिणां सर्वसमुच्छ्रयानिश्रितविहार-
विहारिणां सर्वक्लेशसंज्ञागतविधूतविहारविहारिणां सर्वधर्मास्वभावविहारविहारिणां सर्वकल्प-
विकल्पाविकल्पविहारविहारिणां सर्वसंज्ञाचित्तमनोविनिःसृतविहारविहारिणां सर्वसंज्ञानायूहनि-
र्यूहविहारविहारिणां गम्भीरप्रज्ञापारमिताप्रवेशविहारविहारिणां समन्तमुखधर्मधातुस्फरणोपाय-
विहारविहारिणां समन्तक्लेशशान्तोपायविहारविहारिणां सर्वदृष्टितृष्णामानप्रहीणप्रज्ञोत्तरविहा-
रिणां सर्वध्यानविमोक्षसमाधिसमापत्त्यभिज्ञाविद्योत्पादविक्रीडितविहारविहारिणां सर्वबोधिसत्त्व-
समाधिगोचरभावनाविहारविहारिणामयं सर्वबुद्धपादमूलोपनिश्रितविहारविहारिणामावासः ।
ये ते एककल्पसर्वकल्पसर्वकल्पैककल्पानुप्रवेशविहारविहारिणः । ये ते एकक्षेत्रसर्व-
क्षेत्रैकक्षेत्रासंभेदविहारविहारिणः । ये ते एकधर्मसर्वधर्मसर्वधर्मैकधर्माविरोधविहारविहारिणः ।
ये ते एकसत्त्वसर्वसत्त्वैकसत्त्वानानात्वविहारविहारिणः । ये ते एकबुद्धसर्वबुद्धसर्वबुद्धैक-
बुद्धाद्वयविहारविहारिणः । ये ते सर्वार्थैकक्षणप्रवेशविहारविहारिणः । ये ते सर्वक्षेत्रैकचित्तो-
त्पादगमनविहारविहारिणः । ये ते सर्वसत्त्वभवनप्रतिभासविहारविहारिणः । ये ते सर्वलोकहित-
सुखचित्तविहारविहारिणः । ये ते सर्वस्वाधीनप्रतिलम्भविहारविहारिणः, तेषामयं विहारः [1] । ये ते
लोकनिकेतोच्चलिताश्च सर्वजगद्भवनेषु सदृश्यन्ते सर्वसत्त्वपरिपाचनाय । ये ते सर्वक्षेत्रानिश्रिताश्च
सर्वक्षेत्रेषु च अनुविचरन्ति तथागतपूजाकर्मणे । ये ते सर्वक्षेत्राणि च अनुविचरन्ति सर्वबुद्धक्षेत्र-
व्यूहपरिग्रहणतायै, न च स्थानाद्विचरन्ति । ये ते सर्वतथागतपादमूलगताश्च बुद्धसंज्ञाभिनिवेश-
विगताश्च । ये ते सर्वकल्याणमित्रोपनिश्रयविहारविहारिणश्च, न चैषां सर्वजगति समसमोऽस्ति
ज्ञानेन । ये ते सर्वमारभवनविहारविहारिणश्च कामगुणरतिविप्रयुक्ताश्च । ये ते सर्वसंज्ञागत-
प्रवेशविहारविहारिणश्च सर्वसंज्ञागतविधूतमानसाश्च । ये ते सर्वजगच्छरीरानुगतकायाश्च न
चात्मसत्त्वद्वयविहारिणः । ये ते सर्वलोकधात्वन्तर्गतकाया न च धर्मधातुसंभेदविहारिणः ।
ये ते सर्वानागतकल्पसंवासप्रणिधानाश्च, न च दीर्घह्रस्वकल्पसंज्ञागतविहारविहारिणः ।
ये ते एकवालपथाच्च न चलन्ति, सर्वलोकधातुषु च संदृश्यन्ते, तेषामयं दुरासदधर्म-
दिगनुप्रवेशविहारविहारिणां दुराज्ञेयविहारविहारिणां गम्भीरविहारविहारिणाम्, अद्वयविहार-
विहारिणाम्, अलक्षणविहारविहारिणां निष्प्रतिपक्षविहारविहारिणाम्, अनुपलम्भविहारविहा-

[1] B om. तेषामयं विहार

रिणां निष्प्रपञ्चविहारविहारिणां महामैत्रीमहाकरुणाविहारविहारिणां सर्वश्रावकप्रत्येकबुद्ध-दुरवगाहविहारविहारिणां सर्वमारविषयसमतिक्रान्तविहारविहारिणां सर्वलोकविषयानुपलिप्त-विहारविहारिणां सर्वबोधिसत्त्वपारमिताविहारविहारिणां सर्वबुद्धविहारानुकूलविहारविहारिणा-मयं विहारः। ये ते सर्वनिमित्तापगतविहारिणश्च, न च श्रावकनियाममवक्रामन्ति। ये ते सर्वधर्मानुत्पादविहारविहारिणश्च, न च अनुत्पादधर्मतायां पतन्ति। ये तेऽशुभाविहारविहा- 5 रिणश्च, न च रागविरागधर्मतां साक्षात्कुर्वन्ति, न च रागधर्मैः सार्धं संवसन्ति। ये ते मैत्री-विहारविहारिणश्च, न च दोषमलोपगतचित्ताः। प्रतीत्यसमुत्पादविहारविहारिणश्च अत्यन्तासंमूढाश्च सर्वधर्मेषु। ये ते चतुर्ध्यानविहारिणश्च, न च ध्यानवशेनोपपद्यन्ते। ये ते चतुरप्रमाण-विहारविहारिणश्च, न च रूपधातुगतिं गच्छन्ति सर्वसत्त्वपरिपाचनार्थम्। ये ते चतुरारूप्य-समापत्तिविहारविहारिणश्च, न चारूप्यधातुगतिं गच्छन्ति महाकरुणापरिगृहीतत्वात्। ये ते 10 शमथविपश्यनाविहारविहारिणश्च, न चात्मना विद्याविमुक्तिं साक्षात्कुर्वन्ति सर्वसत्त्वपरिपाकाय। ये ते महोपेक्षाविहारविहारिणश्च, न च सत्त्वधातुं परित्यजन्ति। ये ते शून्यताविहारविहा-रिणश्च, न च दृष्टिगतसंनिश्रिताः। ये ते आनिमित्तगोचराश्च निमित्तचरितसत्त्वनयाभि-मुक्ताश्च। ये ते सर्वप्रणिधानविगताश्च बोधिसत्त्वप्रणिधानाव्यवच्छिन्नाश्च। ये ते सर्वकर्म-क्लेशवशवर्तिनश्च, सत्त्वपरिपाकाय च कर्मक्लेशवशानुगाः संदृश्यन्ते। ये ते च्युत्युपपत्तिपरि- 15 ज्ञाताविनश्च, जन्मच्युतिमरणं च संदर्शयन्ति। ये ते सर्वगतिव्यतिवृत्ताश्च, सर्वगतिषु च गच्छन्ति सर्वविनयवशेन। ये ते मैत्रीविहारिणश्च, न क्वचिदनुनयविहारिणः। ये ते करुणाविहारिणश्च, न क्वचिदनुसंशयदर्शनविहारिणः। ये ते मुदिताविहारिणश्च नित्योद्विग्नाश्च दुःखितसर्वसत्त्वव्यवलोकनतया। ये ते उपेक्षाविहारिणश्च परकार्येषु। ये ते नवानुपूर्वविहार-समापत्तिविहारिणश्च, न कामधातूपपत्तिविजुगुप्सकाः। ये ते सर्वोपपत्त्यनिश्रितविहारिणश्च, 20 न च भूतकोटीसाक्षात्करणविहारिणः। ये ते त्रिविमोक्षविहारिणश्च, न च श्रावकविमुक्ति-स्पर्शविहारिणः। ये ते चतुरार्यसत्यव्यवलोकनविहारिणश्च, न च फलसाक्षात्करणविहारिणः। ये ते गम्भीरप्रतीत्यसमुत्पादव्युपपरीक्षणविहारिणश्च, न चात्यन्तनिपतनविहारिणः। ये ते आर्याष्टाङ्गमार्गभावनाविहारिणश्च, न चात्यन्तनिर्याणविहारिणः। ये ते पृथग्जनभूमि-समतिक्रान्तविहारिणश्च, न च श्रावकप्रत्येकबुद्धभूमिपतनविहारिणः। ये ते पञ्चोपादान- 25 स्कन्धपरिज्ञानविहारिणश्च, न चात्यन्तस्कन्धनिरोधविहारिणः। ये ते चतुर्मारपथसमति-क्रान्तविहारिणश्च, न च मारकल्पनविहारिणः। ये ते षडायतनसमतिक्रान्तविहारिणश्च, न चात्यन्तानभिनिर्वृत्तिविहारिणः। ये ते तथताविहारिणश्च, न च भूतकोट्यायतन-विहारिणः। ये ते सर्वयाननिर्याणसंदर्शनविहारिणश्च, न च महायानच्यवनविहारिणः, तेषामयं सर्वगुणविहारिणां विहारः॥ 30

अथ खलु सुधनः श्रेष्ठिदारकस्तस्यां वेलायामिमा गाथा अभाषत—

इह सो महाकरुण स्वामि विशुद्धबुद्धि-
मैत्रेय मैत्रशिरि लोकहिताभियुक्तः।

अभिषेकभूमिस्थित ज्येष्ठसुतो जिनानां
विहराति बुद्धविषयं अनुचिन्तयन्तः ॥ १ ॥
सर्वेष चो जिनसुतान महायशानां
महाज्ञानगोचर विमोक्षप्रतिष्ठितानाम् ।
5 ये धर्मधातु विचरन्ति असज्जमाना
आवासु तेषमयमप्रतिपुद्गलानाम् ॥ २ ॥
दमदानशीलक्षमवीर्यबलोद्गतानां
ध्यानैरभिज्ञबलपारगतिंगतानाम् ।
प्रज्ञाउपायप्रणिधानबलस्थितानां
10 महायानपारमिगतानमयं विहारः ॥ ३ ॥
एषो असङ्गमतिनां विपुलाशयानां
आकाशगोचररतानमनिश्रितानाम् ।
सर्वत्रियध्वस्फरणानमनावृतानां
आवासु सर्वभवभावविभावितानाम् ॥ ४ ॥
15 ये सर्वधर्मअनुत्पादनयप्रविष्टा
विमृशन्ति धर्मप्रकृतिं गगनस्वभावाम् ।
न करोन्ति निश्रयु कचिद्गगने व पक्षी
तेषां विहारु अयु ज्ञानविशारदानाम् ॥ ५ ॥
ये रागदोषमथ मोहस्वभाव ज्ञात्वा
20 संकल्पहेतुजनितां वितथप्रवृत्तिम् ।
निर्विकल्पयन्ति च विरागमपीह तेषां
शान्तप्रशान्त्युपगतानमयं विहारः ॥ ६ ॥
ये ते विमोक्षमुखसत्यनयार्थमार्ग-
स्कन्धांस्तथायतनसत्त्वप्रतीत्यतां च ।
25 प्रपरीक्षमाण न पतन्ति विदू प्रशान्ति-
प्रज्ञाउपायकुशलानमयं विहारः ॥ ७ ॥
ये ते अनावरणज्ञानदिशं प्रविष्टा
जिनक्षेत्र सत्त्वपरिकल्पविकल्पशान्ता[1] ।
भावस्वभावरहिता न विमृषन्ति धर्मान्
30 आवासु तेषमय शान्तिपरायणानाम् ॥ ८ ॥
ये ते असङ्गचरिता इम धर्मधातुं
विचरन्ति मात्रेविगता[2] खगनायुभूताः ।

[1] Lacuna for विकल्प in S, supplied from B. [2] S मात्रविगता.

सर्वे निकेतविगता अनिकेतचारी
　　तेषामनिश्रितमतीनमयं विहारः ॥ ९ ॥
ये दृष्टिदुर्गतिगतां जनतामखिन्नां
　　दुःखान्तरां कटुक वेदन वेदयन्तीम् ।
मैत्रप्रभाय शमयन्ति अपाय सर्वान्
　　आत्राह्य तेषमय मैत्रकृपाशयानाम् ॥ १० ॥

संसारसंकटगतार्थपथप्रनष्टं
　　जात्यन्धसार्थमिव दैशिकविप्रहीणम् ।
ये प्रेक्ष्य लोकमिह मोक्षपथे प्रणेन्ति
　　सार्थातिवाहसदृशानमयं विहारः ॥ ११ ॥
ये जातिशोकजरमृत्युवशोपनीतं
　　दृष्ट्वा जगन्नमुचिस्कन्धवपाशबद्धम् ।
संप्रापयन्त्यभयक्षेमदिशं विमोच्य
　　शूराण तेषमयमा(वा)सु सुदुर्जयानाम् ॥ १२ ॥

क्लेशातुरं जनमिमं व्यवलोकयित्वा
　　समुदानयन्त्यमृतज्ञानमहौषधानि ।
परिमोचयन्ति विपुलां करुणां जनित्वा
　　महवैद्यराजसदृशानमयं विहारः ॥ १३ ॥
ये ते निशाम्य जनतां दुखितामत्राणां
　　शोकाकरे पतित मृत्युसमुद्रगामि ।
तारेन्ति कृत्व महतीं शुभधर्मनावं
　　तेषां विहारमय दाशसुतोपमानाम् ॥ १४ ॥
ये क्लेशसागरचरां जनतां निशाम्य
　　सर्वज्ञचित्तरतनाशयशुद्धसत्त्वा ।
अभ्युद्धरन्ति भवसागरमोतरित्वा
　　कैवर्तपुत्रसदृशानमयं विहारः ॥ १५ ॥
प्रणिधानआलयगता कृपमैत्र्यदृष्ट्या
　　ये सर्वसत्त्वभवनान्यवलोकयित्वा ।
अभ्युद्धरन्ति जनतां भवसागरस्थां
　　गरुडेन्द्रपोतसदृशानमयं विहारः ॥ १६ ॥

---

१ B लोकपथे.

ये धर्मधातुगगने शशिसूर्यभूता
विचरन्ति सत्त्वभवनप्रतिभासप्राप्ताः ।
प्रणिधानमण्डल * * * * ज्ञानरश्मी
लोकप्रभासकरणानमयं विहारः ॥ १७ ॥

5 ये एकसत्त्वपरिपाचनताय धीरा
तिष्ठन्ति कल्पनयुतानपरान्तनिष्ठा ।
यथ एकि सत्त्वि तथ सर्वजगत्यशेषम्
आवासु तेषमय लोकपरायणानाम् ॥ १८ ॥

ये एकक्षेत्रप्रसरे अपरान्तकल्पान्
10 विचरन्ति चारिक जगार्थमखिन्नवीर्याः ।
यथ एकक्षेत्रि तथ सर्वदशद्दिशासु
आवासु तेषमय वज्रदृढाशयानाम् ॥ १९ ॥

ये धर्ममेघ सुगतान दशद्दिशासु
एकासने स्थित पिबन्ति असंप्रमूढाः ।
15 अपरान्तकल्पनियुतान्यवितृप्तचित्ता
सद्बुद्धिसागरसमानमयं विहारः ॥ २० ॥

ये क्षेत्रसागर व्रजन्ति अनाभिलाप्यान्
प्रविशन्ति चो परिषसागर नायकानाम् ।
ये पूजसागर विचित्र जिने करोन्ति
20 तेषामसङ्गचरणानमयं विहारः ॥ २१ ॥

ये चार्यसागरप्रविष्टमनन्तमध्यात्
प्रणिधानसागर विगाह्यमान धीराः ।
बहुकल्पसागर चरन्ति जगद्धितार्था
तेषां विहारु अयु सर्वगुणाकराणाम् ॥ २२ ॥

25 ये एकि वालपथि उत्तरमान क्षेत्रात्
बुद्धांश्च सत्त्व तथ कल्प अनन्तमध्यान् ।
प्रविशन्ति एन्त न पुना च उपेन्ति सीमां
तेषामसङ्गनयनानमयं विहारः ॥ २३ ॥

ये एकचित्तक्षणि कल्पमहासमुद्रान्
30 प्रविशन्ति क्षेत्र तथ बुद्धजगत्प्रचारान् ।
तेषामनावरणज्ञानमतिस्थितानाम्
एषो विहार गुणपारमितोद्गतानाम् ॥ २४ ॥

ये सर्वक्षेत्रपरमाणुरजान् गणित्वा
　　बिन्दुप्रमाण तुलयित्व जलौघ सर्वम् ।
तावत्प्रमाणप्रणिधीनभिनिर्हरन्ति
　　तेषामसङ्गतगतानमयं विहारः ॥ २५ ॥
प्रणिधानधारणिसमाधिमुखप्रवेशान्　　5
　　ध्याना विमोक्ष प्रणिधानमुखानि चैव ।
अभिनिर्हरन्ति विचरन्ति अनन्तकल्पान्
　　इह ते प्रविष्ट सुगतान सुताः स्मृतीमाः ॥ २६ ॥
इह ते स्थिता जिनसुता विविधा विचित्रा
　　अभिनिर्हरन्ति बहुशास्त्रकथार्थयुक्ताः ।　　10
सौख्यावहानि जगतामिह शिल्पस्थाना-
　　न्यनुचिन्तयन्त विहरन्ति सतां विहारः ॥ २७ ॥
इह ते स्थिता महअभिज्ञउपायज्ञाने
　　यावन्त सत्त्वगतिभेद दशदिशासु ।
सर्वत्र जन्मच्युतिभेद विदर्शयन्ति　　15
　　मायागते स्थित विमोक्ष असङ्गचर्याः ॥ २८ ॥
इह ते स्थिता प्रथमचित्तसमुद्भवाद्यां
　　दर्शन्ति धर्मचर्यां बहुधर्मनिष्ठाम् ।
आपूर्य निर्मितघनैरपि धर्मधातुम्
　　एवं विकुर्वितशतान्युपदर्शयन्ति ॥ २९ ॥　　20
ये एकचित्तप्रसरेण विबुद्ध बोधिं
　　प्रविशन्ति ज्ञानमतिकर्म अनन्तमध्या ।
संमोहकेवलजि लोकु य चिन्तयान
　　एवं दुरासदगतानमयं विहारः ॥ ३० ॥
एषो असङ्गमतिनामनावरणधर्मधातुचरणानाम् ।　　25
अनिलम्भगोचराणां विहारु विमलाशयमतीनाम् ॥ ३१ ॥
ये ते असङ्गचारी अनिकेतविहारि सर्वक्षेत्रेषु ।
अद्वयज्ञानविहारी अयु तेष विहारु असमानाम् ॥ ३२ ॥
खप्रकृतिसमान् य एते धर्मानना्लयान् शान्तान् ।
विहरन्ति गगनगोचर तेषयमावासु विरजानाम् ॥ ३३ ॥　　30
इह ते कृपाशयमती स्थित्वा जगदीक्ष्य दुःखशोकहतम् ।
लोकहितचिन्तनपरा विहरन्ति महकरुणलाभी ॥ ३४ ॥

इह ते अनन्तरहिता दृश्यन्ते सर्वसत्त्वभवनेषु ।
शशिसूर्यमण्डलसमाधि मुक्त संसारपाशेभ्यः ॥ ३५ ॥
इह ते स्थिता जिनसुताः सर्वजिनानां च पादमूलेषु ।
दृश्यन्ति सर्वक्षेत्रेष्वनन्तकल्पान् क्षपयमाणाः ॥ ३६ ॥
5 इह ते जगदण्डसमैः सर्वजिनसुताश्रयप्रमाणैश्च ।
सर्वदिशोऽनयशेषाः स्फरन्ति निर्माणमेघेभिः ॥ ३७ ॥
इह ते प्रविष्ट शूराः सर्वं जिनगोचरं तुलयमाना ।
विहरन्ति कल्पनयुतान्न चापि तृप्तिं समुपयान्ति ॥ ३८ ॥
इह ते समाधिनयुतानभिलाप्यानि प्रतिक्षणं बुद्ध्या ।
10 दर्शेन्ति बुद्धविषयं यथा समाधिप्रवेशेन ॥ ३९ ॥
इह ते क्षणावलम्बा कल्पक्षेत्राणि बुद्धनामानि ।
प्रविशन्ति विपुलबुद्धी कल्पान् क्षपयन्त्यपरिमाणान् ॥ ४० ॥
इह ते स्थिताप्रमेयाकल्पान् प्रविशन्ति एकचित्तेन ।
परिकल्पसंज्ञविगता जगतः संज्ञावशगतेन[1] ॥ ४१ ॥
15 इह ते समाधिभवनप्रतिष्ठ पश्यन्ति त्रयोऽध्वानः ।
एकक्षणकोटिप्राप्ता विमोक्षभवने विचरमाणाः ॥ ४२ ॥
इह ते स्थिता विहारे पर्यङ्कनिषण्णानुच्चलितकायाः ।
सर्वेषु क्षेत्रेषु युगपद्दृश्यन्ति सर्वगताः ॥ ४३ ॥
इह विहरन्तो वृषभी धर्मसमुद्रान्पिबन्ति सुगतानाम् ।
20 अवतीर्ण ज्ञानसागरमक्षयगुणपारमिताप्राप्ताः ॥ ४४ ॥
इह सर्वक्षेत्रसंख्यां कल्पानां चैव धर्मसंख्यां च ।
सर्वजिनानां संख्यां चिन्तेन्ति अनावरणचिन्ती ॥ ४५ ॥
इह ते स्थिता जिनसुता यावत क्षेत्रास्त्रियध्वसंख्याताः ।
एकक्षणेन तेषा संभवनिभवं विचिन्वन्ति ॥ ४६ ॥
25 इह ते स्थिता जिनानां चर्यां प्रणिधिं च इन्द्रियं जगताम् ।
पश्यन्त्यसमतायो जिनसुतभवने विचरमाणाः ॥ ४७ ॥
एकरजाग्रगतान् ये सर्वरजसमाननावरण अस्याम् ।
पश्यन्ति पर्षसागरक्षेत्रान् सत्त्वानि कल्पांश्च ॥ ४८ ॥
सर्वरजाग्रेषु एवं परिषक्षेत्राणि सत्त्वकल्पांश्च ।
30 प्रतिभासगतान् सर्वान् सुविभक्तान् संप्रपश्यन्ति ॥ ४९ ॥

---

1 S संज्ञावशगतेन.

इह ते धर्मखमानं सर्वक्षेत्राघ्यकल्पसंबुद्धान् ।
भावस्वभावविगतानसंभवनयैर्विचिन्वन्ति ॥ ५० ॥
स्थित्वेह सत्त्वसमतां धर्मेषु बुद्धसमतां च प्रेक्ष्य ।
त्र्यध्वनि क्षेत्रसमतां प्रणिधानसमतां च प्रविशन्ति ॥ ५१ ॥
विनयन्ति सत्त्वनयुतानन्ये महयन्ति बुद्धनयुतानि ।
विमृषन्त्यपरे धर्मानिह ते भवनवरे स्थिता धीराः ॥ ५२ ॥
कल्पनयुतैर्न येषां प्रणिधानज्ञानविषयमतिकल्पाः ।
शक्या मया हि वक्तुं निस्तीर्णोऽनन्तु बुद्धीनाम् ॥ ५३ ॥
तेषामनिन्दितानां अनावरणगोचरं च निरतानाम् ।
आवासे वन्देऽहं कृतकरणकोशः प्रणतकायः ॥ ५४ ॥
तमपि जिनज्येष्ठसुतं निरावरणचर्यमार्यमैत्रेयम् ।
निरुपमविशुद्धबुद्धिं तदनु स्मृतिमां प्रणिपतामि ॥ ५५ ॥

इति हि सुधनः श्रेष्ठिदारको वैरोचनव्यूहालंकारगर्भमहाकूटागारनिवासिनो बोधिसत्त्वानेवं च अप्रमाणैर्बोधिसत्त्वस्तवैरभिष्टुत्य वन्दित्वा नमस्कृत्य प्रणिपत्य उद्वीक्ष्य चित्रीकृत्य आमुखीभूय अभिसंपूज्य वैरोचनव्यूहालंकारगर्भस्य महाकूटागारस्य मूलेऽतिष्ठन्मैत्रेयस्य बोधिसत्त्वस्य महासत्त्वस्य दर्शनमभिलषमाणो मैत्रेयस्य बोधिसत्त्वस्य समवधानमाकाङ्क्षमाणः । सोऽद्राक्षीन्मैत्रेयं बोधिसत्त्वं बहिर्धा कूटागारस्य अन्यतमस्मात्प्रदेशादागच्छन्तमनेकप्राणिशतसहस्रपरिवारमनेकदेवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगेन्द्रपुरस्कृतं वामदक्षिणाभ्यां शक्रब्रह्मलोकपालैर्नमस्यमानं जन्मभूमिकैश्च बहुभिर्ज्ञातिसंबन्धिभिर्ब्राह्मणशतसहस्रैः परिवृतं पुरस्कृतं वैरोचनव्यूहालंकारगर्भकूटागाराभिमुखमागच्छन्तम् । दृष्ट्वा च तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो येन मैत्रेयो बोधिसत्त्वस्तेनाभिमुखो भूत्वा दूरत एव मैत्रेयस्य बोधिसत्त्वस्य सर्वशरीरेण प्रणिपतितः ॥

अथ खलु मैत्रेयो बोधिसत्त्वः सुधनं श्रेष्ठिदारकं व्यवलोक्य सर्वपर्षदो दक्षिणेन हस्तेनोपदर्श्य भूतैर्गुणैः संवर्णयन् गाथाभिरध्यभाषत–

पश्यथेमु सुविशुद्धआशयं
सुधनं दृढधनान आत्मजम् ।
एषमाणु वरबोधिचारिका-
मागतो मम समीपि पण्डितः ॥ ५६ ॥
स्वागतं ति कृपमैत्रसंभव
स्वागतं विपुलमैत्रमण्डला ।
स्वागतं प्रशमशान्तिलोचन
मा किलाम्यसि चरन्तु चारिकाम् ॥ ५७ ॥

एहि स्वागतु विशुद्धआशया
एहि स्वागतमखिन्नमानसा ।
एहि स्वागतमलीनइन्द्रिया
मा किलाम्यसि चरन्तु सूरत ॥ ५८ ॥

5 सर्वधर्मविचराय उत्थिता
सर्वसत्त्वविनयाय उत्सुका ।
सर्वमित्रभजनाय प्रस्थिता
स्वागतं ति अचला दृढव्रता ॥ ५९ ॥

स्वागतं शुभपथेन आगता
10 स्वागतं गुणपथे प्रतिष्ठिता ।
स्वागतं जिनपथेन प्रस्थिता
मा श्रमं किल समर्थस्य कश्चित् ॥ ६० ॥

एहि स्वागतु गुणेषु तन्मया
स्वागतं ति कुशलानि(भि)स्यन्दित (?) ।
15 साधु स्वागतमनन्तगोचरा
दर्शनं तव सुदुर्लभं जगे ॥ ६१ ॥

लाभालाभसमतुल्यमानसा
निन्ददुःखअयशोविवर्जिता ।
लोकधर्मिकमलोत्पलोपमा
20 साधु स्वागतमभ्रान्तमानसा ॥ ६२ ॥

मायशाठ्यविगता शुभाशय
मानदर्पविगता सुभाजन ।
क्रोधरोषविगता अनुव्रत
साधु ते दर्शनं सुदर्शनम् ॥ ६३ ॥

25 एहि सर्वदिशगोचरामुखा
एहि सर्वदिशकोशसंभवा ।
एहि सर्वजिनकोशवर्धना
स्वागतं ति अक्लिान्तमानसा ॥ ६४ ॥

एहि स्वागतु त्रियध्वगोचरा
30 धर्मधातुअधिमुक्तिमण्डला ।
सर्वबुद्धगुणगर्भसंभवा
स्वागतं ति अक्लिान्त सूरत ॥ ६५ ॥

एहि मञ्जुशिरिज्ञानपङ्कज
एहि मेघशिरितोयवर्धित।
एहि सर्वजिनपुत्रप्रेषित
दर्शयामि ति अनावृतां दिशम् ॥ ६६ ॥

पश्यथ प्रणिधिजालु कीदृशं 5
धर्मधातुस्फरणं अचिन्तियम्।
बोधिसत्त्वचरिमार्गकर्षणं
विस्तरन्तु सुधनो इहागतः ॥ ६७ ॥

एषमाणु सुगतान गोचरं
मार्गमाणु निरजान चारिकाम्। 10
पृच्छमान प्रणिधानसागरं
आगतो अयमखिन्नमानसः ॥ ६८ ॥

यत्र शिक्षित अतीत नायकाः
शिक्षिपेन्ति तथ ये अनागनाः।
तिष्ठता च सुगतान या चरी 15
पृच्छमाणु अयु तामिहागतः ॥ ६९ ॥

एति मित्र मम धर्मभाणकाः
सर्वधर्मप्रतिपत्तिदेशकाः।
बोधिसत्त्वचरिमार्गदेशका
एवचित्त अयमागतो इह ॥ ७० ॥ 20

बोधिसत्त्व मम बुद्धिवर्धिका
बुद्धपुत्र मम बोधिदायकाः।
एति मित्र मम बुद्धवर्णिता
एवचित्तकुशलो इहागतः ॥ ७१ ॥

मातृभूत जनकायिमे मम 25
धात्रिभूत गुणस्तन्यदायकाः।
बोधिअङ्गपरिपालकाः सदा
एति मित्र अहितान्निवारकाः ॥ ७२ ॥

वैद्यभूत जरमृत्युमोचकाः
शक्रभूत अमृताभिवर्षिकाः। 30
चन्द्रभूत शुभपूर्णमण्डलाः
सूर्यभूत शिवमार्गदर्शकाः ॥ ७३ ॥

एहि स्वागतु विशुद्धआशया
एहि स्वागतमखिन्नमानसा ।
एहि स्वागतमलीनइन्द्रिया
मा किलाम्यसि चरन्तु सूरत ॥ ५८ ॥
5 सर्वधर्मविचराय उत्थिता
सर्वसत्त्वविनयाय उत्सुका ।
सर्वमित्रभजनाय प्रस्थिता
स्वागत ति अचला दृढव्रता ॥ ५९ ॥
स्वागत शुभपथेन आगता
10 स्वागत गुणपथे प्रतिष्ठिता ।
स्वागत जिनपथेन प्रस्थिता
मा श्रम किल समर्थस्य कश्चित् ॥ ६० ॥
एहि स्वागतु गुणेषु तन्मया
स्वागत ति कुशलानि(भि)स्यन्दित (?) ।
15 साधु स्वागतमनन्तगोचरा
दर्शन तव सुदुर्लभ जगे ॥ ६१ ॥
लाभालाभसमतुल्यमानसा
निन्ददु खअयशोविवर्जिता ।
लोकधर्मिकमलोत्पलोपमा
20 साधु स्वागतमभ्रान्तमानसा ॥ ६२ ॥
मायशाठ्यविगता शुभाशय
मानदर्पविगता सुभाजन ।
क्रोधरोषविगता अनुन्नत
साधु ते दर्शन सुदर्शनम् ॥ ६३ ॥
25 एहि सर्वदिशगोचरामुखा
एहि सर्वदिशकोशसभवा ।
एहि सर्वजिनकोशवर्धना
स्वागत ति अकिलान्तमानसा ॥ ६४ ॥
एहि स्वागतु त्रियध्वगोचरा
30 धर्मधातुअधिमुक्तिमण्डना ।
सर्वबुद्धगुणगर्भसंभवा
स्वागत ति अकिलान्त सूरत ॥ ६५ ॥

एहि मञ्जुशिरिज्ञानपङ्कज
　एहि मेघशिरितोयवर्धित ।
एहि सर्वजिनपुत्रप्रेषित
　दर्शयामि ति अनावृतां दिशम् ॥ ६६ ॥
पश्यथ प्रणिधिजालु कीदृशं
　धर्मधातुस्फरणं अचिन्तियम् ।
बोधिसत्त्वचरिमार्गकर्षणं
　विस्तरन्तु सुधनो इहागतः ॥ ६७ ॥
एषमाणु सुगतान गोचरं
　मार्गमाणु विरजान चारिकाम् ।
पृच्छमान प्रणिधानसागरं
　आगतो अयमखिन्नमानसः ॥ ६८ ॥
यत्र शिक्षित अतीत नायकाः
　शिक्षिषेन्ति तथ ये अनागताः ।
तिष्ठतां च सुगतान या चरी
　पृच्छमाणु अयु तामिहागतः ॥ ६९ ॥
एति मित्र मम धर्मभाणकाः
　सर्वधर्मप्रतिपत्तिदेशकाः ।
बोधिसत्त्वचरिमार्गदेशका
　एवचित्त अयमागतो इह ॥ ७० ॥
बोधिसत्त्व मम बुद्धिवर्धिका
　बुद्धपुत्र मम बोधिदायकाः ।
एति मित्र मम बुद्धवर्णिता
　एवचित्तकुशलो इहागतः ॥ ७१ ॥
मातृभूत जनकायिमे मम
　धात्रिभूत गुणस्तन्यदायकाः ।
बोधिअङ्गपरिपालकाः सदा
　एति मित्र अहितान्निवारकाः ॥ ७२ ॥
वैद्यभूत जरमृत्युमोचकाः
　शक्रभूत अमृताभिवर्षिकाः ।
चन्द्रभूत शुभपूर्णमण्डलाः
　सूर्यभूत शिवमार्गदर्शकाः ॥ ७३ ॥

मेरुभूत सम मित्रशत्रुषु
सागरोपम अक्षोभ्यचेतसः ।
कर्णधारपरिपालकोपमा
एवचिन्ति सुधनो इहागतः ॥ ७४ ॥
5 शूरभूत अभयप्रदायकाः
सार्थवाह शरणं परायणम् ।
नायका मम सुखंददा इमे
एवचित्त अयु मित्र सेवते ॥ ७५ ॥
सर्वधर्मदिशासुदर्शकाः सदा
10 सर्वबुद्धगुणज्ञानदर्शकाः ।
सर्वदुर्गतिअपायशोधका
एति मित्र मम साधु दर्शकाः ॥ ७६ ॥
एति सर्वजिनकोशदायका
एति सर्वजिनगञ्जरक्षकाः ।
15 एति सर्वजिनगुह्यधारका
एव मित्र भजतेप पण्डितः ॥ ७७ ॥
ज्ञानसंपद अतो विशुध्यते
रूपभोगकुलजन्मसपदः ।
* * * * अतो न दुर्लभा
20 एवमाशय अयमिहागतः ॥ ७८ ॥
पश्यथा अयमुदारआशय
सेवमान इम मित्र पण्डितः ।
यादृशीं प्रतिजनेति सूरत
एव यूयमनुशिक्षथो सदा ॥ ७९ ॥
25 एष पूर्वशुभपुण्यहेतुना
दृष्टमञ्जुशिरि बोधिप्रस्थितः ।
अनुशास्ति अयु तस्य कुर्वतो
पश्यथा कयमटत्सखेदवान् ॥ ८० ॥
एष सर्वसुखसौख्य उज्झिय
30 उत्सृजित्व अमरोपमं गृहम् ।
धात्रिमातृपितृभोगविस्तरं
दासभूत इम मित्र सेवते ॥ ८१ ॥

धर्मधातुगगने महाप्रभो
बुद्धसूर्य समुदेष्यते अयम् ॥ ८९ ॥

मैत्रचन्दनसमानशीतलः
सर्वसत्त्वसमचित्त सुप्रभः।
शुक्लधर्मपरिपूर्णमण्डलो
बुद्धचन्द्र समुदेष्यते अयम् ॥ ९० ॥

आशये दृढतलप्रतिष्ठितो
बोधिचर्य अनुपूर्व उद्गतः।
सर्वधर्मरतनाकरो ह्ययं
ज्ञानसागरवरो भविष्यति ॥ ९१ ॥

बोधिचित्तभुजगेन्द्रसंभवो
धर्मधातुगगने समुद्गतः।
धर्ममेघयुगपत्प्रवर्षणे
सर्वशुक्लफलसस्यवर्धनम्[१] ॥ ९२ ॥

शुद्धवर्ति त्रिमल तमोहर
मैत्रस्नेहस्मृतिभाजन दृढम्।
बोधिचित्तविमलाग्निसुप्रभं
धर्मदीपमयु जालयिष्यति ॥ ९३ ॥

बोधिचित्तकललः कृपार्बुदो
मैत्रपेशि स्थिरनाशयो घनः।
बोधिअङ्गअनुपूर्वसंभवो
बुद्धगर्भु अयु संप्रवर्धते ॥ ९४ ॥

पुण्यगर्भमभिवर्धयिष्यति
ज्ञानगर्भमपि शोधयिष्यति।
ज्ञानगर्भु समुदिश्यते अयं
यादृशः प्रणिधिगर्भसंभवः ॥ ९५ ॥

ईदृशः करुणमैत्रवर्मितः
सत्त्वमोचनमती हिताशयः।
दुर्लभो जगि सदेवमानुषे
यादृशो अयु विशुद्धमानसः ॥ ९६ ॥

१ S बुद्धानाम् for वर्धनम्.

ईदृशाशयसुमूलसंस्थितो
　ईदृशो दृढप्रयोगवर्धितः ।
ईदृशाभिभवछादनप्रभो
　ज्ञानवृक्ष फलदः सुदुर्लभः ॥ ९६ ॥
एष गुणसंभवनार्थिकः　5
　सर्वधर्मपरिपृच्छनार्थिकः ।
सर्वसंशयविदारणार्थिकः
　सर्व मित्र भजते अतन्द्रितः ॥ ९७ ॥
एष मारकलिक्लेशसूदनो
　एष दृष्टिमलतृष्णशोधनः ।　10
एष सर्वजगमोक्षणोद्यतः
　एष ते सदविशेषपण्डितः ॥ ९८ ॥
एष दुर्गति विशोधयिष्यति
　एष स्वर्गमुपदर्शयिष्यति ।
मोक्षमार्गमुपनेष्यते जगत्　15
　यादृशे गुणपथे प्रतिष्ठितः ॥ ९९ ॥
एष सर्वगतिदुःखमोचको
　एष सर्वगतिसौख्यदायकः ।
एष सर्वभवपाशछेदनो
　भेष्यते भवगतीनिषूदनः ॥ १०० ॥　20
दृष्टिसंकट निमोचयिष्यति
　तृष्णजाललत छेदयिष्यति ।
नन्दिरागनुपशोधयिष्यति
　भेष्यते त्रिभवमार्गदर्शकः ॥ १०१ ॥
एष लोकशरणं परायणं　25
　एष सर्वजगति प्रभाकरः ।
नायकस्त्रिभुवने भविष्यति
　सर्वतो भवविभावकोविदः ॥ १०२ ॥
क्लेशसुप्तजनताविशोधकः
　कामपङ्कतरुतारको विदुः ।　30
संवसकपरिमोचको अय
　वन्धमोक्षकरणो भविष्यति ॥ १०३ ॥

धर्मधातुतलभेदभासनो
लोकधातुतलभेदशोधनः।
सर्वधर्मतलभेदपारगो
भेष्यसे सुधन प्रीतिमान् भव ॥ १०४ ॥

5 यादृशं तव प्रयोग सूरत
श्रद्ध यादृश तथा अनिन्दितः।
यादृशश्च गुणर्वास्तवाशयः
सर्व औप परिपूरयिष्यति ॥ १०५ ॥

सर्वबुद्ध नचिरेण द्रक्ष्यसि
10 सर्वक्षेत्र नचिरेण यास्यसि।
सर्वधर्म नचिरेण ज्ञास्यसि
तादृश ति शुभमात्मना कृतम् ॥ १०६ ॥

क्षेत्रसागर[1] निशोधयिष्यसे
सत्त्वसागर विमोचयिष्यसि।
15 चर्यसागर प्रपूरयिष्यसि
तादृशो * * प्रतिपत्तिसागर ॥ १०७ ॥

त्व भविष्यसि गुणान भाजन
त्व भविष्यसि शुभान सभव।
त्व भविष्यसि जिनोरसे समो
20 यादृश ति अधिमुक्तिमण्डलम् ॥ १०८ ॥

मारमण्डल[1] पराजित त्वया
कर्ममण्डल विशोधित च ते।
क्लेशमण्डल विशोधित त्वया
यादृश ति प्रणिधानमण्डलम् ॥ १०९ ॥

25 ज्ञानवर्तनि विशोधयिष्यसे
धर्मवर्तनि प्रभावयिष्यसि।
कर्मक्लेशदुखयन्त्रवर्तनिं
नोचिरेण विनिवर्तयिष्यसि ॥ ११० ॥

लोकचक्रभवचक्रसंश्रितं
30 पञ्चगण्डगतिचक्रमोहितम्।

---

१ B अप.

सर्वसत्त्वदुखचक्रच्छेदनं
 धर्मचक्रतरु वर्तयिष्यसि ॥ १११ ॥
बुद्धवंशमनुधारयिष्यसि
 धर्मवंश परिशोधयिष्यसि ।
संघवंश परिकर्षयिष्यसे                    5
 रत्नसंभवकरो भविष्यसि ॥ ११२ ॥
तृष्णजाल विनिवर्तयिष्यसे
 दृष्टिजालगहनं तथैव च ।
दुःखजाल जगु मोचयिष्यसे
 तादृशः प्रणिधिजालु शोभितः ॥ ११३ ॥                    10
सत्त्वधातु परिपाचयिष्यसे
 लोकधातु परिशोधयिष्यसि ।
ज्ञानधातुमुत्थापयिष्यसे
 आशयस्य तव धातु तादृशः ॥ ११४ ॥
सर्वसत्त्वहितप्रीतिनन्दनो                    15
 बोधिसत्त्वकुलवंशनन्दनः ।
सर्वबुद्धप्रणिधाननन्दनो
 मेष्यसे सुधन नन्दिवर्धनः ॥ ११५ ॥
सर्वसत्त्वगतिवासदर्शनः
 सर्वक्षेत्रप्रतिभासदर्शनः ।                    20
सर्वधर्मअवभासदर्शन-
 स्त्वं भविष्यसि जिनः सुदर्शनः ॥ ११६ ॥
धर्मधातुअवभासनप्रभः
 सर्वदुर्गतिशमंकरप्रभः ।
मेष्यसे त्रिभवदुःखशंकरः                    25
 * * * * * ॥ ११७ ॥
स्वर्गद्वारमुपदर्शयिष्यसे
 बुद्धद्वारु विवरिष्यसे जगे ।
मोक्षद्वारमुपनेष्यसे जगत्
 द्वारु तादृशु विशोधितं त्वया ॥ ११८ ॥                    30
मिथ्यमार्गं विनिवर्तयिष्यसे
 आर्यमार्गं जनतां विनेष्यसि ।

बोधिमार्ग तथ त्वं अनुद्भतो ·
मार्गसे दृढमते अतन्द्रितः ॥ ११९ ॥
त्वं भवार्णवगतान देहिनां
दुःखपारगमनाय उत्सुकम् ।
तारयिष्यसि जगद्भवार्णवा-
त्तादृशं भव महागुणार्णवः ॥ १२० ॥
क्लेशसागर विशोष्य देहिनां
ज्ञानसूर्यवररश्मिसागरैः ।
तान्निवेश्य प्रतिपत्तिसागरे
ज्ञानसागर प्रतिष्ठपेष्यसि ॥ १२१ ॥
बुद्धिसागर विवर्धयिष्यसि
चर्यसागर विशोधयिष्यसि ।
सर्वबुद्धप्रणिधानसागरं
नोचिरेण अवगाहयिष्यसि ॥ १२२ ॥
क्षेत्रसागर बहु प्रवेक्ष्यसि
द्रक्ष्यसे परिपसागरान् बहून् ।
बुद्धिसागरबलेन पण्डितः
* * * ॥ १२३ ॥
बुद्धमेघनयुतानि द्रक्ष्यसे
पूजमेघ विपुलां करिष्यसि ।
धर्ममेघनयुतानि श्रोष्यसि
तादृशा प्रणिधिमेघ कुर्वसि ॥ १२४ ॥
सर्वसत्त्वभवना स्फरिष्यसे
सर्वक्षेत्रभवनानि यास्यसि ।
सर्वबुद्धभवनं प्रवेक्ष्यसे
तादृशाय दिशाय प्रस्थितः ॥ १२५ ॥
त्वं समाधिभवनं प्रवेक्ष्यसे
त्वं विमोक्षभवनानि लप्स्यसे ।
* * * * *
धर्मधातुभवनप्रतिष्ठितः ॥ १२६ ॥
सर्वसत्त्वभवने उदेष्यसे
चन्द्रसूर्यप्रतिभाससादृशः ।

उद्गमिष्यसि जिनान संमुखं
   तादृशस्तव महापथोद्गमः ॥ १२७ ॥
त्वं चरिष्यसि नतः सुगोचरे
   सर्वलोकअनिकेतगोचरे ।
त्वं भविष्यसि प्रशान्तगोचरः 5
   तादृशस्तव अभिज्ञगोचरः ॥ १२८ ॥
इन्द्रजालतलभेदने विदुः
   'क्षेत्रजालतलभेद यावतः ।
नोचिरेण स्फरमाणु पश्यसे
   मारुतो व गगने असङ्गवान् ॥ १२९ ॥ 10
धर्मधातुप्रसरं प्रवेश्यसे
   लोकधातुप्रसरान् गमिष्यसे ।
सर्वबुद्धप्रसरांस्त्रियध्वगान्
   द्रक्ष्यसे सुधन प्रीति विन्दहि ॥ १३० ॥
मैव खेद जनयाहि सूरता 15
   तुष्टि विन्दि विपुलां निरामिषम् ।
येन ते इमु विमोक्षु ईदृशो
   दृष्टु पश्यसि च भूयु द्रक्ष्यसे ॥ १३१ ॥
त्वं शुभाजन गुणान सूधना
   * * * * * जिनानुशास्तिषु । 20
त्वं समर्थ इमु धारितुं नयं
   तेन पश्यसि इदं विकुर्वितम् ॥ १३२ ॥
येष कल्पनयुतैः सुदुर्लभं
   दर्शनं कुतु गुणप्रभावन ।
तेहि दृष्ट चरतो सुचारिकां 25
   बुद्धपुत्र अनिकेतगोचराः ॥ १३३ ॥
लाभ भूय विपुला अचिन्तिया
   सागतं च तव मानुषो भव ।
येन मञ्जुशिरि दृष्ट संमुख-
   मीदृशं श्रुतु गुणान भाजनम् ॥ १३४ ॥ 30
सर्वदुर्गनिपता निर्धना:
   सर्वअक्षणअपायशोधकाः ।

दुःखवर्म त्वयि सर्व उज्झिता
सर्वखेद च विवर्जिता मत्र ॥ १३५ ॥
बालभूमि विनिवर्तिता त्वया
बोधिसत्त्वगुणभूमिसुस्थित. ।
5 ज्ञानभूमि परिपूर्य उत्तमा
बुद्धभूमि नचिरेण लप्स्यसे ॥ १३६ ॥
बोधिसत्त्वचरि सागरोपमा
बुद्धज्ञाननिधि आकाशसादृशम् ।
तत्प्रमाणप्रणिधानसागरा
10 एष तानि भव तुष्टमानस ॥ १३७ ॥
ईदृशो अपरिखिन्नइन्द्रिया
आशयदृढप्रयोगनिश्चिता ।
ये भजन्ति इम मित्र ईदृशा
ते भवन्ति नचिरेण नायका ॥ १३८ ॥
15 दृष्ट सत्त्व विनयगता बहु
बोधिसत्त्वचरि चित्र यावत ।
मा तु जातु निमतिं करिष्यसे
सर्वधर्मसुख बोधिचारिकम् ॥ १३९ ॥
पुण्यसपद अचिन्तिया तव
20 अर्थधर्मगुणश्रद्धसपद ।
येन सपद इमा त्वमीदृशी
बुद्धपुत्र इह अद्य पश्यसि ॥ १४० ॥
पश्य लाभ तव कीदृशो महान्
पश्यतो जिनसुता निरन्तरम् ।
25 दर्शयन्ति प्रणिधी स्वकस्वका-
स्त्व च तानखिल्तोऽनुगच्छसि ॥ १४१ ॥
दुर्लभा भवशतैरपीदृशा
बोधिसत्त्वचरितेषु भाजना ।
तेन चो जिनसुता निरन्तर
30 ते विमोक्षनय दर्शयन्ति माम् ॥ १४२ ॥
कल्पकोटिनियुतानि ते जना
सवसन्ति सुगतात्मजै सह ।

तेऽपि तेषु न विदन्ति गोचरं
नाम तैर्हि गुणभाजनं कृतम् ॥ १४३ ॥
त्वं शृणोषि इम ईदृशं नयं
पश्यसे च * सुदुर्लभं जगे ।
बोधिसत्त्वमहतां विकुर्वितं
सूधना भव अप्रमानसः ॥ १४४ ॥
सर्वबुद्ध समन्वाहरन्ति ते
बोधिसत्त्व तव संग्रहस्थिताः ।
त्वं च तेष अनुशासनिस्थितः
साधु सूधन सुजीवितं तव ॥ १४५ ॥
बोधिसत्त्वकुलधर्मि वर्तसे
शिक्षसे जिनसुतान त्वं गुणैः ।
भेष्यसे सुगतवंशवर्धनः
प्रीति विन्दहि उदार सुधना ॥ १४६ ॥
सर्वबुद्ध पितरस्तवासमा
बोधिसत्त्व तव सर्वि भ्रातरः ।
बोधिअङ्ग तव सर्वि ज्ञातयः
त्वं सुजातु सुगतान ओरसः ॥ १४७ ॥
धर्मराजकुलवंशधारिणो
बोधिसत्त्वकुलवंशवर्धनः ।
धर्मराजमचिरेण लप्स्यसे
सूधना तुष्ट भव प्रीणितेन्द्रियः ॥ १४८ ॥
सर्वबुद्धमभिषेकमुत्तमं
नोचिरेण * * * लप्स्यमेऽद्भुतम् ।
भेष्यसेऽसमसमार्जितौरसैः
तादृशो भव सभागतो भव ॥ १४९ ॥
यादृशं वपति बीज यो नरो
तादृशं लभति तस्य सो फलम् ।
प्रीति विन्द विपुलामचिन्तियां
एष तेऽद्य सम्यानशाम्यनम् ॥ १५० ॥

---

१ S भ्रातरः.

चीर्ण कल्पनयुतान ये चरी
बोधिसत्त्वनयुता अचिन्तिया।
तेऽपि संपद लभन्ति नेदृशी-
मेकजन्मि प्रतिलब्ध या त्वया॥ १५१॥
5 सर्वमेतदिह मुक्तितः फलं
आशयस्य दृढवीर्यताय च।
यस्य चारिक भवेदियं प्रिया
सो धरेय सुधनस्य या चरी॥ १५२॥
सर्वचर्य प्रणिधानसंभवा
10 सर्वधर्म अधिमुक्तिसंभवा।
सुधन एव समुदानितास्त्वया
निलमेप हि विशेषचारिका॥ १५३॥
यातुका सुजगचेतनोद्भवा-
स्तातुको भवति चारिसंभवः।
15 यातुका प्रणिधिज्ञानगोचर-
स्तातुका स्फरति बोधिचारिका॥ १५४॥
एष मोतु तव दर्शितो तया
भद्रनामचरियाय सूधन।
एत ज्ञात्व स कदाचि मेष्यते
20 सेवमान इह मित्र तन्मयः॥ १५५॥
कायकोटि स्मर पूर्विका त्वया
कामहेतु क्षयिता निरर्थकम्।
अद्य बोधिय * मार्गणो ह्ययं
काय तर्जतु व्रतेन सुव्रतः॥ १५६॥
25 कल्पकोटि अतिनामितास्त्वया
सर्वदुःखमनुभूतु संस्कृते।
गङ्गवालिकसमा विरागिता
बुद्ध नो च श्रुत ईदृशो नयः॥ १५७॥
सो इदानि क्षण लब्ध मानुषो
30 बुद्धपादु इमु मित्र ईदृशाः।
श्रूयते च वरबोधिचारिका
विशुद्धि न भविष्यते कथम्॥ १५८॥

भोति भूय सुगतान संभवो
मित्रधर्मश्रवणं च श्रूयते ।
नो च श्रूयति अयं पुनर्नयो
आशयो यदि न भोति शोधितः ॥ १५९ ॥
तेन श्रद्धमधिमुक्तिआशयं
संजनित्व गुरुगौरवं परम् ।
काङ्क्षदृष्टिपरिखेदवर्जितो
भूय भूय नयमीदृशं शृणु ॥ १६० ॥
तेष लाभ परमा अचिन्तिया-
स्तेष मानुषभवः सुआगतः ।
यैरियं चरि प्रवेशमीदृशं
श्रुत्व एव प्रणिधी भिनिर्हिता ॥ १६१ ॥
तस्य सर्वि सुगता न दुर्लभा
तस्य सर्वि जिनपुत्र नारतः ।
तस्य बोधयि न भूयु संशयो
येन एव अधिमुक्ति शोधिता ॥ १६२ ॥
तेन सर्वि विनया न वर्जिताः
तेन सर्वदुखधर्म उज्झिताः ।
तेन सर्वगुणसंग्रहः कृतः
यो इमं नयु प्रविष्ट ईदृशम् ॥ १६३ ॥
नोचिरेण इमु कायु उज्झिया
बुद्धक्षेत्र परिशुद्ध यास्यसि ।
बोधिसत्त्वभवनं प्रवेक्ष्यसि
द्रक्ष्यसे दशदिशे तथागतान् ॥ १६४ ॥
पूर्वहेतुघन तुभ्य सूधन
प्रत्युत्पन्न अधिमुक्ति निश्चिता ।
मित्र सेवसि विशेषअर्थिकः
तेन वर्धयि जले यथोत्पलम् ॥ १६५ ॥
सर्वमित्रअभिराधनाशया
सर्वबुद्धआरागणाशयाः ।
सर्वधर्मपरिपृच्छनाशया
उत्थिहो क्लिमयो न सुव्रता ॥ १६६ ॥

सूधनो वरप्रहृष्टमानसो
मैत्रकस्य क्षिपि तानि हर्षितः।
तस्य शीर्षु परिमार्जते तदा
मैत्रनाथ सुधनं च भाषते ॥ १७५ ॥
साधु साधु जिनपुत्र सूधन 5
यस्य ते अपरिखेद ईदृशः।
त्वं भविष्यसि गुणान भाजनं
मञ्जुघोषु यथ यादृशो व हम् ॥ १७६ ॥
श्रुत्व सूधन उदानुदानयि
दुर्लभा भवशतेषु ईदृशाः। 10
मित्र येभिरिह मे समागमः
साधु आगमनमद्य मे इह ॥ १७७ ॥
साधु सत्त्वगुणपारमिंगतो
मञ्जुघोष भवतोऽनुभावतः।
मित्र लब्ध मय दुर्लभा इमे 15
मोतु मे लघु समागमस्त्वयि ॥ १७८ ॥

अथ खलु सुधनः श्रेष्ठिदारको मैत्रेयस्य बोधिसत्त्वस्य पुरतः प्राञ्जलिः स्थित्वा एवमाह—अहमार्य अनुत्तराया सम्यक्संबोधावभिसंप्रस्थित.। न च जानामि कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्। आर्यमैत्रेयो व्याकृतः सर्वतथागतैरेकजातिप्रतिबद्धतया अनुत्तरायां सम्यक्संबोधौ। यश्चैकजातिप्रतिबद्धोऽनुत्तरायां सम्यक्संबोधौ, स समतिक्रान्त. 20 सर्वबोधिसत्त्वव्यवस्थानानि, सोऽवक्रान्तो बोधिसत्त्वनियामम्। तेन परिपूरिताः सर्वपारमिताः। सोऽवतीर्णः सर्वाशाक्षान्तिमुखानि। तेन प्रतिलब्धाः सर्वबोधिसत्त्वभूमयः। स विक्रीडितः सर्वविमोक्षमुखेषु। तेन परिनिष्पादिताः सर्वसमाधयः। स गतिंगतः सर्वबोधिसत्त्वगतिषु। तेन प्रतिलब्धाः सर्वधारणीप्रतिभाना आलोकनयाः। स वशिप्राप्तः सर्वबोधिसत्त्ववशितासु। तेन समुपार्जिताः सर्वबोधिसत्त्वसंभाराः। स विक्रीडितः प्रज्ञोपायकौशल्यनयेषु। तेनोत्पा- 25 दिता महाभिज्ञाविद्याज्ञानालोकनयाः। स निर्यातः सर्वशिक्षासु। तेन परिशोधिताः सर्वबोधिसत्त्वचर्याः। तेनाभिनिर्हृतानि सर्वप्रणिधाननिर्याणमुखानि। तेन प्रतीष्टानि सर्वतथागतव्याकरणानि। सोऽभिज्ञः सर्वयाननिर्याणमुखानाम्। तेन संधारितानि सर्वतथाधिष्ठानानि। तेन संगृहीता सर्वबुद्धबोधिः। तेनाधारिताः सर्वतथागतकोशाः। स गञ्जधरः सर्वतथागतगुह्यानाम्। स मूर्धप्राप्त. सर्वबोधिसत्त्वगुह्यमण्डलस्य। स शूरः सर्वक्लेशरणशि- 30 विक्षोभितासु। स दैशिकः संसाराटवीप्राप्तानाम्। स वैद्यः क्लेशातुराणाम्। सोऽग्रः सर्वसत्त्वानाम्। स इन्द्र., स ज्येष्ठ. सर्वार्यपुद्गलानाम्। स उत्तम. सर्वार्यश्रावकप्रत्येकबुद्धा-

नाम्। स कर्णधारः संसारसागरप्रपातानाम्। तेनाकर्षितं महत्त्वसत्त्वविनयोपायजालम्। तेन व्यवलोकितानि परिपक्वजगदिन्द्रियाणि। स संप्रयुक्तः सर्वसत्त्वानाम्, परिणामनयुक्तः सर्वबोधिसत्त्वानाम्। स समायनप्रयुक्तः सर्वबोधिसत्त्वविनयासु। स संस्थितः सर्वतथागतपर्षन्मण्डलेषु। स प्रतिभासप्राप्तः सर्वजगद्भवनेषु। सोऽनुपश्लिष्टः सर्वलोकधर्मे। स
5 समतिक्रान्तः सर्वमारविषयेभ्यः। सोऽनुगतः सर्वबुद्धविषयम्। सोऽवतरणप्राप्तः सर्वबोधिसत्त्वविषये। स पूजाप्रयुक्तः सर्वतथागतानाम्। स एकोतीभावगतः सर्वबुद्धधर्मेषु। तस्यार्य बद्धोऽभिषेकपट्टः। तेनाध्यासितं महाधर्मराज्यम्। सोऽभिषिक्तः सर्वज्ञज्ञानविषये। तत प्रभवः सर्वबुद्धधर्माणाम्। तस्य बोधिप्राप्तः सर्वज्ञज्ञानाधिपत्यम्। तद्वदतु मे आर्य-कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्, यथा प्रतिपद्यमानो
10 बोधिसत्त्वो बोधिमधिगच्छति, सर्वबुद्धधर्मान् प्रतिमानयति, यथानिमन्त्रितं सत्त्वधातुमुत्तारयति, यथाभिरूढां प्रतिज्ञां निस्तारयति, महाबोधिचर्यारम्भं समाश्वासयति, सदेवकं लोकं न विसंवदति, आत्मना सर्वबुद्धधर्मसंधानं व्यवच्छिनत्ति। बुद्धवंशमशून्यीकरोति बोधिसत्त्वकुलम्। संधारयति तथागतनेत्रीम्॥

अथ खलु मैत्रेयो बोधिसत्त्वः सर्वं तत्पर्षन्मण्डलमवलोक्य सुधनं श्रेष्ठिदारकमुपदर्श
15 यन्नेवमाह-पश्यथ कुलपुत्रा इमं श्रेष्ठिपुत्रम्, योऽयं मां बोधिसत्त्वचर्यागुणपरिनिष्पत्तिं परिपृच्छति। एष मार्षा श्रेष्ठिदारकः अनेन वीर्यारम्भेण, अनया अर्थिकतया, एतेन च्छन्दसमादानेन, एतया दृढाशयतया, अनिवर्त्यवीर्यतया, एतया बुद्धधर्मातृप्ततया, एतया विशेषपरिमार्गणतया, एतया दीप्तशिरश्चैलोपमतया, एतया कल्याणमित्रदर्शनकामतया, एतया कल्याणमित्रपर्युपासनापरिखेदतया सर्वकल्याणमित्राणि परिमार्गमाण
20 परिपृच्छन् पर्युपासीनो मञ्जुश्रिया कुमारभूतेन संप्रेषितो धन्याकरान्नगरादुपादाय सर्वदक्षिणापथमटन् दशोत्तरं कल्याणमित्रशतं परिपृच्छन् यावन्ममान्तिकमनुप्राप्तः सर्वपरिखेदविगतेनाध्याशयेन। दुर्लभाः कुलपुत्रा एवंरूपाणां महायानसंप्रस्थितानां महाप्रतिज्ञासमारूढानां महारम्भव्यवसितमानसानां महाकरुणासंनद्धगात्राणां महामैत्रीसत्त्वपरित्राणमतीनां महावीर्यपारमितोद्युक्तानां महासत्त्वसार्थपरिपालनाभियुक्तानां महासंसार
25 सागरसत्त्वतारणप्रतिपन्नानां सर्वज्ञतामार्गसंप्रस्थितानां महाधर्मनौसमुदानयनोद्युक्तानां महाधर्मरत्नपुण्यसमुदानयनकृतव्यवसायानां महाधर्मयज्ञसमारोपचयोद्युक्तानां नामधेयश्रवणं वा रूपकायदर्शनं वा गोचरसंवासो वा चर्यासमागता वा। तत्कस्य हेतोः? एष हि कुलपुत्राः सत्पुरुषः सर्वजगत्परित्राणाय अभ्युत्थितः, सर्वदुःखसत्त्वपरिमोचनतायै सर्वदुर्गतिसमुच्छोषणाय सर्वाक्षणविनिवर्तनाय सर्वविषममार्गपरिवर्तनतायै सर्वाज्ञानतमोऽन्धकार
30 विधमनतायै सर्वसंसारकान्तारसमतिक्रमणतायै सर्वगतिचक्रविनिवर्तनतायै सर्वमारविषयसमतिक्रमणतायै सर्वनिकेतस्थानोच्चलनतायै सर्वान्यतीर्थ्यचोदनतायै कामपङ्कसमुद्धरणताय नन्दीरागप्रहाणाय दृष्टिबन्धनविहारणाय सत्कायाभिष्वङ्गविनिवर्तनतायै संज्ञापाशसमुच्छेद

नताये विपर्यासपथविनिवर्तनतायै अनुशल्यसमावृहणतायै निवरणकपाटनिर्भेदनतायै आवरणपर्वतविकिरणतायै तृष्णाजालोद्धरणतायै अविद्यासयोजनविश्लेषकरणतायै भवोद्योत-करणतायै मायाशाठ्यप्रहाणाय चित्तकालुष्यप्रसादनाय सशयविमतिविलेखनसमुद्धरणतायै अज्ञानमहौघोत्तरणतायै सर्वससारदोषविजुगुप्सनतायै प्रतिपन्न ॥

एप हि कुलपुत्रा सपुरुप सत्त्वाना चतुरोघोत्तरणतायै महादान महाधर्मनाव ५ समुदानेतुकामो दृष्टिपङ्कनिमग्नाना महाधर्मसेतु स्थापयितुकामो मोहान्धकारप्राप्ताना ज्ञानालोक कर्तुकाम ससारकान्तारप्रनष्टानामार्यमार्ग सदर्शयितुकाम महाक्लेशव्याधिप्रपीडिताना धर्म भैषज्य प्रदातुकामो जातिजरामरणोपद्रुतानाममृतधातु दातुकाम त्रिविधाग्निसप्रदीप्ताना शमथसलिलेन प्रह्लादयितुकाम शोकपरिदेवदु खदौर्मनस्योपायासससप्ताना महाश्वास दातु कामो भवचारकावरुद्धाना ज्ञानप्रहाण दातुकामो दृष्टिबन्धनबद्धाना प्रज्ञाशस्त्रमुपसहर्तु १० काम त्रैधातुकनगरावरुद्धाना मोक्षद्वार दर्शयितुकाम त्रैधातुकनगरावरुद्धाना मुक्तिद्वार दर्श यितुकामे अक्षेमदिगभिमुखाना क्षेमा दिशमुपदर्शयितुकाम क्लेशसस्कारोपद्रुताना महाश्वास दातुकामो दुर्गतिप्रपातभयभीताना हस्तालम्ब दातुकाम स्कन्धवधकप्रघातिताना निर्वाण नगरमुपदर्शयितुकामो धात्वुरगपरिवृताना नि सरणमाख्यातुकाम आयतनशून्यग्रामसनिश्रि ताना प्रज्ञालोकेन निष्काशयितुकाम कुतीर्थप्रतिपन्नान् सम्यक्तीर्थमवतारयितुकाम अमित्र- १५ हस्तगताना भूतकल्याणमित्राणि दर्शयितुकामो बाह्यधर्मगोचराभिरतानामार्यधर्मेषु प्रतिष्ठाप-यितुकाम ससारपुराभिरतानुच्चाल्य सर्वज्ञतापुर प्रवेशयितुकाम ॥

स एप कुलपुत्रा सपुरुप एव सत्त्वपरित्राणाय अप्रतिप्रस्रब्धो बोधिचित्तोत्पाद-विशुद्धि परिमार्गमाणोऽयमपरिखिन्नो महायानसमुदानयाय, अपरितृप्त सर्वधर्ममेघपाने, निरवोत्सुक सर्वसभारपरिपूरणाय, अनिक्षिप्तधुर सर्वधर्ममुखपर्यवदापनाय, असश्रितवीर्य २० सर्वबोधिसत्त्वचरणताये, अनिवर्तप्रयोग सर्वप्रणिधानाभिनिर्हाराय, अवितृप्त सर्वकल्याण मित्रदर्शनेन, अक्लान्तकाय सर्वकल्याणमित्रपर्युपासनेन, प्रदक्षिणग्राही सर्वकल्याणमित्राव-वादानुशासनीषु ॥

दुर्लभा कुलपुत्रास्ते सत्त्वा सर्वलोके, येऽनुत्तरायां सम्यक्सबोधौ प्रणिदधति । अतस्ते दुर्लभतरा सत्त्वा, येऽनुत्तरा सम्यक्सबोधिमभिसप्रस्थिता । ईदृशेन वीर्यारम्भ २५ प्रयोगेन बुद्धधर्मान् समुदानयन्ति । ईदृशया तीव्रच्छन्दिकतया बोधिसत्त्वमार्ग पर्येषन्ते । ईदृशया अर्थिकतया बोधिसत्त्वचर्या परिशोधयन्ति । ईदृशेन श्रमेण कल्याणमित्राणि पर्युपासते । ईदृशया दीर्घशिरश्चैलोपमनया कल्याणमित्राज्ञान न विलोमयन्ति । ईदृशया दृढाध्याशयप्रतिपत्त्या कल्याणमित्रानुशासनीषु प्रतिपद्यन्ते । ईदृशया प्रदक्षिणग्राहितया सर्वबोध्यङ्गानि समार्जयन्ति । ईदृशया सर्वलाभसत्कारश्लोकानर्थिकतया बोधिसत्त्वाध्याशय ३०

१ S om अविद्या तायै २ S महापथार° ३ S °मरण्योद्रुताना ४ S प्रनष्ट°. ५ S om. भैषा ज्यम

धातुमविक्षोपक्रियया ईदृश्या गृहभोगकामरतिसुखमातापितृज्ञातिसर्वसत्त्वानपेक्षपरित्यागतया बोधिसत्त्वमहायानान् पर्येषन्ते। ईदृश्या कायजीवितनिरपेक्षतया सर्वज्ञतामभिलषन्ते। न हि कुलपुत्रास्तावमन्ये बोधिसत्त्वा कल्पकोटीनियुतशतसहस्रैर्बोधिसत्त्वचर्याप्रणिधिपरिपूरिमधिगमिष्यन्ते बुद्धबोधौ वसन्तो भविष्यन्ति बुद्धक्षेत्रपरिशुद्धौ वा, सत्त्वपरिपाकविनये वा,
5 धर्मधातुज्ञानप्रवेशे वा, पारमितासमुदागमे वा, चर्याजालप्रविस्तारे वा, प्रणिधानाभिनिर्हारपरिपूर्यां वा, मारकर्मसमतिक्रमणे वा, कल्याणमित्रारागणे वा, सर्वबोधिसत्त्वचर्यासमुदानयपरिशोधने वा, समन्तभद्रबोधिसत्त्वचर्याभिनिर्हारवलपरिनिष्पत्तौ वा समुदागमिष्यन्ति, यदेषोऽनेन एकजन्मप्रतिलम्भेन अधिगमिष्यति॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्व सुधनस्य श्रेष्ठिदारकस्य भूतगुणवर्णकीर्तनं
10 कृत्वा तदारम्बणं च प्राणिशतसहस्राणां बोध्यध्याशयं दृढीकृत्य सुधनं श्रेष्ठिदारकमेतदवोचत्-साधु साधु कुलपुत्र, येन ते सर्वलोकहितसुखाय सर्वसत्त्वधातुपरित्राणाय सर्वबुद्धधर्मप्रतिलम्भाय अनुत्तराया सम्यक्संबोधौ चित्तमुत्पादितम्। सुलब्धास्ते कुलपुत्र लाभा, स्वागतश्च त्व मनुष्यप्रतिलम्भ। सुजीवितं ते जीवलोकेषु। आराधितश्च ते बुद्धोत्पाद। सुदृष्टश्च ते मञ्जुश्री कल्याणमित्रम्। सुभाजनता च ते सर्वोत्तस्य। स्वभिष्यन्दितश्च त्व कुशलमूलै।
15 सूपस्तब्धश्च शुक्लधर्मै। सुविशोधिता च ते उदाराधिमुक्तिकल्याणाध्याशयता। समन्वाहृतश्चासि सर्वबुद्धै। सुपरिगृहीतश्च त्व कुलपुत्र कल्याणमित्रै, येन तेऽध्याशयेन अनुत्तराया सम्यक्संबोधौ चित्तमुत्पादितम्। तत्कस्य हेतो [1] बोधिचित्तं हि कुलपुत्र बीजभूत सर्वबुद्धधर्माणाम्। क्षेत्रभूत सर्वजगच्छुक्लधर्मविरोहणतया, धरणिभूत सर्वलोकप्रतिशरणतया, वारिभूत सर्वक्लेशमलनिर्धावनतया, वायुभूत सर्वलोकानिकेततया, अग्निभूत सर्वदृष्ट्युपादान
20 कक्षनिर्दहनतया, सूर्यभूत सर्वसत्त्वभवनावभासनतया, चन्द्रभूत शुक्लधर्ममण्डलपरिपूरणतया, प्रदीपभूत धर्मालोककरणतया, चक्षुर्भूत समविषमसंदर्शनतया, मार्गभूत सर्वज्ञतानगरप्रवेशनतया, तीर्थभूत कुतीर्थविवर्जनतया, यानभूत सर्वबोधिसत्त्वाभिरोहणतया, द्वारभूत सर्वबोधिसत्त्वचर्यामुखप्रवेशनतया, विमानभूत समाधिभावनाध्यासनतया, उद्यानभूत धर्मरत्यनुभावनतया, लयनभूत सर्वजगत्परित्राणतया, प्रतिशरणभूत सर्वलोकहितवहनतया,
25 निश्रयभूत सर्वबोधिसत्त्वचरणतया, पितृभूत सर्वबोधिसत्त्वारक्षणतया, जनयित्रीभूत सर्वसत्त्वानाम्, धात्रीभूत सर्वत परिपालनतया, राजभूत सर्वशैक्षाशैक्षप्रत्येकबुद्धचित्ताभिभवनतया, अधिपतिभूत सर्वप्रणिधानविशिष्टतया, महासागरभूत सर्वगुणरत्नसमवसरणतया, महामेरुभूत सर्वसत्त्वसमचित्ततया, चक्रवालभूत सर्वलोकप्रतिशरणतया, हिमवद्भूत ज्ञानौषधिविवर्धनतया, गन्धमादनभूत सर्वगुणगन्धाश्रयतया, गगनभूत महा
30 गुणविस्तीर्णतया, पद्मभूत सर्वलोकधर्मानुपलिप्ततया, नागभूत दान्ताजानेयतया, आजानेयाश्वभूत सर्वखटुङ्कताविगततया, सारथिभूत महायानप्रतिलयनपूर्वंगमनतया, भैषज्यभूत

[1] B सुदृष्टश्च. [2] B om नागभूतं दान्ताजानेयतया

क्लेशव्याधिचिकित्सनतया, पातालभूत सर्वकुशलधर्मपर्यवदानकरणतया, वज्रभूत सर्वधर्मनिर्वेधनतया, गन्धकरण्डकभूत गुणगन्धकरणतया, महापुष्पभूत सर्वलोकाभिरुचितदर्शनतया, हिमचन्दनभूत रागसन्तापप्रह्लादनतया, कलापभूत सर्वधर्मधातुस्फरणतया, सुदर्शनमहाभैषज्यराजभूत सर्वक्लेशव्याधिनिर्घातनतया, निगमभेषज्यभूत सर्वानुशयशल्यसमुद्घातनतया, इन्द्रभूत सर्वेन्द्रियाधिपतेयतया, वैश्रवणभूत सर्वदारिद्र्यसमुच्छेदनतया, श्रीभूत सर्वगुणालङ्कारतया, विभूषणभूत सर्वबोधिसत्त्वोपशोभनतया, कल्पोदाहाग्निभूत सर्वदुष्कृतनिर्दहनतया, अनिर्वृत्तमूलमहाभैषज्यराजभूत सर्वबुद्धधर्मविवर्धनतया, नागमणिभूत सर्वक्लेशविषनिवर्तनतया, उदकप्रसादमणिरत्नभूत सर्वकालुष्यापनयनतया, चिन्तामणिराजभूत सर्वार्थसंसाधनतया, भद्रघटभूत सर्वाभिप्रायपरिपूरणतया, कामददवृक्षभूत सर्वगुणालङ्काराभिप्रवर्षणतया, हंसलक्षणवस्त्रभूत सर्वसंसारदोषासंसृष्टतया, कर्पासतन्तुभूत प्रकृतिप्रभास्वरतया, लाङ्गलभूत सत्त्वाशयक्षेत्रविशोधनतया, नाराचभूत सत्कायधर्मनिस्ताडनतया, बाणभूत दुःखलक्ष्यनिर्वेधनतया, शक्तिभूत क्लेशशत्रुविजयाय, वर्मभूतमयोनिशोमनस्कारसंछादनतया, खड्गभूत क्लेशशिरःप्रपातनतया, असिपत्रभूत मानमददर्पसंनाहच्छेदनतया, क्षुरप्रभूतमनुशयधर्मनिर्वेधनतया, शूरध्वजभूत मानध्वजप्रपातनतया, शस्त्रभूतमज्ञानतरुप्रपातनतया, कुठारभूत दुःखवृक्षसंछेदनतया, प्रहरणभूत सर्वोपद्रवपरित्राणतया, हस्तभूत पारमिताशरीरपरिपालनतया, चरणभूत सर्वगुणज्ञानप्रतिष्ठानतया, शलाकीभूतमविद्याकोशपटलपरिशोधनतया, आवृहणभूत सत्कायशल्यसमावृहणतया, एषणीभूतमनुशयकण्टककर्षणतया, मित्रभूत संसारबन्धनपरिमोक्षणतया, द्रव्यभूत सर्वानर्थप्रतिबाधनतया, शास्तृभूत सर्वबोधिसत्त्वचर्यानिर्याणपयाभिज्ञतया, निधानभूतमक्षयपुण्यतया, उत्सभूतमक्षयज्ञानतया, आदर्शमण्डलभूत सर्वधर्ममुखप्रतिभाससंदर्शनतया, पुण्डरीकभूतमनानिलतया, महानदीभूत पारमितासंग्रहवस्तुस्रोतःप्रवहनतया, महाभुजगेन्द्रभूत धर्ममेघाभिप्रवर्षणतया, जीवितेन्द्रियभूत सर्वबोधिसत्त्वमहाकरुणासंधारणतया, अमृतभूतममरधातुसंप्रापणतया, समन्तपाशजालभूत सर्वविनेयसत्त्वसंग्रहाकर्षणतया, गन्धकरण्डभूत सर्वगुणगन्धाधारणतया, अगदभूतमसन्ताऽरोग्यकरणतया, प्रतिविषभूत कामरतिविषनिर्विषीकरणतया, मन्त्रधारणीभूत सर्वायोनिशोविषपर्यादानतया, वातमण्डलीभूत सर्वावरणनिवरणव्यूहणतया, रत्नद्वीपभूत सर्वबोधिपक्ष्यधर्मरत्नाकरतया, गोत्रभूत सर्वशुक्लधर्मसमाजनतया, आकरभूत सर्वगुणधर्मायद्वारतया, पत्तनभूत सर्वबोधिसत्त्ववणिक्समवसरणतया, रसधातुभूत सर्वकर्मक्लेशावरणसंशोधनतया, मधुकल्पभूत सर्वज्ञतासंभारपरिपूरणतया, मार्गभूत सर्वबोधिसत्त्वसर्वज्ञतापुरोपगमनतया, भाजनभूत सर्वशुक्लधर्मसंधारणतया, वृष्टिभूत क्लेशरजःप्रशमनतया, प्रतिष्ठानभूत सर्वबोधिसत्त्वप्रस्थाननिर्देशनतया, अयस्कान्तभूत श्रावकविमुक्त्यसंक्लेशणतया, वैडूर्यभूत स्वभावविमलतया, इन्द्रनीलभूत सर्वश्रावकप्रत्येकबुद्धमर्तगोत्रज्ञानपर्यादानाभिभवनतया, यामभेरीभूत क्लेश-

१ S नाराचभूत २ S om प्रहरणभूत° सर्वगुणज्ञानप्रतिष्ठानतया

प्रसुप्तसत्त्वप्रबोधनतया, प्रसन्नोदकभूतमनाविलतया, जाम्बूनदसुवर्णालंकारभूत सर्वसंस्कृता वचरकुशलमूलोपचयजिह्मीकरणतया, महाशैलेन्द्रराजभूत सर्वत्रैलोक्याभ्युत्ततया, त्राणभूत शरणगतापरित्यागितया, अर्थभूतमर्थप्रतिग्रहनतया, चित्तभूत हृदयसंतुष्टिकरणतया, यज्ञोपकरणभूत सर्वजगत्संतर्पणतया, बुद्धिभूत सर्वजगच्चित्तज्येष्ठश्रेष्ठतया, निधानभूत सर्व-
5 बुद्धधर्मोद्ग्रहणतया, उद्दानभूत सर्वबोधिसत्त्वचर्याप्रणिधानसंग्रहणतया, पालकभूत सर्वलोकानुपालनतया, आरक्षकभूत सर्वपापविनिवर्तनतया, इन्द्रजालभूत क्लेशासुराकर्षणतया, वरुणपाशभूत विनेयाकर्षणतया, इन्द्राग्निभूत सर्ववासनानुशयक्लेशनिर्दहनतया, चैत्यभूत सदेवमानुषासुरस्य लोकस्य। इति हि कुलपुत्र बोधिसत्त्वश्चान्यैश्चाप्रमाणैर्गुणविशेषैः समन्वागतः । संक्षिप्तेन कुलपुत्र यावन्तः सर्वबुद्धधर्माः सर्वबुद्धगुणाश्च, तावन्तो बोधिचित्तगुणाश्च
10 तावन्तो बोधिचित्तगुणानुशंसा अनुगन्तव्या । तत्कस्य हेतोः? अतः प्रभवति सर्वबोधिसत्त्वचर्यामण्डलम् । अतो निर्यान्ति अतीतानागतप्रत्युत्पन्नाः सर्वतथागताः । तस्मात्तर्हि कुलपुत्र येन अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्, सोऽप्रमाणगुणसमुदितो भवति सर्वज्ञताचित्ताध्याशयसुसंगृहीतत्वात् ॥

तद्यथापि नाम कुलपुत्र, अस्त्यभया नामौषधिः । तया पञ्च भयानि न भवन्ति ।
15 तद्यथा—अग्निना न दह्यते, विषस्य न आक्रमति, शस्त्रेण न क्षण्यते, उदकेन नोह्यते, धूमेन न म्रियते । एवमेव कुलपुत्र सर्वज्ञताचित्तौषधिपरिगृहीतो बोधिसत्त्वो रागाग्निना न दह्यते, विषयविषमस्य नाक्रमति, क्लेशशस्त्रेण न क्षण्यते, भवौघेन नोह्यते, संकल्पधूमेन न म्रियते । तद्यथा कुलपुत्र अस्त्यनिर्मुक्ता नामौषधिः । तया गृहीतया सर्वपरोपक्रमभयानि न भवन्ति । एवमेव बोधिचित्तज्ञानौषधिपरिगृहीतस्य बोधिसत्त्वस्य सर्वसंसारोप-
20 क्रमभयानि न भवन्ति । तद्यथा कुलपुत्र, अस्ति मघी नामौषधिः । तया गृहीतया गन्धेनैव सर्वाशीविषाः पलायन्ते । एवमेव बोधिचित्तगन्धेनैव सर्वक्लेशाशीविषाः पलायन्ते । तद्यथा कुलपुत्र अपराजितभैषज्यगृहीतः पुरुषोऽजय्यो भवति सर्वशत्रुमण्डलेन, एवमेव सर्वज्ञताचित्तापराजितभैषज्यगृहीतो बोधिसत्त्वो दुर्धर्षो भवति सर्वमारप्रत्यर्थिकमण्डलेन । तद्यथा कुलपुत्र अस्ति विगमो नाम भैषज्यम् । तेन सर्वशल्याः पतन्ति । एवमेव बोधिचित्तविगम-
25 भैषज्यपरिगृहीतस्य बोधिसत्त्वस्य सर्वरागदोषमोहदृष्टिशल्याः पतन्ति । तद्यथा कुलपुत्र अस्ति सुदर्शनो नाम महाभैषज्यराजः । तद्गृहीतः सर्वव्याधीन्निर्घातयति । एवमेव बोधिचित्तसुदर्शनमहाभैषज्यराजगृहीतो बोधिसत्त्वः सर्वक्लेशाज्ञानव्याधीन्निर्घातयति । तद्यथा कुलपुत्र अस्ति संतानो नाम महाभैषज्यवृक्षः । तस्य सहनिपातिता त्वक् सर्वव्रणान् संरोहयति, यथो पाटितास्य त्वग् संभवति । एवमेव बोधिसत्त्वबीजसंभूतः सर्वज्ञतासंतानवृक्षः सहदर्शनेन
30 श्राद्धानां कुलपुत्राणां कर्मक्लेशव्रणान् संरोहयति । स च सर्वज्ञतावृक्षः सर्वलोकेन अक्षतोऽनुपहतः । तद्यथा कुलपुत्र अस्त्यनिर्वृत्तमूला नाम महाभैषज्यजातिः, यस्याः प्रभावेन सर्वजम्बु-

1 S चिन्ताभूत

द्वीपका वृक्षा सर्वा विवर्धन्ते, एवमेव बोधिचित्तनिर्वृत्तमूलमहाभैषज्यप्रभावेन सर्वशैक्षाशैक्षप्रत्येकबुद्धबोधिसत्त्वधर्मतरवो विवर्धन्ते। तद्यथा कुलपुत्र अस्ति रतिलम्भा नामौषधि । सा यस्य शरीरगता भवति, तस्य कायचित्तकल्यता जायते। एवमेव सर्वज्ञताचित्तोत्पादरतिलम्भौषधि सर्वबोधिसत्त्वाना कायचित्तकल्यता सजनयति। तद्यथा कुलपुत्र अस्ति स्मृतिलब्धा नामौषधि । तया चित्तस्मृतिर्विशुध्यति । एवमेव सर्वज्ञताचित्तोत्पादस्मृतिलम्भौषधिर्बोधिसत्त्वाना सर्वबुद्धधर्मानावरणस्मृतिविशुद्धये सवर्तते। तद्यथा कुलपुत्र अस्ति महापद्मा नामौषधि । तया कल्पमायुःप्रमाण भवति। एवमेव बोधिचित्तमहाधर्मौषधिप्रसितो बोधिसत्त्वोऽसख्येयकल्पायुर्वशिताप्राप्तो भवति। तद्यथा कुलपुत्र अस्ति अदृश्या नामौषधि । तया गृहीतया सर्वमनुष्यामनुष्यैर्न दृश्यते। एवमेव बोधिचित्तादृश्यमहौषधिगृहीतो व्यवकीर्णविहारी बोधिसत्त्व सर्वमारविषये न दृश्यते। तद्यथा कुलपुत्र अस्ति सर्वमणिरत्नसमुच्चय नाम महामणिरत्नराज महासमुद्रे। तस्य अन्यलोकधात्वसक्रान्तस्य अस्थानमनवकाशो यन्महासमुद्रस्य सर्वकल्पोदाहाग्निना शक्य तालमात्रमपि परिशोषयितुम्। एवमेव सर्वज्ञताचित्तोत्पादसर्वमणिरत्नसमुच्चयमहामणिरत्नराजाध्याशयसतानगताना बोधिसत्त्वानामस्थानमनवकाशो यदेककुशलमपि सर्वज्ञतापरिणामित प्रणश्येत्, नेद स्थान विद्यते। उत्सृष्टे च पुन सर्वज्ञताचित्तोत्पादे सर्वकुशलमूलान्युपशुष्यन्ति। तद्यथा अस्ति सर्वप्रभाससमुच्चय नाम महामणिरत्नम्। तेन कण्ठावसक्तेन सर्वमणिरत्नालकारा जिह्मीभवन्ति। एवमेव बोधिसत्त्वसर्वप्रभाससमुच्चयमहामणिरत्नाशयालकारावबद्धो बोधिसत्त्व सर्वश्रावकप्रत्येकबुद्धचित्तोत्पादरत्नालकारानभिभवति। तद्यथा कुलपुत्र अस्ति उदकप्रसादक महामणिरत्नम्। तद्वारिप्रक्षिप्त सर्वकर्दमकालुष्य प्रसादयति। एवमेव बोधिचित्तोदकप्रसादकमहामणिरत्न सर्वक्लेशकर्दमकालुष्य प्रसादयति। तद्यथा कुलपुत्र उदकसवासमणिरत्नावबद्ध कैवर्त उदके न म्रियते, एवमेव सर्वज्ञताचित्तोदकसवासमणिरत्नगृहीतो बोधिसत्त्व सर्वससारसागरे न म्रियते । तद्यथा कुलपुत्र अस्ति नागमणिवर्ममहारत्नम्। तेन सहगते कैवर्तादयो जलजीविन सर्वनागभवनानि प्रविशन्तोऽधृष्या भवन्ति सर्वनागोरगै । एवमेव सर्वज्ञताचित्तोत्पादज्ञाननागमणिधर्मधारी बोधिसत्त्व सर्वकामधातुभवनानि प्रविशन्न क्षण्यते। तद्यथा कुलपुत्र शक्राभिलग्नमणिरत्नावबद्ध शक्रो देवराजो सर्वदेवगणानभिभवति, एवमेव सर्वज्ञताचित्तशक्राभिलग्नमहामणिरत्नराजप्रणिधिमकुटावबद्धो बोधिसत्त्व सर्वत्रिधातुकमभिभवति । तद्यथा कुलपुत्र चिन्ताराजमहामणिरत्नगृहीत पुरुष सर्वदारिद्र्यान्न बिभेति, एवमेव सर्वज्ञताचित्तोत्पादचिन्ताराजमहामणिरत्नगृहीतो बोधिसत्त्व सर्वोपकरणजीविकाभयेभ्यो न बिभेति। तद्यथा कुलपुत्र सूर्यकान्तमणिरत्न सूर्यदर्शितमग्निं प्रमुञ्चति, एवमेव सर्वज्ञताचित्तोत्पादसूर्यकान्तमणिरत्न प्रज्ञारश्मिसस्पृष्ट ज्ञानाग्निं प्रमुञ्चति । तद्यथा कुलपुत्र चन्द्रकान्त नाम महामणिरत्न चन्द्राभया स्पृष्टमुदकधारा प्रमुञ्चति, एवमेव बोधिचित्तोत्पादचन्द्रकान्तमहामणिरत्न कुशलमूलपरिणामनाचन्द्रप्रभास्पृष्ट सर्वकुशलमूलप्रणिधि-

तोयधारा प्रमुञ्चति । तद्यथा कुलपुत्र चिन्ताराजमणिमुकुटावबद्धानां महानागराजानां नास्ति परोपक्रमभयम्, एवमेव बोधिचित्तमहाकरुणाचिन्ताराजमणिमुकुटावबद्धानां नास्ति दुर्गत्यपायोपसंक्रमभयम्। तद्यथापि नाम कुलपुत्र जगद्व्यूहगर्भं नाम महामणिरत्नं सर्वसत्त्वाभिप्रायपरिपूरणतया न कदाचित्क्षयमुपैति, एवमेव बोधिसत्त्वचित्तोत्पादसर्वजगद्व्यूहगर्भमहा
5 मणिरत्नं सर्वसत्त्वाभिप्रायबोधिप्रणिधिपरिपूरणतया न कदाचित्क्षयमुपैति । तद्यथा कुलपुत्र राज्ञश्चक्रवर्तिनो महामणिरत्नं, स तमोऽन्धकारं विधमं गच्छति, अन्तःपुरमध्यगतं च प्रभासयति, एवमेव सर्वज्ञताचित्तोत्पादचक्रवर्तिमहामणिरत्नं सर्वमविद्यान्धकारं विधमं सत्त्वगतिषु गच्छति, कामधातुस्थितं च महाज्ञानालोकमवसृजति । तद्यथा कुलपुत्र ये इन्द्रनीलमहामणिरत्नाभया स्पृश्यन्ते, सर्वे ते इन्द्रनीलमहामणिरत्नवर्णा भवन्ति, एवमेव सर्वज्ञताचित्तोत्पादेन्द्र
10 नीलमहामणिरत्नं येषु विचार्यते प्रेष्यते, यानि च कुशलमूलानि सर्वज्ञताचित्तोत्पादेन परिणम्यन्ते, तानि सर्वाणि सर्वज्ञतामहामणिरत्नवर्णानि भवन्ति । तद्यथा कुलपुत्र वैडूर्यमणिरत्नं वर्षशतसहस्रमपि अमेध्यमध्यगतं तिष्ठत् सर्वदौर्गन्ध्येन सार्धं न संवसति, एवमेव सर्वज्ञताचित्तोत्पादात्यन्तविमलविशुद्धप्रभमणिरत्नं सर्वपृथग्जनशैक्षाशैक्षप्रत्येकबुद्धगुणरत्नाकरानभिभवति । तद्यथा कुलपुत्र एकमाग्नेयं नाम महामणिरत्नं सर्वतमोऽन्धकारं विधमति,
15 एवमेव एकसर्वज्ञताचित्तोत्पादाग्नेयमहामणिरत्नं विपश्यनासंप्रयुक्तं योनिशो मनसिकारतः सर्वमज्ञानतमोऽन्धकारं विधमति । तद्यथा कुलपुत्र महासमुद्रे पोतारोपितमनर्घ्येयमणिरत्नं वणिग्घस्तगतं नगरप्रतिष्ठानि काचमणिशतसहस्राण्यभिभवति वर्णतश्च आयतश्च, एवमेव संसारमहासमुद्रगतमपि सर्वज्ञताचित्तोत्पादानर्घमहामणिरत्नं प्रणिधिपोतारोपितं प्रथमचित्तोत्पादिकबोधिसत्त्वाध्याशयसंतानगतमप्राप्तमेव सर्वज्ञतानगरं विमुक्तिनगरं
20 प्रविष्टान् सर्वश्रावकप्रत्येकबुद्धकाचमणिरत्नानभिभवति । तद्यथास्ति वशिराजं नाम मणिरत्नं यज्जम्बुद्वीपगतमेव चत्वारिंशद्योजनसहस्रस्थितानां चन्द्रसूर्यमण्डलानां भवनविमानप्रतिभासव्यूहान् संदर्शयति, एवमेव सर्वगुणपरिशोधितं सर्वज्ञताचित्तोत्पादवशिराजमणिरत्नं संसारगतमेव धर्मधातुगगनगोचराणां तथागतमहाज्ञानसूर्यचन्द्रमसां सर्वबुद्धविषयमण्डलप्रतिभासव्यूहान् संदर्शयति । तद्यथा कुलपुत्र यावच्चन्द्र
25 सूर्यमण्डलानि प्रभयावभासयन्ति, अत्रान्तरे ये केचिद्धनधान्यरत्नजातरूपरजतपुष्पगन्धमाल्यवस्त्रपरिभोगाः, सर्वे ते वशिराजमणिरत्नस्य मूल्यं न क्षमन्ते, एवमेव यावत् त्र्यध्वसु सर्वज्ञज्ञानं धर्मधातुविषयमवभासयति, अत्रान्तरे यानि कानिचिद्देवमनुष्यसर्वश्रावकप्रत्येकबुद्धकुशलानि सास्रवाण्यनास्रवाणि वा, सर्वाणि तानि बोधिचित्तोत्पादवशिराजमहामणिरत्नस्य मूल्यं न क्षमन्ते । तद्यथा कुलपुत्र अस्ति सागरव्यूहगर्भं नाम महामणिरत्नं यः सर्व-
30 महासागरव्यूहान् संदर्शयति, एवमेव बोधिचित्तोत्पादसागरव्यूहगर्भमहामणिरत्नं सर्वज्ञज्ञानविषयसागरव्यूहं संदर्शयति । तद्यथा कुलपुत्र चिन्तारत्नमणिरत्नं स्थापयित्वा नास्ति किंचित्प्रविविशिष्टतरं दिव्येन जाम्बूनदसुवर्णेन, एवमेव सर्वज्ञज्ञानचिन्ताराजमहामणिरत्नं

स्थापयित्वा नास्ति किंचित्प्रतिविशिष्टतर बोधिचित्तोत्पाददिव्यजाम्बूनदसुवर्णेन । तद्यथा कुलपुत्र नागमण्डलसिद्ध आहितुण्डिक सर्वनागोरगान् वशे स्थापयति, एवमेव सर्वज्ञताचित्तोत्पादप्रतिपत्तिनागमण्डलसिद्धो बोधिसत्त्वाहितुण्डिक सर्वक्लेशनागोरगान् वशे स्थापयति । तद्यथा कुलपुत्र प्रहरणगृहीत शूरो दुर्धर्षो भवति शत्रुमण्डलेन, एवमेव सर्वज्ञताचित्तोत्पादप्रहरणगृहीतो बोधिसत्त्वो दुर्धर्षो भवति सर्वक्लेशशत्रुमण्डलेन । तद्यथा कुलपुत्र दिव्योरगसारचन्दनस्य एकचूर्णधारण साहस्र लोकधातु गन्धेन स्फरति, कर्षप्रमाण सर्व त्रिसाहस्र लोकधातुरत्नपरिपूर्णेन मूल्य न क्षमते, एवमेव सर्वज्ञताचित्तोत्पाददिव्योरगसारचन्दनस्यैकाध्याशयधातु सर्वधर्मधातु गुणगन्धेन स्फरति, सर्वशैक्षाशैक्षप्रत्येकबुद्धचित्तानि चाभिभवति । तद्यथा कुलपुत्र हिमवच्चन्दन नाम महाचन्दनरत्न सर्वदाह प्रशमयति, सर्व चाश्रय शीतलीकरोति, एवमेव सर्वज्ञताचित्तोत्पादहिमवच्चन्दनरत्न सर्वक्लेशसकल्परागदोषमोह 10 दाह प्रशमयति, ज्ञानाश्रय च प्रह्लादयति । तद्यथा कुलपुत्र ये सुमेरु पर्वतराजमुपसक्रामन्ति, सर्वे ते एकवर्णा भवन्ति यदुत सुवर्णवर्णा, एवमेव ये सर्वज्ञताचित्तोत्पादसमान् बोधिसत्त्वानुपसक्रामन्ति, सर्वे ते एकवर्णा भवन्ति यदुत सर्वज्ञतावर्णा । तद्यथा कुलपुत्र य पारियात्रकस्य कोविदारस्य त्वचिगन्ध प्रवाति, स सर्वजम्बुद्वीपे सर्ववार्षिकाजातिसुमनादीना पुष्पजातीना न सविद्यते, एवमेव यो बोधिसत्त्वस्य सर्वज्ञताचित्तोत्पादबीज 15 प्रणिधिवृक्षगुणज्ञानत्वचो गन्ध प्रवाति, स सर्वप्रत्ययरकुशलमूलाना सर्वश्रावकप्रत्येकबुद्धवार्षिकाजातिसुमनानामनास्रवशीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनाना न सविद्यते । तद्यथा कुलपुत्र पारियात्रकस्य कोविदारस्य शुङ्गीभूतस्य वेदितव्य बहूना पुष्पशतसहस्राणामायद्वार भविष्यतीति, एवमेव सर्वज्ञताचित्तोत्पादपारियात्रकवृक्षस्य कुशलमूलशुङ्गीभूतस्य वेदितव्यमसख्येयाना देवमनुष्याणा सास्रवानास्रवबोधिकुसुमायद्वार भविष्यतीति । तद्यथा 20 कुलपुत्र य एकदिवसपरिभावितस्य पारियात्रकुसुमैर्वस्त्रस्य तैलस्य वा गन्ध प्रवाति, स दिवसशतसहस्रपरिभावितस्य चम्पकवार्षिकासुमनाभिवस्त्रस्य वा तैलस्य वा न सविद्यते । एवमेव य एकजन्मपरिभावितस्य सर्वज्ञताचित्तसतानस्य बोधिसत्त्वगुणज्ञानगन्धो दशसु दिक्षु सर्वबुद्धपादमूलेषु प्रवाति, स कल्पशतसहस्रपरिभाविताना सर्वश्रावकप्रत्येकबुद्धचित्तानामनास्रवकुशलधर्मज्ञानगन्धो न सविद्यते । तद्यथा कुलपुत्र अस्ति नालीकेरी[1] नाम 25 वृक्षजाति उदतके समुद्रे सभूता । सा मूलत उपादाय यावत्पुष्पफलपर्यन्तात्सर्वकाल सर्वसत्त्वाना न कदाचिन्नोपजीव्या भवति । एवमेव महाकरुणाप्रणिधिमूलसजातो बोधिसत्त्वस्य प्रथमसर्वज्ञताचित्तोत्पादो यावत्सद्धर्मस्थितिपर्यवसानात् सदेवकस्य लोकस्य न कदाचिन्नोपजीव्यो भवति । तद्यथा कुलपुत्र अस्ति हाटकप्रभास नाम रसजातम् । तस्य एकपल लोहपलसहस्र स्वर्णीकरोति । न च तद्रसपल शक्य तेन लोहपलसहस्रेण पर्यादातु न लोहीकर्तुम् । 30 एवमेव एकसर्वज्ञताचित्तोत्पादरसधातु कुशलमूलपरिणामनाज्ञानसगृहीत सर्वकर्मक्लेशावरण

---

[1] B नारीकेरी

तोयधारा प्रमुश्चति । तद्यथा कुलपुत्र चिन्ताराजमणिमुकुटावबद्धाना महानागराजाना नास्ति परोपक्रमभयम्, एवमेव बोधिचित्तमहाकरुणाचिन्ताराजमणिमकुटावबद्धाना नास्ति दुर्गत्यपायोपसक्रमभयम्। तद्यथापि नाम कुलपुत्र जगद्व्यूहगर्भं नाम महामणिरत्न सर्वसत्त्वाभिप्रायपरिपूरणतया न कदाचित्क्षयमुपैति, एवमेव बोधिसत्त्वचित्तोत्पादसर्वजगद्व्यूहगर्भमहा
5 मणिरत्न सर्वसत्त्वाभिप्रायबोधिप्रणिधिपरिपूरणतया न कदाचित्क्षयमुपैति । तद्यथा कुलपुत्र राज्ञश्चक्रवर्तिनो महामणिरत्न, स तमोन्धकारविधम गच्छति, अन्त पुरमध्यगत च प्रभासयति, एवमेव सर्वज्ञताचित्तोत्पादचक्रवर्तिमहामणिरत्न सर्वमविद्यान्धकारविधम सत्त्वगतिषु गच्छति, कामधातुस्थित च महाज्ञानालोकमवसृजति । तद्यथा कुलपुत्र ये इन्द्रनीलमहामणिरत्नाभया स्पृश्यन्ते, सर्वे ते इन्द्रनीलमहामणिरत्नवर्णा भवन्ति, एवमेव सर्वज्ञताचित्तोत्पादेन्द्र
10 नीलमहामणिरत्न येषु विचार्यते प्रेष्यते, यानि च कुशलमूलानि सर्वज्ञताचित्तोत्पादेन परिणम्यन्ते, तानि सर्वाणि सर्वज्ञतामहामणिरत्नवर्णानि भवन्ति । तद्यथा कुलपुत्र वैडूर्यमणिरत्नं वर्षशतसहस्रमपि अमेध्यमध्यगत तिष्ठत् सर्वदौर्गन्ध्येन सार्धं न सवसति, एवमेव सर्वज्ञताचित्तोत्पादात्यन्तविमलविशुद्धप्रभमणिरत्न सर्वपृथग्जनशैक्षाशैक्षप्रत्येकबुद्धगुणरत्नाकरानभिभवति । तद्यथा कुलपुत्र एकमाग्नेय नाम महामणिरत्न सर्वतमोन्धकार विधमति,
15 एवमेव एकसर्वज्ञताचित्तोत्पादाग्नेयमहामणिरत्न विपश्यनासंप्रयुक्त योनिशो मनसिकारत सर्वमज्ञानतमोन्धकार विधमति । तद्यथा कुलपुत्र महासमुद्रे पोतारोपितमनर्घ्यमणिरत्न वणिग्घस्तगत नगरप्रतिष्ठानि काचमणिशतसहस्राण्यभिभवति वर्णतश्च आयतश्च, एवमेव ससारमहासमुद्रगतमपि सर्वज्ञताचित्तोत्पादानर्घमहामणिरत्न प्रणिधिपोतारोपित प्रथमचित्तोत्पादिकबोधिसत्त्वाध्याशयसतानगतमप्राप्तमेव सर्वज्ञतानगर विमुक्तिनगर
20 प्रतिष्ठान् सर्वश्रावकप्रत्येकबुद्धकाचमणिकानभिभवति । तद्यथास्ति वशिराज नाम मणिरत्न यज्जम्बुद्वीपगतमेव चत्वारिंशद्योजनसहस्रस्थिताना चन्द्रसूर्यमण्डलाना भवनविमानप्रतिभासव्यूहान् सदर्शयति, एवमेव सर्वगुणपरिशोधित सर्वज्ञताचित्तोत्पादवशिराजमणिरत्न ससारगतमेव धर्मधातुगगनगोचराणा तथागतमहाज्ञानसूर्यचन्द्रमसा सर्वबुद्धविषयमण्डलप्रतिभासव्यूहान् सदर्शयति । तद्यथा कुलपुत्र यावच्चन्द्र-
25 सूर्यमण्डलानि प्रभयावभासयन्ति, अत्रान्तरे ये केचिद्धनधान्यरत्नजातरूपरजतपुष्पगन्धमाल्यवस्त्रपरिभोगा, सर्वे ते वशिराजमणिरत्नस्य मूल्य न क्षमन्ते, एवमेव यावत् त्र्यध्वसु सर्वज्ञज्ञान धर्मधातुविषयमवभासयति, अत्रान्तरे यानि कानिचिद्देवमनुष्यसर्वश्रावकप्रत्येकबुद्धकुशलानि सास्रवाण्यनास्रवाणि वा, सर्वाणि तानि बोधिचित्तोत्पादवशिराजमहामणिरत्नस्य मूल्य न क्षमन्ते । तद्यथा कुलपुत्र अस्ति सागरव्यूहगर्भं नाम महामणिरत्न यत्सर्व-
30 महासागरव्यूहान् सदर्शयति, एवमेव बोधिचित्तोत्पादसागरव्यूहगर्भमहामणिरत्न सर्वज्ञज्ञानविषयसागरव्यूह सदर्शयति । तद्यथा कुलपुत्र चिन्ताराजमणिरत्न स्थापयित्वा नास्ति किंचित्प्रतिविशिष्टतर दिव्येन जाम्बूनदसुवर्णेन, एवमेव सर्वज्ञज्ञानचिन्ताराजमहामणिरत्न

स्थापयित्वा नास्ति किंचित्प्रतिविशिष्टतरं बोधिचित्तोत्पाददिव्यजाम्बूनदसुवर्णेन । तद्यथा कुलपुत्र नागमण्डलसिद्ध आहितुण्डिकः सर्वनागोरगान् वशे स्थापयति, एवमेव सर्वज्ञताचित्तोत्पादप्रतिपत्तिनागमण्डलसिद्धो बोधिसत्त्वाहितुण्डिकः सर्वक्लेशनागोरगान् वशे स्थापयति । तद्यथा कुलपुत्र प्रहरणगृहीतः शूरो दुर्धर्षो भवति शत्रुमण्डलेन, एवमेव सर्वज्ञताचित्तोत्पादप्रहरणगृहीतो बोधिसत्त्वो दुर्धर्षो भवति सर्वक्लेशशत्रुमण्डलेन । तद्यथा कुलपुत्र दिव्योरगसारचन्दनस्य एकचूर्णधारणं साहस्रं लोकधातुं गन्धेन स्फरति, कर्षप्रमाणं सर्वत्रिसाहस्रं लोकधातुरत्नपरिपूर्णेन मूल्यं न क्षमते, एवमेव सर्वज्ञताचित्तोत्पाददिव्योरगसारचन्दनस्यैकाध्याशयधातुः सर्वधर्मधातुं गुणगन्धेन स्फरति, सर्वशैक्षाशैक्षप्रत्येकबुद्धचित्तानि चाभिभवति । तद्यथा कुलपुत्र हिमवच्चन्दनं नाम महाचन्दनरत्नं सर्वदाहं प्रशमयति, सर्वं चाश्रयं शीतलीकरोति, एवमेव सर्वज्ञताचित्तोत्पादहिमवच्चन्दनरत्नं सर्वक्लेशसंकल्परागदोषमोहदाहं प्रशमयति, ज्ञानाश्रयं च प्रह्लादयति । तद्यथा कुलपुत्र ये सुमेरुं पर्वतराजमुपसंक्रामन्ति, सर्वे ते एकवर्णा भवन्ति यदुत सुवर्णवर्णाः, एवमेव ये सर्वज्ञताचित्तोत्पादसमान् बोधिसत्त्वानुपसंक्रामन्ति, सर्वे ते एकवर्णा भवन्ति यदुत सर्वज्ञतावर्णाः । तद्यथा कुलपुत्र यः पारियात्रकस्य कोविदारस्य त्वग्गन्धः प्रवाति, स सर्वजम्बुद्वीपे सर्ववार्षिकाजातिसुमनादीनां पुष्पजातीनां न संविद्यते, एवमेव यो बोधिसत्त्वस्य सर्वज्ञताचित्तोत्पादबीजप्रणिधिवृक्षगुणज्ञानत्वचो गन्धः प्रवाति, स सर्वप्रस्रवकुशलमूलानां सर्वश्रावकप्रत्येकबुद्धवार्षिकाजातिसुमनानामनास्रवशीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनानां न संविद्यते । तद्यथा कुलपुत्र पारियात्रकस्य कोविदारस्य शुङ्गीभूतस्य वेदितव्यं बहूनां पुष्पशतसहस्राणामायद्वारं भविष्यतीति, एवमेव सर्वज्ञताचित्तोत्पादपारियात्रकवृक्षस्य कुशलमूलशुङ्गीभूतस्य वेदितव्यमसंख्येयानां देवमनुष्याणां सास्रवानास्रवबोधिकुसुमायद्वारं भविष्यतीति । तद्यथा कुलपुत्र यः एकदिवसपरिभावितस्य पारियात्रकुसुमैर्वस्त्रस्य तैलस्य वा गन्धः प्रवाति, स दिवसशतसहस्रपरिभावितस्य चम्पकवार्षिकासुमनाभिर्वस्त्रस्य वा तैलस्य वा न संविद्यते । एवमेव य एकजन्मपरिभावितस्य सर्वज्ञताचित्तसंतानस्य बोधिसत्त्वगुणज्ञानगन्धो दशसु दिक्षु सर्वबुद्धपादमूलेषु प्रवाति, स कल्पशतसहस्रपरिभावितानां सर्वश्रावकप्रत्येकबुद्धचित्तानामनास्रवकुशलधर्मज्ञानगन्धो न संविद्यते । तद्यथा कुलपुत्र अस्ति नालिकेरी[1] नाम वृक्षजातिः उदतके समुद्रे संभूता । सा मूलत उपादाय यावत्पुष्पफलपर्यन्तात्सर्वकालं सर्वसत्त्वानां न कदाचिन्नोपजीव्या भवति । एवमेव महाकरुणाप्रणिधिमूलसंजातो बोधिसत्त्वस्य प्रथमसर्वज्ञताचित्तोत्पादो यावत्सद्धर्मस्थितिपर्यवसानात् सदेवकस्य लोकस्य न कदाचिन्नोपजीव्यो भवति । तद्यथा कुलपुत्र अस्ति हाटकप्रभासं नाम रसजातम् । तस्य एकपलं लोहपलसहस्रं स्वर्णीकरोति । न च तद्रसपलं शक्यं तेन लोहपलसहस्रेण पर्यादातुं न लोहीकर्तुम् । एवमेव एकसर्वज्ञताचित्तोत्पादरसधातुः कुशलमूलपरिणामनाज्ञानसंगृहीतः सर्वकर्मक्लेशावरण-

1 B नाडीकरी.

लोहानि पर्यादाय सर्वधर्मान् सर्वज्ञतावर्णान् करोति। न च सर्वज्ञताचित्तोत्पादरसधातुः शक्यः सर्वकर्मक्लेशगेहैः सक्लेशयितुं पर्यादातुं वा। तद्यथा कुलपुत्र कियत्परीत्तोऽप्यग्निर्यावदुपादानं लभते तावतीं ज्वालां प्रमुञ्चति, एवमेव कियत्परीत्तोऽपि सर्वज्ञताचित्तोत्पादाग्निरारम्बणव्यवकीर्णतया यावत् सभारोपादानं लभते, तावद्विवर्धते ज्ञानार्चिःप्रमोचनतया। तद्यथा कुलपुत्र
5 एकस्मात् प्रदीपादनेकानि प्रदीपकोटीशतसहस्राण्यादीप्यन्ते, अक्षय एव प्रदीपो भवत्यपर्यादत्तश्च सर्वप्रदीपनिर्याणे, एवमेव एकस्मात् सर्वज्ञताचित्तोत्पादप्रदीपादतीतानागतप्रत्युत्पन्नानां सर्वतथागतानां सर्वज्ञताचित्तोत्पादप्रदीपानां दीप्यमानानामक्षय एव स एकः सर्वज्ञताचित्तोत्पादप्रदीपोऽवभाति अपर्यादत्तः सर्वज्ञताचित्तोत्पादप्रदीपनिर्याणे। तद्यथा कुलपुत्र एकः प्रदीपो यादृशे गृहे वातायने वा प्रवेक्ष्यते, सहप्रवेशितो वर्षसहस्रसंचितमपि तमोऽन्धकारं निधमति
10 अवभासं च करोति, एवमेव एकसर्वज्ञताचित्तोत्पादप्रदीपो यादृशे सत्त्वाशयगृहगहनेऽविद्यातमोऽन्धकारानुगते प्रवेक्ष्यते, स सहप्रवेशितोऽनभिलाप्यकल्पशतसहस्रसंचितमपि क्लेशावरणतमोऽन्धकारं निधमति, ज्ञानालोकं च संजनयति। तद्यथा कुलपुत्र यादृशी प्रदीपवर्तिर्भवति तादृशं प्रदीपोऽवभासं करोति, यावच्च स्नेहसंचयो भवति तावद्दीप्यते। एवमेव यस्य बोधिसत्त्वस्य यादृशी प्रणिधानवर्तिविशेषता भवति, तादृशं सर्वज्ञताचित्तोत्पादप्रदीपो धर्मधात्ववभासं करोति। यावच्च महाकरुणाचर्यास्नेहसंचयो भवति, तावत्सत्त्वविनयक्षेत्रविशुद्धिबुद्धकार्यप्रभावना भवति। तद्यथा कुलपुत्र दिव्यजाम्बूनदसुवर्णालंकारो वशवर्तिनो देवराजस्य मूर्धावबद्धोऽसंहार्यो भवति सर्वकामावचरैर्देवपुत्रैः, एवमेव प्रतिपत्तिगुणप्रतिष्ठितः सर्वज्ञताचित्तोत्पादादिव्यजाम्बूनदसुवर्णालंकारोऽविनिवर्तनीयानां बोधिसत्त्वानां महाप्रणिधानमूर्धावबद्धोऽसंहार्यो भवति सर्वबालपृथग्जनशैक्षाशैक्षप्रत्येकबुद्धैः। तद्यथा कुलपुत्र सिंहस्य मृगराजस्य नादेन अचिरजाताः सिंहपोताः पुष्यन्ति, सर्वमृगाश्च निलयं गच्छन्ति, एवमेव तथागतपुरुषसिंहस्य बोधिचित्तसंवर्णनसर्वज्ञतानादेन प्रयुक्तेन सर्वादिकर्मिकबोधिसत्त्वसिंहपोताः पुष्यन्ति बुद्धधर्मैः, सर्वोपलम्भसंनिश्रिताश्च सत्त्वा निलयं गच्छन्ति। तद्यथा कुलपुत्र सिंहस्नायुकृतवीणातन्त्रीशब्देन सर्ववीणातन्त्र्यः संछिद्यन्ते, एवमेव पारमिताशरीरतथागतसिंहबोधिचित्तोत्पादस्नायुवत्रीगुणवर्णशब्देन सर्वकामगुणरतिवीणातन्त्र्यः संछिद्यन्ते, सर्वश्रावकप्रत्येकबुद्धचर्यागुणकथाश्च संनिरुध्यन्ते। तद्यथा कुलपुत्र गोमहिष्यजाक्षीरपूर्णमहासमुद्रे एकसिंहदुग्धबिन्दुप्रक्षेपेण सर्वक्षीराण्यपक्रामन्ति, न संभवति, एवमेव कल्पशतसहस्रसंचितकर्मक्लेशक्षीरमहासमुद्रः तथागतमहापुरुषसिंहसर्वज्ञताचित्तोत्पाददुग्धैकबिन्दुप्रक्षेपेण सर्वोऽनवशेषं क्षयं गच्छति, सर्वश्रावकप्रत्येकबुद्धविमुक्तयश्च न संतिष्ठन्ते, न संवसति। तद्यथा कुलपुत्र अण्डकोशादनिर्गतस्य कलविङ्कपोतस्य यो नादवरविशेषः सर्वबलवेगसंपन्नानां हिमवन्निवासिनां सर्वपक्षिगणानां न संविद्यते, एवमेव संसाराण्डकोशगतस्यादिकर्मिकबोधिसत्त्वकलविङ्कपोतस्य महाकरुणाबोधिचित्तनादवरविशेषः सर्वश्रावकप्रत्येकबुद्धानां न संविद्यते। तद्यथा कुलपुत्र योऽचिरजातस्य महागरुडेन्द्रपोतस्य पक्षवातवरपराक्रमो नयनपरिशुद्धि

गुणश्च, स सर्वशरीरप्रवृद्धानां तदन्येषां पक्षिणां न संविद्यते, एवमेव यः प्रथमचित्तोत्पादिकस्य तथागतमहागरुडेन्द्रस्य कुलगोत्रसंभवस्य बोधिसत्त्वमहागरुडेन्द्रपोतस्य सर्वज्ञताचित्तोत्पादबलपराक्रमो महाकरुणाध्याशयनयनपरिशुद्धिगुणश्च, स कल्पशतसहस्रनिर्यातानां सर्वश्रावकप्रत्येकबुद्धानां न संविद्यते । तद्यथा कुलपुत्र महापुरुषहस्तगतो नाराचः कियद्दृढमपि वर्म निर्भिनत्ति, एवमेव दृढवीर्यबोधिसत्त्वहस्तगतः सर्वज्ञताचित्तोत्पादनाराचः 5 सर्वदृष्ट्यनुशयवर्माणि निर्भिनत्ति । तद्यथा कुलपुत्र क्रोधाविष्टस्य महानग्नस्य यावल्ललाटे पिटकाः लिष्यन्ति, तावदधृष्यो भवति सर्वजम्बुद्वीपकैर्मनुष्यैः, एवमेव महामैत्रीमहाकरुणाविष्टस्य बोधिसत्त्वमहानग्नस्य यावदध्याशयवदने सर्वज्ञताचित्तोत्पादपिटका न निगच्छन्ति, तावदधृष्यो भवति सर्वलोकधातुपर्यापन्नैः सर्वमारैः सर्वकर्मभिश्च । तद्यथा कुलपुत्र यः शिक्षितस्येष्वस्त्रान्तेवासिन इष्वस्त्रज्ञाने कृताभ्यासस्य शिल्पस्थानयोगबलविशेषः, स 10 सर्वशिक्षितस्य इष्वस्त्राचार्यस्य न संविद्यते, एवमेव यः सर्वादिकर्मिकस्य सर्वज्ञताभूम्यां कृताभ्यासस्य बोधिसत्त्वाजानेयस्य प्रणिधिज्ञानाधिमुक्तिचर्याबलविशेषः, सोऽनुत्पादितबोधिचित्तानां सर्वशैक्षाशैक्षप्रत्येकबुद्धानां च न संविद्यते । तद्यथा कुलपुत्र इष्वस्त्रं शिक्षमाणस्य प्रथमः पदबन्धयोग्याभ्यासः पूर्वंगमो भवति सर्वेष्वस्त्रज्ञानस्य, एवमेव बोधिसत्त्वस्य सर्वज्ञभूमौ शिक्षमाणस्य प्रथमं सर्वज्ञताचित्ताध्याशयप्रस्थानं पूर्वंगमं भवति सर्वबुद्धधर्माधिगमाय । तद्यथा 15 कुलपुत्र मायाकारस्य मायागतविषयं संदर्शयमानस्य प्रथमममन्त्रपदसिद्ध्यभिनिर्हारमेव मनसिकुर्वाणस्य सर्वक्रियासिद्धिर्भवति, एवमेव बोधिसत्त्वस्य सर्वबुद्धबोधिसत्त्वविषयविकुर्वाः संदर्शयतः प्रथमचित्तोत्पादप्रणिधानाभिनिर्हार एवोत्थापको भवति सर्वबुद्धबोधिसत्त्वविषयस्य । तद्यथा कुलपुत्र सर्वमायाविद्यामन्त्राश्चारूपिणोऽनिदर्शनाः सर्वमायानिर्माणरूपगतानि संदर्शयन्ति चित्तोत्पादेन, एवमेव सर्वज्ञताचित्तोत्पादश्चारूप्यानिदर्शनः सर्वधर्मधातुं च विठपयति 20 सर्वगुणालंकारव्यूहैश्चित्तोत्पादवशितामात्रेण । तद्यथा कुलपुत्र मार्जारस्य सहदृष्टविचारमात्रेण सर्वमूषिका निलयमापद्यन्ते, एवमेव बोधिसत्त्वस्य सर्वज्ञताचित्तोत्पादाध्याशयप्रयोगविचारमात्रेण सर्वकर्मक्लेशा निलयमापद्यन्ते । तद्यथा कुलपुत्र जाम्बूनदसुवर्णालंकार आबद्धः सर्वाभरणानि जिह्मीकरोति, एवमेव बोधिचित्तजाम्बूनदसुवर्णालंकाराध्याशयाबद्धो बोधिसत्त्वः सर्वश्रावकप्रत्येकबुद्धगुणालंकारानभिभवति जिह्मीकरोति । तद्यथा कुलपुत्र अयस्कान्त- 25 राजस्य कियत्परीत्तोऽपि धातुः सर्वदृढमायसं बन्धनं स्फोटयति, एवमेव कियत्परीत्तोऽप्यध्याशयोत्पादितः सर्वज्ञताचित्तोत्पादधातुः सर्वदृष्टिकृताविद्यातृष्णाबन्धनानि स्फोटयति । तद्यथा कुलपुत्र यत्र यत्रैव अयस्कान्तधातुर्विचार्यते, तत्र तत्रैव सर्वाणीतराण्ययांसि पलायन्ते, न तिष्ठन्ते न संदधति । एवमेव यत्र यत्रैव सर्वज्ञताचित्तोत्पादधातुर्विचार्यते कर्मसु वा क्लेशेषु वा श्रावकप्रत्येकबुद्धविमुक्तौ वा, ततस्तत एव कर्मक्लेशाः सर्वश्रावकप्रत्येकबुद्धविमुक्तयश्च 30 पलायन्ते न तिष्ठन्ति, न संदधति । तद्यथा कुलपुत्र मकरविद्याश्रितः कैवर्तः सर्वोदकप्राणिभयविनिवृत्तो भवत्यनुपघातशरीरो मकरमुखगतोऽपि, एवमेव अध्याशयबोधिचित्तविद्याश्रितो

बोधिसत्त्व सर्वसंसारकर्मक्लेशभयविनिवृत्तो भवति सर्वश्रावकप्रत्येकबुद्धाभिसमयान्तरप्राप्त्यनुघात्यो भूतकोटीसाक्षात्क्रियाप्रणाशपथापतनतया। तद्यथा कुलपुत्र अमृतपानपीत पुरुष सर्वपरोपक्रमैर्न म्रियते, एवमेव सर्वज्ञताचित्तोत्पादामृतपानपीतो बोधिसत्त्व सर्वश्रावकभूमिषु न म्रियते, न चोपरमति बोधिसत्त्वमहाकरुणाप्रणिधानात्। तद्यथा कुलपुत्र अञ्जनसिद्ध पुरुष 5 सर्वमनुष्यभवनेषु चानुविचरति न च सर्वमनुष्यैर्दृश्यते, एवमेव बोधिचित्तोत्पादप्रज्ञाप्रणिध्युपलब्धो बोधिसत्त्व सर्वमारविषयेषु चानुविचरति, सर्वमारैश्च न दृश्यते। तद्यथा कुलपुत्र महाराजसंनिश्रित पुरुष सर्वप्राकृतजनात् न बिभेति, एवमेव सर्वज्ञताचित्तोत्पादमहाधर्मराजसंनिश्रितो बोधिसत्त्व सर्वावरणनिवरणदुर्गतिभ्यो न बिभेति। तद्यथा कुलपुत्र पर्वतगृहेषु सर्वभूम्यन्तर्गतपानीयभयान्नास्त्यग्निभयम्, एवमेव बोधिचित्त 10 कुशलमूलाभिष्यन्दितसंतानस्य बोधिसत्त्वस्य नास्ति श्रावकप्रत्येकबुद्धविमुक्तिज्ञानाग्निभयम्। तद्यथा कुलपुत्र शूरसंनिश्रित पुरुष सर्वशत्रुभ्यो न बिभेति, एवमेव सर्वज्ञताचित्तोत्पादशूरसंनिश्रितो बोधिसत्त्व सर्वदुश्चरितशत्रुभ्यो न बिभेति। तद्यथा कुलपुत्र वज्रप्रहरणगृहीत शक्रो देवेन्द्र सर्वासुरगण प्रमर्दयति, एवमेव सर्वज्ञताचित्तोत्पाददृढाध्याशयवज्रप्रहरणगृहीतो बोधिसत्त्व सर्वमारपरप्रवाद्यसुरगण प्रमर्दयति। तद्यथा कुलपुत्र 15 रसायनोपयुक्त पुरुषो दीर्घमायु पालयति न च दुर्बलीभवति, एवमेव सर्वज्ञताचित्तोत्पादरसायनसंभारप्रयुक्तो बोधिसत्त्वोऽसंख्येयान् कल्पान् संसारे संसरन्न परिखिद्यते, न च संसारदोषैर्लिप्यते। तद्यथा कुलपुत्र सर्वभैषज्यरससंप्रयोगेषु पानीय पूर्वंगम न क्वचिद्दुष्यति, एवमेव सर्वबोधिसत्त्वचर्याप्रणिधानसंभारयोगेषु सर्वज्ञताचित्तोत्पाद पूर्वंगमो भवति, न क्वचिद्दुष्यति। तद्यथा कुलपुत्र पुरुषस्य सर्वकार्येषु जीवितेन्द्रिय पूर्वंगमम्, एवमेव बोधिसत्त्वस्य 20 सर्वबुद्धधर्मादानेषु बोधिचित्त पूर्वंगमम्। तद्यथा कुलपुत्र जीवितेन्द्रियविमुक्त पुरुषो निरुपजीव्यो भवति मातापितृज्ञातिवर्गस्य सर्वकर्मासमर्थनात्, एवमेव सर्वज्ञताचित्तोत्पादवियुक्तो बोधिसत्त्व सर्वज्ञतागुणनिरुपजीव्यो भवति सर्वसत्त्वाना बुद्धज्ञानप्रतिलम्भासमर्थनात्। तद्यथा कुलपुत्र महासमुद्र सर्वविषैरदूष्यो भवति, एवमेव सर्वज्ञताचित्तोत्पादमहासमुद्रोऽदूष्यो भवति सर्वकर्मक्लेशश्रावकप्रत्येकबुद्धचित्तोत्पादविषै। तद्यथा कुलपुत्र 25 सूर्यमण्डलमपर्यस्त सर्वतारारूपाभासै, एवमेव सर्वज्ञताचित्तोत्पादसूर्यमण्डलमपर्यापन्न भवति, सर्वश्रावकप्रत्येकबुद्धतारारूपानास्रवगुणानभिभवति। तद्यथा कुलपुत्र अचिरजातो राजपुत्रो सर्वप्रधानान् सर्ववृद्धामात्यानभिभवति कुलाभिजात्याधिपत्येन, एवमेव अचिरोत्पादितबोधिचित्त स्वयागतधर्मराजकुलप्रत्याजात आदिकर्मिको बोधिसत्त्वश्चिरचरितब्रह्मचर्यान् वृद्धश्रावकानभिभवति बोधिचित्तमहाकरुणाधिपत्येन। तद्यथा कुलपुत्र कियद्वृद्धेनाप्यमात्येन कियद्बालस्यापि 30 राजकुमारस्य प्रणिपतितव्यम्, न च राजपुत्रेण वृद्धामात्यस्य गौरव न करणीयम्, एवमेव कियद्वृद्धैरपि चिरचरितब्रह्मचर्यै श्रावकप्रत्येकबुद्धैरादिकर्मिकस्य बोधिसत्त्वस्य अवनमितव्यम्, न च बोधिसत्त्वेन प्रत्येकबुद्धेषु गौरव न करणीयम्। तद्यथा कुलपुत्र

सर्वापरिभूतो राजपुत्रोऽविरहितो राजलक्षणेन सर्वाग्रप्राप्तैरपि राजामात्यैर्न समो जात्यध्यक्षत्वात्, एवमेव कियत्कर्मक्लेशोपादानपरिभूत आदिकर्मिको बोधिसत्त्वः सर्वज्ञताचित्तोत्पादलक्षणेनाविरहितः सर्वाग्रप्राप्तैरपि सर्वश्रावकप्रत्येकबुद्धैर्न समो बुद्धकुलाधिपत्याध्यक्षत्वात् । तद्यथा कुलपुत्र परिशुद्धमणिरत्नं चक्षुस्तिमिरदोषेणापरिशुद्धमित्याभासमागच्छति, एवमेव प्रकृतिपरिशुद्धं सर्वज्ञताचित्तोत्पादरत्नं सत्त्वा अश्रद्धानयनाज्ञानतिमिरदोषेणापरिशुद्धमिति संजानन्ति । तद्यथा कुलपुत्र सर्वविचित्रौषधिसंग्रहसंप्रयुक्तो भैषज्यविग्रहो दर्शनस्पर्शनसंवासनैः सत्त्वानां व्याधीन् शमयति, एवमेव सर्वकुशलमूलोपचयप्रज्ञोपायविचित्रौषधिसंगृहीतं बोधिचित्तसंप्रयुक्तं बोधिसत्त्वप्रणिधिज्ञानशरीरं श्रवणदर्शनसंवासनानुस्मृतिप्रयोगेन सत्त्वानां क्लेशव्याधीन् प्रशमति । तद्यथा कुलपुत्र हंसलक्षणं वस्त्रं सर्वकर्दमदोषैर्न क्लिश्यते, एवमेव बोधिचित्तोत्पादहंसलक्षणवस्त्रं संसारक्लेशकर्दमदोषैर्न क्लिश्यते । तद्यथा कुलपुत्र मूर्धशल्यसंगृहीतो दारुविग्रहो न विकीर्यते, सर्वक्रियाश्चानुभवति, एवमेव बोधिचित्तोत्पादप्रणिधिमूर्धशल्यसंगृहीतं सर्वज्ञताप्रणिधिज्ञानशरीरं बोधिसत्त्वक्रियासमर्थं भवति, न च विकीर्यते सर्वज्ञताप्रणिधिशरीरत्वात् । तद्यथा कुलपुत्र शल्यविमुक्तं यन्त्रमकार्यसमर्थं भवति तान्येव दारुप्रत्यङ्गानि, एवमेव सर्वज्ञताचित्तोत्पादाध्याशयवियुक्तो बोधिसत्त्वो बुद्धधर्मपरिनिष्पादनासमर्थो भवति, एवं च ते बोध्यङ्गसंभाराः । तद्यथा कुलपुत्र राज्ञश्चक्रवर्तिनो हस्तिगर्भं नाम कालागरुरत्नम् । तेन सह धूपितमात्रः सर्वराज्ञश्चतुरङ्गबलकायो विहायसे तिष्ठति । एवमेव सर्वज्ञताचित्तोत्पादागरुधूपितानि बोधिसत्त्वस्य कुशलमूलानि सर्वत्रैधातुकव्यतिवृत्तानि भवन्ति असंस्कृतसर्वतथागतज्ञानगगनगोचरपर्यवसानानि । तद्यथा कुलपुत्र वज्रं नेतराद्रत्नाकरादुत्पद्यतेऽन्यत्र वज्राकरात्सुवर्णाकराद्वा, एवमेव वज्रोपमः सर्वज्ञताचित्तोत्पादः । स नेतरात्सत्त्वाशयकुशलमूलरत्नाकरादुत्पद्यतेऽन्यत्र सत्त्वपरित्राणमहाकरुणावज्राकरात् सर्वज्ञज्ञानाध्यालम्बनमहासुवर्णाकराद्वा । तद्यथा कुलपुत्र अस्त्यमूला नाम वृक्षजातिः । तस्य मूलप्रतिष्ठानं नोपलभ्यते सर्वशाखापत्रपलाशसंकुसुमिता च वृक्षेषु जालीभूता च संदृश्यते, एवमेव सर्वज्ञताचित्तोत्पादस्य मूलप्रतिष्ठानं नोपलभ्यते, सर्वपुण्यज्ञानाभिज्ञासंकुसुमितश्च स सर्वलोकोपपत्तिषु महाप्रणिधानजालीभूतः संदृश्यते । तद्यथा कुलपुत्र वज्रं नेतरे भाजने तिष्ठच्छोभते, नापि च्छिद्रशुषिरभाजनेन शक्यं संधारयितुमन्यत्र अच्छिद्रभाजनेन, एवमेव सर्वज्ञताचित्तोत्पादवज्रं न हीनाधिमुक्तिकेषु[1] सत्त्वभाजनेषु मत्सरिषु दुःशीलेषु व्यापन्नचित्तेषु कुसीदेषु मुषितस्मृतिषु दुःप्रज्ञेषु शोभते, नाप्याशयविपन्नचलाचलबुद्धिसर्वभाजनेन शक्यं संधारयितुमन्यत्र बोधिसत्त्वाध्याशयरत्नभाजनेन । तद्यथा कुलपुत्र वज्रं सर्वरत्नानि निर्विध्यति, एवमेव सर्वज्ञताचित्तोत्पादवज्रं सर्वधर्मरत्नानि निर्विध्यति । तद्यथा वज्रं सर्वशैलानि भिनत्ति, एवमेव सर्वज्ञताचित्तोत्पादवज्रं सर्वदृष्टिगतशैलानि भिनत्ति । तद्यथा कुलपुत्र भिन्नमपि वज्ररत्नं सर्वरत्नप्रतिविशिष्टं सुवर्णालंकारमभिभवति, एवमेव आशयविपत्तिभिन्नमपि सर्वज्ञताचित्तोत्पादवज्ररत्नं सर्वश्रावकप्रत्येकबुद्धगुणसुवर्णा-

---

१ S संधारेषु.

ल्काराननभिभवति । तद्यथा कुलपुत्र भिन्नमपि वज्ररत्नं सर्वदारिद्र्यं विनिवर्तयति, एवमेव प्रति-
भिन्नमपि सर्वज्ञताचित्तोत्पादवज्ररत्नं सर्वसंसारदारिद्र्यं विनिवर्तयति । तद्यथा कुलपुत्र
कियत्परीत्तोऽपि वज्रधातुः सर्वमणिपाषाणभेदलक्षणः, एवमेव कियत्परीत्तारम्बणप्रसृतोऽपि
सर्वज्ञताचित्तोत्पादवज्रधातुः सर्वाज्ञानभेदलक्षणः । तद्यथा कुलपुत्र वज्ररत्नं न प्राकृतजन-
5 हस्तगतं भवति, एवमेव सर्वज्ञताचित्तोत्पादवज्ररत्नं न प्राकृताध्याशयानामित्वरकुशलमूलानां
देवमनुष्याणां हस्तगतं भवति । तद्यथा कुलपुत्र रत्नपरीक्षानभिज्ञः पुरुषो वज्रमणिरत्नगुणा-
नजानन् नास्य गुणविशेषमनुभवति, एवमेव दुष्प्रज्ञजातीयः पुरुषपुद्गलो बोधिसत्त्वचित्तमहा-
प्रज्ञानवज्ररत्नगुणानभिज्ञो नास्य गुणविशेषमनुभवति । तद्यथा कुलपुत्र वज्रं न शक्यं जरयि-
तुम्, एवमेव सर्वज्ञताहेतुभूतं बोधिचित्तोत्पादवज्रं न शक्यं जरयितुम् । तद्यथा कुलपुत्र वज्र-
10 महाप्रहरणं न शक्यं महानग्नेनापि संधारयितुमन्यत्र महानारायणस्थामबलवेगेन, एवमेव
सर्वज्ञताचित्तोत्पादमहावज्रप्रहरणं न शक्यं सर्वश्रावकप्रत्येकबुद्धमहानग्नैरपि संधारयितुमन्यत्र
सर्वज्ञताहेतुबलोपस्तब्धाप्रमाणकुशलमूलमहानारायणस्थामप्रतिविशिष्टैर्महावभासप्राप्तैर्महाबोधि-
सत्त्वैः । तद्यथा कुलपुत्र यत्र सर्वप्रहरणानि न प्रसहन्ते तत्र वज्रं प्रसहते, न प्रतिहन्यते,
एवमेव यत्र सर्वश्रावकप्रत्येकबुद्धप्रणिधिज्ञानप्रहरणानि न प्रसहन्ते सत्त्वपरिपाकविनये वा
15 त्र्यध्वकल्पचर्यादुःखसंवासे वा, तत्र सर्वज्ञताचित्तोत्पादमहावज्रप्रहरणगृहीतो बोधिसत्त्वो
ऽपरिखिन्नमानसः प्रसहते, न प्रतिहन्यते । तद्यथा कुलपुत्र वज्रं न शक्यं केनचित्पृथिवी-
प्रदेशेन संधारयितुमन्यत्र वज्रतलेन, एवमेव सर्वश्रावकप्रत्येकबुद्धैर्बोधिसत्त्वनिर्याणप्रणिधान-
संभारवज्रं न शक्यं संधारयितुमन्यत्राध्याशयबोधिचित्तोत्पादवज्रदृढपृथिवीतलेन । तद्यथा
कुलपुत्र दृढवज्रतलाच्छिद्रभाजनत्वान्महासमुद्रे पानीयं न निस्सरति, एवमेव बोधिसत्त्व-
20 वज्राच्छिद्रदृढतलपरिणामनाप्रतिष्ठितानि बोधिसत्त्वस्य कुशलमूलानि न क्षीयन्ते सर्वभवो-
पपत्तिषु । तद्यथा कुलपुत्र वज्रतलप्रतिष्ठिता महापृथिवी न विदीर्यते न संसीदति, एवमेव
बोधिचित्तोत्पादवज्रदृढतलप्रतिष्ठितानि बोधिसत्त्वप्रणिधानानि सर्वत्रधातुके न विदीर्यन्ते
न संसीदन्ति । तद्यथा कुलपुत्र वज्रमुदकेन न क्लिद्यते, एवमेव बोधिचित्तोत्पादवज्रं सर्वकर्म-
क्लेशोदकेन सर्वकर्मसमासैर्न क्लिद्यते न स्विद्यते । तद्यथा कुलपुत्र वज्रं सर्वाग्निदाहैर्न दह्यते
25 न संतप्यते, एवमेव सर्वज्ञताचित्तोत्पादवज्रं सर्वसंसारदुःखाग्निदाहैर्न दह्यते, सर्वक्लेशाग्नितापैर्न
संतप्यते । तद्यथा कुलपुत्र तथागतानामर्हतां सम्यक्संबुद्धानां बोधिमण्डे निषीदतां मार-
योधयतां सर्वज्ञतामभिसंबुध्यमानानां नान्येन पृथिवीप्रदेशेन शक्यमासनं संधारयितुमन्यत्र
त्रिसाहस्रमहासाहस्रवज्रनाभिधरणितलेन, एवमेव बोधिसत्त्वानामनुत्तरायां सम्यक्संबोधौ
प्रणिदधतां चर्यां चरतां पारमिताः परिपूरयतां क्षान्तिमवक्रामतां भूमिं प्रतिलभमानानां
30 कुशलमूलानि परिणामयतां व्याकरणं संप्रतीच्छतां सर्वबोधिसत्त्वमार्गसंभारमुपस्तम्भयतां
सर्वतथागतानां महाधर्ममेघान् संधारयतां ते महाकुशलमूलबलाधानवेगा नान्येन चित्तेन
शक्याः संधारयितुमन्यत्र सर्वप्रणिधानज्ञानवज्रदृढनाभिना सर्वज्ञताचित्तोत्पादेन । इति हि

कुलपुत्र एभिश्च अन्यैश्च अप्रमाणैर्यावदनभिलाप्यानभिलाप्यैर्गुणविशेषै समन्वागत सर्वज्ञताचित्तोत्पाद । तेऽपि सत्त्वा एवगुणधर्मसमन्वागता भूताश्च भविष्यन्ति च, यैरनुत्तरायां सम्यक्सबोधौ चित्तान्युत्पादितानि । तस्मात्तर्हि कुलपुत्र सुलब्धास्ते लाभा , यस्त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य बोधिसत्त्वचर्यां परिमार्गसि एषा गुणाना प्रतिलाभाय ॥

अपि च कुलपुत्र यद्वदसि–कथ बोधिसत्त्वेन बोधिसत्त्वचर्याया शिक्षितव्यम्, कथ प्रतिपत्तव्यमिति । गच्छ कुलपुत्र, अस्य वैरोचनव्यूहालकारगर्भस्य महाकूटागारस्य अभ्यन्तर प्रविश्य व्यवलोकय । अत्र ज्ञास्यसि यथा बोधिसत्त्वचर्यायां शिक्षितव्यम्, शिक्षमाणस्य च यादृशी गुणपरिनिष्पत्तिर्भवति ॥ 5

अथ खलु सुधन श्रेष्ठिदारको मैत्रेय बोधिसत्त्व प्रदक्षिणीकृत्वा एवमाह–विवृणु आर्य अस्य कूटागारस्य द्वारम् । प्रवेक्ष्यामि । अथ खलु मैत्रेयो बोधिसत्त्वो वैरोचनव्यूहालकारगर्भस्य कूटागारस्य द्वारमूलमुपसक्रम्य दक्षिणेन पाणिना अच्छटाशब्दमकार्षीत् । तस्य द्वार विवृतमभूत् । स आह–प्रविश कुलपुत्र एत कूटागारम् । अथ खलु सुधन श्रेष्ठिदारक परमाश्चर्यप्राप्तस्तत्कूटागार प्राविशत् । तस्य समनन्तरप्रविष्टस्य तद्द्वार सवृतमभूत् । सोऽद्राक्षीत् त कूटागार विपुलविस्तीर्णं बहुयोजनशतसहस्रविस्तीर्णं गगनतलप्रमाण समन्तादाकाशधातुविपुलम् असख्येयच्छत्रध्वजपताकालकारम् असख्येयरत्नालकारम् । असख्येयमुक्ताहारप्रलम्बितालकारम् असख्येयरत्नहारप्रलम्बितालकारम् असख्येयलोहितमुक्ताहारप्रलम्बितालकारम् असख्येयसिंहमुक्ताहारप्रलम्बितालकारम् असख्येयसिंहध्वजालकारम् असख्येयचन्द्रार्धचन्द्रालकारम् असख्येयविचित्रपट्टदामाभिप्रलम्बितालकारम् असख्येयविविधपद्मपद्मालकारम् असख्येयमणिजालप्रभालकारम् असख्येयहेमजालालकारम् असख्येयरत्नपट्टालकारम् असख्येयरत्नसुवर्णसूत्रप्रत्युप्तालकारम् असख्येयघण्टामधुरनिर्घोषालकारम् असख्येयरत्नकिङ्किणीजालसमीरितमनोज्ञशब्दालकारम् असख्येयदिव्यपुष्पौघाभिप्रवर्षणालकारम् असख्येयदिव्यमाल्यदामाभिप्रलम्बितालकारम् असख्येयगन्धघटिकानिर्धूपितोपचारालकारम् असख्येयसुवर्णचूर्णसप्रवर्षणालकारम् असख्येयहर्म्यजालालकारम् असख्येयगवाक्षालकारम् असख्येयतोरणालकारम् असख्येयनिर्यूहालकारम् असख्येयादर्शमण्डलालकारम् असख्येयरत्नेष्टकानिचितालकारम् असख्येयरत्नभित्त्यलकारम् असख्येयस्थूणालकारम् असख्येयरत्नवस्त्रमेघालकारम् असख्येयरत्नवृक्षालकारम् असख्येयरत्नवेदिकालकारम् असख्येयरत्नपथालकारम् असख्येयरत्नच्छदनसर्वव्यूहालकारम् असख्येयभूमितलप्रतिष्ठानविचित्रव्यूहालकारम् असख्येयरत्नविचितप्रासादालकारम् असख्येयरत्नासनालकारम् असख्येयविविधव्यालकारम् असख्येयरत्नपट्टसस्तृतचक्रमालकारम् असख्येयजाम्बूनदसुवर्णवर्गपदर्शीस्तम्भसुविभक्तालकारम् असख्येयसर्वरत्नविग्रहालकारम् असख्येयगोशीर्षसिराभालकारम् असख्येयपक्षिगणविचित्रमनोज्ञरुतानुरवितालकारम् असख्येयरत्नपद्मालकारम् असख्येयरत्नयष्टिसमारणालकारम् असख्येयपुण्डरीकालकारम् असख्येयपुण्डरीकालकारम् 10 15 20 25 30

असङ्ख्येयरत्नसोपानालङ्कारम् असङ्ख्येयरत्नग्रामकनिरचनालङ्कारम् असङ्ख्येयविचित्ररत्नविचित भूम्यलङ्कारम् असङ्ख्येयमहामणिरत्नप्रभाप्रमुक्तालङ्कारम् असङ्ख्येयसर्वरत्नव्यूहालङ्कारम् असङ्ख्येयगुणवर्णसमुदितालङ्कारम्। तस्य च महाकूटागारस्य अभ्यन्तरे तदन्यानि कूटागार-शतसहस्राण्येवंरूपव्यूहालङ्कृतान्यद्राक्षीत् असङ्ख्येयरत्नच्छत्रध्वजपताकालङ्काराणि याव-
5 दसङ्ख्येयगुणवर्णसमुदितालङ्काराणि च। तानि कूटागाराणि विपुलविस्तीर्णान्यप्रमाणाकाश-कोशभूतान्यपश्यत् समन्तात् सुविभक्तानि। ते चास्य कूटागारव्यूहा अन्योन्यामभिन्ना अन्योन्यामैत्रीभूता अन्योन्यासङ्कीर्णा प्रतिभासयोगेन आभासमगमन् एकस्मिन्नारम्बणे। यथा च एकस्मिन्नारम्बणे, तथा शेषसर्वारम्बणेषु॥

अथ खलु सुधनः श्रेष्ठिदारको वैरोचनव्यूहालङ्कारगर्भस्य महाकूटागारस्य इदमेवं-
10 रूपमचिन्त्यविषयविकुर्वितं दृष्ट्वा अतुल्यप्रीतिवेगनिर्धावितेन महाहर्षप्रामोद्येन अभिष्यन्दित कायचित्तः सर्वसंज्ञागतविधूतमानसः सर्वावरणविवर्तितचित्तः सर्वमोहविगतोऽसंप्रमोषदिव्य नयनः सर्वशब्दासङ्गस्मृतिविज्ञप्तिश्रोत्रः सर्वमनसिकारविक्षेपविगतोऽनावरणविमोक्षनयानु-सरणबुद्धिः सर्वदिक्स्रोतोऽभिमुखेन कायप्रशमेन सर्वारम्बणानावरणसंप्रेषितचक्षुः सर्वत्रानु गतेन अभिनिर्हारबलेन सर्वशरीरेण प्रणिपतितः॥

15 समनन्तरप्रणिपतितमात्रश्च सुधनः श्रेष्ठिदारको मैत्रेयस्य बोधिसत्त्वस्य अधिष्ठानबलेन सर्वेषु तेषु कूटागारेष्वभ्यन्तरप्रविष्टमात्मानं संजानीते स्म। तेषु च सर्वकूटागारेषु विविध-वैमात्र्यगतान्यचिन्त्यविषयविकुर्वितान्यद्राक्षीत्। क्वचित्कूटागारे यत्र मैत्रेयेण बोधिसत्त्वेन प्रथमं प्रणिधानचित्तमुत्पादितमनुत्तरायां सम्यक्संबोधौ, यन्नामगोत्रोपपन्नेन येन कुशलमूलेन यया समादापनया येन कल्याणमित्रसंचोदनेन यदायुःप्रमाणेन यन्नामके कल्पे यत्रतथागते
20 यद्व्यूहे यादृश्यां पर्षदि यादृशेन प्रणिधानविशेषाभिनिर्हारेण, तत्सर्वमद्राक्षीत्, संजानीते अनुसरति। यावच्च तेषां सत्त्वानां तस्य च तथागतस्य तेन समयेनायुःप्रमाणमभूत्, तावत्काले तस्य तथागतस्य पादमूलगतमात्मानं संजानीते स्म। तां च सर्वां क्रियामपश्यत्॥

क्वचित्कूटागारे यत्र मैत्रेयेण बोधिसत्त्वेन प्रथमो मैत्रसमाधिः प्रतिलब्धः, यत उपादाय अस्य मैत्रेय इति संज्ञोदपादि तदद्राक्षीत्। क्वचिद्यत्र चर्या चीर्णा, क्वचिद्यत्र पारमिता
25 परिपूरिता, क्वचिद्यत्र क्षान्तिरवतीर्णा, क्वचिद्यत्र भूमिरवक्रान्ता, क्वचिद्यत्र बुद्धक्षेत्रव्यूहा परिगृहीताः, क्वचिद्यत्र तथागतशासनं संधारितम्, क्वचिद्यत्र अनुत्पत्तिकेषु धर्मेषु क्षान्तिः प्रतिलब्धा, क्वचिद्यत्र व्याकृतोऽनुत्तरायां सम्यक्संबोधौ, यथा व्याकृतो येन व्याकृतो यावच्चिरेण च व्याकृतस्तत्सर्वमद्राक्षीत्। स क्वचित्कूटागारे मैत्रेयं बोधिसत्त्वं चक्रवर्तिराजभूतं सत्त्वान् दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापयमानमपश्यत्। क्वचिल्लोकपालभूतं सर्वलोकहितसुखं
30 सत्त्वानामुपसंहरमाणम्, क्वचिच्छक्रभूतं कामगुणरतिं सत्त्वानां विनिवर्तयमानम्, क्वचि-द्ब्रह्मभूतं ध्यानाप्रमाणरतिं सत्त्वानां संवर्णयमानम्, क्वचित्सुयामदेवाधिपतिभूतमप्रमाणगुणान् सत्त्वानां संवर्णयमानम्, क्वचित् संतुषितदेवेश्वरभूतमेकजातिप्रतिबद्धबोधिसत्त्वगुणानुद्भावय-

मानम्, कचित्सुनिर्मितदेवराजभूत सर्वबोधिसत्त्वनिर्माणव्यूह देवपर्षदि सदर्शयमानम्, कचिद्वशवर्तिदेवराजभूत सर्वधर्मवशवर्तिता देवाना सप्रकाशयमानम्, कचिन्मारत्व कारयमाणम्, सर्वसपत्त्यनित्यता देवाना देशयमानम्, कचिदसुरेन्द्रभवनोपपन्न सर्वमानमददर्पप्रहाणाय महाज्ञानसागरविगाहनाय धर्मज्ञानसागरविगाहनाय धर्मज्ञानमायाप्रतिलम्भाय असुरपर्षदि धर्मं देशयमानमपश्यत् । कचित्कूटागारे यमलोकमद्राक्षीत् । तत्र मैत्रेय बोधि- 5
सत्त्व प्रभया महानरकानवभास्य नरकोपपन्नाना सत्त्वाना सर्वनिरयदुःख प्रशमयमानमद्राक्षीत् । कचित्कूटागारे प्रेतभवनमद्राक्षीत् । तत्र मैत्रेय बोधिसत्त्व प्रेतभवनोपपन्नाना सत्त्वाना विपुलमन्नपानमुपसहृत्य क्षुत्पिपासा प्रशमयमानमद्राक्षीत् । कचित्कूटागारे तिर्यग्योनौ विविधोपपत्त्यायतननिर्मात्रतया तिर्यग्योनिगतान् सत्त्वान् विनयन्तमद्राक्षीत् । कचित्कूटागारे महाराजिकदेवपर्षदि लोकपालाना धर्मं देशयमानमपश्यत् । कचिच्छक- 10
देवराजपर्षदि कचित्सुयामदेवराजपर्षदि कचित्सतुषितदेवराजपर्षदि कचित्सुनिर्मितदेवराजपर्षदि कचिद्वशवर्तिदेवराजपर्षदि कचित्कूटागारे ब्रह्मेन्द्रपर्षदि मैत्रेय बोधिसत्त्व महाब्रह्मभूत धर्मं देशयमानमपश्यत् । कचिन्नागमहोरगपर्षदि कचिद्यक्षराक्षसपर्षदि कचिद्गन्धर्वकिन्नरपर्षदि कचिदसुरदानवेन्द्रपर्षदि कचिन्महोरगेन्द्रपर्षदि कचिन्मनुष्येन्द्रपर्षदि कचित्कूटागारे देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यपर्षदि मैत्रेय बोधिसत्त्व धर्मं देशयमान- 15
मपश्यत् । कचिच्छ्रावकपर्षदि कचित्प्रत्येकबुद्धपर्षदि कचिद्बोधिसत्त्वपर्षदि कचित्कूटागारे प्रथमचित्तोत्पादिकानामादिकर्मिकाणा बोधिसत्त्वाना मैत्रेय बोधिसत्त्व धर्मं देशयमानमपश्यत् । कचिच्चर्याप्रतिपन्नाना कचित्क्षान्तिप्रतिलब्धानामविनिवर्तनीयाना कचिदेकजातिप्रतिबद्धानामभिषेकप्राप्ताना कचित्कूटागारे प्रथमभूमिस्थिताना बोधिसत्त्वाना भूमिवैशेषिकता सवर्णयमानमपश्यत् । कचिद्यावद्दशभूमिस्थितैर्बोधिसत्त्वै सह मैत्रेय बोधिसत्त्व सर्वभूमि 20
वैशेषिकता सगायन्तमपश्यत् । कचित्सर्वपारमितापरिपूर्येऽप्रमाणता कचित्सर्वशिक्षाभिमुखावतारसमता कचित्समाधिमुखप्रवेशविस्तीर्णता कचिद्विमोक्षनयगम्भीरता कचिद्ध्यानसमाधिसमापत्त्यभिज्ञाविषयस्फरणता कचिद्बोधिसत्त्वचर्याविनयोपायमुखप्रवेशता कचित्प्रणिधानाभिनिर्हारविस्तीर्णता [1]कचित्कूटागारे मैत्रेय बोधिसत्त्व चक्रमाभियुक्त सभागचरितैर्बोधिसत्त्वै सार्धं लोकहितक्रियार्थं विविधशिल्पस्थानशास्त्रविशेषा सर्वसत्त्वहितसुखाधानोपसहितता 25
सगायमानमपश्यत् । कचिदेकजातिप्रतिबद्धैर्बोधिसत्त्वै सार्धं सर्वबुद्धज्ञानाभिषेकमुख सगायन्तमपश्यत् । कचित्कूटागारे मैत्रेय बोधिसत्त्व चक्रमाभियुक्त वर्षशतसहस्रैरनिक्षिप्तधुरमपश्यत् । कचिदुद्देशस्वाध्यायप्रयुक्त कचिद्धर्मानुगप्रत्यवेक्षणप्रयुक्त कचिद्धर्मसगायनप्रयुक्त कचिद्धर्मदेशनप्रयुक्त कचिन्मैत्रीसमाधिसमापन्न कचिन्सर्वध्यानाप्रमाणानि समापन्न कचित्सर्वकृत्स्नायतनविमोक्षसमापन्न कचित्कूटागारे बोधिसत्त्वाभिज्ञाभिनिर्हारप्रयोगसमाधि 30
समापन्न मैत्रेय बोधिसत्त्वमपश्यत् ॥

---

[1] B om कचित् सगायन्तमपश्यत्.

कचित्कूटागारे निर्माणवर्तीं बोधिसत्त्वसमाधिं समापन्नान् बोधिसत्त्वानपश्यत्। तेषा
च सर्वशरीररोममुखेभ्य. सर्वनिर्माणमेघान्निश्चरतोऽपश्यत्। केषाचित्सर्वरोममुखेभ्यो देवनिकाय-
मेघान्निश्चरतोऽपश्यत्। केषाचिन्नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालचक्र-
वर्तिमेघान् केषाचित्कोट्टराजमेघान् केषाचिद्राजकुमारमेघान् केषाचिच्छ्रेष्ठ्यमात्यगृहपतिमेघान्
5 केषाचिच्छ्रावकप्रत्येकबुद्धबोधिसत्त्वमेघान् केषाचित्तथागतकायमेघान् केषाचित्सर्वशरीररोम-
मुखेभ्योऽप्रमाणान् सर्वसत्त्वनिर्माणमेघान्निश्चरतोऽपश्यत्। केषाचित्सर्वरोममुखेभ्यो विविधानि
धर्ममुखानि निश्चरमाणान्यश्रौषीत्–यदुत बोधिसत्त्वगुणवर्णमुखानि दानपारमितामुखानि
शीलक्षान्तिवीर्यध्यानप्रज्ञोपायप्रणिधानबलज्ञानपारमितामुखानि सग्रहवस्तुध्यानाप्रमाणसमा
धिसमापत्त्यभिज्ञाविद्याधारणीप्रतिभानसत्यप्रतिसविच्छमथविपश्यनाविमोक्षमुखप्रतीत्यसमुत्पाद-
10 प्रतिशरणधर्मोद्दानस्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गश्रावकयानप्रत्येक-
बुद्धयानकथामहायानकथाभूमिक्षान्तिचर्याप्रणिधानमुखानि एव सर्वधर्ममुखप्रवेशशब्दान्नि
श्चरतोऽश्रौषीत्। कचित्कूटागारे तथागतपर्षन्मण्डलसनिपातानद्राक्षीत्। तेषा च तथागताना
नानाविमात्रता जन्मकुलविमात्रता कायव्यूहाप्रमाणविमात्रतामायुर्विमात्रता क्षेत्रविमात्रता
कल्पविमात्रता धर्मदेशनाविमात्रता निर्माणमुखविमात्रता सद्धर्मस्थितिविमात्रता यावदशेष
15 सर्वाकारपर्षन्मण्डलविमात्रतामद्राक्षीत्॥

मध्ये च वैरोचनव्यूहालकारगर्भस्य महाकूटागारस्य एकमुदारतर विस्तीर्णतर च
तदन्यसर्वकूटागाराशेषसर्वव्यूहातिरिक्ततरव्यूहसमलकृत कूटागारमद्राक्षीत्। स तस्य
कूटागारस्याभ्यन्तरे त्रिसाहस्रमहासाहस्र लोकधातुमद्राक्षीत्। तस्मिश्च त्रिसाहस्रमहासाहस्रे
लोकधातौ कोटीशत चातुर्द्वीपिकाना कोटीशत जम्बुद्वीपकाना कोटीशत तुषितभवनाना-
20 मद्राक्षीत्। स तत्र जम्बुद्वीपेषु मैत्रेय बोधिसत्त्व पद्मगर्भगत जायमानमपश्यत्।
शक्रब्रह्माभ्या प्रतीक्ष्यमाण सप्तपदानि प्रक्रान्त दश दिशो व्यवलोकयमान महासिंहनाद
नदन्त सर्वकुमारभूमिं सदर्शयमान अन्त पुरमध्ये गतमुद्यानभूमिं निष्क्रान्त सर्वज्ञताभिमुख-
मभिनिष्क्रम्य प्रव्रजन्त दुष्करचर्यां सदर्शयन्तमाहार परिभुञ्जान बोधिमण्डमुपसक्रान्त मार
धर्षयमाण बोधिं विबुध्यमान बोधिवृक्षमनिमिष निरीक्षमाण महाब्रह्मणाध्येष्यमाण धर्मचक्र
25 प्रवर्तयमान देवभवनेषु प्रविशन्तमद्राक्षीत्। नानाभिसबोधिधर्मचक्रप्रवर्तनविषयसदर्शन-
विमात्रताभिर्नानाकल्पनामप्रवर्तनविमात्रताभिर्नानायु प्रमाणविमात्रताभिर्नानापर्षन्मण्डलव्यूह
विमात्रताभिर्नानाक्षेत्रविशुद्धिनयसदर्शनविमात्रताभि नानाचर्याप्रणिधानप्रभावनाविमात्रताभि
नानाधर्मदेशनाव्यवस्थानसर्वपरिपाचनोपायविमात्रताभि नानाधातुविभङ्गशासनस्थित्यधि-
ष्ठानसदर्शनविमात्रताभि। सर्वत्र च तत्र सुधन श्रेष्ठिदारक पादमूलगतमात्मान
30 सजानीते स्म॥

स सर्वपर्षन्मण्डलेषु सर्वक्रियासदर्शनेषु सर्वायु प्रमाणविमात्रतासु असप्रमुषितेन
स्मृत्यधिष्ठानज्ञानेन सर्वसज्ञागतव्यवसितायां ज्ञानभूमौ स्थितो यावन्ति तेषु सर्वकूटागारेषु

घण्टाकिङ्किणीजालतूर्यसंगीतिप्रभृतीन्यारम्बणानि सत्त्वेभ्यस्तेभ्योऽचिन्त्यमेघनिगर्जितनिर्घोष-
शब्दं निश्चरन्तमश्रौषीत् । कचिद्बोधिचित्तविमात्रतां कचित्पारमिताचर्याप्रणिधानविमात्रतां
कचिद्भूम्यप्रमाणविमात्रतां कचिदभिज्ञाचिन्त्यविकुर्वितविमात्रतां कचित्तथागतपूजाविमात्र्य-
विमात्रतां कचिद्बुद्धक्षेत्रव्यूहविमात्रतां कचिदप्रमाणतथागतधर्ममेघविमात्रताम् एवं सर्वधर्म-
निर्घोषान् यथापूर्वपरिकीर्तितानश्रौषीत् । कचित्सर्वज्ञताप्रस्थानशब्दमश्रौषीत्–अमुष्मिन्
लोकधातावमुको नाम बोधिसत्त्वो बोधिचित्तमुत्पादयति अमुकं धर्ममुखं श्रुत्वा अमुकेन
कल्याणमित्रेण समादापितोऽमुकस्य तथागतस्य पादमूले एवंनाम्नि कल्पे ईदृशे बुद्धक्षेत्रे
ईदृक्पर्षन्मध्यगते ईदृशं कुशलमूलमवरोप्य ईदृशांस्तथागतगुणान् श्रुत्वा ईदृशेनाध्या-
शयेन ईदृश्या प्रणिधानविमात्रतया । इयतः कल्पान् बोधिसत्त्वचर्यां चरित्वा इयद्भिः
कल्पैरनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते । ईदृङ्नामधेयः ईदृशेन आयुःप्रमाणेन ईदृश्या
बुद्धक्षेत्रगुणव्यूहसंपदा । ईदृशेन प्रणिधानविशेषेण ईदृशेन सत्त्वविनयेन ईदृशेन श्रावक-
प्रत्येकबुद्धबोधिसत्त्वसंनिपातेन । तस्य परिनिर्वृतस्य इयतः कल्पान् सद्धर्मः स्थास्यति, इयान्
समयो भविष्यति । कचिन्निर्घोषमश्रौषीत्–अमुष्मिँल्लोकधातावमुको नाम बोधिसत्त्वो दान-
पारमितायां चरन्नीदृशानि दुष्करपरित्यागशतानि करोति । अमुको बोधिसत्त्वः शीलं रक्षति,
क्षान्तिं भावयति, वीर्यमालभते, ध्यानानि समापद्यते प्रज्ञाविचयप्रयुक्तः । अमुको बोधिसत्त्वः
सद्धर्मपर्येष्टिहेतो राजपरित्यागं करोति, रत्नपरित्यागं पुत्रपरित्यागं भार्यापरित्यागं हस्तपाद-
नयनोत्तमाङ्गपरित्यागं करोति, अग्निप्रपतनं करोति । अमुको नाम बोधिसत्त्वः तथागत-
शासनमभ्युद्गतो धर्मभाणकत्वं करोति, धर्मदानं ददाति, धर्मयज्ञं यजति, धर्मध्वजमुच्छ्रयति,
धर्मभेरीं पराहन्ति, धर्मशङ्खमापूरयति, धर्मवर्षं प्रवर्षति, तथागतशासनं धारयति, तथागत-
चैत्यान्यलंकरोति, तथागतविग्रहान् कारयति, सत्त्वसुखोपधानमुपसंहरति, सद्धर्मकोश-
मारक्षति । कचिन्निर्घोषमश्रौषीत्–अमुष्मिँल्लोकधातावमुको नाम तथागत एतर्हि तिष्ठति
ध्रियते यापयति, धर्मं च देशयति एवंनामाभिषेकेण ईदृश्यां पर्षदि ईदृशे बुद्धक्षेत्रे ईदृशे
कल्पे ईदृशेनायुःप्रमाणेन ईदृश्या धर्मदेशनया ईदृशेन सत्त्वविनयेन ईदृक्प्रणिध्यभिसंबोधेन ।
एवमेकैकस्माद् घण्टाकिङ्किणीजालतूर्यादिकादारम्बणादप्रमाणधर्ममुखविमात्रतानिर्घोषानश्रौ-
षीत् । सर्वेषां च तेषां निर्घोषाणां श्रवेण सुधनः श्रेष्ठिदारको विपुलप्रीतिवेगाभिष्यन्दित
चित्तस्तानि धर्ममुखानि शृणोति । कचिद्धारणीमुखानि प्रत्यलभत, कचित्प्रणिधानमुखानि
कचित्क्षान्तिमुखानि, कचिच्चर्यामुखानि, कचित्प्रणिधानमुखानि, कचित्पारमितामुखानि,
कचिदभिज्ञामुखानि, कचिद्विद्याज्ञानालोकमुखानि, कचिद्विमोक्षमुखानि, कचित्समाधि-
प्रवेशमुखानि प्रत्यलभत ॥

तेभ्यश्च आदर्शमण्डलेभ्योऽपरिमाणप्रतिभासव्यूहविज्ञप्तिमपश्यत् । कचित्तथागत-
पर्षन्मण्डलप्रतिभासविज्ञप्तिं कचिद्बोधिसत्त्वपर्षन्मण्डलप्रतिभासविज्ञप्तिं कचिच्छ्रावकपर्ष-
न्मण्डलप्रतिभासविज्ञप्तिं कचित्प्रत्येकबुद्धपर्षन्मण्डलप्रतिभासविज्ञप्तिं कचित्तथागतपर्षन्मण्डल-

क्वचित्कूटागारे निर्माणवर्ती बोधिसत्त्वसमाधिं समापन्नान् बोधिसत्त्वानपश्यत् । तेषां च सर्वशरीररोममुखेभ्यः सर्वनिर्माणमेघान्निश्चरतोऽपश्यत् । केषांचित्सर्वरोममुखेभ्यो देवनिकायमेघान्निश्चरतोऽपश्यत् । केषांचिन्नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालचक्रवर्तिमेघान् केषांचित्कोट्टराजमेघान् केषांचिद्राजकुमारमेघान् केषांचिच्छ्रेष्ठ्यमात्यगृहपतिमेघान् 5 केषांचिच्छ्रावकप्रत्येकबुद्धबोधिसत्त्वमेघान् केषांचित्तथागतकायमेघान् केषांचित्सर्वशरीररोममुखेभ्योऽप्रमाणान् सर्वसत्त्वनिर्माणमेघान्निश्चरतोऽपश्यत् । केषांचित्सर्वरोममुखेभ्यो विविधानि धर्ममुखानि निश्चरमाणान्यश्रौषीत्—यदुत बोधिसत्त्वगुणवर्णमुखानि दानपारमितामुखानि शीलक्षान्तिवीर्यध्यानप्रज्ञोपायप्रणिधानबलज्ञानपारमितामुखानि संग्रहवस्तुध्यानाप्रमाणसमाधिसमापत्त्यभिज्ञाविद्याधारणीप्रतिभानसत्यप्रतिसंविच्छमथविपश्यनाविमोक्षमुखप्रतीत्यसमुत्पाद- 10 प्रतिशरणधर्मोद्दानस्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गश्रावकयानप्रत्येकबुद्धयानकथामहायानकथाभूमिक्षान्तिचर्याप्रणिधानमुखानि एवं सर्वधर्ममुखप्रवेशशब्दान्निश्चरतोऽश्रौषीत् । क्वचित्कूटागारे तथागतपर्षन्मण्डलसंनिपातानद्राक्षीत् । तेषां च तथागतानां नानाविमात्रतां जन्मकुलविमात्रतां कायव्यूहाप्रमाणविमात्रतामायुर्विमात्रतां क्षेत्रविमात्रतां कल्पविमात्रतां धर्मदेशनाविमात्रतां निर्माणमुखविमात्रतां सद्धर्मस्थितिविमात्रतां यावदशेष- 15 सर्वाकारपर्षन्मण्डलविमात्रतामद्राक्षीत् ॥

मध्ये च वैरोचनव्यूहालंकारगर्भस्य महाकूटागारस्य एकमुदारतरं विस्तीर्णतरं च तदन्यसर्वकूटागाराशेषसर्वव्यूहातिरिक्ततरव्यूहसमलंकृतं कूटागारमद्राक्षीत् । स तस्य कूटागारस्याभ्यन्तरे त्रिसाहस्रमहासाहस्रं लोकधातुमद्राक्षीत् । तस्मिंश्च त्रिसाहस्रमहासाहस्रे लोकधातौ कोटीशतं चातुर्द्वीपिकानां कोटीशतं जम्बुद्वीपकानां कोटीशतं तुषितभवनाना- 20 मद्राक्षीत् । स तत्र जम्बुद्वीपेषु मैत्रेयं बोधिसत्त्वं पद्मगर्भगतं जायमानमपश्यत् । शक्रब्रह्माभ्यां प्रतीक्ष्यमाणं सप्तपदानि प्रक्रान्तं दश दिशो व्यवलोकयमानं महासिंहनादं नदन्तं सर्वकुमारभूमिं संदर्शयमानम् अन्तःपुरमध्ये गतमुद्यानभूमिं निष्क्रान्तं सर्वज्ञताभिमुखमभिनिष्क्रम्य प्रव्रजन्तं दुष्करचर्यां संदर्शयन्तमाहारं परिभुञ्जानं बोधिमण्डमुपसंक्रान्तं मारं धर्षयमाणं बोधिं विबुध्यमानं बोधिवृक्षमनिमिषं निरीक्षमाणं महाब्रह्मणाध्येष्यमाणं धर्मचक्रं 25 प्रवर्तयमानं देवभवनेषु प्रविशन्तमद्राक्षीत् । नानाभिसंबोधिधर्मचक्रप्रवर्तनविषयसंदर्शनविमात्रताभिर्नानाकल्पनामप्रवर्तनविमात्रताभिर्नानायुःप्रमाणविमात्रताभिर्नानापर्षन्मण्डलव्यूहविमात्रताभिर्नानाक्षेत्रविशुद्धिविनयसंदर्शनविमात्रताभिः नानाचर्याप्रणिधानप्रभावनाविमात्रताभिः नानाधर्मदेशनाव्यवस्थानसत्त्वपरिपाचनोपायविमात्रताभिः नानाधातुविभङ्गशासनस्थित्यधिष्ठानसंदर्शनविमात्रताभिः । सर्वत्र च तत्र सुधनं श्रेष्ठिदारकं पादमूलगतमात्मानं 30 संजानीते स्म ॥

स सर्वपर्षन्मण्डलेषु सर्वक्रियासंदर्शनेषु सर्वायुःप्रमाणविमात्रतासु असंप्रमुषितेन स्मृत्यधिष्ठानज्ञानेन सर्वसंज्ञागतव्यवसितायां ज्ञानभूमौ स्थितो यावन्ति तेषु सर्वकूटागारेषु

घण्टाकिङ्किणीजालतूर्यसंगीतिप्रभृतीन्यारम्बणानि सत्त्वेभ्यस्तेभ्योऽचिन्त्यमेघनिगार्जितनिर्घोषशब्दं निश्चरन्तमश्रौषीत्। कचिद्बोधिचित्तविमात्रता कचित्पारमिताचर्याप्रणिधानविमात्रता कचिद्भूम्यप्रमाणविमात्रता कचिदभिज्ञाचिन्त्यविकुर्वितविमात्रता कचित्तथागतपूजाविमात्र्यविमात्रता कचिद्बुद्धक्षेत्रव्यूहविमात्रता कचिदप्रमाणतथागतधर्ममेघविमात्रताम् एवं सर्वधर्मनिर्घोषान् यथापूर्वपरिकीर्तितानश्रौषीत्। कचित्सर्वज्ञताप्रस्थानशब्दमश्रौषीत्–अमुष्मिन् 5 लोकधातावमुको नाम बोधिसत्त्वो बोधिचित्तमुत्पादयति अमुकं धर्ममुखं श्रुत्वा अमुकेन कल्याणमित्रेण समादापितोऽमुकस्य तथागतस्य पादमूले एवंनाम्नि कल्पे ईदृशे बुद्धक्षेत्रे ईदृक्पर्षन्मध्यगते ईदृशं कुशलमूलमूलमवरोप्य ईदृशांस्तथागतगुणान् श्रुत्वा ईदृशेनाध्याशयेन ईदृश्या प्रणिधानविमात्रतया। इयत कल्पान् बोधिसत्त्वचर्यां चरित्वा इयद्भिः कल्पैरनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। ईदृङ्नामधेयं ईदृशेन आयुःप्रमाणेन ईदृश्या 10 बुद्धक्षेत्रगुणव्यूहसंपदा। ईदृशेन प्रणिधानविशेषेण ईदृशेन सत्त्वविनयेन ईदृशेन श्रावकप्रत्येकबुद्धबोधिसत्त्वसंनिपातेन। तस्य परिनिर्वृतस्य इयतः कल्पान् सद्धर्मः स्थास्यति, इयान् समयो भविष्यति। कचिन्निर्घोषमश्रौषीत्–अमुष्मिँल्लोकधातावमुको नाम बोधिसत्त्वो दानपारमितायां चरन्नीदृशानि दुष्करपरित्यागशतानि करोति। अमुको बोधिसत्त्वः शीलं रक्षति, क्षान्तिं भावयति, वीर्यमालभते, ध्यानानि समापद्यते प्रज्ञाविचयप्रयुक्तः। अमुको बोधिसत्त्वः 15 सद्धर्मपर्येष्टिहेतो राजपरित्यागं करोति, रत्नपरित्यागं पुत्रपरित्यागं भार्यापरित्यागं हस्तपादनयनोत्तमाङ्गपरित्यागं करोति, अग्निप्रपतनं करोति। अमुको नाम बोधिसत्त्वः तथागतशासनमभ्युद्गतो धर्मभाणकत्वं करोति, धर्मदानं ददाति, धर्मयज्ञं यजति, धर्मध्वजमुच्छ्रयति, धर्मभेरीं पराहन्ति, धर्मशङ्खमापूरयति, धर्मवर्षं प्रवर्षति, तथागतशासनं धारयति, तथागतचैत्यान्यलंकरोति, तथागतविग्रहान् कारयति, सत्त्वसुखोपधानमुपसंहरति, सद्धर्मकोशा- 20 मारक्षति। कचिन्निर्घोषमश्रौषीत्–अमुष्मिँल्लोकधातावमुको नाम तथागत एतर्हि तिष्ठति ध्रियते यापयति, धर्मं च देशयति एवंनामाभिषेकेण ईदृश्यां पर्षदि ईदृशे बुद्धक्षेत्रे ईदृशे *कल्पे ईदृशेनायुःप्रमाणेन ईदृश्या धर्मदेशनया ईदृशेन सत्त्वविनयेन ईदृक्प्रणिध्यभिसंबोधेन।* एवमेकैकस्माद् घण्टाकिङ्किणीजालतूर्यादिकादारम्बणादप्रमाणधर्ममुखविमात्रतानिर्घोषानश्रौषीत्। सर्वेषां च तेषां निर्घोषाणां श्रवेण सुधनः श्रेष्ठिदारको विपुलप्रीतिवेगाभिष्यन्दित 25 चित्तसंतानो धर्ममुखानि शृणोति। कचिद्धारणीमुखानि प्रत्यलभत, कचित्प्रणिधानमुखानि कचित्क्षान्तिमुखानि, कचिच्चर्यामुखानि, कचित्प्रणिधानमुखानि, कचित्पारमितामुखानि, कचिदभिज्ञामुखानि, कचिद्विद्याज्ञानालोकमुखानि, कचिद्विमोक्षमुखानि, कचित्समाधिप्रवेशमुखानि प्रत्यलभत॥

तेभ्यश्च आदर्शमण्डलेभ्योऽपरिमाणप्रतिभासव्यूहविज्ञप्तिमपश्यत्। कचित्तथागत- 30 पर्षन्मण्डलप्रतिभासविज्ञप्तिं कचिद्बोधिसत्त्वपर्षन्मण्डलप्रतिभासविज्ञप्तिं कचिच्छ्रावकपर्षन्मण्डलप्रतिभासविज्ञप्तिं कचित्प्रत्येकबुद्धपर्षन्मण्डलप्रतिभासविज्ञप्तिं कचित्तथागतपर्षन्मण्डल-

प्रतिभासविज्ञप्तिं क्वचित्संक्लिष्टक्षेत्रप्रतिभासविज्ञप्तिं क्वचिद्विशुद्धक्षेत्रप्रतिभासविज्ञप्तिं क्वचित्संक्लिष्टविशुद्धक्षेत्रप्रतिभासविज्ञप्तिं क्वचित्सर्वबुद्धैकलोकधातुप्रतिभासविज्ञप्तिं क्वचिद्बुद्धलोकधातुप्रतिभासविज्ञप्तिं क्वचित्परीत्तलोकधातुप्रतिभासविज्ञप्तिं क्वचिन्महद्गतलोकधातुप्रतिभासविज्ञप्तिं क्वचित्सूक्ष्मलोकधातुप्रतिभासविज्ञप्तिं क्वचिदुदारलोकधातुप्रतिभासविज्ञप्तिं क्वचिदिन्द्र-
5 जालप्रवेशलोकधातुप्रतिभासविज्ञप्तिं क्वचिदवलम्बलोकधातुप्रतिभासविज्ञप्तिं क्वचिदधमूर्ध्वलोकधातुप्रतिभासविज्ञप्तिं क्वचित्समधरणीतलप्रवेशलोकधातुप्रतिभासविज्ञप्तिं क्वचिन्नरकतिर्यक्प्रेतावभासलोकधातुप्रतिभासविज्ञप्तिं क्वचिद्देवमनुष्याकीर्णलोकधातुप्रतिभासविज्ञप्तिमद्राक्षीत्। तेषु च चङ्क्रमेषु निषद्य आसनेषु च असंख्येयान् बोधिसत्त्वान् नानाकार्यप्रयुक्तानपश्यत्। कांश्चिच्चङ्क्रम्यमाणान् कांश्चिद्ध्यायच्छत कांश्चिद्विपश्यत: कांश्चिन्महाकरुणया
10 स्फरमाणान् कांश्चिद्विविधान् शास्त्रनयान् लोकार्थसंप्रयुक्तानभिनिर्हरमाणान् कांश्चिदुद्दिशत कांश्चित्स्वाध्यायमानान् कांश्चिल्लिखित कांश्चित्परिप्रश्नयत कांश्चित्रिस्कन्धदेशनापरिणमनाभियुक्तान् कांश्चित्प्रणिधानान्यभिनिर्हरमाणान् ॥

तेभ्यश्च स्तम्भेभ्यः सर्वमणिराजप्रभाजालानि निश्चरन्ति व्यपश्यत्। क्वचिन्नीलवर्णानि क्वचित्पीतवर्णानि क्वचिल्लोहितवर्णानि क्वचिदवदातवर्णानि क्वचित्स्फटिकवर्णानि
15 क्वचित्तपनीयवर्णानि क्वचिदिन्द्रनीलवर्णानि क्वचिदिन्द्रायुधवर्णानि क्वचिज्जाम्बूनदसुवर्णवर्णानि क्वचित्सर्वप्रभासवर्णानि कायचित्तप्रीतिसंजननपरमनयनाभिरामाणि। ताश्च जाम्बूनदसुवर्णवर्णकदलीस्तम्भान् सर्वरत्नविग्रहाश्च पुष्पमेघावलम्बितपाणीनद्राक्षीत्। माल्यदामपाणीन् छत्रध्वजपताकापाणीन् गन्धधूपविलेपनपाणीन् विविधरत्नविचित्रसुवर्णसूत्रपाणीन् विविधमुक्ताहारपाणीन् नानारत्नहारपाणीन् सर्वव्यूहपरिगृहीतपाणीन्। कांश्चिदवनतचूडा-
20 मणिमकुटान् अनिमिषनयनान् कृताञ्जलिपुटान् नमस्यतोऽपश्यत्। तेभ्यश्च मुक्ताहारेभ्य सर्वगन्धपरिभावितोष्टाङ्गोपेतसूक्ष्मजलधरान् प्रस्रवमाणानपश्यत्। तेभ्यश्च वैडूर्यमणिहार जालेभ्यो दीर्घपङ्क्तीन् क्षरन्तीनपश्यत्। तानि च रत्नच्छत्राणि सर्वालंकारव्यूहोपशोभितान्यपश्यत्। ता च रत्नघण्टाकिङ्किणीजालपट्टदामकलापमणिशलाकाविचित्रमणिरत्नकोशसमलंकृतगर्भामपश्यत्। ताभ्यश्च पुष्करिणीभ्योऽसंख्येयानि रत्नपद्मोत्पलकुमुदपुण्डरीकाण्यभ्यु-
25 द्गतान्यपश्यत्। कानिचिद्वितस्तिप्रमाणमात्राणि कानिचिद्व्यामप्रमाणमात्राणि कानिचिच्छकटचक्रप्रमाणमात्राणि। तेषु च नानारूपान् व्यूहानपश्यत्। यदुत स्त्रीरूपान् पुरुषरूपान् दारकरूपान् दारिकारूपान् शक्ररूपान् ब्रह्मरूपान् लोकपालरूपान् देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगरूपान् श्रावकप्रत्येकबुद्धबोधिसत्त्वरूपान् सर्वजगद्रूपसंस्थानशरीरान् विचित्रनानावर्णान् कृताञ्जलिपुटानवनतकायान्नमस्यतोऽपश्यत्। द्वात्रिंशन्महापुरुषलक्षण-
30 समलंकृतकायांश्च तथागतविग्रहान् पर्यङ्कनिषण्णानपश्यत् ॥

या च सा वैडूर्यतलाष्टापदमहापृथिवी, तत्र एकैकतोऽष्टापदादचिन्त्या प्रतिभासविज्ञप्तीरपश्यत्। क्वचित्क्षेत्रप्रतिभासविज्ञप्तिं क्वचिद्बुद्धप्रतिभासविज्ञप्तिम्। यावन्तश्च तेषु

१ S °कुमारीविग्रहान्

कूटागारेष्वलंकारव्यूहा, तान् सर्वानेकैकस्मिन्नष्टापदे प्रतिभासप्राप्तानपश्यत्। तेषां च रत्नवृक्षाणां सर्वत्र पुष्पफलकोशेभ्यो नानासंस्थानविचित्रसुवर्णरूपार्धकायानपश्यत्। क्वचिद्बुद्धार्धकायान् क्वचिद्बोधिसत्त्वार्धकायान् क्वचिद्देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगार्धकायान् क्वचिच्छक्रब्रह्मलोकपालार्धकायान् क्वचिच्चक्रवर्तिमनुष्येन्द्रार्धकायान् क्वचिद्राजकुमारश्रेष्ठिगृहपत्यमात्यस्त्रीपुरुषदारकदारिकाभिक्षुभिक्षुण्युपासकोपासिकार्धकायान् कांश्चित्पुष्पदामावलम्बितपाणीन् कांश्चिद्रत्नहाराभिप्रलम्बितपाणीन् कांश्चित्सर्वव्यूहपरिगृहीतपाणीन् कांश्चिदवनतकायान् कृताञ्जलिपुटानिमिषनयनान् नमस्यतः कांश्चिदभिष्टुवतः कांश्चित्समापन्नान् कांश्चित्सुवर्णवर्णावभासान् कांश्चिद्रूप्यवर्णावभासान् कांश्चित्तुषारसुकुमारवर्णावभासान् कांश्चिदिन्द्रनीलमणिवर्णावभासान् कांश्चिद्विरोचनमणिरत्नावभासान् कांश्चित्सर्वरत्नवर्णावभासान् कांश्चिच्चम्पकपुष्पवर्णावभासान् कांश्चित्प्रभाच्छायावभासान् कांश्चिल्लक्षणविचित्रात्मभावानपश्यत्। तेभ्यश्च अर्धचन्द्रेभ्योऽसंख्येयाश्चन्द्रसूर्यग्रहनक्षत्रताराप्रतिभासान् निश्चर्य दशदिशोऽवभासयमानानपश्यत्॥

ताश्च प्रासादविमानकूटागारभित्तीः सर्वरत्नाष्टापदविचित्रा अपश्यत्। तेषु च सर्वरत्नाष्टापदेषु मैत्रेयस्य बोधिसत्त्वस्य सर्वबोधिसत्त्वचर्यानुक्रममपश्यत् यथा पूर्वं बोधिसत्त्वचर्यामचरन्। क्वचिदष्टापदे मैत्रेयस्य बोधिसत्त्वस्य शिरःप्रदानमपश्यत्। क्वचिन्नेत्रप्रदानं क्वचिद्रत्नप्रदानं क्वचिच्चूडामणिरत्नप्रदानं क्वचित्सद्धर्मचूडामणिप्रदानं क्वचिद्दन्तप्रदानं क्वचिज्जिह्वाप्रदानं क्वचित्कर्णनासाप्रदानं क्वचिद्धृदयप्रदानं क्वचिन्मज्जमांसप्रदानं क्वचिद्रुधिरप्रदानं क्वचिच्छविचर्मप्रदानं क्वचिन्मांसनखप्रदानं क्वचित्सजालाङ्गुलिप्रदानं क्वचित्सर्वशरीरप्रदानं क्वचित्पुत्रदुहितृभार्याप्रदानं क्वचिद्रत्नराशिप्रदानं क्वचिद्ग्रामनगरनिगमजनपदराष्ट्रराजधानीप्रदानं क्वचिज्जम्बुद्वीपप्रदानं क्वचिच्चतुर्द्वीपप्रदानं क्वचित्सर्वराज्यैश्वर्यप्रदानं क्वचिद्भद्रराजासनप्रदानं क्वचिद्दासदासीप्रदानं क्वचिदन्तःपुरप्रदानं क्वचिदुद्यानतपोवनप्रदानं क्वचिच्छत्रध्वजपताकाप्रदानं क्वचित्पुष्पमाल्यगन्धानुलेपनप्रदानं क्वचिद् ग्लानप्रत्ययभैषज्यप्रदानं क्वचित्सर्वान्नपानविधिप्रदानं क्वचित्सर्वोपकरणप्रदानं क्वचित्सर्वोपाश्रयप्रदानं क्वचिद्रत्नभाजनपात्रीप्रदानं क्वचिद्वरत्रयप्रदानं क्वचिद्बन्धनागारगतान् विमोक्षयन्तं क्वचिद्बध्यान् निर्मोक्षयन्तं क्वचिद्ग्लानेभ्यश्चिकित्समानं क्वचित्प्रनष्टमार्गाणां मार्गमुपदर्शयन्तं क्वचिद्दाशभूतं नदीपथे नावं वाहयमानं क्वचिदश्वराजभूतं महासमुद्रे राक्षसीद्वीपगतान् सत्त्वान् परित्रायमाणं क्वचिन्महर्षिभूतं शास्त्राण्यभिनिर्हरमाणं क्वचिच्चक्रवर्तिभूतं दशकुशलेषु कर्मपथेषु सत्त्वान् प्रतिष्ठापयमानं क्वचिद्वैद्यभूतमातुराणां चिकित्सां प्रयोजयमानं क्वचिन्मातापितरावुपतिष्ठन्तं क्वचित्कल्याणमित्राणि शुश्रूषन्तं क्वचिच्छ्रावकवर्णरूपेण सत्त्वविनयेन प्रयुक्तं क्वचित्प्रत्येकबुद्धवर्णरूपेण क्वचिद्बोधिसत्त्ववर्णरूपेण क्वचिद्बुद्धवर्णरूपेण क्वचित्सत्त्वविनयप्रयुक्तं क्वचिन्नानाकारविशेषैरुपपाचितं सदर्श्य सत्त्वान् परिपाचयमानं क्वचिद्धर्मभाणकरूपेण तथागतशासनोपगतमुद्दिशन्तं स्वाध्यायमानं योनिशो मीमांसाप्रयुक्तं तथागतचैत्यान् पर्युपासमानं तथागतबिम्बान्

कारयमाण बुद्धपूजायां सत्त्वान् समादापयमान गन्धानुलेपनप्रदान सुगन्धतैलाभ्यञ्जनपुष्प माल्यारोपणादिसर्वाकारबुद्धपूजाप्रयुक्त दशसु कुशलमूलेषु कर्मपथेषु सत्त्वान् प्रतिष्ठापयमान पञ्चसु शिक्षापदेषु अष्टाङ्गपोषधेषु बुद्धधर्मसंघशरणगमनेषु प्रव्रज्यायां धर्मश्रवणे उद्देश-स्वाध्याययोनिशोमनसिकारेषु सत्त्वान्नियोजयमान धर्मसांकथ्याय सिंहासनसंनिपण्ण बुद्धबोधिं
5 निर्दिशन्तम्। इति हि यावन्मैत्रेयो बोधिसत्त्वोऽसंख्येयै कल्पकोटीनियुतशतसहस्रैः षट्सु पारमितासु चीर्णचरित, तत्सर्वं सुधन श्रेष्ठिदारकस्तत एकैकस्मादष्टापदादपरापरैराकारै-रद्राक्षीत्। स कश्चित्कूटागारे यावन्ति मैत्रेयेण बोधिसत्त्वेन कल्याणमित्राणि पर्युपासितानि तेषां निर्दिशितव्यूहानद्राक्षीत्। सर्वेषु च तेषु कल्याणमित्रेषु उपसंक्रान्तमाभाष्यमाणमात्मानं संजानीते स्म-एहि सुधन स्वागतम्। मासि क्लान्त। पश्येमां बोधिसत्त्वाचिन्त्यताम्॥

10 इति हि सुधन श्रेष्ठिदारकस्तत एकैकस्मात्कूटागारादेकैकस्मादारम्बणादिमानि च अन्यानि च अचिन्त्यव्यूहविषयविकुर्वितान्यद्राक्षीत्। असंप्रमुषितेन स्मृतिबलाधानेन समन्तदिग्व्यवचारितया चक्षुःपरिशुद्ध्या अनावरणेन विपश्यनाकौशल्यज्ञानेन बोधिसत्त्व-ज्ञानाधिष्ठानवशिताप्रतिलम्भेन बोधिसत्त्वसंज्ञागतप्रसृतायां ज्ञानभूमौ स्थित, तत्सर्वमनन्त व्यूहविषयविकुर्वितमद्राक्षीत्। तद्यथा पुरुष सुप्त स्वप्नान्तरगतो विविधान् रूपारम्बण
15 विशेषान् पश्येत् यदुत गृहविमानरमणीयानि वा ग्रामनगरनिगमजनपदरमणीयानि वा वस्त्रान्नपानपरिभोगरमणीयानि वा गीतवाद्यतूर्यसंगीतिविविधरतिक्रीडारमणीयानि वा पश्येत्। उद्यानारामतपोवनरमणीयानि वा वृक्षनदीपुष्करिणीपर्वतरमणीयानि वा मातापितृमित्रज्ञाति सालोहितसमवधानगत वा आत्मान संजानीते। महासमुद्र वा पश्येत् सुमेरु वा पर्वतराजान सर्वदेवभवनानि वा जम्बुद्वीप वा, अनेकयोजनशतस्थित वा आत्मान संजानीते। तच्च गृह
20 वा अवचरक वा विपुल पश्येत्। सर्वगुणालंकारसमवसृत दिवसमेव संजानीते। न रात्रिदीर्घं च संजानीते न ह्रस्वम्, न स्वप्न इति संजानीते। सुखोपस्थान चात्मन पश्येत्। स प्रस्रब्धकायसंस्कारो विगतस्त्यानमिद्ध सर्वरत्यपकर्षितो विपुलप्रीतिसुखसंवेदी दीर्घं च विपुल च संजानीते। दिवस वा सप्ताह वा अर्धमास वा संवत्सर वा वर्षशत वा ततो वा उत्तरि संजानीते। प्रतिविबुद्धश्च तत्सर्वमनुस्मरेत्। एवमेव सुधन श्रेष्ठिदारक
25 बोधिसत्त्वाधिष्ठानेन सर्वत्रैधातुकस्वप्नसमवसरणज्ञानेन परीत्तसंज्ञागतनिरुद्धचेता विपुलमह द्गतानावरणबोधिसत्त्वसंज्ञागतविहारी बोधिसत्त्वविषयानुगतोऽचिन्त्यबोधिसत्त्वनयप्रवेशानुसृत बुद्धिस्तं सर्वव्यूहविकुर्वितमपश्यत्, संजानीतेऽनुभवति विचारयति निमित्तीकरोति आलक्षयति, तत्र च स्थितमात्मान संजानीते। तद्यथा ग्लान पुरुषश्चरमे चित्तोत्पादे वर्तमान उपपत्त्यानन्तर्य-चित्ते प्रत्युपस्थिते कर्मभवे आमुखीभूते यथाकृतकर्मोपचयविपाकेन अशुभकर्मप्रत्ययेन नरक
30 वा पश्येत्, तिर्यग्योनिं वा प्रेतविषय वा यमपुरुषान् वा दृढप्रहरणगृहीतान् रुषितानाक्रोशतो रुदितान्रोशितशब्द च नारकाणा शृणुयात्। ता च क्षारनदीं पश्येत्, तांश्च क्षुरधारा पर्वतान्, ता च कूटशाल्मलीम्, तच्च असिपत्रवन पश्येत्। तांश्च महानरकानादीप्तान्

संप्रज्वलितानेकज्वालीभूतान्, तांश्च लोहकुम्भीः पश्येत्, ताः कारणाः कार्यमाणान्, तांश्च वेदनामनुभूयमानान् संजानीत। तानि च नैरयिकान्यग्निसंतापदुःखानि पश्येदनुभवेत्। शुभकर्मोपचयेन वा देवभवनं पश्येत्। देवपर्षदप्सरोगणं सर्वव्यूहालंकारांश्च पश्येत्, उद्यानविमाननदीपुष्करिणीरत्नपर्वतकल्पवृक्षपरिभोगान् वा पश्येदनुभवेत्, तदायुःकालं च संजानीयात्–इतश्च्युतस्तत्र चोपपन्नोऽनन्तर्हित एव कर्मविषयाचिन्त्यतया एतां क्रियां पश्येत् संजानीत अनुभवेत्। एवमेव सुधनः श्रेष्ठिदारको बोधिसत्त्वकर्मविषयाचिन्त्यतया तत्सर्वव्यूहविकुर्वितमद्राक्षीत्। तद्यथा भूतग्रहाविष्टः पुरुषो विविधानि रूपगतानि पश्यति। यच्च परिपृच्छ्येत, तद्व्याकरोति। एवमेव सुधनः श्रेष्ठिदारको बोधिसत्त्वज्ञानाधिष्ठानबलेन तान् सर्वव्यूहानद्राक्षीत्। तद्यथा नागभवनप्रविष्टः पुरुषो नागसंज्ञागतप्रवेशेन दिवसं वा सप्ताहं वा अर्धमासं वा मासं वा संवत्सरं वा वर्षशतं वा संज्ञामात्रं संजानीते, नागसंज्ञागतोत्सृष्टो मनुष्यसंज्ञागतेन मुहूर्तमात्रं पश्येत्। एवमेव सुधनः श्रेष्ठिदारको बोधिसत्त्वसंज्ञागतानुस्मृतबुद्धिस्तन्मैत्रेयस्य बोधिसत्त्वस्य अधिष्ठानवशेन तन्मुहूर्तं बहूनि कल्पकोटीनियुतशतसहस्राणि संजानीते स्म। तद्यथास्ति सर्वजगद्वरव्यूहगर्भं नाम महाब्रह्मणो विमानम्। तत्र सर्वत्रिसाहस्रमहासाहस्रो लोकधातुराभासमागच्छति प्रतिभासयोगेन सर्वारम्बणामिश्रीभूतः। एवमेव सुधनः श्रेष्ठिदारकः तान् सर्वान् व्यूहानन्योन्यासंकीर्णान् सर्वारम्बणेषु प्रतिभासप्राप्तः तद्यथा कृत्स्नायतनसमापत्तिविहारी भिक्षुरेकोऽद्वितीयः शयने वा चंक्रमे वा निषद्यायां वा उत्थितो वा निषण्णो वा यथाकृत्स्नसमापत्तिविषयावतारेण सर्वलोकं संजानीते पश्यत्यनुभवति ध्यायिविशेषाचिन्त्यतायै। एवमेव सुधनः श्रेष्ठिदारकः तान् सर्वान् व्यूहान् यथाविषयावतारेण पश्यति संजानीते। तद्यथा गन्धर्वनगराणां सर्वव्यूहालंकारा गगनतले संदृश्यन्ते, न च कस्यचिदावरणत्वाय कल्पन्ते। तद्यथा यक्षविमानप्रतिष्ठानि मनुष्यविमानानि यक्षविमानान्तर्गतान्यन्योन्यासंभिन्नानि यथाकामविषयपरिशुद्ध्या संदृश्यन्ते। तद्यथा महासमुद्रे सर्वस्य त्रिसाहस्रमहासाहस्रस्य लोकधातोः प्रतिभाससमुद्राः संदृश्यन्ते। तद्यथा[1] मायाकारो मन्त्रविद्याभिनिर्हाराधिष्ठानेन सर्वरूपगतानि सर्वक्रियाश्च संदर्शयति। एवमेव सुधनः श्रेष्ठिदारको मैत्रेयस्य बोधिसत्त्वस्याधिष्ठानज्ञानमायाचिन्त्यप्रदेशेन तानि सर्वव्यूहविकुर्वितान्यद्राक्षीत् धर्मज्ञानमायात्वाभिनिर्हारेण बोधिसत्त्ववशिताधिष्ठानज्ञानमायागतेन ॥

अथ खलु मैत्रेयो बोधिसत्त्वस्तत्कूटागारं प्रविश्य तदधिष्ठानमवसृज्य सुधनं श्रेष्ठिदारकमच्छटाशब्दं कृत्वा एतदवोचत्—उत्तिष्ठ कुलपुत्र। एषा धर्माणां धर्मता। अधिष्ठानप्रत्युपस्थानलक्षणाः कुलपुत्र सर्वधर्मा बोधिसत्त्वज्ञानाधिष्ठिताः। एवं स्वभावापरिनिष्पन्ना मायास्वप्नप्रतिभासोपमाः। अथ खलु सुधनः श्रेष्ठिदारकः तेनाच्छटाशब्देन ततः समाधेर्व्युत्थितः। तं मैत्रेयो बोधिसत्त्व आह–दृष्टा ते कुलपुत्र बोधिसत्त्वाधिष्ठानविकुर्वाः? दृष्टास्ते बोधिसत्त्वसंभारस्य निष्यन्दाः? दृष्टा ते बोधिसत्त्वप्रणिधिज्ञानविरचना? दृष्टास्ते बोधिसत्त्वचर्यासमुदागमाः? श्रुतं ते बोधिसत्त्वनिर्याणमुखम्? दृष्टा ते बुद्धक्षेत्रव्यूहाभिसमागमा? दृष्टा

[1] B om. from दर्शयति...मायागते.

ते तथागतप्रणिधिवैशारद्यवैशेषिकता ? अनुगता ते बोधिसत्त्वविमोक्षाचिन्त्यता ? अनुभूतं ते बोधिसत्त्वसमाधिप्रीतिसुखम् ? सुधन आह–दृष्टमार्य कल्याणमित्राधिष्ठानेन कल्याणमित्रप्रभावेण। अपि तु खलु आर्य को नामैष विमोक्षः ? मैत्रेय आह–सर्वत्र्यध्वारम्बणज्ञानप्रवेशासंमोषस्मृतिव्यूहगर्भो नाम कुलपुत्र एष विमोक्षः । ईदृशानां च कुलपुत्र विमोक्षाणामनभिला-
5 प्यानभिलाप्यानामेकजातिप्रतिबद्धो बोधिसत्त्वो लाभी । सुधन आह–क्व असौ आर्य व्यूहो गतः ? मैत्रेयो बोधिसत्त्व आह–यत एवागतः । सुधन आह–कुत आगतः ? मैत्रेयो बोधिसत्त्व आह–बोधिसत्त्वज्ञानाधिष्ठानाभिनिर्हारादागतः । तत्रैवाधिष्ठाने तिष्ठति। न क्वचिद्गतो नागतो न राशीभूतो न संचयभूतो न कूटस्थो न मार्गस्थो न मार्गस्थितो न देशस्थो न प्रदेशस्थः । तद्यथा कुलपुत्र नागानां मेघजालं न कायेन चित्तेन अभ्यन्तरीभूतं न संचयस्थितं न
10 संदृश्यते । नागचेतनावशेन अप्रमाणा वारिधारा प्रमुञ्चति नागविषयाचिन्त्यतया । एवमेव कुलपुत्र ते व्यूहा नाध्यात्मगता न बहिर्धागता न च न संदृश्यन्ते, बोधिसत्त्वाधिष्ठानवशेन, तव च सुभाजनतया । तद्यथा कुलपुत्र मायाकारस्य सर्वमायागतविषयं संदर्शयमानस्य माया न कुतश्चिदागच्छन्ति न निगच्छन्ति न क्वचित्संक्रान्तिम्, संदृश्यते च मन्त्रौषधिबलेन । एवमेव कुलपुत्र ते व्यूहा न क्वचिद्गता न कुतश्चिदागता न क्वचिद्राशीभूता ।
15 संदृश्यन्ते च अचिन्त्यबोधिसत्त्वज्ञानमायासुशिक्षितत्वात् पूर्वप्रणिधानाधिष्ठानज्ञानवशितया । सुधन आह–कियद्दूरादार्य आगच्छसि ? आह–अनागतगतिंगतः । कुलपुत्र बोधिसत्त्वानां गतिः अचलनास्थानगतिः । अनालयानिकेतगतिः । अच्युत्युपपत्तिगतिः । अस्थानसंक्रान्तिगतिः । अचलनानुत्थानगतिः । अनपेक्षानिकेतगतिः । अकर्मविपाकगतिः । अनुत्पादानिरोधगतिः । अनुच्छेदाशाश्वतगतिः । अपि तु कुलपुत्र महाकरुणागतिर्बोधिसत्त्वानां विनेय
20 सत्त्वापेक्षणतया, महामैत्रीगतिर्बोधिसत्त्वानां दुःखितसत्त्वपरित्राणतया, शीलगतिर्बोधिसत्त्वानां यथाशयोपपत्तितया, प्रणिधानगतिर्बोधिसत्त्वानां पूर्वाधिष्ठानेन, अभिज्ञागतिर्बोधिसत्त्वानां सर्वसुखसंदर्शनतया, अनभिसंस्कारगतिर्बोधिसत्त्वानां सर्वतथागतपादमूलानुच्चलनतया, अनायूहनियूहगतिर्बोधिसत्त्वानां कायचित्तासंप्रवणतया, प्रज्ञोपायगतिर्बोधिसत्त्वानां सत्त्वानुवर्तनतया, निर्माणसंदर्शनगतिर्बोधिसत्त्वानां प्रतिभासप्रतिबिम्बनिर्मितशरीरसमतया ॥

25 अपि च कुलपुत्र यद्वदसि–कियद्दूरात्त्वमागच्छसीति । अहमस्मिन् कुलपुत्र आगच्छामि जन्मभूमेर्मालदेभ्यो जनपदेभ्यः कुटिग्रामकात् । तत्र गोपालको नाम श्रेष्ठी । तं बुद्धधर्मेषु प्रतिष्ठाप्य जन्मभूमकानां च मनुष्याणां यथाभाजनतया धर्मं देशयित्वा मातापितृज्ञातिसंबन्धिनश्च ब्राह्मणगृहपतीन् महायाने समादाप्य । सुधन आह––कतमा आर्य बोधिसत्त्वानां जन्मभूमिः ? आह––दशेमा कुलपुत्र बोधिसत्त्वानां जन्मभूमयः । कतमा दश ? यदुत
30 बोधिचित्तोत्पादो बोधिसत्त्वानां जन्मभूमिः । बोधिसत्त्वकुलजनकः अध्याशयो बोधिसत्त्वानां जन्मभूमिः । कल्याणमित्रकुले जनयिता भूमिप्रतिष्ठानं बोधिसत्त्वानां जन्मभूमिः । पारमिताकुले जनकः प्रणिधानाभिनिर्हारो बोधिसत्त्वानां जन्मभूमिः । अनुत्पत्तिकधर्मक्षान्तिकुले

जनको । सर्वधर्मप्रतिपत्तिः कुलपुत्र बोधिसत्त्वानां जन्मभूमिः । अतीतानागतप्रत्युत्पन्नसर्वतथागतकुले जनयित्री जन्मभूमिः । इमाः कुलपुत्र बोधिसत्त्वानां दश जन्मभूमयः ॥

प्रज्ञापारमिता कुलपुत्र बोधिसत्त्वानां माता, उपायकौशल्यं पिता, दानपारमिता स्तन्यम्, शीलपारमिता धात्री, क्षान्तिपारमिता भूषणालंकारः, वीर्यपारमिता संवर्धिका, ध्यानपारमिता चर्याविशुद्धिः, [1]कल्याणमित्राणि शिक्षाचार्याः, सर्वबोध्यङ्गानि सहायाः, सर्वबोधिसत्त्वा भ्रातरः, बोधिचित्तं कुलम्, प्रतिपत्तिः कुलधर्मः, भूम्यवस्थानं क्षान्तिप्रतिलम्भः, कुलाभिजातिः प्रणिधानाभिनिर्हारः, कुलविद्यालाभः चर्याविशुद्धिः, कुलधर्मानुवर्तना महायानसमादापना, कुलवंशाव्यवच्छेदः अभिषेकैकजातिप्रतिबद्धता, धर्मराजेषु पुत्रत्वम्, सर्वतथागतसमुदागमः कुलवंशपरिशुद्धिः । एवं हि कुलपुत्र बोधिसत्त्वोऽतिक्रान्तो भवति बालपृथग्जनभूमिम् । अवक्रान्तो भवति बोधिसत्त्वनियामम् । संभूतो भवति तथागतकुले । 10 प्रतिष्ठितो भवति तथागतवंशे । अव्यवच्छेदाय प्रतिपन्नो भवति त्रिरत्नवंशस्य । परिपालनाभियुक्तो भवति बोधिसत्त्वकुलस्य । परिशुद्धो भवति जातिगोत्रेण । अनुपक्रुष्टो भवति वर्णजात्या । अनवद्यो भवति सर्वजात्या । अदोषः सदेवके लोके समारके सब्रह्मके सश्रमणब्राह्मणिकायां प्रजायाम् । कुलीनो भवति उत्तमबुद्धकुलसंभूतो महाप्रणिधिविगर्भशरीरः ॥

एवं कुलजातिसमृद्धाश्च कुलपुत्र बोधिसत्त्वाः प्रतिभासायतनसर्वधर्मपरिज्ञातत्वान्न 15 विजुगुप्सन्ते सर्वलोकोपपत्तिषु । निर्मितोपमसर्वभवोपपत्तिपरिज्ञातत्वान्न संक्लिश्यन्ते सर्वभवगत्युपपत्तिसंवासेषु । निरात्मसर्वबुद्धत्वान्न परिखिद्यन्ते सर्वसत्त्वपरिपाकविनयेषु । महामैत्रीमहाकरुणाशरीरत्वान्न श्राम्यन्ति सर्वसत्त्वानुग्रहेषु । स्वप्नोपमसंसाराधिमुक्तत्वान्न परित्रसन्ति सर्वकल्पसंवासेषु । मायामयं च स्कन्धपरिज्ञातत्वान्न क्लाम्यन्ति सर्वजन्मच्युतिमरणसंदर्शनेन । धर्मधातुप्रकृतिकस्त्वायतनमुचिरत्वान्न क्षण्यन्ते सर्वविषयेषु । मरीच्युपमसर्वसंज्ञागतसुभावित- 20 त्वान्न मुह्यन्ति सर्वसंसारगतिषु । मायोपमसर्वधर्मविक्रीडितत्वादनुपलिप्ता भवन्ति सर्वमारविषयैः । सर्वकायप्रभावितत्वादवधनीया भवन्ति सर्वक्लेशैः । उपपत्तिवशिताग्रधत्वाद्विनिर्गता भवन्ति सर्वगतिषु । सोऽहं कुलपुत्र सर्वगोकधातुपरपरयन्तर्गतेन कायेन सर्वजगद्रूपसमैर्वर्णविशेषैः सर्वसत्त्वोपमैर्निरुक्तिसभेदैः सर्वजगदुपमाभिर्नामधेयविमात्रताभिः सर्वसत्त्वाधिमुक्तिसमैरीर्यापथैः, सर्वजगद्विनयप्रमाणैर्लोकानुवर्तनैः, सर्वविशुद्धिसमैर्जन्मकुलोपपत्तिसंदर्शनैः, विचार- 25 तारमुखैः सर्वसत्त्वसंज्ञानुप्रवेशैः सर्वबोधिसत्त्वप्रणिधिनिर्माणसमैराममारसंदर्शनप्रभासनैः सर्वधर्मधातुं स्फरित्वा पूर्वसभागचरितानां सत्त्वानां प्रनष्टबोधिचित्तानां परिपाचनार्थं जम्बुद्वीपे च जन्मोपपत्तिसंदर्शनार्थमिह दक्षिणापथे मालदेषु जनपदेषु कूटग्रामके ब्राह्मणकुलेषूपपन्नानां मातृपितृज्ञातिसंबन्धिनां विनयार्थं ब्राह्मणकुलजातिविशेषेण येषां जात्यभिमानिकानां निरभिमानतायै तथागतकुले संजननार्थमिहोपपन्नः । सोऽहं कुलपुत्र इह दक्षिणापथे अनेनोपायेन यथा- 30 शयानां सत्त्वानां यथाविनेयानां परिपाकविनयं कुर्वन्, इहैव वैरोचनव्यूहालंकारगर्भे कूटागारे

1 B om. कल्याण- -नुवर्तना

प्रतिवसामि। इतश्चाहं च्युतः तुषितभवने उपपत्तिं संदर्शयिष्यामि यथाशयं सत्त्वानुवर्तनतायै, तुषितकायिकानां च सभागचरितानां देवपुत्राणां परिपाकाय, सर्वकामधातुसमतिक्रान्तानां बोधिसत्त्वपुण्यज्ञाननिर्माणव्यूहसंदर्शनतायै, कामरतितृष्णाविनिवर्तनतायै, सर्वसंसारानित्यत्वपरिदीपनतायै, विपत्तिपर्यवसानसर्वदेवोपपत्तिसंदर्शनतायै, च्यवनाकारं नाम महाज्ञानधर्म-
5 मुखमेकजातिबद्धैर्बोधिसत्त्वैः सार्धं समायनाय, सहपरिपाचितानां च तत्रोपपत्तिसंग्रहणतायै, शाक्यमुनिसंप्रेषितानां च विनेयकमलानां प्रबोधनतायै। काले परिपूर्णाभिप्रायः सर्वज्ञतामधिगमिष्यामि। बोधिप्राप्तं च मां कुलपुत्र त्वं पुनरपि द्रक्ष्यसि सार्धं मञ्जुश्रिया कल्याणमित्रेण॥

अपि तु खलु पुनः कुलपुत्र—गच्छ त्वं तमेव मञ्जुश्रियं कुमारभूतम्। उपसंक्रम्य परिपृच्छ—कथं बोधिसत्त्वेन बोधिसत्त्वचर्यायां शिक्षितव्यम्, कथं प्रतिपत्तव्यम्, कथं
10 समन्तभद्रचर्यामण्डलमवतरितव्यम्, कथमभिनिर्हर्तव्यम्, कथं प्रणिधातव्यम्, कथं विपुलीकर्तव्यम्, कथमनुसर्तव्यम्, कथं पर्यवदातव्यम्, कथं प्रवेष्टव्यम्, कथं परिपूरयितव्यम्। स ते कुलपुत्र कल्याणमित्रं संदर्शयिष्यति। तत्कस्य हेतोः? स कुलपुत्र बोधिसत्त्वकोटीनियुतशतसहस्राणां प्रणिधानविशेषः संनिचितो यो मञ्जुश्रियः कुमारभूतस्य। विस्तीर्णः कुलपुत्र मञ्जुश्रियः कुमारभूतस्य चर्यानिर्हारः। अप्रमाणो मञ्जुश्रियः कुमारभूतस्य प्रणि-
15 धानाभिनिर्हारः। अप्रतिप्रस्रब्धो मञ्जुश्रियः कुमारभूतस्य सर्वबोधिसत्त्वगुणविशेषाभिनिर्हारः। माता मञ्जुश्रीः कुमारभूतो बुद्धकोटीनियुतशतसहस्राणाम्। अववादको मञ्जुश्रीः कुमारभूतो बोधिसत्त्वकोटीनियुतशतसहस्राणाम्। उद्युक्तो मञ्जुश्रीः कुमारभूतः सर्वसत्त्वधातुपरिपाकविनयाय। विस्तीर्णनामचक्रो मञ्जुश्रीः कुमारभूतो दशदिक्सर्वलोकधातुषु। कथापुरुषो मञ्जुश्रीः कुमारभूतोऽनभिलाप्येषु तथागतपर्षन्मण्डलेषु। संवर्णितो मञ्जुश्रीः कुमारभूतः
20 सर्वतथागतैः। गम्भीरधर्मज्ञाननिहारी मञ्जुश्रीः कुमारभूतः सर्वधर्मयथार्थदर्शी। दूरागतगोचरो मञ्जुश्रीः कुमारभूतः सर्वविमोक्षनयेषु। अवतीर्णः समन्तभद्रबोधिसत्त्वचर्यायाम्। स ते कुलपुत्र कल्याणमित्रजनकः, तथागतकुले संवर्धकः, सर्वकुशलमूलानुत्थापकः, बोधिसंभाराणां दर्शकः, भूतकल्याणमित्राणां समादापकः, सर्वगुणेषु अवतारकः, महाप्रणिधानजाले प्रतिष्ठापकः, सर्वप्रणिधानाभिनिर्हारेषु श्रावयिता, सर्वबोधिसत्त्वगुह्यानां संदर्शकः,
25 सर्वबोधिसत्त्वाचिन्त्यतायाः सभागचरितः पूर्वजन्मसंवासेषु। तस्मात्तर्हि त्वं कुलपुत्र मञ्जुश्रीपादमूलगत एव मा परीत्तमनमुत्पादय, मा परिखेदं जनय सर्वगुणानुशासनीप्रतिलम्भेषु। तत्कस्य हेतोः? यावन्ति त्वया सुधन कल्याणमित्राणि दृष्टानि, यावन्ति चर्यामुखानि श्रुतानि, यावन्तो विमोक्षनया अवतीर्णाः, यावन्तः प्रणिधानविशेषा अवगाढाः, सर्वं मञ्जुश्रियः कुमारभूतस्यानुभावोऽधिष्ठानं च द्रष्टव्यम्। स च मञ्जुश्रीः कुमारभूतः परमपारमिताप्राप्तः॥

30 अथ खलु सुधनः श्रेष्ठिदारको मैत्रेयस्य बोधिसत्त्वस्य पादौ शिरसाभिवन्द्य मैत्रेयं बोधिसत्त्वं महासत्त्वमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य पुनः पुनरवलोक्य मैत्रेयस्य बोधिसत्त्वस्यान्तिकात् प्रक्रान्तः॥ ५२॥

---

## ५५ मञ्जुश्रीः ।

अथ खलु सुधनः श्रेष्ठिदारको दशोत्तरं नगरशतमटित्वा सुमनामुखदिक्प्रत्युद्देशं गत्वा अतिष्ठत् मञ्जुश्रियं कुमारभूतं चिन्तयन् अनुविलोकयन् मञ्जुश्रियः कुमारभूतस्य दर्शनमभिलषन् प्रार्थयमानः समवधानमाकाङ्क्षमाणः । अथ खलु मञ्जुश्रीः कुमारभूतो दशोत्तराद्योजनशतात्पाणिं प्रसार्य सुमनामुखनगरस्थितस्यैव सुधनस्य श्रेष्ठिदारकस्य मूर्ध्नि प्रतिष्ठाप्य एवमाह—साधु साधु कुलपुत्र, न शक्यं श्रद्धेन्द्रियविरहितैः खिन्नचित्तैः लीनचित्तैरनभ्यस्तप्रयोगैः प्रत्युदावर्त्यवीर्यैरस्थिरगुणसंतुष्टैरेककुशलमूलतन्मयैश्चर्याप्रणिधानाभिनिर्हाराकुशलैः कल्याणमित्रापरिगृहीतैर्बुद्धासमन्वाहृतैरियं धर्मता ज्ञातुम्, एष नयः, एष गोचरः, एष विहारो ज्ञातुं वा अवगाहयितुं वा अवतरितुं वा अधिमोक्तुं वा कल्पयितुं वा प्रत्यवगन्तुं वा प्रतिलब्धुं वा इति ॥

स तं धर्मकथया संदर्शयित्वा समादाप्य समुत्तेज्य संप्रहर्षयित्वा असंख्येयधर्ममुखसमन्वागतं कृत्वा अनन्तज्ञानमहावभासप्राप्तं कृत्वा अपर्यन्तबोधिसत्त्वधारणीप्रतिभानसमाध्यभिज्ञज्ञानवेशाविष्टं कृत्वा समन्तभद्रचर्यामण्डलेऽवतारयित्वा स्वदेशे च प्रतिष्ठाप्य सुधनस्य श्रेष्ठिदारकस्यान्तिकात् प्रक्रान्तः ॥ ५३ ॥



# ५६ समन्तभद्रचर्याप्रणिधानम् ।

अथ खलु सुधनः श्रेष्ठिदारकः त्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमकल्याणमित्रपर्युपासित. सर्वज्ञतासभारोपचितचेताः सर्वकल्याणमित्राववादानुशासनीषु प्रदक्षिणग्राहितया प्रतिपन्नः सर्वकल्याणमित्राशयसमताप्रसृतः सर्वकल्याणमित्रारागणाविरागणबुद्धिः सर्वकल्याणमित्रावयादानुशासनीनयसमुद्रानुगतः महाकरुणाशयसागरसंभूतगर्भो महामैत्रीनयमेघसर्वजगद्विरोचनः महाप्रीतिवेगसंवर्धितशरीरः विपुलबोधिसत्त्वविमोक्षप्रशान्तविहारी समन्तमुखप्रसृतत्यागचक्षुः सर्वतथागतगुणसमुद्रप्रतिपत्तिसुपरिपूर्णः सर्वतथागताधिमुक्तिपथप्रसृतः सर्वज्ञतासभारवीर्यवेगविवर्धितः सर्वबोधिसत्त्वचित्ताशयसुपरिणामितबुद्धिः सर्वत्र्यध्वतथागतपरंपरावतीर्णः सर्वबुद्धधर्मनयसागरानुबुद्धः सर्वतथागतधर्मचक्रनयसागरानुगतः सर्वलोकोपपत्तिप्रतिभाससंदर्शनगोचरः सर्वबोधिसत्त्वप्रणिधाननयसागरावतीर्णः सर्वकल्पबोधिसत्त्वचर्यासप्रस्थितः सर्वज्ञताविषयावभासप्रतिलब्धः सर्वबोधिसत्त्वेन्द्रियविवर्धितः सर्वज्ञतामार्गावभासप्रतिलब्धः सर्वदिग्वितिमिरालोकप्राप्तः सर्वधर्मधातुनयप्रसृतबुद्धिः सर्वक्षेत्रनयावभाससजात' सर्वसत्त्वप्रसारार्थक्रियाप्रतिस्रोतोनुगत. सर्वावरणप्रपातपर्वतविकिरणोऽनावरणधर्मतानुगत. समन्ततलभूमिधर्मधातुगर्भबोधिसत्त्वविमोक्षप्रशान्तविहारी सर्वतथागतगोचरमन्वेषमाणः सर्वतथागताधिष्ठित समन्तभद्रस्य बोधिसत्त्वस्य गोचर विचारयमाणः स्थितोऽभूत् ।

समन्तभद्रस्य बोधिसत्त्वस्य नामधेयं श्रुत्वा बोधिचर्यां श्रुत्वा प्रणिधानविशेष च श्रुत्वा सभारसमवप्रस्थानप्रतिष्ठितविशेषं च श्रुत्वा अभिनिर्हारनिर्याणपथविशेष च श्रुत्वा समन्तभद्रभूम्याचारनिचार च श्रुत्वा भूमिसभार च श्रुत्वा लम्भविशेष च श्रुत्वा भूमिप्रतिलम्भवेग च श्रुत्वा भूम्याक्रमण च श्रुत्वा भूमिप्रतिष्ठान च श्रुत्वा भूमिपराक्रमविक्रम च श्रुत्वा भूमिगौरव च श्रुत्वा भूम्यधिष्ठान च श्रुत्वा भूमिसवास च श्रुत्वा समन्तभद्रबोधिसत्त्वदर्शनपरितृषितस्तस्मिन्नेव वज्रसागरगर्भबोधिमण्डे तथागतसिंहासनाभिमुख. सर्वरत्नगर्भपद्मासननिषण्ण. आकाशधातुविपुलेन चित्तेन सर्वाभिनिवेशोच्चलितेन, सुभावितया सर्वक्षेत्रसज्ञया, सर्वसङ्गसमतिक्रान्तेन चित्तेन, सर्वधर्मानावरणगोचरेण अप्रतिहतेन चित्तेन, सर्वदिक्समुद्रस्फरणेन अनावरणेन चित्तेन, सर्वज्ञताविषयाक्रमणेन शुद्धेन चित्तेन, बोधिमण्डालकारविपश्यनापरिशुद्धेन सुविभक्तेन चित्तेन, सर्वबुद्धधर्मसमुद्रावतीर्णेन विपुलेन चित्तेन, सर्वसत्त्वधातुपरिपाकविनयस्फरणेन महद्गतेन चित्तेन, सर्वबुद्धक्षेत्रपरिशोधनेन अपरिमाणेन चित्तेन, सर्वबुद्धपर्षन्मण्डलप्रतिभासप्राप्तेन सर्वकल्पसवासापर्यादत्तेन अनन्तेन चित्तेन सर्वतथागतबलवैशारद्यावेणिकबुद्धधर्मपर्यवसानेन । एवं चित्तमनसिकारप्रयुक्तस्य खलु पुनः सुधनस्य श्रेष्ठिदारकस्य पूर्वकुशलमूलाभिष्यन्दितसर्वतथागताधिष्ठानेन च समन्तभद्रस्य बोधिसत्त्वस्य पूर्वकुशलमूलसभागतया समन्तभद्रस्य बोधिसत्त्वस्य दर्शनाय दश पूर्वनिमित्तानि प्रादुरभूवन् । कतमानि दश ? यदुत सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वतथागतबोधिमण्डालंकारविशुद्धया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वाक्षणापायदुर्गतिपथविनिवृत्ततया । सर्वबुद्धक्षेत्राणि

विशुध्यन्ति स्म धर्मधातुनयबुद्धक्षेत्रविपुलतया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वसत्त्वकायचित्तप्रसादनप्रत्ययतया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वरत्नमयसंस्थानतया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वगन्धधातुरत्नानुव्यञ्जनप्रतिमण्डितसंस्थानतया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वव्यूहालंकारमेघसंस्थानतया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वसत्त्वधातुरन्योन्यमैत्रहितचित्ताव्यापन्नचित्तसंस्थानतया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म बोधिमण्डालंकारव्यूहसंस्थानतया । सर्वबुद्धक्षेत्राणि विशुध्यन्ति स्म सर्वसत्त्वबुद्धानुस्मृतिमनसिकारप्रयुक्तसंस्थानतया । इमानि दश पूर्वनिमित्तानि प्रादुरभवन् समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य दर्शनाय ॥

अपरे दश महावभासाः प्रादुरभवन् समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य दर्शनपूर्वनिमित्तम् । कतमे दश ? । यदुत सर्वलोकधातुपरमाणुरजःसु एकैकस्मिन् परमाणुरजसि सर्वतथागतजालानि विद्योतयन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वबुद्धप्रभामण्डलमेघा निश्चर्य अनेकवर्णा नानावर्णा अनेकशतसहस्रवर्णाः सर्वधर्मधातु स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वरत्नमेघाः सर्वतथागतप्रतिमाभविज्ञपना निश्चरित्वा सर्वधर्मधातु स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वतथागतार्चिश्चक्रमण्डलमेघा निश्चरित्वा सर्वधर्मधातुं स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वगन्धपुष्पमाल्यविलेपनधूपमेघा निश्चरित्वा समन्तभद्रस्य बोधिसत्त्वस्य सर्वगुणधर्मसमुद्रमेघाभिगर्जमाणा दशदिक्सर्वधर्मधातु स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वचन्द्रसूर्यज्योतिर्मेघा निश्चरित्वा समन्तभद्रबोधिसत्त्वप्रभां प्रमुञ्चमानाः सर्वधर्मधातुं स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वसत्त्वकायसस्थानप्रदीपमेघा निश्चरित्वा बुद्धरश्मिनयप्रभासमानाः सर्वधर्मधातुं स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वतथागतकायप्रतिभासमणिरत्नविग्रहमेघा निश्चरित्वा दशसु दिक्षु सर्वधर्मधातु स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वतथागतकायसंस्थानरश्मिविग्रहमेघा निश्चरित्वा सर्वबुद्धाधिष्ठानप्रणिधानमेघानभिप्रवर्षमाणाः सर्वधर्मधातु स्फरन्ति स्म । सर्वलोकधातुपरमाणुरजोभ्य एकैकस्मात्परमाणुरजसः सर्वरूपगतवर्णावभासा बोधिसत्त्वकायप्रतिभासमेघसमुद्राः सर्वसत्त्वनिर्माणकार्यप्रयोगाः सर्वसत्त्वसर्वाभिप्रायपरिपूरिनिष्पादना निश्चरित्वा सर्वधर्मधातुं स्फरन्ति स्म । इमे दश महावभासाः प्रादुरभवन् समन्तभद्रस्य बोधिसत्त्वस्य दर्शनपूर्वनिमित्तम् ॥

अथ खलु सुधनः श्रेष्ठिदारक इमान् दश पूर्वनिमित्तावभासान् दृष्ट्वा समन्तभद्रस्य बोधिसत्त्वस्य दर्शनावकाशप्रतिलब्धः स्वकुशलमूलबलोपस्तब्धः सर्वतथागताधिष्ठानसर्वबुद्धधर्मावभाससंजातः समन्तभद्रबोधिसत्त्वप्रणिधानाविष्टः सर्वतथागतगोचराभिमुख. उदारबोधिसत्त्वगोचरनिश्चयबलाधानप्राप्तः समन्तभद्रबोधिसत्त्वदर्शनसर्वज्ञताप्रभालाभसंज्ञी समन्त-

भद्रबोधिसत्त्वदर्शनाभिमुखेन्द्रिय समन्तभद्रबोधिसत्त्वदर्शनमहावीर्यवेगप्राप्त समन्तभद्रबोधि-
सत्त्वपरिगवेषमाणाविवर्तवीर्यप्रयोग सर्वदिगभिमुखेनेन्द्रियचक्रेण समन्तभद्रचक्षुर्विषयाव-
क्रमणेन बोधिसत्त्वशरीरेण सर्वतथागतारम्बणसंप्रेषितेन अनवशेषबुद्धपादमूलगतसमन्तभद्र
बोधिसत्त्वानुबद्धेन चित्तेन समन्तभद्रबोधिसत्त्वारम्बणपरिगवेषणाविप्रवसितेनाशयेन सर्वा-
5 रम्बणेषु समन्तभद्रबोधिसत्त्वदर्शनसंज्ञागमगर्भे समन्तभद्रबोधिसत्त्वपथप्रसृतेन ज्ञानचक्षुषा
आकाशधातुविपुलेनाशयेन महाकरुणावज्रसुसंगृहीतेनाध्याशयेन अपरान्तकोटीगतकल्पा-
धिष्ठानेन समन्तभद्रबोधिसत्त्वानुबन्धनप्रणिधानेन समन्तभद्रबोधिसत्त्वचर्यासमतानुगतया
क्रमविक्रमविशुद्ध्या सर्वतथागतविषयसंवसनेन समन्तभद्रबोधिसत्त्वभूमिप्रतिष्ठानज्ञानविहारेण
समन्वागतोऽद्राक्षीत् समन्तभद्रं बोधिसत्त्वं भगवतो वैरोचनस्य तथागतस्यार्हतः सम्यक्सं-
10 बुद्धस्य पुरतो महारत्नपद्मगर्भे सिंहासने निषण्णं बोधिसत्त्वपर्षन्मण्डलसमुद्गतं बोधिसत्त्व
गणपरिवृतं बोधिसत्त्वसंघपुरस्कृतं सर्वपर्षन्मण्डलानुसृताभ्युद्गतकायं सर्वलोकानभिभूतं
सर्वबोधिसत्त्वानुभ्यवलोकितमपर्यन्तज्ञानविषयमसंहार्यगोचरमचिन्त्यविषयं त्र्यध्वसमतानुगतं
सर्वतथागतसमतानुप्राप्तम् । स तस्य सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात् सर्वलोकधातुपर
माणुरजःसमान् रश्मिमेघान्निश्चरित्वा धर्मधातुपरमाकाशधातुपर्यवसानान् सर्वलोकधातून-
15 भास्य सत्त्वानां दुःखं प्रशमयमानानपश्यत् । स तस्य कायात् सर्वबुद्धक्षेत्रपरमाणुरजःसमान्
प्रभामण्डलमेघान्निश्चरित्वा नानावर्णान् सर्वबोधिसत्त्वानुदारप्रीतिप्रामोद्यवेगान् विवर्धय
मानानपश्यत् । मूर्धतोऽसकूटाभ्यां सर्वरोमविवरेभ्यश्च नानावर्णान् गन्धार्चिर्मेघान्निश्चार्य
सर्वतथागतपर्षन्मण्डलानि स्फरित्वा अभिप्रवर्षमाणानपश्यत् । सर्वरोमविवरेभ्य एकैकस्मा
द्रोमविवरात् सर्वबुद्धक्षेत्रपरमाणुरजःसमान् सर्वपुष्पमेघान्निश्चार्य सर्वतथागतपर्षन्मण्डलानि
20 स्फरित्वा अभिप्रवर्षमाणानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात् सर्वबुद्धक्षेत्रपर
माणुरजःसमान् सर्वगन्धवृक्षमेघान्निश्चार्य आकाशधातुपर्यवसानं सर्वधर्मधातुं गन्धवृक्षमेघा-
लंकारालंकृतं कृत्वा अक्षयगन्धचूर्णविलेपनकोशप्रयुक्तान् सर्वतथागतपर्षन्मण्डलानि
स्फरित्वा अभिप्रवर्षमाणानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्सर्ववस्त्रमेघान्निश्चार्य
आकाशधातुपर्यवसानं सर्वधर्मधातुं सच्छाद्य अलंकुर्वाणानपश्यत् । सर्वरोमविवरेभ्य एकैकस्मा-
25 द्रोमविवरात्सर्वबुद्धक्षेत्रपरमाणुरजःसमान् सर्वपट्टदाममेघान् सर्वाभरणमेघान् सर्वमुक्ताहार
मेघांश्चिन्तामणिरत्नमेघान्निश्चार्य सर्वतथागतपर्षन्मण्डलानि स्फरित्वा अभिप्रवर्षमाणानपश्यत्
सर्वसत्त्वानां सर्वाभिप्रायपरिनिष्पत्तये । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात् सर्वबुद्धक्षेत्र-
परमाणुरजःसमान् रत्नद्रुममेघान्निश्चार्य आकाशधातुपर्यवसानं सर्वधर्मधातुं स्फरित्वा
निस्फुटरत्नद्रुममेघालंकारालंकृतं कृत्वा सर्वतथागतपर्षन्मण्डलानि महारत्नवर्षैरभिप्रवर्षमाणा
30 नपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्सर्वबुद्धक्षेत्रपरमाणुरजःसमान् रूपधातुदेव-
निकायमेघान्निश्चार्य बोधिसत्त्वं संवर्णयतः सर्वलोकधातुं स्फरमाणानपश्यत् । सर्वरोमविवरेभ्य
एकैकस्माद्रोमविवरात् सर्वब्रह्मगतिपर्यापन्नदेवनिकायनिर्मितमेघान्निश्चार्य अभिसंबुद्धान्

तथागतान् धर्मचक्रप्रवर्तनायाध्येषमाणानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात् सर्वकामधातुदेवेन्द्रकायमेघान्निश्चर्य सर्वतथागतधर्मचक्राणि सप्रतीच्छमानानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात् प्रतिचित्तक्षण सर्वबुद्धक्षेत्रपरमाणुरज समान् त्र्यध्वपर्यापन्नसर्वबुद्धक्षेत्रमेघान्निश्चर्य आकाशधातुपर्यवसान सर्वधर्मधातु स्फरित्वा अत्यननानामत्राणानामप्रतिशरणाना सत्त्वाना लयनत्राणप्रतिशरणभूतानपश्यत् । सर्वरोमविवरेभ्य 5 एकैकस्माद्रोमविवरात् प्रतिचित्तक्षण सर्वबुद्धक्षेत्रपरमाणुरज समान् सर्वबुद्धोत्पादबोधिसत्त्वपर्षन्मडलपरिपूर्णपरिशुद्धक्षेत्रमेघान्निश्चर्य आकाशधातुपर्यवसान सर्वधर्मधातु स्फरित्वा उदाराधिमुक्तिकाना सत्त्वाना विशुद्धये वर्तमानानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्प्रतिचित्तक्षण सर्वबुद्धक्षेत्रपरमाणुरज समान् विशुद्धसक्लिष्टक्षेत्रमेघान्निश्चर्य आकाशधातुपर्यवसान सर्वधर्मधातु स्फरित्वा सक्लिष्टाना सत्त्वाना विशुद्धये सवर्तमानानपश्यत् । 10 सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्प्रतिचित्तक्षण सर्वबुद्धक्षेत्रपरमाणुरज समान् सक्लिष्टचित्तविशुद्धक्षेत्रमेघान्निश्चर्य आकाशधातुपर्यवसान सर्वधर्मधातु स्फरित्वा एकान्तसक्लिष्टाना विशुद्धये सवर्तमानानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्प्रतिचित्तक्षण सर्वबुद्धक्षेत्रपरमाणुरज समान् सर्वबोधिसत्त्वकायमेघान्निश्चर्य आकाशधातुपर्यवसान सर्वधर्मधातु स्फरित्वा सर्वसत्त्वचर्यामनुवर्तमानाननुत्तराया सम्यक्सबोधौ सर्वसत्त्वाना परिपाचयमानानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्प्रतिचित्तक्षण सर्वलोकधातुपरमाणुरज समान् बोधिसत्त्वकायमेघान्निश्चर्य आकाशधातुपर्यवसान सर्वधर्मधातु स्फरित्वा सर्वसत्त्वकुशलमूलविवर्धनतायै सर्वबुद्धनामान्युदीरयमाणानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्सर्वबुद्धक्षेत्रपरमाणुरज समान् बोधिसत्त्वकायमेघान्निश्चर्य आकाशधातुपर्यवसान सर्वधर्मधातु स्फरित्वा सर्वबुद्धक्षेत्रप्रसरेषु प्रथमचित्तोत्पादमुपादाय सर्वबोधिसत्त्वाना 20 सर्वकुशलमूलाभिनिर्हारमुपसहरमाणानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात् सर्वबुद्धक्षेत्रपरमाणुरज समान् बोधिसत्त्वमेघान्निश्चरित्वा सर्वबुद्धक्षेत्रेषु एकैकस्मिन् बुद्धक्षेत्रे समन्तभद्रबोधिसत्त्वचर्याविशुद्धये सर्वबोधिसत्त्वप्रणिधानसागरानभिद्योतयमानानपश्यत् । सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात् सर्वबुद्धक्षेत्रपरमाणुरज समान् सर्वसत्त्वाभिप्रायपरिपूरणान् सर्वज्ञतासमुदागमप्रीतिवेगविवर्धनान् समन्तभद्रबोधिसत्त्वचर्यामेघान्निश्चर्य अभिप्रवर्ष- 25 माणानपश्यत् । स तस्य सर्वरोमविवरेभ्य एकैकस्माद्रोमविवरात्सर्वबुद्धक्षेत्रपरमाणुरज समान् सर्वबुद्धक्षेत्राभिसबोधिसदर्शनान् सर्वज्ञतासमुदागममहाधर्मवेगविवर्धनानभिसबोधिमेघान्निश्चर माणानपश्यत् ॥

अथ खलु सुधन श्रेष्ठिदारक समन्तभद्रस्य बोधिसत्त्वस्य इदमृद्धिविषयविकुर्वित दृष्ट्वा हृष्ट तुष्ट उदग्र आत्तमना प्रमुदित प्रीतिसौमनस्यजातो भूयस्या मात्रया समन्त- 30 भद्रस्य बोधिसत्त्वस्य कायमुपनिध्यायन् अद्राक्षीत् समन्तभद्रस्य बोधिसत्त्वस्य एकैकस्मादङ्गादेकैकाङ्गविभक्तित एकैकस्माच्छरीरावयवात् एकैकस्या शरीरावयवविभक्ते एकैकस्मादङ्ग-

प्रदेशात्, एकैकतोऽङ्गप्रदेशविभक्तित एकैकस्मादेहात्, एकैकस्माद्देहविभक्तित एकैकस्माद्रोम-
विवरात्, एकैकस्माद्रोमविभक्तेरिमं त्रिसाहस्रमहासाहस्रं लोकधातुं सवायुस्कन्धं सपृथिवीस्कन्धं
सतेजस्कन्धं ससागरं सद्वीपं सनदीकं सरत्नपर्वतं ससुमेरुं सचक्रवाडं सग्रामनगर-
निगमराष्ट्रराजधानीं सवनं सभवनं सजनकायं सनरकलोकं सतिर्यग्योनिलोकं सयमलोकं
5 सासुरलोकं सनागलोकं सगरुडलोकं समनुजलोकं सदेवलोकं सब्रह्मलोकं सकामधातुविषयं
सारूप्यधातुविषयं साधिष्ठानं सप्रतिष्ठानं ससंस्थानं समेघं सविद्युतं सज्योतिषं सरात्रिंदिव-
सार्धमासं समासर्तुं ससंवत्सरं सान्तरकल्पं सकल्पम् । यथा चेमं लोकधातुम्, एवं पूर्वस्यां
दिशि सर्वलोकधातूनद्राक्षीत् । यथा पूर्वस्यां दिशि, एवं दक्षिणायां पश्चिमायामुत्तरस्या-
मुत्तरपूर्वायां पूर्वदक्षिणायां दक्षिणपश्चिमायां पश्चिमोत्तरायामध ऊर्ध्वं समन्तात्सर्वदिग्विदिक्षु
10 सर्वलोकधातूनद्राक्षीत् प्रतिभासयोगेन सर्वबुद्धोत्पादान् सबोधिसत्त्वपर्षन्मण्डलान् ससत्त्वान्,
याश्चेह सहाया लोकधातौ पूर्वान्तकोटीगताः सर्वलोकधातुपरंपराः, ता अपि सर्वाः समन्तभद्रस्य
बोधिसत्त्वस्य एकस्मान्महापुरुषलक्षणादद्राक्षीत् सर्वबुद्धोत्पादाः सर्वबोधिसत्त्वपर्षन्मण्डलाः
ससत्त्वाः सभवनाः सरात्रिंदिवाः सकल्पाः । एवमपरान्तकोटीगतानपि सर्वबुद्धक्षेत्रप्रसरा-
नद्राक्षीत् । यथा चेह सहाया लोकधातौ पूर्वान्तापरान्तकोटीगताः सर्वलोकधातुपरंपरा
15 अद्राक्षीत्, एवं दशसु दिक्षु सर्वलोकधातुषु पूर्वान्तापरान्तकोटीगताः सर्वलोकधातुपरंपराः
समन्तभद्रस्य बोधिसत्त्वस्य कायादेकैकस्मान्महापुरुषलक्षणादेकैकस्माद्रोमविवरादद्राक्षीत्
सुविभक्ता अन्योन्यासंभिन्नाः । यथा च समन्तभद्रं बोधिसत्त्वं भगवतो वैरोचनस्य
तथागतस्य पुरतो महारत्नपद्मगर्भसिंहासने निषण्णमद्राक्षीत् एतद्विक्रीडितं संदर्शयमानम्,
एवं पूर्वस्यां दिशि भगवतो भद्रश्रियस्तथागतस्य पद्मश्रिया लोकधातावेतदेव विक्रीडितं
20 संदर्शयमानमद्राक्षीत् । यथा च पूर्वस्यां दिशि, एवं समन्तात्सर्वदिग्विदिक्षु सर्वलोकधातुषु
सर्वतथागतपादमूलेषु समन्तभद्रं बोधिसत्त्वं महारत्नपद्मगर्भसिंहासने निषण्णमेतदेव विक्रीडितं
संदर्शयमानमद्राक्षीत् । यथा च दशसु दिक्षु, एवं सर्वलोकधातुषु तथागतपादमूलेषु महारत्न-
पद्मगर्भसिंहासने निषण्णमेतदेव विक्रीडितं संदर्शयमानमद्राक्षीत् । एवं समन्ताद्दशसु दिक्षु
सर्वबुद्धक्षेत्रपरमाणुरजःसमेषु एकैकस्मिन् परमाणुरजसि धर्मधातुविपुलेषु बुद्धधर्मपर्षन्मण्डलेषु
25 सर्वतथागतपादमूलेषु समन्तभद्रं बोधिसत्त्वमद्राक्षीत् । एकैकतश्च अस्यात्मभावाङ्गप्रत्यङ्गानि
सर्वारम्बणानि अभिविज्ञप्यमानानि अपश्यत्प्रतिभासयोगेन, सर्वक्षेत्राण्यपि सर्वसत्त्वानपि
सर्वबुद्धोत्पादानपि सर्वबोधिसत्त्वपर्षन्मण्डलान्यभिविज्ञप्यमानानपश्यत् प्रतिभासयोगेन ।
सर्वसत्त्वरुतानि च सर्वबुद्धघोषांश्च सर्वतथागतधर्मचक्रप्रवर्तनानि च सर्वानुशासन्यादेशन-
प्रातिहार्याणि च सर्वबोधिसत्त्वसमुदागमांश्च सर्वबुद्धविक्रीडितानि चाश्रौषीत् ॥

30 स तदचिन्त्यं समन्तभद्रमहाबोधिसत्त्वविक्रीडितं दृष्ट्वा श्रुत्वा च दश ज्ञानपारमिता-
विहारान् प्रत्यलभत । कतमान् दश ? यदुत एकचित्तक्षणे सर्वबुद्धक्षेत्रकायस्फरणज्ञान-
पारमिताविहारं प्रत्यलभत । सर्वतथागतपादमूलोपसंक्रमणासंभिन्नज्ञानपारमिताविहारं प्रत्य-

लभत। सर्वतथागतपूजोपस्थानज्ञानपारमिताविहार प्रत्यलभत। सर्वतथागतेभ्य एकैकस्मा त्तथागतात्सर्वबुद्धधर्मप्रश्नपरिपृच्छासप्रतीच्छनज्ञानपारमिताविहार प्रत्यलभत। सर्वतथागतधर्मचक्रप्रवर्तननिष्पत्तिज्ञानपारमिताविहार प्रत्यलभत। अचिन्त्यबुद्धविकुर्वितज्ञानपारमिताविहार प्रत्यलभत। सर्वधर्माक्षयप्रतिसंविदपरान्तकोटीगतकल्पाधिष्ठानैकधर्मपदनिर्देशज्ञानपारमिता विहार प्रत्यलभत। सर्वधर्ममुद्राप्रत्यक्षज्ञानपारमिताविहार प्रत्यलभत। सर्वधर्मधातुनय 5 सागरज्ञानपारमिताविहार प्रत्यलभत। सर्वसत्त्वसञ्ज्ञागतसत्त्वसनज्ञानपारमिताविहार प्रत्यलभत। एकक्षणसमन्तभद्रबोधिसत्त्वचर्याप्रत्यक्षज्ञानपारमिताविहार प्रत्यलभत। तस्यैव ज्ञानपारमिता विहारसमन्वागतस्य सुधनस्य श्रेष्ठिदारकस्य समन्तभद्रो बोधिसत्त्वो दक्षिण पाणि प्रसार्य मूर्ध्नि प्रतिष्ठापयामास। समनन्तरप्रतिष्ठापितश्च सुधनस्य श्रेष्ठिदारकस्य समन्तभद्रेण बोधिसत्त्वेन मूर्ध्नि पाणि, अथ तावदेवास्य सर्वबुद्धक्षेत्रपरमाणुरज समानि समाधिमुखान्यवक्रान्तानि। एकैकेन च 10 समाधिना सर्वबुद्धक्षेत्रपरमाणुरज समाल्लोकधातुमुद्रानवतीर्णोऽभूत्। अदृष्टपूर्वा सर्वबुद्धक्षेत्र परमाणुरज समाश्चास्य सर्वज्ञतासभारा उपचयमगमन्। सर्वबुद्धक्षेत्रपरमाणुरज समाश्चास्य सर्वज्ञताधर्मसभरा प्रादुरभवन्। सर्वबुद्धक्षेत्रपरमाणुरज समैश्च सर्वज्ञतामहाप्रस्थानैरभ्युत्थित। सर्वबुद्धक्षेत्रपरमाणुरज समाश्च प्रणिधानसागरानवतीर्ण। सर्वबुद्धक्षेत्रपरमाणुरज समैश्च सर्वज्ञतानिर्याणपथैर्निर्यात। सर्वबुद्धक्षेत्रपरमाणुरज समासु च बोधिसत्त्वचर्यासु प्रसृत। 15 सर्वबुद्धक्षेत्रपरमाणुरज समैश्च सर्वज्ञतावेगैर्विवर्धित। सर्वबुद्धक्षेत्रपरमाणुरज समैश्च सर्वबुद्ध ज्ञानावभासै प्रभावभासित। यथा चेह सहाया लोकधातौ भगवतो वैरोचनस्य पादमूलगत समन्तभद्रो बोधिसत्त्वो दक्षिण पाणि प्रसार्य सुधनस्य मूर्ध्नि प्रतिष्ठापयामास, तथा सर्वलोकधातुषु सर्वतथागतपादमूलेषु निषण्ण समन्तभद्रो बोधिसत्त्वो दक्षिण पाणि प्रसार्य सुधनस्य श्रेष्ठिदारकस्य मूर्ध्नि प्रतिष्ठापयामास। एव समन्तात् सर्वदिग्विदिक्षु सर्वलोकधातु- 20 परमाणुरजोन्तर्गतेष्वपि सर्वलोकधातुषु सर्वतथागतपादमूलेषु निषण्ण समन्तभद्रो बोधिसत्त्वो दक्षिण पाणि प्रसार्य सुधनस्य श्रेष्ठिदारकस्य मूर्ध्नि प्रतिष्ठापयामास। यथा भगवतो वैरो चनस्य पादमूलगतेन समन्तभद्रेण बोधिसत्त्वेन पाणिना स्पृष्टस्य सुधनस्य श्रेष्ठिदारकस्य धर्ममुखान्यवक्रान्तानि, एव सर्वसमन्तभद्राभाप्रसृतै पाणिभिर्वै स्पृष्टस्य सुधनस्य श्रेष्ठिदारकस्य धर्ममुखान्यवक्रान्तान्यभूवन् नानानये॥ 25

अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्व सुधन श्रेष्ठिदारकमेतदवोचत्—दृष्ट ते कुलपुत्र मम विकुर्वितम्? आह—दृष्टमार्य। अपि तु तथागत प्रजानन् प्रजानीयात्तावद चिन्त्यमिद विकुर्वितम्। सोऽवोचत्—अह कुलपुत्र अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणु रज समान् कल्पान् विचरित सर्वज्ञताचित्तमभिप्रार्थयमाण। एकैकस्मिंश्च महाकल्पेऽनभि लाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समास्तथागता आरागिता बोधिचित्त परिशोधयता। 30 एकैकस्मिंश्च महाकल्पे सर्वत्यागसमायुक्ता सर्वलोकविघुष्टा महायज्ञा यष्टा। सर्वसत्त्वप्रति पादना सर्वज्ञतापुण्यसभारता। एकैकस्मिंश्च महाकल्पे अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपर

माणुरजःसमास्त्यागा महात्यागा कृता, अत्यर्थत्यागा कृता सर्वज्ञताधर्मानभिप्रार्थयता। एकैकस्मिंश्च महाकल्पेऽनभिलाप्यानभिलाप्यात्मभावा परित्यक्ता[1], महाराज्यानि च परित्यक्तानि, ग्रामनगरनिगमजनपदराष्ट्रराजधान्य परित्यक्ता, प्रियमनापा दुस्त्यजा परिवारसंघा परित्यक्ता, पुत्रदुहितृभार्या परित्यक्ता। स्वशरीरमांसानि परित्यक्तानि, स्वकायेभ्यो रुधिरं
5 याचनकेभ्यः परित्यक्तम्, अस्थिमज्जा परित्यक्ता। अङ्गप्रत्यङ्गानि परित्यक्तानि। कर्णनासा परित्यक्ता। चक्षूंषि परित्यक्तानि। स्वमुखेभ्यो जिह्वेन्द्रियाणि परित्यक्तानि बुद्धज्ञानापेक्षया कायजीवितनिरपेक्षेण। एकैकस्मिंश्च महाकल्पेऽनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमानि स्वशिरांसि परित्यक्तानि स्वकायेभ्यः सर्वलोकाभ्युद्गतमनुत्तरसर्वज्ञताशीर्षमभिप्रार्थयता। यथा च एकैकस्मिन् महाकल्पे, तथा अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमेषु
10 महाकल्पसागरेषु। एकैकस्मिंश्च महाकल्पेऽनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमास्तथागता परमेश्वरभूतेन सत्कृता गुरुकृता मानिता पूजिता, चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः प्रतिपादिता। तेषां च अस्मिंस्तथागतानां शासने प्रव्रजित्वा सर्वबुद्धानुशासनीषु प्रतिपन्न, शासनं च मे तेषां संधारितम्॥

नाभिजानामि कुलपुत्र तावद्धि कल्पसमुद्रैरेकचित्तोत्पादमपि तथागतशासने
15 निर्लेपमुत्पादयितुं नाभिजानामि। तावद्धि कल्पसमुद्रैरेकचित्तोत्पादमपि प्रतिघसहगतमुत्पादयितुमात्मग्रहचित्तं वा आत्मग्रहपरिग्रहचित्तं वा आत्मपरनानात्वचित्तं वा बोधिमार्गविप्रवासचित्तं वा संसारसंवासपरिखेदचित्तं वा अवलीनचित्तं वा आवरणसमोहचित्तं वा उत्पादयितुमन्यत्र अपराजितज्ञानदुर्योधनगर्भबोधिचित्ताद् सर्वज्ञतासंभारेषु। इति हि कुलपुत्र सर्वकल्पसागरा क्षयं व्रजेयु तान्निर्दिशतो ये मम पूर्वयोगसंबुद्धक्षेत्रपरिशुद्धिप्रयोगा, ये मम
20 महाकरुणाप्रतिलब्धचित्तस्य सर्वपरित्राणपरिपाचनपरिशोधनप्रयोगा। एवं ये बुद्धपूजोपस्थानप्रयोगा, ये सद्धर्मपर्येष्टिहेतोर्गुरुशुश्रूषाप्रयोगा, ये सद्धर्मपरिग्रहहेतोरात्मभावपरित्यागप्रयोगा, ये सद्धर्मारक्षणनिदाना स्वजीवितपरित्यागप्रयोगा, तावद्भ्यो मे कुलपुत्र धर्मसमुद्रेभ्यो न किंचिदेकपदव्यञ्जनमपि यन्न चक्रवर्तिराज्यपरित्यागेन क्रीतम्, यन्नास्ति सर्वास्तिपरित्यागेन क्रीतं सर्वसत्त्वपरित्राणप्रयुक्तेन स्वसंततिचित्तनिष्पत्तिप्रयुक्तेन अभिमुखपरधर्मसंप्रा-
25 पणप्रयुक्तेन सर्वलौकिकज्ञानालोकप्रभावनाप्रयुक्तेन सर्वलोकोत्तरज्ञानप्रभावनाप्रयुक्तेन सर्वसत्त्वसंसारसुखसंजननप्रयुक्तेन सर्वतथागतगुणसंवर्णनगुणप्रयुक्तेन। एवमनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमा कल्पसागरा क्षयं व्रजेयुर्मम स्वपूर्वयोगसंपदं निर्दिशतः॥

तेन मया कुलपुत्र अनेन एवंरूपेण समारम्भबलेन मूलहेतूपचयबलेन उदाराधिमुक्तिबलेन गुणप्रतिपत्तिबलेन सर्वधर्मयथावन्निष्पत्तिबलेन प्रज्ञाचक्षुर्बलेन तथागताधिष्ठानबलेन
30 महाप्रणिधानबलेन महाकरुणाबलेन सुपरिशोधिताभिज्ञाबलेन कल्याणमित्रपरिग्रहबलेन अत्यन्तपरिशुद्धो धर्मकायः प्रतिलब्धः सर्वत्र्यध्वासंभिन्नः। अनुत्तरश्च रूपकायः परिशोधितः

1 S स्वशरीराणि

सर्वलोकाभ्युद्गतः सर्वजगद्यथाशयविज्ञपनः सर्वत्रानुगतः सर्वबुद्धक्षेत्रप्रसृतः समन्तप्रतिष्ठानः सर्वतः सर्वविकुर्वितसंदर्शनः सर्वजगदभिलक्षणीयः । प्रेक्षस्व कुलपुत्र इमामात्मभावप्रतिलाभसंपदमनन्तकल्पसागरसंभूतां बहुकल्पकोटीनियुतशतसहस्रदुर्लभप्रादुर्भावां दुर्लभसंदर्शनाम् । नाहं कुलपुत्र अनवरोपितकुशलमूलानां सत्त्वानां श्रवणपथमप्यागच्छामि प्रागेव दर्शनम् । सन्ति कुलपुत्र सत्त्वाः, ये मम नामधेयश्रवणमात्रेण अवैवर्तिका भवन्त्यनुत्तरायां सम्यक्संबोधौ । सन्ति दर्शनमात्रेण, सन्ति स्पर्शनमात्रेण, सन्त्यनुव्रजनमात्रेण, सन्त्यनुस्मरणमात्रेण, सन्ति स्वप्नदर्शनेन, सन्ति स्वप्ने नामधेयश्रवणेन अवैवर्तिका भवन्त्यनुत्तरायां सम्यक्संबोधौ । केचित्सत्त्वा मामेकरात्रिंदिवसमनुस्मरमाणाः परिपाकं गच्छन्ति । केचिदर्धमासं केचिन्मासं केचिद्वर्षं केचिद्वर्षशतं केचित्कल्पं केचित्कल्पशतं केचिद्यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमान् कल्पान् मामनुस्मरमाणाः परिपाकं गच्छन्ति । केचिदेकजात्या परिपाकं गच्छन्ति मामनुस्मरमाणाः । केचिज्जातिशतेन, केचिद्यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमैर्जातिपरिवर्तैः । केचित्सत्त्वा मम प्रभादर्शनेन परिपाकं गच्छन्ति । केचिद्रश्मिप्रमोक्षसंदर्शनेन, केचित्क्षेत्रप्रकम्पनेन, केचिद्रूपकायसंदर्शनेन, केचित्संप्रहर्षणेन परिपाकं गच्छन्ति । इति हि कुलपुत्र बुद्धक्षेत्रपरमाणुरजःसमैरुपायैः सत्त्वा अवैवर्तिका भवन्त्यनुत्तरायां सम्यक्संबोधौ । ये खलु पुनः कुलपुत्र सत्त्वा मम बुद्धक्षेत्रपरिशुद्धिं शृण्वन्ति, ते परिशुद्धेषु बुद्धक्षेत्रेषूपपद्यन्ते । ये ममात्मभावपरिशुद्धिं पश्यन्ति, ते ममात्मभावे उपपद्यन्ते । पश्य कुलपुत्र इमां ममात्मभावपरिशुद्धिम् ॥

अथ खलु सुधनः श्रेष्ठिदारकः समन्तभद्रस्य बोधिसत्त्वस्य कायमुपनिध्यायन्नद्राक्षीत् एकैकस्मिन् रोमविवरेऽनभिलाप्यबुद्धक्षेत्रसागरान् बुद्धोत्पादपरिपूर्णान् । एकैकस्मिंश्च बुद्धक्षेत्रसागरे तथागतान् बोधिसत्त्वपर्षत्सागरपरिवृतानद्राक्षीत् । सर्वांश्च तान् क्षेत्रसागरान् नानाप्रतिष्ठानान् नानासंस्थानान् नानाव्यूहान् नानाचक्रवालान् नानामेघगगनसंछन्नान् नानाबुद्धोत्पादान् नानाधर्मचक्रनिर्घोषानपश्यत् । यथा च एकस्मिन् रोमविवरे, तथा अनवशेषतः सर्वरोमविवरेषु सर्वलक्षणेषु सर्वानुव्यञ्जनेषु सर्वाङ्गप्रत्यङ्गेषु । एकैकस्माच्च क्षेत्रसागरान् सर्वबुद्धक्षेत्रपरमाणुरजःसमान् बुद्धकायनिर्मितमेघान्निर्गम्य दशसु दिक्षु सर्वलोकधातून् स्फरित्वा अनुत्तरायां सम्यक्संबोधौ सत्त्वान् परिपाचयमानानपश्यत् ॥

अथ खलु सुधनः श्रेष्ठिदारकः समन्तभद्रबोधिसत्त्वानववादानुशासन्यनुशिष्टः समन्तभद्रबोधिसत्त्वकायान्तर्गतेषु सर्वलोकधातुष्वननीयं सत्त्वान् परिपाचयामास । ये च खलु पुनः सुधनस्य श्रेष्ठिदारकस्य बुद्धक्षेत्रपरमाणुरजःसमकल्याणमित्रोपसंक्रमदर्शनपर्युपासनज्ञानालोककुशलमूलोपचयाः, ते समन्तभद्रबोधिसत्त्वसंदर्शनेन कुशलमूलोपचयस्य शततमीमपि कलां नोपयान्ति, सहस्रतमीमपि शतसहस्रतमीमपि कोटीनियुतसहस्रतमीमपि । यावदुपनिषदमपि गणनामपि उपमामपि उपनिषदमपि न क्षमन्ते यत्प्रथमचित्तोत्पादाय यावत्समन्तभद्रस्य बोधिसत्त्वस्य दर्शनम् । अस्मिन्नन्तरे यावन्तो बुद्धक्षेत्रसागरपरंपरा अवतीर्णः सुधनोऽनभिलाप्यानभि

ल्याप्यबुद्धक्षेत्रपरमाणुरज समगुणा समन्तभद्रबोधिसत्त्वस्यैकस्मिन् रोमविवरे बुद्धक्षेत्रसागरपरंपरा प्रतिचित्तक्षणमवतरन्ति स्म । यथा चैकस्मिन् रोमविवरे, तथैव सर्वरोमविवरेषु प्रतिचित्तक्षणमनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समलोकधातु परेण अपरान्तकोटीगत कल्पाधिष्ठानलोकधातु परेण विक्रमेण पर्यन्तं नोपजगाम । क्षेत्रसागरपरंपराणां
5 क्षेत्रसागरगर्भाणां क्षेत्रसागरसंभेदानां क्षेत्रसागरसमवसरणानामनभिलाप्यानभिलाप्यबुद्धक्षेत्रसागरसभवानां क्षेत्रसागरविभवानां क्षेत्रसागरव्यूहानां बुद्धोत्पादसागरगर्भाणां बुद्धोत्पादसागरसमवसरणानां बुद्धोत्पादसागरसंभवानां बुद्धोत्पादसागरविभवानां बोधिसत्त्वसागरपर्षन्मण्डलसागराणां बोधिसत्त्वपर्षन्मण्डलसागरपरंपराणां बोधिसत्त्वपर्षन्मण्डलसागरगर्भाणां बोधिसत्त्वपर्षन्मण्डलसागरसंभेदानां बोधिसत्त्वपर्षन्मण्डलसागरसमवसरणानां बोधिसत्त्वपर्ष-
10 न्मण्डलसागरसंभवानां बोधिसत्त्वपर्षन्मण्डलसागरविभवानां सत्त्वधातुप्रवेशानां सर्वेन्द्रियप्रतिक्षणज्ञानप्रवेशानां सर्वेन्द्रियज्ञानप्रतिवेधानां सत्त्वपरिपाकविनयानां गम्भीरबोधिसत्त्वनिर्विकुर्वितविहाराणां बोधिसत्त्वभूम्यवक्रमणविक्रमसागराणां पर्यन्तं नोपजगाम । स क्वचि क्षेत्रे कल्पं विचरति स्म । स क्वचित्क्षेत्रे यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समान् कल्पान् विचरति स्म। ततश्च क्षेत्रान्न चलति स्म । चित्तक्षणे चित्तक्षणे च अनन्तमध्यान्
15 क्षेत्रसागरानवतरति स्म, सत्त्वांश्च परिपाचयति स्म अनुत्तरायां सम्यक्संबोधौ । सोऽनुपूर्वेण यावत्समन्तभद्रबोधिसत्त्वचर्याप्रणिधानसागरसमतामनुप्राप्तः सर्वतथागतसमतां सर्वक्षेत्रकायपारणसमतां चर्यापरिपूरणसमतामभिसंबोधिविकुर्वितसंदर्शनपारणसमतां धर्मचक्रप्रवर्तनसमतां प्रतिसंविद्विशुद्धिसमतां घोषोदाहारसमतां सर्वस्वराङ्गसागरसंप्रयोगसमतां बलवैशारद्यसमतां बुद्धविहारसमतां महामैत्रीमहाकरुणासमतामचिन्त्यबोधिसत्त्वविमोक्षविकुर्वितसमतामनुप्राप्त इति ॥

20 अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्व एवमेव लोकधातुपरंपरानभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरज समान् कल्पान् कल्पप्रसरानभिद्योतयमानो भूयस्या मात्रया गाथाभिगीतेन प्रणिधानमकार्षीत्—

यावत केचि दशद्दिशि लोके
सर्वत्रियध्वगता नरसिंहाः ।
25 तानहु वन्दमि सर्वि अशेषान्
कायतु वाच मनेन प्रसन्नः ॥ १ ॥
क्षेत्ररजोपमकायप्रमाणैः
सर्वजिनान करोमि प्रणामम् ।
सर्वजिनाभिमुखेन मनेन
30 भद्रचरीप्रणिधानबलेन ॥ २ ॥
एकरजाग्रि रजोपमबुद्धा
बुद्धसुतान निषण्णकु मध्ये ।

एवमशेषत धर्मतधातुं
  सर्वाधिमुच्यमि पूर्ण जिनेभिः ॥ ३ ॥
तेषु च अक्षयवर्णसमुद्रान्
  सर्वस्वराङ्गसमुद्ररुतेभिः ।
सर्वजिनान गुणान् भणमान- 5
  स्तान् सुगतान् स्तवमी अहु सर्वान् ॥ ४ ॥
पुष्पवरेभि च माल्यवरेभि-
  र्वाद्यविलेपनछत्रवरेभिः ।
दीपवरेभि च धूपवरेभिः
  पूजन तेष जिनान करोमि ॥ ५ ॥ 10
वस्त्रवरेभि च गन्धवरेभि-
  श्चूर्णपुटेभि च मेरुसमेभिः ।
सर्वविशिष्टवियूहवरेभिः
  पूजन तेष जिनान करोमि ॥ ६ ॥
या च अनुत्तर पूज उदारा 15
  तानधिमुच्यमि सर्वजिनानाम् ।
भद्रचरीअधिमुक्तिबलेन
  वन्दमि पूजयमी जिन सर्वान् ॥ ७ ॥
यच्च कृतं मयि पापु भवेय्या
  रागतु द्वेषतु मोहवशेन । 20
कायतु वाच मनेन तथैव
  तं प्रतिदेशयमी अहु सर्वम् ॥ ८ ॥
यच्च दशादिशि पुण्य जगस्य
  शैक्ष अशैक्षप्रत्येकजिनानाम् ।
बुद्धसुतानथ सर्वजिनानां 25
  तं अनुमोदयमी अहु सर्वम् ॥ ९ ॥
ये च दशादिशि लोकप्रदीपा
  बोधिविबुद्ध असङ्गतप्राप्ताः ।
तानहु सर्वि अध्येषमि नाथां
  चक्रु अनुत्तरु वर्तनतायै ॥ १० ॥ 30
येऽपि च निर्वृति दर्शितुकामा-
  स्तानभियाचमि प्राञ्जलिभूतः ।

क्षेत्ररजोपमकल्प स्थिहन्तु
सर्वजगस्य हिताय सुखाय ॥ ११ ॥

वन्दनपूजनदेशनताय
मोदनध्येषणयाचनताय ।
यच्च शुभ मयि संचितु किंचि-
द्बोधयि नामयमी अह्न सर्वम् ॥ १२ ॥

पूजित भोन्तु अतीतक बुद्धा
ये च ध्रियन्ति दशद्दिशि लोके ।
ये च अनागत ते लघु भोन्तु
पूर्णमनोरथ बोधिविबुद्धा ॥ १३ ॥

यावत केचि दशद्दिशि क्षेत्रा-
स्ते परिशुद्ध भवन्तु उदारा ।
बोधिद्रुमेन्द्रगतेभि जिनेभि-
र्बुद्धसुतेभि च भोन्तु प्रपूर्णा ॥ १४ ॥

यावत केचि दशद्दिशि सत्त्वा-
स्ते सुखिता सद भोन्तु अरोगा ।
सर्वजगस्य च धर्मिकु अर्थो
भोन्तु प्रदक्षिणु ऋध्यतु आशा ॥ १५ ॥

बोधिचरिं च अहु चरमाणो
भवि जातिस्मरु सर्वगतीषु ।
सर्वसु जन्मसु च्युत्युपपत्ती
प्रव्रजितो अहु नित्यु भवेय्या ॥ १६ ॥

सर्वजिनाननुशिक्षयमाणो
भद्रचरिं परिपूरयमाण ।
शीलचरिं विमल परिशुद्धां
नित्यमखण्डमच्छिद्र चरेयम् ॥ १७ ॥

देवरुतेभि च नागरुतेभि-
र्यक्षकुम्भाण्डमनुष्यरुतेभि ।
यानि च सर्वरुतानि जगस्य
सर्वरुतेष्वहु देशयि धर्मम् ॥ १८ ॥

ये खलु पारमितास्वभियुक्तो
बोधियि चित्तु म जातु विमुह्येत् ।

येऽपि च पापक आवरणीया-
स्तेषु परिक्षयु भोतु अशेषम् ॥ १९ ॥

कर्मतु क्लेशतु मारपथातो
लोकगतीषु विमुक्त चरेयम् ।
पद्म यथा सलिलेन अलिप्तः 5
सूर्य शशी गगनेव असक्तः ॥ २० ॥

सर्वि अपायदुखां प्रशमन्तो
सर्वजगत् सुखि स्थापयमानः ।
सर्वजगस्य हिताय चरेयं
यावत क्षेत्रपथा दिशतासु ॥ २१ ॥ 10

सत्त्वचरिं अनुवर्तयमानो
बोधिचरिं परिपूरयमाणः ।
भद्रचरिं च प्रभावयमानः
सर्वि अनागतकल्प चरेयम् ॥ २२ ॥

ये च सभागत मम चर्याये 15
तेभि समागमु नित्यु भवेय्या ।
कायतु वाचतु चेतनतो वा
एकचरि प्रणिधान चरेयम् ॥ २३ ॥

येऽपि च मित्रा मम हितकामा
भद्रचरीय निदर्शयितारः । 20
तेभि समागमु नित्यु भवेय्या
तांश्च अहं न विरागयि जातु ॥ २४ ॥

संमुख नित्यमहं जिन पश्ये
बुद्धसुतेभि परीवृतु नाथान् ।
तेषु च पूज करेय उदारां 25
सर्वि अनागतकल्पमखिन्नः ॥ २५ ॥

धारयमाणु जिनान सद्धर्मं
बोधिचरिं परिदीपयमानः ।
भद्रचरिं च विशोधयमानः
सर्वि अनागतकल्प चरेयम् ॥ २६ ॥ 30

---

१ S अहु.

सर्वभवेषु च संसरमाणः
पुण्यतु ज्ञानतु अक्षयप्राप्तः ।
प्रज्ञउपायसमाधिविमोक्षैः
सर्वगुणैर्भवि अक्षयकोशः ॥ २७ ॥

एकरजाग्रि रजोपमक्षेत्रा
तत्र च क्षेत्रि अचिन्तिय बुद्धान् ।
बुद्धसुतान निषण्णकु मध्ये
पश्यिय बोधिचर्रि चरमाणः ॥ २८ ॥

एवमशेषत सर्वदिशासु
वालपथेषु त्रियध्वप्रमाणान् ।
बुद्धसमुद्र थ क्षेत्रसमुद्रा-
नोतरि चारिककल्पसमुद्रान् ॥ २९ ॥

एकस्वराङ्गसमुद्ररुतेभिः
सर्वजिनान स्वराङ्गविशुद्धिम् ।
सर्वजिनान यथाशयघोषान्
बुद्धसरस्वतिमोतरि नित्यम् ॥ ३० ॥

तेषु च अक्षयघोषरुतेषु
सर्वत्रियध्वगतान जिनानाम् ।
चक्रनयं परिवर्तयमानो
बुद्धिबलेन अहु प्रविशेयम् ॥ ३१ ॥

एकक्षणेन अनागत सर्वान्
कल्पप्रवेश अहु प्रविशेयम् ।
येऽपि च कल्प त्रियध्वप्रमाणा-
स्तान् क्षणकोटिप्रविष्ट चरेयम् ॥ ३२ ॥

ये च त्रियध्वगता नरसिंहा-
स्तानहु पश्यिय एकक्षणेन ।
तेषु च गोचरिमोतरि नित्य
मायगतेन विमोक्षबलेन ॥ ३३ ॥

ये च त्रियध्वसुक्षेत्रवियूहा-
स्तानभिनिर्हरि एकरजाग्रे ।

१ S सर्वजगस्य.

एवमशेषत सर्वदिशासु
ओतरि क्षेत्रवियूह जिनानाम् ॥ ३४ ॥

ये च अनागत लोकप्रदीपा-
स्तेषु विबुध्यन चक्रप्रवृत्तिम् ।
निर्वृतिदर्शननिष्ठ प्रशान्ति
सर्वि अहं उपसंक्रमि नाथान् ॥ ३५ ॥

ऋद्धिबलेन समन्तजवेन
ज्ञानबलेन समन्तमुखेन ।
चर्यबलेन समन्तगुणेन
मैत्रबलेन समन्तगतेन ॥ ३६ ॥

पुण्यबलेन समन्तशुभेन
ज्ञानबलेन असङ्गगतेन ।
प्रज्ञउपायसमाधिबलेन
बोधिबलं समुदानयमानः ॥ ३७ ॥

कर्मबलं परिशोधयमानः
क्लेशबलं परिमर्दयमानः ।
मारबलं अबलंकरमाणः
पूरयि भद्रचरीबल सर्वान् ॥ ३८ ॥

क्षेत्रसमुद्र विशोधयमानः
सत्त्वसमुद्र विमोचयमानः ।
धर्मसमुद्र विपश्ययमानो
ज्ञानसमुद्र विगाहयमानः ॥ ३९ ॥

चर्यसमुद्र विशोधयमानः
प्रणिधिसमुद्र प्रपूरयमाणः ।
बुद्धसमुद्र प्रपूजयमानः
कल्पसमुद्र चरेयमखिन्नः ॥ ४० ॥

ये च त्रियध्वगतान जिनानां
बोधिचरिप्रणिधानविशेषाः ।
तानहु पूरयि सर्वि अशेषान्
भद्रचरीय विबुध्यिय बोधिम् ॥ ४१ ॥

१ S दानबलेन.

सर्वभवेषु च संसरमाणः
पुण्यतु ज्ञानतु अक्षयप्राप्तः।
प्रज्ञउपायसमाधिविमोक्षैः
सर्वगुणैर्भवि अक्षयकोशः॥ २७॥

5 एकरजाग्रि रजोपमक्षेत्रा
तत्र च क्षेत्रि अचिन्तिय बुद्धान्।
बुद्धसुतान निषण्णकु मध्ये
पश्यिय बोधिचरिं चरमाणः॥ २८॥

एवमशेषत सर्वदिशासु
10 वालपथेषु त्रियध्वप्रमाणान्।
बुद्धसमुद्र य क्षेत्रसमुद्रा-
नोतरि चारिककल्पसमुद्रान्॥ २९॥

एकस्वराङ्गसमुद्ररुतेभिः
सर्वजिनान स्वराङ्गविशुद्धिम्।
15 सर्वजिनान यथाशयघोषान्
बुद्धसरस्वतिमोतरि नित्यम्॥ ३०॥

तेषु च अक्षयघोषरुतेषु
सर्वत्रियध्वगतान जिनानाम्।
चक्रनयं परिवर्तयमानो
20 बुद्धिबलेन अहं प्रविशेयम्॥ ३१॥

एकक्षणेन अनागत सर्वान्
कल्पप्रवेश अहं प्रविशेयम्।
येऽपि च कल्प त्रियध्वप्रमाणा-
स्तान् क्षणकोटिप्रविष्ट चरेयम्॥ ३२॥

25 ये च त्रियध्वगता नरसिंहा-
स्तानहु पश्यिय एकक्षणेन।
तेषु च गोचरिमोतरि नित्यं
मायगतेन विमोक्षबलेन॥ ३३॥

ये च त्रियध्वसुक्षेत्रवियूहा-
30 स्तानभिनिर्हरि एकरजाग्रे।

१ S सर्वजगस्य.

एवमशेषत सर्वदिशासु
　ओतरि क्षेत्रवियूह जिनानाम् ॥ ३४ ॥

ये च अनागत लोकप्रदीपा-
　स्तेषु विबुध्यन चक्रप्रवृत्तिम् ।
निर्वृतिदर्शननिष्ठ प्रशान्ति
　सर्वि अहं उपसंक्रमि नाथान् ॥ ३५ ॥

ऋद्धिबलेन समन्तजवेन
　ज्ञानबलेन समन्तमुखेन ।
चर्यबलेन समन्तगुणेन
　मैत्रबलेन समन्तगतेन ॥ ३६ ॥

पुण्यबलेन समन्तशुभेन
　ज्ञानबलेन असङ्गगतेन ।
प्रज्ञउपायसमाधिबलेन
　बोधिबलं समुदानयमानः ॥ ३७ ॥

कर्मबलं परिशोधयमानः
　क्लेशबलं परिमर्दयमानः ।
मारबलं अबलंकरमाणः
　पूरयि भद्रचरीबल सर्वान् ॥ ३८ ॥

क्षेत्रसमुद्र विशोधयमानः
　सत्वसमुद्र विमोचयमानः ।
धर्मसमुद्र विपश्ययमानो
　ज्ञानसमुद्र विगाहयमानः ॥ ३९ ॥

चर्यसमुद्र विशोधयमानः
　प्रणिधिसमुद्र प्रपूरयमाणः ।
बुद्धसमुद्र प्रपूजयमानः
　कल्पसमुद्र चरेयमखिन्नः ॥ ४० ॥

ये च त्रियध्वगतान जिनानां
　बोधिचरिप्रणिधानविशेषाः ।
तानहु पूरयि सर्वि अशेषान्
　भद्रचरीय विबुध्यिय बोधिम् ॥ ४१ ॥

---

१ S दानबलेन.

ज्येष्ठकु यः सुतु सर्वजिनाना
यस्य च नाम समन्ततभद्रः ।
तस्य विदुस्य सभागचरीये
नामयमी कुशल इमु सर्वम् ॥ ४२ ॥

कायतु वाच मनस्य विशुद्धि-
श्चर्यविशुद्धय क्षेत्रविशुद्धि ।
यादृश नामन भद्र विदुस्य
तादृश भोतु सम मम तेन ॥ ४३ ॥

भद्रचरीय समन्तशुभाये
मञ्जुशिरिप्रणिधान चरेयम् ।
सर्वि अनागत कल्पमखिन्न
पूरयि ता क्रिय सर्वि अशेषाम् ॥ ४४ ॥

नो च प्रमाणु भवेय्य चरीये
नो च प्रमाणु भवेय्य गुणानाम् ।
अप्रमाण चरियाय स्थिहित्वा
जानमि सर्वि विकुर्वितु तेषाम् ॥ ४५ ॥

यावत निष्ठ नभस्य भवेय्या
सत्त्व अशेषत निष्ठ तथैव ।
कर्मतु क्लेशतु यावत निष्ठा
तावतनिष्ठ मम प्रणिधानम् ॥ ४६ ॥

ये च दशद्दिशि क्षेत्र अनन्ता
रत्नअलंकृतु दद्यु जिनानाम् ।
दिव्य च मानुष सौख्यविशिष्टा
क्षेत्ररजोपम कल्प ददेयम् ॥ ४७ ॥

यश्च इम परिणामनराज
श्रुत्व सकृज्जनयेदधिमुक्तिम् ।
बोधिवरामनुप्रार्थयमानो
अग्रु विशिष्ट भवेदिमु पुण्यम् ॥ ४८ ॥

वर्जित तेन भवन्ति अपाया
वर्जित तेन भवन्ति कुमित्रा ।
क्षिप्रु स पश्यति त अमिताभ
यस्यिमु भद्रचरिप्रणिधानम् ॥ ४९ ॥

लाभ सुलब्ध सुजीवितु तेषां
　स्वागत ते इमु मानुष जन्म ।
यादृश सो हि समन्ततभद्र-
　स्तेऽपि तथा नचिरेण भवन्ति ॥ ५० ॥
पापक पञ्च अनन्तरियाणि　　5
　येन अज्ञानवशेन कृतानि ।
सो इमु भद्रचरिं भणमानः
　क्षिप्रु परिक्षयु नेति[1] अशेषम् ॥ ५१ ॥
ज्ञानतु रूपतु लक्षणतश्च
　वर्णतु गोत्रतु भोतिरुपेतः ।　　10
तीर्थिकमारगणेभिरधृष्यः
　पूजितु भोति स सर्वत्रिलोके ॥ ५२ ॥
क्षिप्रु स गच्छति बोधिद्रुमेन्द्रं
　गत्व निषीदति सत्त्वहिताय ।　　15
बुध्यति बोधि प्रवर्तयि चक्रं
　धर्षति मारु ससैन्यकु सर्वम् ॥ ५३ ॥
यो इमु भद्रचरिप्रणिधानं
　धारयि वाचयि देशयितो वा ।
बुद्ध विजानति योऽत्र विपाको　　20
　बोधि विशिष्ट म काङ्क्ष जनेथ ॥ ५४ ॥
मञ्जुशिरी यथ जानति शूरः
　सो च समन्ततभद्र तथैव ।
तेषु अहं अनुशिक्षयमाणो
　नामयमी कुशलं इमु सर्वम् ॥ ५५ ॥　　25
सर्वत्रियध्वगतेभि जिनेभि-
　र्या परिणामन वर्णित अग्रा ।
ताय अहं कुशलं इमु सर्वं
　नामयमी वरभद्रचरीये ॥ ५६ ॥
कालक्रियां च अहं करमाणो
　आवरणान् विनिवर्तिय सर्वान् ।　　30
संमुख पश्यिय तं अमिताभं
　तं च सुखावतिक्षेत्र व्रजेयम् ॥ ५७ ॥

१ B पश्यम्.　२ B भोति.

तत्र गतस्य इमि प्रणिधाना
आमुखि सर्वि भवेय्यु समग्रा ।
तांश्च अहं परिपूर्य अशेषान्
सत्त्वहितं करि यावत लोके ॥ ५८ ॥

5 तहि जिनमण्डलि शोभनि रम्ये
पद्मवरे रुचिरे उपपन्नः ।
व्याकरणं अहु तत्र लभेय्या
संमुखतो अमिताभजिनस्य ॥ ५९ ॥
व्याकरणं प्रतिलभ्य च तस्मिन्
10 निर्मितकोटिशतेभिरनेकैः ।
सत्त्वहितानि बहून्यहु कुर्यां
दिशु दशस्वपि बुद्धिबलेन ॥ ६० ॥
भद्रचरिप्रणिधान पठित्वा
यत्कुशलं मयि संचितु किंचित् ।
15 एकक्षणेन समृध्यतु सर्वं
तेन जगस्य शुभं प्रणिधानम् ॥ ६१ ॥
भद्रचरिं परिणाम्य यदाप्तं
पुण्यमनन्तमतीव विशिष्टम् ।
तेन जगद्व्यसनौघनिमग्नं
20 यात्वमिताभपुरिं वरमेव ॥ ६२ ॥[1]

इदमवोचद्भगवानात्तमनाः । सुधनः श्रेष्ठिदारकस्ते च बोधिसत्त्वा आर्यमञ्जुश्रीपूर्वंगमाः, ते च भिक्षवः आर्यमञ्जुश्रीपरिपाचिताः, ते च आर्यमैत्रेयपूर्वंगमाः सर्वभद्रकल्पिका बोधिसत्त्वाः, ते चार्यसमन्तभद्रबोधिसत्त्वप्रमुखा यौवराज्याभिषिक्ताः परमाणुरजःसमा महाबोधिसत्त्वा नानालोकधातुसंनिपतिताः, ते चार्यशारिपुत्रमौद्गल्यायनप्रमुखा महाश्रावकाः, 25 सा च सर्वावती पर्षत्, सदेवमानुषासुरगन्धर्वश्च लोको भगवतः समन्तभद्रस्य बोधिसत्त्वस्य भाषितमभ्यनन्दन्निति ॥

आर्यगण्डव्यूहान्महाधर्मपर्यायाद्यथालब्धः सुधनकल्याणमित्रपर्युपासनचर्यैकदेशः आर्यगण्डव्यूहो महायानसूत्ररत्नराजः समाप्तः ॥

* * * * *

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
30 तेषां च यो निरोधो एवं वादी महाश्रमणः ॥
सहस्राणि द्वादश ॥

---

[1] B transposes 62 and 61.

Ca ओं नमो बुद्धाय ॥ ओं नमो धर्माय ॥ ओं नमः संघाय ॥ नमो नम. ॥ शुभमस्तु सर्वदा शुभम् ॥

K गण्डव्यूहं विलिप्येदं यत्पुण्यं समुपार्जितम् । तस्यैव गण्डव्यूहस्य जगत्तेनास्तु भाजनम् ॥

P नेपालवर्षे नवाद्मा विदुर नि महीश्वर । कार्तिके मासे शुक्ले च प्रतिपदां दिने तथा नक्षत्रपुष्यसंयुक्ते विष्कम्भयोगे । अपि तु सस्थरविमाकान्तं तुले च चन्द्रसंयुते गुरुवालदिने क्षयं संपूर्णं लिखितं दिने । यशोधराख्यवासी च नन्ददेवमहात्मना । गण्डव्यूहमहायानं लिखितं च मयाधुना । एतत्पुण्यानुदावेन स्वस्तिर्भवतु सर्वदा ॥

संवत्सरे ९३० कार्तिकमासे शुक्लपक्षे प्रतिपदां तिथौ पुष्यनक्षत्रविष्कम्भयोगे बृहस्पतिविहारे थ कृष्ण संपूर्णं यद्वादिनक्षरो ॥ लिपरु श्रीयशोधरामहाविहारे वासित श्रीनन्ददेवाचार्येन चार्स्य तयाक्षरा ॥
10 शुभमङ्गलं जगतां सदा भूयात् ॥

T नमः श्रीप्रज्ञापारमितायै ॥

मेरौ स्वर्णसरोरुहोपरिलसल्लीलमासादितां
प्रज्ञापारमितामुपायसहितां वर्णोज्ज्वलालंकृताम् ।
ब्रह्माविष्णुमहेश्वरादिदिविपत्रिदशैः सदाराधितां
15 वन्देऽहं जगदीश्वरीं निजगतां – – ⏑ – – – ⏑ – ॥

# प्रथमं परिशिष्टम् ।

## श्लोकसूची ।

## बौद्धसंस्कृतग्रन्थमालायां प्रकाश्यत्वेन संकल्पिता ग्रन्थाः ।

### १ नव धर्माः

१ ललितविस्तर Rs 10 00 and 12 50

२ समाधिराजसूत्रम् ( यन्त्रस्थम् )

३ लङ्कावतारसूत्रम्

४ अष्टसाहस्रिका प्रज्ञापारमिता आलोकव्याख्यासहिता Rs 20 00 and 25 00

५ गण्डव्यूहसूत्रम् Rs 16 00 and 20 00

६ सद्धर्मपुण्डरीकसूत्रम् Rs 10 00 and 12 50

७ दशभूमिकसूत्रम् Rs 10 00 and 12 50

८ सुवर्णप्रभाससूत्रम्

९ तथागतगुह्यकम्

### २ माध्यमिकमते–

१० मध्यमकशास्त्र नागार्जुनीयम्, आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्य-व्याख्यया सवलितम् Rs 10 00 and 12 50

११ शिक्षासमुच्चय शान्तिदेवविरचित Rs 10 00 and 12 50

१२ बोधिचर्यावतार शान्तिदेवविरचित प्रज्ञाकरमतिविरचितया पञ्जिकाख्य-व्याख्यया सवलित Rs 10 00 and 12 50

### ३ योगाचारमते–

१३ सूत्रालङ्कार आचार्यासङ्गविरचित

### ४ विनयाः

१४ १५ महावस्तु–लोकोत्तरवादिना विनय

१६ मूलसर्वास्तिवादिना विनय ( Gilgit Mss )

### ५ महायानसूत्रसंग्रहः

१७ प्रथम खण्ड –सुविक्रान्तविक्रामिप्रज्ञापारमिता, वज्रच्छेदिका, शालिस्तम्ब सूत्रम्, प्रतीत्यसमुत्पादसूत्रम्, भैषज्यगुरुवैदूर्यप्रभसूत्रम्, राष्ट्रपालपरि-पृच्छा, अर्थविनिश्चयसूत्र च

१८ द्वितीय खण्ड –सुखावतीव्यूह, कारण्डव्यूह, अन्येषा च सूत्राणा

